यथायं प्रपञ्चो नियन्तृकोऽस्ति, तथा अतीतानागतयोरपि ब्रह्मतत्त्वमद्वितीयं वेदैकवेद्यमित्यनवद्यम्[1]" इति ॥

ननु मायाविवर्तः प्रपञ्चः, अतश्चानिर्वचनीय इतीदमसाधु, श्रुतिस्मृतिसूत्रादीनां परिणामवाद एव तात्पर्येण मायावादस्य निर्मूलत्वात् इति; एवं अन्या माया अन्या चाविद्येति तद्भेदोपगमे यथादर्शिता व्यवस्था घटेत यावद्धि वरणकारादयः तयोरभेदमातिष्ठन्ते तदा कथमस्या उपपत्तिरिति । अत्र आद्यस्याक्षेपस्य परिहाराय सर्वग्रन्थविमर्शनपूर्वकमिदमुक्तम् "अनादिस्तावद्वेदो मायामविक्रियतां च ब्रह्मणो बहुशः भावयामास । तदर्थं च भगवान् पराशरो यथाश्रुत्युपदिदेश—

"अपक्षयविनाशाभ्यां परिणामर्द्धिजन्मभिः ।
वर्जितः शक्यते वक्तुं यः सदास्तीति केवलम् ॥
सोऽहं स त्वं जगच्चेदं सदेवासुरमानुषम् ।
अविद्यामोहितात्मानः पुरुषा भिन्नदृष्टयः ॥" इति ।

तत्सूनुरपि तदेव प्रकटीचकार—

"अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ।"
"विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान् ।"
"दैवी ह्येषा गुणमयी मम माया दुरत्यया ।"

इत्यादि बहु यदुकुलतिलकवचनच्छलेन । तत्सूनुश्च शुकदेवः प्रथमत एव भागवते "यत्र त्रिसर्गो मृषा" इत्युपक्षिप्य बहुशो मायावादमुवाच ।

"यो दुर्विमर्शपथया निजमाययेदं
सृष्ट्वा गुणान् विभजते तदनुप्रविष्टः ।
तस्मै नमो दुरवबोधविहारतन्त्र-
संसारचक्रगतये परमेश्वराय ॥"

तच्छिष्यश्च गौडपादाचार्यो यथोपदिष्टमेव वर्णयांबभूव । तदेवं वेदार्थपरम्परागतं मायावादं व्याचक्षाणं निन्दन् कथं ब्रह्महा न भवेत्[2]" इति ।
"यथोक्तं न सूत्रकारः कश्चिदपि मायाशब्दं प्रयुङ्क्ते इति, तदसत्; "मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्" इति सूत्रवचनात्; तत्र स्वप्ने मायाशब्दं कुर्वन् जागरणस्यापि मायामयत्वं सूचयति । यच्च मायेति प्रज्ञोच्यत इति व्याख्या-

१. Page 562.     २. Page 379.

नम्, तदसत्; मिथ्याभूते करिनरतुरगादौ मायाशब्दस्य लौकिकानां प्रयोगदर्शनात्; वेदेऽपि "मायां तु प्रकृतिम्" इत्यत्र स एवार्थो ग्राह्यः। यच्चोक्तम् "अजामेकाम्" इति तेजोबन्नलक्षणाया भूतप्रकृतेः प्रकृतत्वात् सैव निर्मिमीते स्वविकारान् इति व्युत्पत्त्या मायोच्यत इति, तदसत्; योगाद्रूढेर्बलीयस्त्वात्। "किंकारणं ब्रह्म" इति तेजःप्रभृतिकं प्रति ब्रह्मणो निरंशस्य करणत्वासंभवाशङ्कायां तन्निर्वाहिकायाः शक्तेः स्वगुणैर्निगूढायाः प्रक्रान्तत्वाच्च। तदेवं श्रुतिस्मृतिसूत्रप्रसिद्धो मायावाद इति स्थितम्[1]" इति च ॥

मायाविद्ययोर्भेद एवाश्रयणीयः, प्रमाणसिद्धत्वात्। तथा हि "जीवेशावाभासेन करोति माया चैवाविद्या च" इति श्रुतौ आभासशब्दितप्रतिबिम्बभावगमनात् ब्रह्मणो जीवेश्वरभाव इति प्रदर्शितम्। न च एकस्मिन्नुपाधौ बहवः प्रतिबिम्बा भवन्ति। न च तयोरैक्यपक्षे माया च अविद्या चेति चकारद्वयस्याञ्जस्यम्, "अविद्यायामन्तरे" "मायिनं तु महेश्वरम्" इतिचैवंजातीयकेषु जीवेश्वरनिरूपणेषु प्रायो व्यवस्थयैव अविद्यामायापदप्रयोगेऽपि इममेव पाक्षमुपोद्बलयति। स्थिते च तयोर्भेदे "भूयश्चान्ते विश्वमायानिवृत्तिः" "माययापहृतज्ञानाः" इति च श्रुतिस्मृत्योः सांकर्येण व्यवहारः परिच्छिन्नाविद्यानां मायाप्रदेशत्वेन अभेदोपचारात् बोध्यः। न चात्र विवरणविरोधः शङ्क्यः, प्रस्थानान्तरत्वेन स्वाभिमतार्थसाधने स्वातन्त्र्यात् ॥

न च केवलं प्रकटार्थविवरणस्य अर्थविशेषांशानुबन्ध्येव स्वातन्त्र्यं यावत्प्रधानभूतेष्वपि जीवेश्वरादिषु यथा दर्शितं पुरस्तात्। एवं ज्ञानसाधनश्रवणादिपरवाक्येषु विधिस्वरूपनिरूपणायां स्वतन्त्रः आशयविशेषो दृश्यते। तथा हि—"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इत्यत्र आत्मदर्शनसाधनतया पक्षप्राप्तस्य श्रवणस्य नियमविधिः; नियतप्राप्तस्यापि तस्य व्यापारान्तरनिवृत्त्यर्थः परिसंख्याविधिः; नियतप्राप्तत्वादेव नैवास्य कश्चिद्विधिः—इति विवरणवार्तिकभामतीप्रस्थानानुसारेण पक्षभेदेषु स्थितेषु अपूर्वविधिरेवायमिति इतरपक्षनिरासेन समर्थितमस्मिन् ग्रन्थे। भाष्यवचनमप्यत्रोदाहृतम् "विद्यासहकारिणो मौनस्य बाल्यपाण्डित्यवत् विधिरेवाश्रयितव्यः, अपूर्वत्वात्[2]" इति ॥

एवमन्येऽपि प्रक्रियावान्तरभेदाः अस्यैव असाधारणाः तत्र तत्र सूक्ष्मेक्षिकया गवेषणीयाः ॥

१. Page 428.     २. Page 987.

एतेन यत् केचिदाहुः—भामतीविवरणादीनामिव नास्य प्रस्थानान्तरत्वव्यपदेशो युज्यते; प्रायेण हि विवरणावलम्ब्येव प्रकटार्थविवरणं प्रवर्तते; सन्तु कामं भाष्यव्याख्यानां अर्थभेदाः तत्र तत्र अनेनाविष्कृताः; नैतावन्मात्रं सर्वव्याख्यानसाधारणं पर्याप्तं प्रस्थानान्तरत्वकल्पने इति—तदयुक्तमिति व्याख्यातम्, यतः प्रधानभूतजीवादिप्रक्रियायां अन्येषु चार्थेषु मार्गभेदोऽस्य प्रदर्शितः पुरस्तात्। न चेदमेकान्ततः विवरणपरतन्त्रमिति शक्यं वक्तुम्। अधिकरणक्लृप्तावेव तावत् विवरणप्रस्थानादस्य वैलक्षण्यम्। विवरणप्रस्थाने हि ज्योतिरधिकरणम्[1] "उपदेशभेदात्[2]" इत्येवमन्तं एकाधिकरणतया सर्वप्रसिद्धमपि, ज्योतिस्सूत्रेणैकम्[3], "छन्दोभिधानात्[4]" इत्यादिना अन्यदिति द्वेधा विभक्तमिति शारीरकन्यायसंग्रहादिपरिशीलने अवश्याभ्युपेयं भवति। ग्रन्थेऽस्मिन् तत्तदधिकरणविचारेण परिनिष्पन्नानि न्यायशरीराणि विविच्य प्रदर्श्यन्ते। ज्योतिस्सूत्रमनुक्रम्य "ज्योतिश्शब्दो ब्रह्मपर इति न्यायद्वयमत्र दर्शितम्[5]" इति, छन्दोभिधानसूत्रमनुक्रम्य "गायत्री ब्रह्मेति निर्णीतम्[6]" इति चोपसंहारः अधिकरणभेदानभ्युपगमे न सम्यगवकल्पेत। विवरणव्याख्यातॄणां च चित्सुखाचार्याणां स्वग्रन्थे अधिकरणमञ्जर्याम् "पादेऽधिकरणान्याद्ये द्वादशैतान्यनुक्रमात्[7]" इति वचनं इममेवार्थमुपोद्बलयति। तथैव तत्कृते अधिकरणसंगतिग्रन्थे[8] ज्योतिश्चरणछन्दोभिधानसूत्रयोः संगतिप्रदर्शनमुपष्टम्भोऽत्र द्रष्टव्यः। तत्सिद्धमेतदधिकरणद्वयमिति। तदेवं स्थिते विवरणप्रस्थानमनुरुन्धाना अपि न्यायशरीरं तथैव प्रकाशयन्तोऽपि प्रकटार्थकाराः तदभिमतमधिकरणभेदं नानुमन्यन्त इति गम्यते। एकस्मिन्नधिकरणे सूत्रभेदेन न्यायभेदसूचनम्, एकस्मिन्नेव वा सूत्रे विषयभेदेन न्यायभेदसूचनं च सूत्राणामलङ्कार एव। "ज्योतिश्चरणाभिधानात्" इति सिद्धान्तेनोपक्रम्य" "छन्दोऽभिधानात्" इति शङ्कान्तरपरिहारमुखेन प्रवृत्तिश्च ब्रह्मसूत्रच्छायाया अनुरूपा। अतो नावश्यमधिकरणभेदोऽत्राभवितव्य इति तदाशयोऽत्र प्रतिभाति॥

१. I, i, 24—27.

२. I, i, 27.

३. I, i, 24.

४. I, i, 25.

५. Śārīrakanyāyasaṅgraha. p. 11.

६. Śārīrakanyāyasaṅgraha. p. 11.

७. Journal of Oriental Research, Vol. V, p. 264.

८. Journal of Oriental Research, Vol. VII.

एवं स्वतन्त्रप्रक्रियास्थापनात्, नैयायिकादिमतान्तरप्रसङ्गेन तद्विषयाणां दुरूहस्वतन्त्रयुक्तिजालेन निराकरणात्, महाविद्यानुमानानामसाधारण्या गमनिकया शिथिलीकरणाच्च अवश्योपादेयमिदं ग्रन्थरत्नमिति सिद्धम् ॥

इतश्चैतदवश्योपादेयम्, येनास्य प्रवृत्तिमात्रं परिशील्यमानं इतरग्रन्थैरस्या-गतार्थतामावेदयति । तथाह्यत्र ग्रन्थे प्रायः प्रत्यधिकरणं भास्कराचार्योक्तानि भाष्योपरिदूषणानि कण्ठतोऽनूद्य भाष्याशयाविष्करणेन स्वतन्त्रतया च निराकृतान्युपलभ्यते । तथा अमृतानन्दब्रह्मप्रकाशिकाकारमाधवकेशवाद्याचार्यैः उपेक्षिता अपि अद्वैतमतसंबन्धिन आक्षेपाः कार्त्स्न्येनेह प्रतिक्षिप्ताः । आक्षेप-प्रतिक्षेपमिदं यत्र यत्र क्रमते ते स्थलविशेषाः उपरत्र निर्दिष्टाः ॥

---

## WORKS AND AUTHORS REFERRED TO IN THE PRAKAṬĀRTHAVIVARAṆA.

A few remarks on some of these authors and works may not be out of place.

*Amṛtānanda.*

Several Amṛtānandas are known to us, but this writer happens to be distinct from them all. A Śaiva author of this name is already familiar; an Amṛtānanda as the author of the rhetorical work, Alaṅkārasaṅgraha is also known; there is a commentator on the Nyāyadīpāvalī of Ānandabodha of this name. The Amṛtānanda referred to here is distinct from all these writers. He seems to have been a follower of Bhāskara. This writer has been adversely criticised in the Tarkasaṅgraha of Ānandagiri, Vivaraṇaprameyasaṅgraha of Vidyāraṇya, and the Kalpataru of Amalānanda. The Prakaṭārtha is the earliest work, making mention of this Amṛtānanda.

The name of his work is not known.

*Bhāskara.*

Bhāskara is the commentator on the Brahmasūtras. He was older than Vācaspatimiśra who wrote the Bhāmatī in the beginning of the 9th century. Bhāskara is criticised and refuted by Vācaspati in a number of places; and it is too well-known that the main aim of Bhāskara was to demolish the Advaitic doctrines of Śrī Śaṅkara. Bhāskara therefore flourished between 700 and 800 A.D. Probably he was an younger

contemporary of Śaṅkara. There is a tradition that makes him an older contemporary of Śaṅkara.

Bhāskara, it may be mentioned, wrote beside the Brahmasūtrabhāṣya commentaries on the Chāndogya–upaniṣad and the Bhagavad Gītā.

*Bhaṭṭamiśra*

Kumārila is referred to under this name. He was an elder contemporary of Śrī Śaṅkara and Prabhākara was his pupil. Kumārila flourished between 620 and 680 A. D.

*Brahmaprakāśikākāra.*

This author like Amṛtānanda was a follower of the *bhedābheda* school and was consequently severely criticised in the Prakaṭārtha and other works. Amalānanda and Ānandagiri do not forget to show their contempt for this writer. There are reasons to think that he was the same as Keśava. Their views happen to be identical in several respects. If this is proved, then Keśava may be taken to be the author of the *Brahmaprakāśikā*. Any way these writers are older than the 10th century.

*Kāṇvāyanasmṛti.*

A smṛti of this name is available in the Government Oriental Mss. Libray, Madras (R. 3457) It happens to contain that much that is cited in the Prakaṭārtha. It is not known whether the work was more extensive.

*Keśava.*

See *Brahmaprakāśikākāra.*

*Mādhava.*

This writer is different from the celebrated Mādhava, for the latter belonged to the 14th century. The Mādhava referred to in the Prakaṭārtha is an old writer about whom no other information is available.

*Maṇḍana.*

This Maṇḍana is the author of the Brahmasiddhi, for whom, the author of the Prakaṭārtha has got scant respect. Vācaspati is accused of blindly following Maṇḍana.

*Vṛttikāra.*

There have been several Vṛttikāras on the Brahmasūtras. They included Upavarṣa and Bhartṛprapañca among others. Which of the Vṛttikāras is referred to in the Bhāṣya or the Prakaṭārtha we cannot say at present.

## LIST OF ABBREVIATIONS

| | |
|---|---|
| Ait. | Aitareya-Upaniṣad |
| Ait. Ār.; Ait. Āraṇ. | Aitareya Āraṇyaka |
| Āp. Dh. Sū. | Āpastamba Dharma Sūtra |
| Āp. Śrau. | Āpastamba Śrauta Sūtra |
| Bodhā. Dh. S. | Bodhāyana Dharma Sūtra |
| Brahmabindu | Brahmabindu Upaniṣad |
| Bṛh. | Bṛhadāraṇyaka Upaniṣad |
| Br. S.; B. S. | Brahmasūtra |
| Chā. | Chāndogya Upaniṣad |
| G. Dh.; Gau. Dh. | Gautama Dharma Sūtra |
| Īśā. | Īśāvāsya Upaniṣad |
| Jābāla | Jābāla Upaniṣad |
| Jaimini | Pūrvamīmāṁsā Sūtras of Jaimini |
| Kaṭha. | Kaṭha-Upaniṣad |
| Kauṣ. | Kauṣītakabrāhmaṇa Upaniṣad |
| Kena. | Kena Upaniṣad |
| Mahānārāyaṇa | Mahānārāyaṇa Upaniṣad |
| M. S. | Maitrāyaṇīya Saṁhitā |
| Muṇḍ. | Muṇḍaka-Upaniṣad |
| Nāradaparivrājaka. | Nāradaparivrājaka Upaniṣad |
| Praśna. | Praśna Upaniṣad |
| Śata. Brā. | Śatapatha Brāhmaṇa |
| Sū. Saṁ. Vyā. | Sūtasaṁhitā Vyākhyā |
| Śvetā. | Śvetāśvatara-Upaniṣad |
| T. A. | Taittirīya Araṇyaka |
| Taitt. | Taittirīya Upaniṣad |
| Taitt. Brā; T. B. | Taittirīya Brāhmaṇa |

| | |
|---|---|
| Tāṇḍ. Brā. | Tāṇḍya Brāhmaṇa |
| T. S.; T. Sam. | Taittirīya Saṁhitā |
| T. V. | Tantravārtika (Chowkhāmbā Edn.) |
| Vā. | Vārtikas of Kātyāyana |
| Vasiṣṭha | Vasiṣṭha Dharmaśāstra. |
| V. S. | Vaiśeṣika Sūtra |
| Yāj. | Yājñavalkya Smṛti |
| Y. S. | Yoga Sūtra. |

Other abbreviations will be clear and they have not therefore been included here.

# विषयसूची

**तृतीयाध्याये चतुर्थः पादः** ... ... **927...998**

# ADDITIONS AND CORRECTIONS

| Page | Line | Read |
|---|---|---|
| 651 | 20 | अहिंषत् |
| 660 | 22 | येषां तु |
| 666 | 10 | यतोय |
| 712 | 13 | “तस्मिन् |
| | 14 | ब्रुहति” |
| 760 | 12 | आगच्छामहे |
| 766 | 2 | यत्पूर्व |
| 828 | 7 | दानमेताह |
| 836 | 5 | “तस्मात् |
| 838 | 13 | आपो |
| 854 | 8 | यथाचित्तु |
| 874 | 6 | अन्तरात्मा |
| 875 | top | ” |
| 914 | 5 | अग्ने वेहोंत्र |
| 917 | 15 | ज्येष्ठश्च |
| | 23 | वेधैक |
| 928 | 16 | पानियमः |

| Page | Line | Read |
|---|---|---|
| 961 | 3 | “पारि |
| 963 | 14 | मुने” “यथा |
| 988 | 17 | मुने |
| 997 | top | १७ |
| 1016 | 14 | प्राते |
| 1026 | 3 | नन्वनम्बु |
| 1029 | 10 | नैत |
| 1050 | 13 | समश्नुते |
| | | श्रुतयः |
| 1054 | 12 | “तस्य |
| 1067 | 17 | } एतान् |
| 1069 | 9 | } एतान् |
| 1086 | 5 | यथा “ |
| 1096 | 12 | इते । |
| | | चित् तो |
| 1099 | 10 | समु |
| 1108 | 6 | वर्त्त” “तेनो |

# प्रकटार्थविवरणे द्वितीयाध्याये

## तृतीयः पादः ॥



### भाष्यम्

### [वियदधिकरणम्]

वेदान्तेषु तत्र तत्र भिन्नप्रस्थाना उत्पत्तिश्रुतय उपलभ्यन्ते ; केचि- 5
दाकाशस्योत्पत्तिमामनन्ति, केचिन्न ; तथा केचिद्वायोरुत्पत्तिमामनन्ति,
केचिन्न ; एवं जीवस्य प्राणानां च ; एवमेव क्रमादिद्वारकोऽपि विप्रति-
षेधः श्रुत्यन्तरेषूपलक्ष्यते ; विप्रतिषेधाच्च परपक्षाणामनपेक्षितत्वं स्थापि-
तम् ; तद्वत्स्वपक्षस्यापि विप्रतिषेधादेवानपेक्षितत्वमाशङ्क्येत—इत्यतः
सर्ववेदान्तगतसृष्टिश्रुत्यर्थनिर्मलत्वाय परः प्रपञ्च आरभ्यते ; तदर्थनिर्म- 10
लत्वे च फलं यथोक्ताशङ्कानिवृत्तिरेव । तत्र प्रथमं तावदाकाशमाश्रित्य
चिन्त्यते—

## न वियदश्रुतेः ॥ २-३-१ ॥

किमस्त्याकाशस्योत्पत्तिरस्ति, उत नास्तीति । तत्र तावत्प्रति-
पद्यते—न वियदश्रुतेः इति ; न खल्वाकाशमुत्पद्यते ; कस्मात् ? अश्रुतेः— 15
न ह्यस्योत्पत्तिप्रकरणे श्रवणमस्ति ; छान्दोग्ये हि "सदेव सोम्येदमग्र

### प्रकटार्थविवरणम्

पूर्वस्मिन् पादे मतान्तराणां प्रामाणिकत्वपर्यन्तेनाविरोधं विधाय अधुना
स्वविरोधपरिहारार्थेन श्रुतिविप्रतिषेधपरिहाराय यत्नो विधातव्य इत्याह—
वेदान्तेष्विति ॥ पादद्वयसङ्गतिमभिधाय प्रथमाधिकरणविषयमाह—तत्र 20
प्रथममिति ॥

न वियदश्रुतेः ॥

[illegible] विप्रतिषेधमाह—तत्र तावदित्यादिना ॥

भाष्यम्

आसीदेकमेवाद्वितीयम्" इति सच्छब्दवाच्यं ब्रह्म प्रकृत्य "तदैक्षत", "तत्तेजोऽसृजत" इति च पञ्चानां महाभूतानां मध्यमं तेज आदि कृत्वा त्रयाणां तेजोबन्नानामुत्पत्तिः श्राव्यते; श्रुतिश्च नः प्रमाणमतीन्द्रियार्थविज्ञानोत्पत्तौ; न चात्र श्रुतिरस्त्याकाशस्योत्पत्तिप्रतिपादिनी; तस्मान्नाकाशस्योत्पत्तिरिति ॥

## अस्ति तु ॥ २-३-२ ॥

तुशब्दः पक्षान्तरपरिग्रहे; मा नामाकाशस्य छान्दोग्ये भूदुत्पत्तिः; श्रुत्यन्तरे त्वस्ति; तैत्तिरीयका हि समामनन्ति—"सत्यं ज्ञानमनन्तं ब्रह्म" इति प्रकृत्य "तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इति; ततश्च श्रुत्योर्विप्रतिषेधः—क्वचित्तेजःप्रमुखा सृष्टिः, क्वचिदाकाशप्रमुखेति । नन्वेकवाक्यतानयोः श्रुत्योर्युक्ता; सत्यं सा युक्ता, न तु सावगन्तुं शक्यते; कुतः? "तत्तेजोऽसृजत" इति सकृच्छ्रुतस्य स्रष्टुः स्रष्टव्यद्वयेन संबन्धानुपपत्तेः—'तत्तेजोऽसृजत', 'तदाकाशमसृजत' इति । ननु सकृच्छ्रुतस्यापि कर्तुः कर्तव्यद्वयेन संबन्धो दृश्यते—यथा सूपं पक्त्वौदनं पचतीति, एवं तदाकाशं सृष्ट्वा तत्तेजोऽसृजतेति योजयिष्यामि; नैवं युज्यते; प्रथमजत्वं हि छान्दोग्ये तेजसोऽवगम्यते,

प्रकटार्थविवरणम्

अस्ति तु ॥

श्रुत्योर्विप्रतिषेधे नोभयोरप्यप्रामाण्यं निर्दिष्टत्वात् [निर्दुष्टत्वात्]; अत एकवाक्यता वक्तव्येत्याह—नन्वेकवाक्यतेति ॥ एकवाक्यताया असंभवे युक्तमप्रमाणत्वमित्याह—न तु सावगन्तुमिति ॥ एकस्य युगपद्व्यापारद्वयस्यासंभवेऽपि क्रमेण भविष्यतीत्याह—ननु सकृच्छ्रुतस्यापीति ॥ विप्रतिषेधवादी दूषयति—नैवं युज्यत इति ॥ क्रमो न युज्यते, द्वयोः प्रथमजत्वासंभवप्रसङ्गात्;

भाष्यम्

तैत्तिरीयके चाकाशस्य ; न चोभयोः प्रथमजत्वं संभवति ; एतेनेतरश्रुत्य-
क्षरविरोधोऽपि व्याख्यातः—"तस्माद्वा एतस्मादात्मन आकाशः
संभूतः" इत्यत्रापि—तस्मादाकाशः संभूतः, तस्मात्तेजः संभूतम्—
इति सकृच्छ्रुतस्यापादानस्य संभवनस्य च वियत्तेजोभ्यां युगपत्संबन्धा-   5
नुपपत्तेः, "वायोरग्निः" इति च पृथगाम्नानात् ॥

अस्मिन्विप्रतिषेधे कश्चिदाह—

## गौण्यसंभवात् ॥ २-३-३ ॥

नास्ति वियत उत्पत्तिः अश्रुतेरेव । या त्वितरा वियदुत्पत्तिवादिनी
श्रुतिरुदाहृता, सा गौणी भवितुमर्हति ; कस्मात् ? असंभवात् । न ह्या-   10
काशस्योत्पत्तिः संभावयितुं शक्या श्रीमत्कणभुगभिप्रायानुसारिषु
जीवत्सु ; ते हि कारणसामग्र्यसंभवादाकाशस्योत्पत्तिं वारयन्ति ;

प्रकटार्थविवरणम्

अतो यौगपद्यं वक्तव्यम् ; तदापि विरोधस्तदवस्थ एवेत्यर्थः । एवं छन्दोगश्रुते-
र्विरुद्धार्थत्वमुक्त्वा तैत्तिरीयकश्रुतेः विरुद्धार्थत्वं कथयति—एतेनेति ॥   15

तस्मादेकवाक्यत्वायोगात् विप्रतिषेधः स्थित एवेति केनचिदापादिते
परिहारं वक्तुं मतान्तरं तावदाह—अस्मिन्विप्रतिषेध इति ॥

गौण्यसंभवात्

विप्रतिषेधे सति कस्यानुरोधेन किं नेतव्यमिति विशये तर्कानुगृहीत-
छन्दोगश्रुत्यनुरोधेनासंभाव्यमानार्था तैत्तिरीयकश्रुतिर्गौणी व्याख्यातव्येत्यर्थः ।   20
आकाशो न जायते, सामग्रीशून्यत्वात्, आत्मवदित्याह—ते हीति[4] ॥ का साम-

१. T, T¹ and P omit वक्तव्यम्
२. A. तदा
T, T¹ and P. तथा च
३. A. तर्कानुरोधेन गृही-
४. TM. तर्हीति

## भाष्यम्

समवाय्यसमवायिनिमित्तकारणेभ्यो हि किल सर्वमुत्पद्यमानं समुत्पद्यते;
द्रव्यस्य चैकजातीयकमनेकं च द्रव्यं समवायिकारणं भवति; न चाका-
शस्यैकजातीयकमनेकं च द्रव्यमारम्भकमस्ति; यस्मिन्समवायिकारणे
5 सति, असमवायिकारणे च तत्संयोगे, आकाश उत्पद्येत; तदभावात्तु
तदनुग्रहप्रवृत्तं निमित्तकारणं दूरापेतमेवाकाशस्य भवति। उत्पत्तिमतां
च तेजःप्रभृतीनां पूर्वोत्तरकालयोर्विशेषः संभाव्यते—प्रागुत्पत्तेः प्रका-
शादिकार्यं न बभूव, पश्चाच्च भवतीति; आकाशस्य पुनर्न पूर्वोत्तरकाल-
योर्विशेषः संभावयितुं शक्यते; किं हि प्रागुत्पत्तेरनवकाशमसुषिरम-
10 च्छिद्रं बभूवेति शक्यतेऽध्यवसातुम्? पृथिव्यादिवैधर्म्याच्च विभुत्वादि-
लक्षणादाकाशस्याजत्वसिद्धिः। तस्माद्यथा लोके—आकाशं कुरु,
आकाशो जातः—इत्येवंजातीयको गौणः प्रयोगो भवति, यथा च—
घटाकाशः, करकाकाशः, गृहाकाशः—इत्येकस्याप्याकाशस्यैवंजाती-
यको भेदव्यपदेशो गौणो भवति—वेदेऽपि "आरण्यानाकाशेष्वाल-
15 भेरन्" इति; एवमुत्पत्तिश्रुतिरपि गौणी द्रष्टव्या॥

## प्रकटार्थविवरणम्

अस्त्याद्याशङ्क्याह—समवायीति॥ समग्राणि कारणान्येव सामग्रीत्यर्थः। तर्हि
ईश्वरो मायावी समवायिकारणम्, [कारणम्, तत्संबन्धोऽसमवायिकारणम्,]
अदृष्टं निमित्तकारणमिति सामग्रीशून्यत्वमसिद्धमित्याशङ्क्याह—द्रव्यस्येति॥
20 मायेश्वरयोर्विजातीयत्वात् तन्तुसुवर्णयोरिव नैकं वा [नैकम्, उभयं वा]
कार्यं प्रति समवायिकारणम्; तत्सम्बन्धोऽसमवायिकारणम्; अदृष्टं निमित्त-
कारणं तु दूरनिरस्तमित्यर्थः। किं चाभूत्वाभावित्वं कार्यलक्षणम्; तदपि
नास्ति, प्रलयेऽपि परमाणूनामवकाशाकाशापेक्षितत्वादित्याह—उत्पत्तिमतां
चेति॥ किं चाकाशो न जायते, विभुत्वात्, निरवयवद्रव्यत्वात्, अस्पर्श-
25 द्रव्यत्वात्, आत्मवदित्याह—पृथिव्यादीति॥ सदृष्टान्तं गौणत्वमुपसंहरति—
तस्मादिति॥

भाष्यम्

## शब्दाच्च ॥ २-३-४ ॥

शब्दः खल्वाकाशस्याजत्वं ख्यापयति, यत आह—"वायुश्चान्त-
रिक्षं चैतदमृतम्" इति ; न ह्यमृतस्योत्पत्तिरुपपद्यते ; "आकाशवत्सर्व-
गतश्च नित्यः" इति चाकाशेन ब्रह्म सर्वगतत्वनित्यत्वाभ्यां धर्माभ्या-　5
मुपमिमान आकाशस्यापि तौ धर्मौ सूचयति ; न च तादृशस्योत्पत्तिरुप-
पद्यते । "स यथानन्तोऽयमाकाश एवमनन्त आत्मा वेदितव्यः"
इति चोदाहरणम् ; "आकाशशरीरं ब्रह्म", "आकाश आत्मा" इति
च । न ह्याकाशस्योत्पत्तिमत्त्वे ब्रह्मणस्तेन विशेषणं संभवति—नीलेनेवो-
त्पलस्य । तस्मान्नित्यमेवाकाशेन साधारणं ब्रह्मेति गम्यते ॥　10

## स्याच्चैकस्य ब्रह्मशब्दवत् ॥ २-३-५ ॥

इदं पदोत्तरं सूत्रम् । स्यादेतत् । कथं पुनरेकस्य संभूतशब्दस्य
"तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इत्यस्मिन्नधिकारे परेषु
तेजःप्रभृतिष्वनुवर्तमानस्य मुख्यत्वं संभवति आकाशे च गौणत्वमिति ।
अत उत्तरमुच्यते—स्याच्चैकस्यापि संभूतशब्दस्य विषयविशेषवशाद्गौणो　15

प्रकटार्थविवरणम्

शब्दाच्च ॥

न केवलमनुमानादाकाशस्याजत्वम्, श्रुतितोऽपीत्याह—शब्दाच्चेति ॥
ननु "आकाशशरीरम्" इत्येतत् कथमुत्पत्तिमत्त्वं वारयतीत्याशङ्क्याह—
न ह्याकाशस्येति ॥ आकाशः शरीरमस्येत्याकाशेन ब्रह्मणो विशेषितत्वान्न व्या-　20
वृत्पत्तिमत्त्वम् ; अतोऽर्थादजत्वसिद्धिरित्यर्थः ॥

स्याच्चैकस्य ब्रह्मशब्दवत् ॥

केषांचिदाद्यशङ्कापदानामुत्तरम् । तान्येव शङ्कापदान्याह—स्यादेतदिति ॥
उत्तरत्वेन सूत्रं योजयति—स्याच्चैकस्यापीति ॥ अधिकारे प्रकरणे । "अन्नं
ब्रह्मेति व्यजानात्" इत्यादिषु गौणः ; "आनन्दो ब्रह्मेति व्यजानात्"

भाष्यम्

मुख्यश्च प्रयोगः—ब्रह्मशब्दवत्; यथैकस्यापि ब्रह्मशब्दस्य "तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्म" इत्यस्मिन्नधिकारेऽन्नादिषु गौणः प्रयोगः; आनन्दे च मुख्यः; यथा च तपसि ब्रह्मविज्ञानसाधने
5 ब्रह्मशब्दो भक्त्या प्रयुज्यते, अञ्जसा तु विज्ञेये ब्रह्मणि—तद्वत्। कथं पुनरनुत्पत्तौ नभसः "एकमेवाद्वितीयम्" इतीयं प्रतिज्ञा समर्थ्यते? ननु नभसा द्वितीयेन सद्वितीयं ब्रह्म प्राप्नोति; कथं च ब्रह्मणि विदिते सर्वं विदितं स्यादिति, तदुच्यते—"एकमेव" इति तावत्स्वकार्यापेक्षयोपपद्यते; यथा लोके कश्चित्कुम्भकारकुले पूर्वेद्युर्मृद्दण्डचक्रादीनि च
10 उपलभ्यापरेद्युश्च नानाविधान्यमत्राणि प्रसारितान्युपलभ्य ब्रूयात्—'मृदेवैकाकिनी पूर्वेद्युरासीत्' इति, स च तयावधारणया मृत्कार्यजातमेव पूर्वेद्युर्नासीदित्यभिप्रेयात्, न दण्डचक्रादि—तद्वत्; अद्वितीयश्रुतिरधिष्ठात्रन्तरं वारयति—यथा मृदोऽमत्रप्रकृतेः कुम्भकारोऽधिष्ठाता दृश्यते, नैवं ब्रह्मणो जगत्प्रकृतेरन्योऽधिष्ठातास्तीति। न च नभसापि द्वितीयेन
15 सद्वितीयं ब्रह्म प्रसज्यते, लक्षणान्यत्वनिमित्तं हि नानात्वम्; न च प्रागुत्पत्तेर्ब्रह्मनभसोर्लक्षणान्यत्वमस्ति—क्षीरोदकयोरिव संसृष्टयोः—

प्रकटार्थविवरणम्

इत्यत्र मुख्यार्थ इत्यर्थः। प्रकारान्तरमाह—यथा चेति॥ भक्त्या उपचारेण। अञ्जसा मुख्यवृत्त्या। सिद्धान्तिन आक्षेपमाह—कथं पुनरिति॥ का पुनरि-
20 हानुपपत्तिरित्याशङ्क्याह—ननु नभसेति॥ ब्रह्मणः कार्यं किंचित्प्रलये न बभूवेति घटते सत्यपि नभसीत्याह—तदुच्यत इति॥ कुले गृहे। अमत्राणि पात्राणि। अद्वितीयविशेषणस्य व्यावर्त्यं कथयति—अद्वितीयश्रुतिरिति॥ पूर्वं नभसा सद्वितीयत्वमङ्गीकृत्य अद्वितीयश्रुतिस्तत्र वारयतीत्युक्तम्। इदानीं तदपि नास्तीत्याह—न चेति॥ ननु यदि प्रलयकाले [कालेऽनन्य-

१. T. हस्तिना

भाष्यम्

व्यापित्वामूर्तत्वादिधर्मसामान्यात्; सर्गकाले तु ब्रह्म जगदुत्पादयितुं यतते, स्तिमितमितरत्तिष्ठति; तेनान्यत्वमवसीयते; तथा "आकाशशरीरं ब्रह्म" इत्यादिश्रुतिभ्योऽपि ब्रह्माकाशयोरभेदोपचारसिद्धिः; अत एव च ब्रह्मविज्ञानेन सर्वविज्ञानसिद्धिः; अपि च सर्वं कार्यमुत्पद्यमानमाकाशेनाव्यतिरिक्तदेशकालमेवोत्पद्यते, ब्रह्मणा चाव्यतिरिक्तदेशकालमेवाकाशं भवतीति—अतो ब्रह्मणा तत्कार्येण च विज्ञातेन सहविज्ञातमेवाकाशं भवति—यथा क्षीरपूर्णे घटे कतिचिदब्बिन्दवः प्रक्षिप्ताः सन्तः क्षीरग्रहणेनैव गृहीता भवन्ति; न हि क्षीरग्रहणादब्बिन्दुग्रहणं परिशिष्यते; एवं ब्रह्मणा तत्कार्यैश्चाव्यतिरिक्तदेशकालत्वाद्गृहीतमेव ब्रह्मग्रहणेन नभो भवति। तस्माद्भाक्तं नभसः संभवश्रवणमिति॥

एवं प्राप्त इदमाह—

## प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः॥ २-३-६॥

"येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्" इति, "आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितम्" इति, "कस्मिन्नु भगवो

प्रकटार्थविवरणम्

त्वम्, तत्] तर्हि कथमध्यवसीयत इत्याशङ्क्याह—सर्गकाले त्विति॥ इतश्च प्रलयकाले ब्रह्माकाशयोरन्योन्यसंश्लेषात् स्वरूपभेदो न व्यज्यत इत्यवगन्तव्यमित्याह—तथाकाशेति॥ यदुक्तं प्रतिज्ञा न सिध्यतीति तत्राह—अत एवेति॥ प्रलये ब्रह्माकाशयोः स्वरूपभेदानवभासादेवेत्यर्थः। किं च स्थितिकालेऽप्यविरोध इत्याह—अपि चेति॥ यस्मादाकाशोत्पत्तेर्गौणत्वे न कोऽप्यर्थेकरः[1] तस्मान्नित्युपसंहारः[2]॥

प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः॥

सिद्धान्ती नभसो जन्मश्रुतेः मुख्यार्थत्वप्रतिपादनपूर्वकं विप्रतिषेधं प्रतिषेद्धुमुपक्रमते—येनाश्रुतमित्यादिना॥ विरोधादेकवाक्यता न संभवतीत्युक्तं

१. A omits गौणत्वे न    २. T, T[1], P and TM. अपकरः

भाष्यम्

विज्ञाते सर्वमिदं विज्ञातं भवति" इति, "न काचन मद्बहिर्धा विद्यास्ति" इति चैवंरूपा प्रतिवेदान्तं प्रतिज्ञा विज्ञायते ; तस्याः प्रतिज्ञाया एव-महानिरनुपरोधः स्यात्, यद्यव्यतिरेकः कृत्स्नस्य वस्तुजातस्य विज्ञेया-
5 द्ब्रह्मणः स्यात् ; व्यतिरेके हि सत्येकविज्ञानेन सर्वं विज्ञायत इतीयं प्रतिज्ञा हीयेत । स चाव्यतिरेक एवमुपपद्यते, यदि कृत्स्नं वस्तुजातमेक-स्माद्ब्रह्मण उत्पद्येत । शब्देभ्यश्च प्रकृतिविकाराव्यतिरेकन्यायेनैव प्रति-ज्ञासिद्धिरवगम्यते ; तथा हि—"येनाश्रुतं श्रुतं भवति" इति प्रतिज्ञाय, मृदादिदृष्टान्तैः कार्यकारणाभेदप्रतिपादनपरैः प्रतिज्ञैषा समर्थ्यते ;
10 तत्साधनायैव चोत्तरे शब्दाः—"सदेव सोम्येदमग्र आसीदेकमेवा-द्वितीयम्" "तदैक्षत" "तत्तेजोऽसृजत" इत्येवं कार्यजातं ब्रह्मणः प्रदर्श्य, अव्यतिरेकं प्रदर्शयन्ति—"ऐतदात्म्यमिदं सर्वम्" इत्यारभ्य आ प्रपाठकपरिसमाप्तेः ; तद्यद्याकाशं न ब्रह्मकार्यं स्यात् न ब्रह्मणि विज्ञाते आकाशं विज्ञायेत ; ततश्च प्रतिज्ञाहानिः स्यात् ; न च प्रतिज्ञा-
15 हान्या वेदस्याप्रामाण्यं युक्तं कर्तुम् । तथा हि—प्रतिवेदान्तं ते ते शब्दास्तेन तेन दृष्टान्तेन तामेव प्रतिज्ञां ज्ञापयन्ति—"इदं सर्वं यदयमात्मा" "ब्रह्मैवेदममृतं पुरस्तात्" इत्येवमादयः ; तस्माज्ज्वल-नादिवदेव गगनमप्युत्पद्यते ॥

यदुक्तम्—अश्रुतेर्न वियदुत्पद्यत इति, तदयुक्तम्, वियदुत्पत्तिविषय-
20 श्रुत्यन्तरस्य दर्शितत्वात्—"तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इति । सत्यं दर्शितम्, विरुद्धं तु "तत्तेजोऽसृजत" इत्यनेन श्रुत्यन्तरेण ; न, एकवाक्यत्वात्सर्वश्रुतीनाम् । भवत्वेकवाक्यत्वमविरुद्धानाम् ; इह तु विरोध उक्तः—सकृच्छ्रुतस्य स्रष्टुः स्रष्टव्यद्वयसंबन्धासंभवात्, द्वयोश्च प्रथमजत्वासंभवात्, विकल्पासंभवाच्चेति—नैष दोषः, तेजःसर्गस्य तैत्तिरी-

प्रकटार्थविवरणम्

कृच्छ्रुतस्य—नैष दोष इति ॥ तेजःसर्गस्य तैत्तिरीयके तृतीयत्वस्य श्रवणा-

१. A. तेजःशब्दस्य

भाष्यम्

यच्च तृतीयत्वश्रवणात्—"तस्माद्वा एतस्मादात्मन आकाशः संभूतः ।
आकाशाद्वायुः । वायोरग्निः ।" इति; अशक्या हीयं श्रुतिरन्यथा परिणे-
तुम्; शक्या तु परिणेतुं छान्दोग्यश्रुतिः—तदाकाशं वायुं च सृष्ट्वा
"तत्तेजोऽसृजत" इति; न हीयं श्रुतिस्तेजोजनिप्रधाना सती श्रुत्यन्तर- 5
प्रसिद्धामाकाशस्योत्पत्तिं वारयितुं शक्नोति, एकस्य वाक्यस्य व्यापार-
द्वयासंभवात्; स्रष्टा त्वेकोऽपि क्रमेणानेकं स्रष्टव्यं सृजेत्—इत्येकवाक्य-
त्वकल्पनायां संभवन्त्यां न विरुद्धार्थत्वेन श्रुतिर्हातव्या; न चास्माभिः
सकृच्छ्रुतस्य स्रष्टुः स्रष्टव्यद्वयसंबन्धोऽभिप्रेयते, श्रुत्यन्तरवशेन स्रष्टव्यान्त-
रोपसंग्रहात्; यथा च "सर्वं खल्विदं ब्रह्म तज्जलान्" इत्यत्र साक्षादेव 10
सर्वस्य वस्तुजातस्य ब्रह्मजत्वं श्रूयमाणं न प्रदेशान्तरविहितं तेजः-
प्रमुखमुत्पत्तिक्रमं वारयति, एवं तेजसोऽपि ब्रह्मजत्वं श्रूयमाणं न
श्रुत्यन्तरविहितं नभःप्रमुखमुत्पत्तिक्रमं वारयितुमर्हति । ननु शमविधा-
नार्थमेतद्वाक्यम्—"तज्जलानिति शान्त उपासीत" इति श्रुतेः; नैत-
त्सृष्टिवाक्यम्; तस्मादेतन्न प्रदेशान्तरप्रसिद्धं क्रममुपरोद्धुमर्हतीति; "तत्ते- 15
जोऽसृजत" इत्येतत्सृष्टिवाक्यम्; तस्मादत्र यथाश्रुति क्रमो ग्रहीतव्य

प्रकटार्थविवरणम्

निरवकाशा तैत्तिरीयश्रुतिः । अतो विरोधेऽपि तदेकवाक्यतया साव-
काशा छन्दोगश्रुतिः व्याख्यातव्येत्यर्थः । किं च विरोधोऽपि तदा स्यात्, यदि
छन्दोगश्रुतिराकाशस्योत्पत्तिं वारयेत्; न तु वारयतीत्याह—न हीयं श्रुति- 20
रिति ॥ यच्चोक्तं स्रष्टुः स्रष्टव्यद्वयसम्बन्धो विरुद्ध इति तत्राह—स्रष्टा
त्वेकोऽपीति ॥ सकृच्छ्रुतत्वमप्यसिद्धमित्याह—न चास्माभिरिति ॥ ननु
"तत्तेजोऽसृजत" इति साक्षात्तेजसो ब्रह्मजत्वश्रवणादन्यथानुपपत्त्याकाशादि-
क्रमो बाध्यत एव; न तूपसंह्रियत इत्याशङ्क्याह—यथा च सर्वमिति ॥
दृष्टान्तवैषम्यं शङ्कते—नन्विति ॥ यद्यपि तत्परत्वातत्परत्ववैषम्यमस्ति, 25

१. A. विरोधेविरोधोऽपि २. T. तत्परत्वात् परत्व-

भाष्यम्

इति। नेत्युच्यते; न हि तेजःप्राथम्यानुरोधेन श्रुत्यन्तरप्रसिद्धो वियत्पदार्थः परित्यक्तव्यो भवति, पदार्थधर्मत्वात्क्रमस्य; अपि च "तत्तेजोऽसृजत" इति नात्र क्रमस्य वाचकः कश्चिच्छब्दोऽस्ति; अर्थात्तु क्रमोऽवगम्यते; स च "वायोरग्निः" इत्यनेन श्रुत्यन्तरप्रसिद्धेन क्रमेण निवार्यते; विकल्पसमुच्चयौ तु वियत्तेजसोः प्रथमजत्वविषयावसंभवानभ्युपगमाभ्यां निवारितौ; तस्मान्नास्ति श्रुत्योर्विप्रतिषेधः। अपि च छान्दोग्ये "येनाश्रुतं श्रुतं भवति" इत्येतां प्रतिज्ञां वाक्योपक्रमे श्रुतां समर्थयितुमसमाम्नातमपि वियत् उत्पत्तावुपसंख्यातव्यम्; किमङ्ग पुनस्तैत्तिरीयके समाम्नातं नभो न संगृह्यते। यथोक्तम्—आकाशस्य सर्वेणानन्यदेशकालत्वाद्ब्रह्मणा तत्कार्यैश्च सह विदितमेव तद्भवति; अतो न प्रतिज्ञा हीयते; न च "एकमेवाद्वितीयम्" इति श्रुतिकोपो

प्रकटार्थविवरणम्

तथापि "तत्तेजोऽसृजत" इत्यस्य बाधकत्वं न संभवतीत्याह—नेत्युच्यत इति॥ वियत्पदार्थस्वरूपे प्रतिषेधे सति पदार्थधर्मत्वात् क्रमस्य प्रथमस्यापि बाधो वक्तव्य इत्युभयबाधकल्पनाद्वरं तेजसः प्राथम्यमात्रबाधकल्पनमिति भावः। अङ्गीकृत्य तेजसः प्राथम्यश्रवणं बाधकमिति दूषणमुक्तम्; तदपि नास्तीत्याह—अपि च तत्तेज इति॥ ननु शाखाभेदेन विकल्पो भवतु, समर्थं वोभयमेवेत्याशङ्क्याह—विकल्पसमुच्चयौ त्विति॥ सिद्धवस्तुत्वेन विकल्पो न संभवति; उभयोरपि युगपत् प्रथमजत्वं नाभ्युपगम्यते "वायोरग्निः" इति श्रुतिविरोधादेवेत्यर्थः। इतोऽपि न शाखाभेदेन विकल्पः संभवतीत्याह—अपि च छान्दोग्य इति॥ उक्तानुवादेन दूषणमाह—यथोक्तमित्यादिना॥ मा भूत्सम्यग्ज्ञानमिति न वाच्यमित्याह-

१. T. प्राथम्य-

२. The expression बाधकमिति is written after ननु in the next line in all the mss.

३. T and T¹ omit इति

भाष्यम्

भवति, क्षीरोदकवद्ब्रह्मनभसोरव्यतिरेकोपपत्तेरिति । अत्रोच्यते—न क्षीरोदकन्यायेनेदमेकविज्ञानेन सर्वविज्ञानं नेतव्यम्; मृदादिदृष्टान्तप्रणयनाद्धि प्रकृतिविकारन्यायेनैवेदं सर्वविज्ञानं नेतव्यमिति गम्यते; क्षीरोदकन्यायेन च सर्वविज्ञानं कल्प्यमानं न सम्यग्विज्ञानं स्यात्; 5
न हि क्षीरज्ञानगृहीतस्यानेकस्य सम्यग्विज्ञानगृहीतत्वमस्ति; न च वेदस्य पुरुषाणामिव मायालीकवञ्चनादिभिरर्थावधारणमुपपद्यते; सावधारणा चेयम् "एकमेवाद्वितीयम्" इति श्रुतिः क्षीरोदकन्यायेन नीयमाना पीड्येत । न च स्वकार्यापेक्षयेदं वस्त्वेकदेशविषयं सर्वविज्ञानमेकमेवा-
द्वितीयतावधारणं चेति न्याय्यम्, मृदादिष्वपि हि तत्संभवात्—न तदपूर्ववदुपन्यसितव्यं भवति—"श्वेतकेतो यन्नु सोम्येदं महामना अनूचानमानी स्तब्धोऽस्युत तमादेशमप्राक्ष्यः येनाश्रुतं श्रुतं भवति" इत्यादिना । तस्मादशेषवस्तुविषयमेवेदं सर्वविज्ञानं सर्वस्य ब्रह्मकार्यतापेक्षयोपन्यस्यत इति द्रष्टव्यम् ॥ 10

यत्पुनरेतदुक्तम्—असंभवाद्गौणी गगनस्योत्पत्तिश्रुतिरिति, अत्र ब्रूमः— 15

## यावद्विकारं तु विभागो लोकवत् ॥ २-३-७ ॥

तुशब्दोऽसंभवाशङ्काव्यावृत्त्यर्थः । न खल्वाकाशोत्पत्तावसंभवाशङ्का कर्तव्या; यतो यावत्किंचिद्विकारजातं दृश्यते—घटघटिकोदञ्चनादि वा, कटककेयूरकुण्डलादि वा, सूचीनाराचनिस्त्रिंशादि वा—तावानेव 20

प्रकटार्थविवरणम्

न च वेदस्येति ॥ इतश्च नोपचार इत्याह—सावधारणा चेयमिति ॥ यथोक्तं स्वकार्यापेक्षयेति, तत्राह—न चेति ॥

यावद्विकारं तु विभागो लोकवत् ॥

उक्तार्थोपाकरणाय सूत्रमवतारयति—यत्पुनरेतदुक्तमिति ॥ विमतं 25
कार्यम्, विकारत्वात्, घटादिवदिति प्रयोगः । विभक्तत्वं च स्वातन्त्र्येण [illegible]-

भाष्यम्

विभागो लोके लक्ष्यते ; न त्वविकृतं किंचित्कुतश्चिद्विभक्तमुपलभ्यते ; विभागश्चाकाशस्य पृथिव्यादिभ्योऽवगम्यते ; तस्मात्सोऽपि विकारो भवितुमर्हति । एतेन दिक्कालमनःपरमाण्वादीनां कार्यत्वं व्याख्यातम् ।

5 प्रकटार्थविवरणम्

व्यावृत्तबुद्धिविषयत्वम् ; ततो नात्माविद्यातत्संबन्धभेदेषु व्यभिचारः । ननु तर्हि दिगादिषु व्यभिचार इत्याशङ्क्याह—एतेनेति ॥ विमतपदेन संगृहीतत्वा-दित्यर्थः । का दिक्, को वा काल इति । आदित्योदयाद्युपलक्षित आकाशप्रदेशो दिक् ; आदित्योदयादिक्रियाधर्मः कालः; तदुभयं प्रत्यक्षम्, उदयकालोऽयम्,

10 एककालीनमिदं, प्राचीयम्, प्रतीचीयमिति मानान्तरानभिज्ञानामपि प्रत्यय-दर्शनात् ; अत एवाकाशात् [ काशवत् ] तदुत्पत्तिं मन्वानः सूत्रयामास । ये तु वैशेषिकाः एकं कालमचीकॢपन् न तेषां यौग[अयौग]पद्यादिप्रत्य-यभेदोऽवकल्पेत, कालैक्ये सर्वस्य युगपत्कृतत्वप्रसङ्गात् । अथ क्रियाभेदो-पाधिकालभेदादयुगपत्प्रत्ययः तर्ह्येककालकृतानेककर्मसु युगपत्प्रत्ययः न

15 स्यात् । अथ क्रमभाविक्रियाभेदोपाधिकः कालभेदः प्राप्तः, तर्हि इतरेत-राश्रयासिद्धे [श्रयः । सिद्धे] कालभेदे क्रियायाः क्रमभावित्वम् ; सिद्धे च तस्मिन् कालभेद इति । किं च कालाल्पत्वबहुत्वज्ञानपूर्वकक्षिप्रादि-प्रत्ययः; तद्वलाच्च कालसिद्धिरिति परस्पराश्रयम् । यच्चानुमानम्—महत्त्वजातिः दिगतिरिक्तशब्दाद्विशेषगुणशून्याधिकरणवृत्तिः, परिमाणतरतमभावविभमा-

20 स्पदजातित्वात्, अणुत्ववदिति कालसाधनम् ; दिक्साधने तु कालातिरिक्ते-त्यादि वचनीयम्—तदसत् ; सिद्धसाधनत्वात् ; महत्परिमाणगुणे द्रव्य-विशेषणे चाप्रसिद्धविशेषणता; परिमाणतारतम्यस्य चानिर्वचनीयत्वेनाप्रामाणि-कत्वात् तार्किकाणामसिद्धो हेतुः । दृष्टान्तश्चास्माकं साध्यविकलः । यच्चानु-मानान्तरं दिक्सिद्धौ — विवादाध्यासितानि कार्याणि कालाकाशात्माति-

१. TM. तेनेति ॥
२. T,T¹ and P omit धर्मः
३. A. काकः
४. TM. स्पन्द
५. A omits आदि
६. TM. महत्त्व
७. A omits आत्मा

## भाष्यम्

नन्वात्माप्याकाशादिभ्यो विभक्त इति तस्यापि कार्यत्वं घटादिव-
त्प्राप्नोति ; न, "आत्मन आकाशः संभूतः" इति श्रुतेः ; यदि
ह्यात्मापि विकारः स्यात्, तस्मात्परमन्यच्च श्रुतमित्याकाशादि सर्वं कार्यं
निरात्मकमात्मनः कार्यत्वे स्यात् ; तथा च शून्यवादः प्रसज्येत ;
आत्मत्वाच्चात्मनो निराकरणशङ्कानुपपत्तिः न ह्यात्मागन्तुकः कस्यचित्,
स्वयंसिद्धत्वात् ; न ह्यात्मा आत्मनः प्रमाणमपेक्ष्य सिध्यति ; तस्य हि
प्रत्यक्षादीनि प्रमाणान्यप्रसिद्धप्रमेयसिद्धय उपादीयन्ते ; न ह्याकाशादयः
पदार्थाः प्रमाणनिरपेक्षाः स्वयंसिद्धाः केनचिदभ्युपगम्यन्ते ; आत्मा

## प्रकटार्थविवरणम्

रिक्तैकद्रव्यजन्यानि, कार्यत्वात्, एकतन्तुहेतुककार्यवत् ; कालपदस्थाने
दिक्पदन्यासेन दिक्[काल]सिद्धिरपि द्रष्टव्येति—तत्रापि मायाभ्युपगमेन सिद्ध-
साधनम्, विशिष्टप्रतिज्ञासिद्धेरप्रसिद्धविशेषणत्वं च; साध्यविकलश्च दृष्टान्तः,
सिद्धसाधनं वा; महाभूतैकदेशेऽपीति पक्ष[भूतेपक्षैकदेशे विपक्ष]बाधकभावात्
सन्दिग्धश्च—इत्यलम् । इदानीं विभक्तत्वस्य लक्षणमगृहीतत्वे च[त्वेन] यथा-
श्रुतमेव हेत्वर्थं गृहीत्वानिष्टमापादयति—नन्वात्मापीति ॥ मूलकारणत्वे-
नानादित्वग्राहकागमविरोधात् नायं प्रसङ्ग इत्याह—अनात्मन आकाश इति ॥
विपक्षे च सर्वं कार्यं निरधिष्ठानं स्यादित्याह—यदि हीति ॥ अस्तु तर्हि
शून्यवाद एवेत्याशङ्क्याह—आत्मत्वाच्चेति ॥ निराकर्तुरपि स्वरूपत्वेन सिद्ध-
त्वादित्यर्थः । वस्तुसंग्रहवाक्यं विवृणोति—न ह्यात्मागन्तुक इत्यादिना ॥
स्वयंसिद्धत्वादिति ॥ सत्ताप्रतीत्योः अन्यनिरपेक्षतया सिद्धत्वादित्यर्थः ।
तत्र प्रतीतौ तावन्नैरपेक्ष्यं साधयति—न ह्यात्मात्मन इति ॥ यथा
छिदिः छेद्यद्वैधीभावायोपादीयते, न छेत्तारं व्याप्नोति, तथा प्रमाणानि
प्रमेयसिद्धये, न प्रमातृसिद्धये भवन्तीत्यर्थः । ननु आकाशादीनामात्म-
नश्च वस्तुत्वाविशेषात् स्वतस्सिद्धिरसिद्धिर्वा समानैव स्यादित्याशङ्क्याह—
न ह्याकाशादय इति ॥ प्रमाणप्रवृत्त्यन्वयव्यतिरेकवत्त्वादाकाशादिसिद्धेर्न

१. A adds हि

२. A. समानन्यायः

भाष्यम्

तु प्रमाणादिव्यवहाराश्रयत्वात्प्रागेव प्रमाणादिव्यवहारात्सिध्यति ; न चेदृशस्य निराकरणं संभवति ; आगन्तुकं हि वस्तु निराक्रियते, न स्वरूपम् ; य एव हि निराकर्ता तदेव तस्य स्वरूपम् ; न ह्यग्नेरौष्ण्यम-
5 ग्निना निराक्रियते ; तथा अहमेवेदानीं जानामि वर्तमानं वस्तु, अहमेवातीतमतीततरं चाज्ञासिषम्, अहमेवानागतमनागततरं च ज्ञास्यामि इति अतीतानागतवर्तमानभावेनान्यथाभवत्यपि ज्ञातव्ये न ज्ञातुरन्यथाभावोऽस्ति, सर्वदा वर्तमानस्वभावत्वात् ; तथा भस्मीभवत्यपि देहे नात्मन उच्छेदः ; वर्तमानस्वभावादन्यस्वभावत्वं वा न संभावयितुं
10 शक्यमित्येवमप्रत्याख्येयस्वभावत्वादकार्यत्वमात्मनः, कार्यत्वं चाकाशस्य ॥

यत्तूक्तं समानजातीयमनेकं कारणद्रव्यं व्योम्नो नास्तीति, तत्प्रत्युच्यते—न तावत्समानजातीयमेवारभते, न भिन्नजातीयमिति नियमोऽस्ति ; न हि तन्तूनां तत्संयोगानां च समानजातीयत्वमस्ति,
15 द्रव्यगुणत्वाभ्युपगमात् ; न च निमित्तकारणानामपि तुरीवेमादीनां समानजातीयत्वनियमोऽस्ति । स्यादेतत्—समवायिकारणविषय एव

प्रकटार्थविवरणम्

स्वतस्त्वम्, प्रमाणवृत्तेः प्रागेव सुषुप्तेऽप्यात्मसिद्धेः ; अन्यथा परामर्शायोगादात्मनः सिद्धिः स्वत एवेत्यभिप्रायः । ततः किमित्यत आह —न
20 चेदृशस्येति ॥ इदानीं सत्तायामपि नैरपेक्ष्यं साधयति—तथाहमेवेदानीमिति ॥ सदाहमित्यापरोक्ष्यैकरूपावभासनान्न नास्ति सत्ताव्यभिचारो येन अन्यतः सत्ताकाङ्क्षेतेत्यर्थः । ननु तर्हि देहस्योच्छेदो भविष्यतीत्याशङ्क्याह—तथा भस्मीभवतीति ॥ निरवयवस्य नभोवद्दाहाद्युपरागाभावादित्यर्थः । प्रासङ्गिकमनिष्टप्रसङ्गपरिहारमुपसंहरति — इत्येवमिति ॥

25 उक्तमनूद्य व्यभिचारमाह — यत्तूक्तमित्यादिना ॥

१. T. सुप्तेप्यात्म     २. TM. न तथा

भाष्यम्

समानजातीयत्वाभ्युपगमः न कारणान्तरविषय इति; तदप्यनैकान्तिकम्; सूत्रगोवालैरनेकजातीयैरेका रज्जुः सृज्यमाना दृश्यते; तथा सूत्रैरूर्णादिभिश्च विचित्रान्कम्बलान्वितन्वते; सत्त्वद्रव्यत्वाद्यपेक्षया वा समानजातीयत्वे कल्प्यमाने नियमानर्थक्यम्, सर्वस्य सर्वेण समानजातीयकत्वात् । नाप्यनेकमेवारभते, नैकम्—इति नियमोऽस्ति; अणुमनसोराद्यकर्मारम्भाभ्युपगमात् । एकैको हि परमाणुर्मनश्चाद्यं कर्मारभते, न द्रव्यान्तरैः संहत्य—इत्यभ्युपगम्यते । द्रव्यारम्भ एवानेकारम्भकत्वनियम इति चेत्, न; परिमाणाभ्युपगमात् । भवेदेष नियमः—यदि संयोगसचिवं द्रव्यं द्रव्यान्तरस्यारम्भकमभ्युपगम्येत; तदेव तु द्रव्यं विशेषवदवस्थान्तरमापद्यमानं कार्यं नामाभ्पयुगम्यते; तच्च क्वचिदनेकं परिणमते मृद्बीजादि, अङ्कुरादिभावेन; क्वचिदेकं परिणमते क्षीरादि, दध्यादिभावेन; नेश्वरशासनमस्ति—अनेकमेव कारणं कार्यं जनयतीति । अतः श्रुतिप्रामाण्यादेकस्माद्ब्रह्मण आकाशादिमहाभूतोत्पत्तिक्रमेण जगज्जातमिति निश्चीयते; तथा चोक्तम्—"उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि" इति ॥

यच्चोक्तमाकाशस्योत्पत्तौ न पूर्वोत्तरकालयोर्विशेषः संभावयितुं शक्यत इति, तदयुक्तम्; येनैव विशेषेण पृथिव्यादिभ्यो व्यतिरिच्यमानं नभः स्वरूपवदिदानीमध्यवसीयते, स एव विशेषः प्रागुत्पत्तेर्नासीदिति गम्यते; यथा च ब्रह्म न स्थूलादिभिः पृथिव्यादिस्वभावैः स्वभाववत्—"अस्थूलमनणु" इत्यादिश्रुतिभ्यः, एवमाकाशस्वभावेनापि न स्वभाववदनाकाशमिति श्रुतेरवगम्यते; तस्मात्प्रागुत्पत्तेरनाकाशमिति

प्रकटार्थविवरणम्

ननु "आकाशशरीरं ब्रह्म" इति श्रुतिरस्ति; कथमवकाशाभावे ब्रह्मणोऽवस्थानमित्याशङ्क्याह—यथा च न ब्रह्मणः [न ब्रह्म] स्थूलादिभिरिति ॥ आकाशवच्छरीरमस्येति आकाशशरीरम् । अवकाशान्तरमन्तरेण आकाश-

१. T. T¹ and P omit आकाशशरीरम्　　२. T, T¹ and P. आकाश-

भाष्यम्

स्थितम् । यदप्युक्तं पृथिव्यादिवैधर्म्यादाकाशस्याजत्वमिति, तदप्यसत्, श्रुतिविरोधे सत्युत्पत्त्यसंभवानुमानस्याभासत्वोपपत्तेः उत्पत्त्यनुमानस्य च दर्शितत्वात्; अनित्यमाकाशम्, अनित्यगुणाश्रयत्वात्, घटादिव-
5 दित्यादिप्रयोगसंभवाच्च; आत्मन्यनैकान्तिकमिति चेत्, न; तस्यौपनिषदं प्रत्यनित्यगुणाश्रयत्वासिद्धेः; विभुत्वादीनां चाकाशस्योत्पत्तिवादिनं प्रत्यसिद्धत्वात् । यच्चोक्तमेतत्—शब्दाच्चेति—तत्रामृतत्वश्रुतिस्तावद्वियति 'अमृता दिवौकसः' इतिवद्द्रष्टव्या; उत्पत्तिप्रलययोरुपपादितत्वात्; "आकाशवत्सर्वगतश्च नित्यः" इत्यपि प्रसिद्धमहत्त्वेनाकाशोप-
10 मानं क्रियते निरतिशयमहत्त्वाय, नाकाशसमत्वाय—यथा 'इषुरिव सविता धावति' इति क्षिप्रगतित्वायोच्यते, न इषुतुल्यगतित्वाय—तद्वत्; एतेनानन्तत्वोपमानश्रुतिर्व्याख्याता; "ज्यायानाकाशात्" इत्यादिश्रुतिभ्यश्च ब्रह्मणः सकाशात् आकाशस्योनपरिमाणत्वसिद्धिः "न तस्य प्रतिमास्ति" इति च ब्रह्मणोऽनुपमानत्वं दर्शयति; "अतोऽन्य-

15 प्रकटार्थविवरणम्

स्थितिवद्ब्रह्मणोऽव्यवस्थानं[णो व्यवस्थानं] न विस्मयकरमित्यर्थः । उपक्रम्य कालात्ययापदिष्टत्वमाह—यदप्युक्तमित्यादिना ॥ ननु श्रुति[1]र्न्यायहीनानामनुमानं बाधत इत्याशङ्क्याह—उत्पत्त्यनुमानस्य चेति ॥ अनुमानान्तरं चास्तीत्याह — अनित्यमिति ॥ नित्यसत्त्वादिगुणाश्रयमादायां
20 व्यभिचारपरिहारायाह—अनित्येति ॥ आकाशो जायते, महाभूतत्वात्, शब्दादिबाह्येन्द्रियग्राह्यगुणाधारत्वाद्वा, पृथिव्यादिवदित्यादिशब्दात् गृह्यते । सर्वत्रैव विपक्षे तत्परप्रतिज्ञाहानिर्बाध इति द्रष्टव्यम् । आद्यहेतोरनैकान्तिकत्वमाशङ्क्य परिहरति—आत्मनेति ॥ किं च त्वदुक्ता हेतवः ममासंप्रतिपन्नाः; मदुक्तास्तु तवापि संप्रतिपन्ना इति शक्नुवन्ति त्वदुक्त-
25 हेतूनाभासीकर्तुमित्याह—विभुत्वादीनां चेति ॥ एवं तावन्नानुमानं नित्यत्वे प्रमाणमस्तीत्युपपाद्येदानीं यच्चैतदुक्तं शब्दान्नित्यत्वमिति तद्दूषयति—यच्चैतदित्या-

1. TM. श्रुतिन्याय

भाष्यम्

दार्तम्" इति च ब्रह्मणोऽन्येषामाकाशादीनामार्तत्वं दर्शयति। तपसि ब्रह्मशब्दवदाकाशस्य जन्मश्रुतेर्गौणत्वमित्येतदाकाशसंभवश्रुत्यनुमानाभ्यां परिहृतम्। तस्माद्ब्रह्मकार्यं वियदिति सिद्धम्॥

[मातरिश्वाधिकरणम्] 5

## एतेन मातरिश्वा व्याख्यातः॥ २-३-८॥

अतिदेशोऽयम्। एतेन वियद्व्याख्यानेन मातरिश्वापि वियदाश्रयो वायुर्व्याख्यातः। तत्राप्येते यथायोगं पक्षा रचयितव्याः— न वायुरुत्पद्यते, छान्दोगानामुत्पत्तिप्रकरणेऽनाम्नानादित्येकः पक्षः, अस्ति तु तैत्तिरीयाणामुत्पत्तिप्रकरण आम्नानम् "आकाशाद्वायुः"— 10 इति पक्षान्तरम्; ततश्च श्रुत्योर्विप्रतिषेधे सति गौणी वायोरुत्पत्तिश्रुतिः, असंभवात् इत्यपरोऽभिप्रायः; असंभवश्च "सैषानस्तमिता देवता यद्वायुः" इत्यस्तमयप्रतिषेधात् अमृतत्वादिश्रवणाच्च। प्रतिज्ञानुपरोधाद्यावद्विकारं च विभागाभ्युपगमादुत्पद्यते वायुरिति सिद्धान्तः। अस्तमयप्रतिषेधोऽपरविद्याविषय आपेक्षिकः, अग्न्यादीनामिव वायो- 15 रस्तमयाभावात्। कृतप्रतिविधानं चामृतत्वादिश्रवणम्। ननु वायोराकाशस्य च तुल्ययोरुत्पत्तिप्रकरणे श्रवणाश्रवणयोरेकमेवाधिकरणमुभयविषयमस्तु किमतिदेशेनासति विशेष इति, उच्यते—सत्यमेव-

प्रकटार्थविवरणम्

दिना॥ तपसि ब्रह्मशब्दस्य गौणत्वं युक्तम्, ब्रह्मज्ञानसाधनत्वात्; बलवद्बाध- 20 काभावात्तु न संभूतशब्दस्य गौणत्वमित्याह— तपसीति॥

एतेन मातरिश्वा व्याख्यातः॥

पूर्वत्र ब्रह्मण आकाशाद्यनृतत्वप्रतिपादकसमन्वयस्यानुत्पत्तिश्रुतिविरोधो नास्तीत्युक्तम्। उत्पत्तिश्रुतेः मुख्यार्थत्वव्याख्यानेन। इदानीं ब्रह्मणो वायु- 25 त्वाद्यनृतत्वप्रतिपादकसमन्वयस्य नित्यत्वश्रुतिविरोधो नास्तीत्यतिदिश्यत इत्याह— अतिदेशोऽयमिति॥ अतिदेशमाक्षिप्य समाधत्ते—ननु वायोरित्यादिना॥

भाष्यम्

मेतत्; तथापि मन्दधियां शब्दमात्रकृताशङ्कानिवृत्त्यर्थोऽयमतिदेशः क्रियते—संवर्गविद्यादिषु उपास्यतया वायोर्महाभागत्वश्रवणात्, अस्त-मयप्रतिषेधादिभ्यश्च भवति नित्यत्वाशङ्का कस्यचिदिति ॥

5 [ असंभवाधिकरणम् ]

## असंभवस्तु सतोऽनुपपत्तेः ॥ २-३-९ ॥

वियत्पवनयोरसंभाव्यमानजन्मनोरप्युत्पत्तिमुपश्रुत्य, ब्रह्मणोऽपि भवेत्कुतश्चिदुत्पत्तिरिति स्यात्कस्यचिन्मतिः; तथा विकारेभ्य एवाकाशा-दिभ्य उत्तरेषां विकाराणामुत्पत्तिमुपश्रुत्य, आकाशस्यापि विकारा-10 देव ब्रह्मण उत्पत्तिरिति कश्चिन्मन्येत; तामाशङ्कामपनेतुमिदं सूत्रम्— असंभवस्तु इति । न खलु ब्रह्मणः सदात्मकस्य कुतश्चिदन्यतः संभव उत्पत्तिराशङ्कितव्या; कस्मात्? अनुपपत्तेः । सन्मात्रं हि ब्रह्म; न तस्य सन्मात्रादेवोत्पत्तिः संभवति, असत्यतिशये प्रकृतिविकारभावानुप-पत्तेः; नापि सद्विशेषात्, दृष्टविपर्ययात्—सामान्याद्धि विशेषा उत्पद्य-15 माना दृश्यन्ते, मृदादेर्घटादयः, न तु विशेषेभ्यः सामान्यम्; नाप्यसतः,

प्रकटार्थविवरणम्

असंभवस्तु सतोऽनुपपत्तेः ॥

ब्रह्मणोऽजत्वं प्रतिपादयतः समन्वयस्य किम् "त्वं जातो भवसि विश्वतो-मुखः" इत्यादिश्रुतिविरोधोऽस्ति उत नास्तीति सन्देहे पूर्वपक्षमाह—वियत्पवन-20 योरिति ॥ ब्रह्म जायते कारणत्वात्, आकाशवत्; आकाशो विकाराज्जायते कार्यत्वात्, वायुवत् इत्यनुमानानुगृहीतजन्मश्रुतेः प्रामाण्यादस्ति विरोध इति बौद्धगन्धिनः पूर्वः पक्षः । ब्रह्माजम्, सदादिकारणशून्यत्वात्, नरविषाणवदि-त्यनुमानविरोधादतत्परश्रुतेः अनुमानस्य वा विपक्षबाधकशून्यस्याप्रामाण्या-न्नास्ति विरोध इति सिद्धान्तमाह—न खलु ब्रह्मण इत्यादिना ॥ इतश्च 25 "त्वं जातो भवसि" इति श्वेताश्वतराणां श्रुतिः सर्वात्मभावप्रतिपादनपरा न

१. A. अनुमानादर्थपर

भाष्यम्

निरात्मकत्वात्; "कथमसतः सज्जायेत" इति चाक्षेपश्रवणात्। "स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः" इति च ब्रह्मणो जनयितारं वारयति। वियत्पवनयोः पुनरुत्पत्तिः प्रदर्शिता, न तु ब्रह्मणः साऽस्तीति वैषम्यम्। न च विकारेभ्यो विकारान्तरोत्पत्तिदर्शनाद्ब्रह्मणोऽपि विकारत्वं भवितुमर्हति, मूलप्रकृत्यनभ्युपगमेऽनवस्थाप्रसङ्गात्; या मूलप्रकृतिरभ्युपगम्यते, तदेव च नो ब्रह्मेत्यविरोधः॥ 5

[ तेजोऽधिकरणम् ]

## तेजोऽतस्तथा ह्याह ॥ २-३-१० ॥

छान्दोग्ये सन्मूलत्वं तेजसः श्रावितम्, तैत्तिरीयके तु वायुमूलत्वम्; तत्र तेजोयोनिं प्रति श्रुतिविप्रतिपत्तौ सत्याम्, प्राप्तं तावद्ब्रह्मयोनिकं तेज इति। कुतः? "सदेव" इत्युपक्रम्य "तत्तेजोऽसृजत" इत्युपदेशात्; सर्वविज्ञानप्रतिज्ञायाश्च ब्रह्मप्रभवत्वे सर्वस्य संभवात्; "तज्जलान्" इति चाविशेषश्रुतेः; "एतस्माज्जायते प्राणः" इति चोपक्रम्य श्रुत्यन्तरे सर्वस्याविशेषेण ब्रह्मजत्वोपदेशात्; तैत्तिरीयके च "स तपस्तप्त्वा। 10 15

प्रकटार्थविवरणम्

जन्मपरा[१] तत्रैवाजत्वश्रवणादित्याह — स कारणमिति॥ यत्रोक्तं वियत्पवनयोरसंभाव्यमानजन्मत्वमिति, तत्राह-वियत्पवनयोरिति॥ न केवलं विपक्षबाधकानुकूलतर्काभावस्त्ववथानुमानस्य, प्रतिकूलतर्कसद्भावश्चेत्याह — न च विकारेभ्य इति॥ अनवस्थितकारणाभ्युपगमे क्वचिदपि निराकाङ्क्षकार्यप्रत्ययो न स्यादिति मूलक्षतिः॥ 20

तेजोऽतस्तथा ह्याह॥

तेजो विषयः। तत्किं ब्रह्मकार्यं वायुकार्यं वेति सन्देहस्य बीजमुक्त्वा पूर्वपक्षमाह—छान्दोग्य इति॥ आकाशाधिकरणे सर्वविज्ञानप्रतिज्ञानुगृहीतो-

१. T. जन्म वा २. T. असमाप्य

भाष्यम्

इदं सर्वमसृजत । यदिदं किंच ।" इत्यविशेषश्रवणात्; तस्मात् "वायोरग्निः" इति क्रमोपदेशो द्रष्टव्यः—वायोरनन्तरमग्निः संभूत इति । एवं प्राप्ते, उच्यते—

5 तेजः अतः मातरिश्वनो जायत इति; कस्मात्? तथा ह्याह—"वायोरग्निः" इति । अव्यवहिते हि तेजसो ब्रह्मजत्वे वायोरग्निरितीयं श्रुतिः कदर्थिता स्यात् । ननु क्रमार्थैषा भविष्यतीत्युक्तम्; नेति ब्रूमः—"तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इति पुरस्तात्संभवत्यपादानस्यात्मनः पञ्चमीनिर्देशात्, तस्यैव च संभवतेरिहाधिकारात्, पर-
10 स्तादपि तदधिकारे "पृथिव्या ओषधयः" इत्यपादानपञ्चमीदर्शनात्, "वायोरग्निः" इत्यपादानपञ्चम्येवैषेति गम्यते; अपि च, वायोरूर्ध्वमग्निः संभूतः—इति कल्प्य उपपदार्थयोगः, क्लृप्तस्तु कारकार्थयोगः—वायोरग्निः संभूत इति; तस्मादेषा श्रुतिर्वायुयोनित्वं तेजसोऽवगमयति । नन्वितरापि श्रुतिर्ब्रह्मयोनित्वं तेजसोऽवगमयति—"तत्तेजोऽ-
15 सृजत" इति; न, तस्याः पारम्पर्यजत्वेऽप्यविरोधात्; यदापि ह्याकाशं वायुं च सृष्ट्वा वायुभावापन्नं ब्रह्म तेजोऽसृजतेति कल्प्यते, तदापि

प्रकटार्थविवरणम्

त्पत्तिश्रुतेः ब्रह्मजत्वं वर्णितम् । तेनैव न्यायेन तेजसोऽपि ब्रह्मजत्वमेवेत्यर्थः । का तर्हि "वायोरग्निः" इति श्रुतेर्गतिरित्याशङ्क्याह—तस्माद्वायोरिति ॥

20 ब्रह्मणो मूलकारणत्वेऽपि वायुजत्वमपि तेजसः श्रुतिबलादभ्युपगन्तव्यमित्याह—तथा ह्याहेति ॥ कदर्थिता पीडिता । पूर्वपक्षिणोक्तमर्थान्तरमनूद्य वैरूप्यप्रसङ्गेन परिहरति—ननु क्रमार्थेत्यादिना ॥ किं च प्रकरणादुपादानाख्यापादानकारकाभिधायित्वं पञ्चम्याः सिद्धं परित्यज्यासिद्धः[1] पदान्तरार्थयोगः कल्पयितुं न शक्यत इत्याह—अपि चेति ॥ श्रुतिबलात् वायुजत्वं चेत्, तर्हि
25 ब्रह्मजत्वमपि श्रुतिबलादेव[2] । अतः श्रुत्योरेव परस्परविप्रतिषेध इत्याह—नन्वितरापीति ॥ साक्षात्पारम्पर्यविषयत्वेन विरोधं परिहरति—न तस्या

१. A. ब्याहर्तं पदान्तरार्थयोगं   २. T and T¹ omit श्रुतिबलादेवातः

भाष्यम्

ब्रह्मजत्वं तेजसो न विरुध्यते, यथा—तस्याः शृतम्, तस्या दधि, तस्या आमिक्षे त्यादि; दर्शयति च ब्रह्मणो विकारात्मनावस्थानम्—"तदात्मानं स्वयमकुरुत" इति; तथा चेश्वरस्मरणं भवति—"बुद्धिर्ज्ञानमसंमोहः" इत्याद्यनुक्रम्य "भवन्ति भावा भूतानां मत्त एव पृथग्विधाः" इति। 5
यद्यपि बुद्ध्यादयः स्वकारणेभ्यः प्रत्यक्षं भवन्तो दृश्यन्ते, तथापि सर्वस्य भावजातस्य साक्षात्प्रणाड्या वा ईश्वरवंश्यत्वात्; एतेनाक्रमसृष्टिवादिन्यः श्रुतयो व्याख्याताः, तासां सर्वथोपपत्तेः, क्रमवत्सृष्टिवादिनीनां त्वन्यथानुपपत्तेः। प्रतिज्ञापि सद्वंश्यत्वापेक्षया, नाव्यवहितजन्यत्वम्—इत्यविरोधः॥ 10

[ अबधिकरणम् ]

# आपः ॥ २-३-११ ॥

"अतस्तथा ह्याह" इत्यनुवर्तते; आपः, अतः तेजसः, जायन्ते; कस्मात्? तथा ह्याह—"तदपोऽसृजत" इति, "अग्नेरापः" इति च;

प्रकटार्थविवरणम् 15

इति ॥ साक्षात्पारम्पर्याभ्यां कारणत्वे दृष्टान्तमाह—यथेति ॥ तस्या धेनोः शीतं[शृतं] क्षीरम्। तप्ते पयो दधिसंसृष्टमामिक्षा; तत्र क्षीरस्य दधिसाक्षात्कारणत्वेऽपि यथा गव्यं दधि इति प्रतियोग[प्रयोगः]तथात्रापि भविष्यतीत्यर्थः। तर्हि ब्रह्मणो वायुभावापत्तौ किं प्रमाणमित्याशङ्क्याह—दर्शयति चेति ॥ परम्परयापीश्वरस्य कारणत्वे स्मृतिं प्रमाणयति—तथा चेति ॥ 20
प्रणाड्या परम्परया। ईश्वरवंशोद्भवत्वादिदं स्मरणमित्यभिप्रायकथनम् "इदं सर्वमसृजत" इत्यादिश्रुतेरपि पारंपर्यार्थत्वमेवेत्याह—एतेनेति ॥ यच्च सर्वविज्ञानप्रतिज्ञालिङ्गं तदप्यन्यथासिद्धमित्याह—प्रतिज्ञापीति ॥

आपः ॥

पूर्वसूत्रात्पदान्तरमनुकृष्य व्याचष्टे—अतस्तथा हीति ॥ ननु यद्यपि श्रुतं 25
तेजसोऽप्कारणत्वम्, तथापि प्रत्यक्षेण विरोधोपलम्भात् सन्दिग्धं तदिति

१. T, T[1], P and A omit इति　　२. T. पर्यायत्वमेव

भाष्यम्

सति वचने नास्ति संशयः । तेजसस्तु सृष्टिं व्याख्याय पृथिव्या व्याख्यास्यन् अपोऽन्तरियामित्याप इति सूत्रयांबभूव ॥

[ पृथिव्यधिकाराधिकरणम् ]

5 पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ २-३-१२ ॥

"ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति ता अन्नमसृजन्त" इति श्रूयते; तत्र संशयः—किमनेनान्नशब्देन व्रीहियवाद्यभ्यवहार्यं वा ओदनाद्युच्यते, किं वा पृथिवीति; तत्र प्राप्तं तावत्—व्रीहियवादि ओदनादि वा परिग्रहीतव्यमिति; तत्र ह्यन्नशब्दः प्रसिद्धो लोके; वाक्य-
10 शेषोऽप्येतमर्थमुपोद्बलयति—"तस्माद्यत्र क्वचन वर्षति तदेव भूयिष्ठमन्नं

प्रकटार्थविवरणम्

संशयं प्रदर्श्य सूत्रं व्याख्येयमित्याशङ्क्याह—सति वचन इति ॥ यद्यपि स्थूलयोरप्तेजसोर्विरोधो दृश्यते, तथापि अपञ्चीकृतयोरतीन्द्रियत्वात्सति वचने नास्ति तत्र संशय इत्यर्थः । तर्हि संशयाभावे किमर्थं सूत्रप्रणयन-
15 मित्याशङ्क्याह—[तेजसस्त्विति] ॥ महाभूतसर्गस्यापि[स्यावि]प्रतिषेधव्याख्याने प्रक्रान्ते क्रमप्राप्ता अपोऽनन्तरीयम[रियाम्] अपामतिक्रमणं मा भूदिस्यभिप्रेत्य प्रत्यक्षविरोधात् "अग्नेरापः" इति श्रुतेः गौणार्थत्वमिति मन्दाशङ्कापाकरणाय सूत्रितवानित्यर्थः ॥

पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥

20 श्रुतिवाक्यं पठित्वान्नशब्दान्महाभूतप्रकरणाच्च संशयमाह—ता आप इत्यादिना ॥ अभ्यवहार्यं भक्षणयोग्यम् । पूर्वत्र बलवच्छ्रुत्यवष्टम्भेन विरोधः परिहृतः । इहापि बलवद्वाक्यश्रुतिबलेन व्रीह्यादिकं ग्राह्यमित्याह—तत्र प्राप्तमित्यादिना ॥ व्रीह्यादिपरिग्रहे लिङ्गमप्यस्तीत्याह—वाक्यशेषोऽपीति ॥

१. TM and A. तेजसस्त्विति
२. T, TM and A omit यद्यपि...त्याशङ्क्याह
३. T, T[1], P and TM. प्रक्रान्तक्रम
A. प्रक्रान्ते क्रम प्राप्तादपो नान्त-
४. T. प्रभार्थ-

भाष्यम्

भवति" इति—व्रीहियवाद्येव हि सति वर्षणे बहु भवति, न पृथिवीति। एवं प्राप्ते, ब्रूमः—

पृथिव्येवेयमन्नशब्देनाद्भ्यो जायमाना विवक्ष्यत इति; कस्मात्? अधिकारात्, रूपात्, शब्दान्तराच्च। अधिकारस्तावत्—"तत्तेजोऽसृजत" "तदपोऽसृजत" इति महाभूतविषयो वर्तते; तत्र क्रमप्राप्तां पृथिवीं महाभूतं विलङ्घ्य नाकस्माद्व्रीह्यादिपरिग्रहो न्याय्यः। तथा रूपमपि वाक्यशेषे पृथिव्यनुगुणं दृश्यते—"यत्कृष्णं तदन्नस्य" इति; न ह्योदनादेरभ्यवहार्यस्य कृष्णत्वनियमोऽस्ति, नापि व्रीह्यादीनाम्। ननु पृथिव्या अपि नैव कृष्णत्वनियमोऽस्ति, पयःपाण्डुरस्याङ्गाररोहितस्य च क्षेत्रस्य दर्शनात्; नायं दोषः—बाहुल्यापेक्षत्वात्; भूयिष्ठं हि पृथिव्याः कृष्णं रूपम्, न तथा श्वेतरोहिते; पौराणिका अपि पृथिवीच्छायां शर्वरीमुपदिशन्ति, सा च कृष्णाभासा—इत्यतः कृष्णं रूपं पृथिव्या इति श्लिष्यते। श्रुत्यन्तरमपि समानाधिकारम् "अद्भ्यः पृथिवी" इति भवति, "तद्यदपां शर आसीत्तत्समहन्यत सा पृथिव्यभवत्" इति च; पृथिव्यास्तु व्रीह्यादेरुत्पत्तिं दर्शयति—"पृथिव्या ओषधयः। ओषधीभ्योऽन्नम्।" इति च। एवमधिकारादिषु पृथिव्याः प्रतिपादकेषु सत्सु कुतो व्रीह्यादिप्रतिपत्तिः?

प्रकटार्थविवरणम्

सिद्धान्ते सूत्रमवतारयति—एवं प्राप्ते ब्रूम इति ॥

अधिकारं रूपं च व्याख्याय शब्दान्तरं व्याचष्टे—श्रुत्यन्तरमपीति ॥ समहन्यत संहतं परिणतमभवत् ॥ सेति ॥ सोऽपां[सा अपां] कठिनाकारपरिणामः पृथिव्यभवदिति समानप्रकरणं श्रुत्यन्तरमप्कार्यस्यान्नस्य पृथिवीत्वं गमयतीत्यर्थः। इतोऽप्यप्कार्यमन्नं व्रीह्यादि न भवतीत्याह—पृथिव्यास्त्विति ॥

१. T¹. सोऽयं

भाष्यम्

प्रसिद्धिरप्यधिकारादिभिरेव बाध्यते ; वाक्यशेषोऽपि पार्थिवत्वाद्‌-व्रीह्यादेस्तद्द्वारेण पृथिव्या एवान्नस्य: प्रभवत्वं सूचयतीति द्रष्टव्यम् । तस्मात्पृथिवीयमन्नशब्देति ॥

5 [ तदभिध्यानाधिकरणम् ]

## तदभिध्यानादेव तु तल्लिङ्गात्सः ॥ २-३-१३ ॥

किमिमानि वियदादीनि भूतानि स्वयमेव स्वविकारान्सृजन्ति, आहोस्वित्परमेश्वर एव तेन तेनात्मनावतिष्ठमानोऽभिध्यायंस्तं तं विकारं सृजतीति संदेहे सति, प्राप्तं तावत्—स्वयमेव सृजन्तीति ; कुतः ?
10 "आकाशाद्वायुः । वायोरग्निः ।" इत्यादिस्वातन्त्र्यश्रवणात् । नन्वचेतनानां स्वतन्त्राणां प्रवृत्तिः प्रतिषिद्धा ; नैष दोषः—"तत्तेज ऐक्षत ता आप ऐक्षन्त" इति च भूतानामपि चेतनत्वश्रवणादिति । एवं प्राप्ते अभिधीयते—

स एव परमेश्वरस्तेन तेनात्मनावतिष्ठमानोऽभिध्यायंस्तं तं विकारं
15 सृजतीति ; कुतः ? तल्लिङ्गात् । तथा हि शास्त्रम्—"यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति" इत्येवंजातीयकम्—साध्यक्षाणामेव भूतानां

प्रकटार्थविवरणम्

यद्यपि प्रकरणादीनां एकैकस्य श्रुतेर्दुर्बलत्वम् ; तथापि बहुभिः प्रकरणादि-
20 भिरेकस्यान्नशब्दस्य व्रीहियवाद्याकारपरिणतायां पृथिव्यां वृत्तिः युक्तेत्याह— प्रसिद्धिरपीति ॥

तदभिध्यानादेव तु तल्लिङ्गात् सः ॥

एवं तावन्महाभूतानां पूर्वस्मात्पूर्वस्मात् उत्तरोत्तरस्य सृष्टिं व्याख्याय तत्र स्वातन्त्र्यपारतन्त्र्यविचारमारभते—किमिदानीमिति ॥ पूर्वपक्षमाक्षिपति— नन्वचेतनानामिति ॥ भवेदयमाक्षेपो [मनाक्षेपो] यद्यचेतनत्वं स्यात्, न तु तद-
25 स्तीत्याह–नैष दोष इति ॥ "सः" इत्यन्तं सूत्रपदं व्याचष्टे–स एवेति ॥ तदभि-

भाष्यम्

प्रवृत्तिं दर्शयति ; तथा "सोऽकामयत । बहु स्यां प्रजायेय" इति प्रस्तुत्य "सच्च त्यच्चाभवत्" "तदात्मानं स्वयमकुरुत" इति च तस्यैव च सर्वात्मभावं दर्शयति । यत्तु ईक्षणश्रवणमप्तेजसोः, तत्परमेश्वरावेशवशादेव द्रष्टव्यम्—"नान्योऽतोऽस्ति द्रष्टा" इतीक्षित्रन्तरप्रतिषेधात्, प्रकृतत्वाच्च सत ईक्षितुः "तदैक्षत बहु स्यां प्रजायेय" इत्यत्र ॥　5

[ विपर्ययाधिकरणम् ]

## विपर्ययेण तु क्रमोऽत उपपद्यते च ॥ २-३-१४ ॥

भूतानामुत्पत्तिक्रमश्चिन्तितः ; अथेदानीमप्ययक्रमश्चिन्त्यते—किमनियतेन क्रमेणाप्ययः, उतोत्पत्तिक्रमेण, अथवा तद्विपरीतेनेति । त्रयोऽपि　10
चोत्पत्तिस्थितिप्रलया भूतानां ब्रह्मायत्ताः श्रूयन्ते—"यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति ।" इति । तत्रानियमोऽविशेषादिति प्राप्तम् ; अथवा उत्पत्तेः क्रमस्य श्रुतत्वात्प्रलयस्यापि क्रमाकाङ्क्षिणः स एव क्रमः स्यादित्येवं प्राप्तम् ;
ततो ब्रूमः—विपर्ययेण तु प्रलयक्रमः, अतः उत्पत्तिक्रमात् भवितुमर्हति ; तथा हि लोके दृश्यते—येन क्रमेण सोपानमारूढः, ततो　15

प्रकटार्थविवरणम्

ध्यानादेवेति सूत्रभागं पूर्वपक्षबीजापाकरणे योजयति—यत्त्वीक्षणश्रवणमिति ॥ परमेश्वरस्य भूतेषु प्रवेशात्तदीयमेवाभिध्यानमप्तेजसोरुपचर्यत इत्यर्थः ॥　20

विपर्ययेण तु क्रमोऽत उपपद्यते च ॥

सङ्गतिमाह—भूतानामिति ॥ ननु महाभूतानां प्रलय एव नास्ति, कुतः क्रमचिन्तेति विस्मरणशीलस्य शङ्कामपाकरोति—त्रयोऽपि चेति ॥ पूर्वपक्षमाह-तत्रेति ॥ अविशेषादिति हेत्वसिद्ध्या परिहरति—विपर्ययेण त्विति ॥
लोके प्रवृत्तिक्रमान्निवृत्तिक्रमस्य वैपरीत्यदर्शनात्, कार्यनिवृत्तिरपि विपरीत-　25

## भाष्यम्

विपरीतेन क्रमेणावरोहन्तीति; अपि च दृश्यते—मृदो जातं घट-
शरावाद्यप्ययकाले मृद्भावमप्येति, अद्भ्यश्च जातं हिमकरकादि अब्भाव-
मप्येतीति । अतश्चोपपद्यत एतत्—यत्पृथिवी अद्भ्यो जाता सती
5 स्थितिकालव्यतिक्रान्तावपोऽपीयात्; आपश्च तेजसो जाताः सत्यस्ते-
जोऽपीयुः; एवं क्रमेण सूक्ष्मं सूक्ष्मतरं चानन्तरमनन्तरं कारणमपीत्य
सर्वं कार्यजातं परमकारणं परमसूक्ष्मं च ब्रह्माप्येतीति वेदितव्यम्;
न हि स्वकारणव्यतिक्रमेण कारणकारणे कार्याप्ययो न्याय्यः । स्मृता-
वप्युत्पत्तिक्रमविपर्ययेणैवाप्ययक्रमस्तत्र तत्र दर्शितः—

10 "जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते ।
ज्योतिष्यापः प्रलीयन्ते ज्योतिर्वायौ प्रलीयते ॥"

इत्येवमादौ । उत्पत्तिक्रमस्तूत्पत्तावेव श्रुतत्वान्नाप्यये भवितुमर्हति;
न चासावयोग्यत्वादप्ययेनाकाङ्क्ष्यते; न हि कार्ये ध्रियमाणे कारण-
स्याप्ययो युक्तः, कारणाप्यये कार्यस्यावस्थानानुपपत्तेः; कार्याप्यये तु
15 कारणस्यावस्थानं युक्तम्—मृदादिष्वेवं दृष्टत्वात् ॥

## प्रकटार्थविवरणम्

क्रमेणोपपद्यते, निवृत्तित्वात्, संप्रतिपन्ननिवृत्तिवदित्यर्थः । किञ्च विमतं कार्यं
स्वोपादाने प्रलीयते, कार्यत्वात् घटवदित्याह—अपि चेति ॥ नन्वन्ततो गत्वा
ब्रह्मण्येव चेत्प्रलयः, तर्हि किं क्रमेणेत्याशङ्क्याह—न हि स्वकारणेति ॥
20 चशब्दात् स्मृतिक्रममाह—स्मृतावपीति ॥ ननूत्पत्तौ तावत् श्रौतः[श्रुतः] क्रमः;
तं श्रौतं क्रमं सन्निहितं परित्यज्य किमिति व्यवहितः स्मार्तः क्रमोऽङ्गीक्रियत
इत्याशङ्क्याह—उत्पत्तिक्रमस्त्विति ॥ यद्योक्तं प्रलयस्य क्रमाकाङ्क्षायां स एवं सं-
बध्यत इति तत्राह—न चासाविति ॥ ननु कार्यकारणयोः परस्परप्रति-
योगित्वात् कार्याभावे कारणं वा कथं तिष्ठतीत्याशङ्क्याह— कार्याप्यये
25 त्विति ॥

१. A. अन्ततोऽपि ब्रह्म.
२. A omits न हि...क्रममाह.
३. T, T¹, P and TM. एवायं बाध्यते.

भाष्यम्

[ अन्तराविज्ञानाधिकरणम् ]

## अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ २-३-१५ ॥

भूतानामुत्पत्तिप्रलयावनुलोमप्रतिलोमक्रमाभ्यां भवत इत्युक्तम्; आत्मादिरुत्पत्तिः प्रलयश्चात्मान्तः इत्यप्युक्तम् । सेन्द्रियस्य तु मनसो बुद्धेश्च सद्भावः प्रसिद्धः श्रुतिस्मृत्योः— 5

"बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ।
इन्द्रियाणि हयानाहुः"

इत्यादिलिङ्गेभ्यः; तयोरपि कस्मिंश्चिदन्तराले क्रमेणोत्पत्तिप्रलयावुपसंग्राह्यौ, सर्वस्य वस्तुजातस्य ब्रह्मजत्वाभ्युपगमात् । अपि च आथर्वण उत्पत्तिप्रकरणे भूतानामात्मनश्चान्तराले करणान्यनुक्रम्यन्ते— 10

प्रकटार्थविवरणम्

अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥

वृत्तानुवादं करोति—भूतानामिति ॥ किमसौ भूतोत्पत्तिक्रमलयः [लयक्रमः][1] इन्द्रियोत्पत्तिक्रमेण विरुध्यते, न वा—इतीदानीं सन्दिह्यत इत्यध्याहारः । ननु देहप्रदेशातिरिक्तेन्द्रियाभावान्नायं सन्देह इत्याशङ्क्याह—सेन्द्रियस्य त्विति ॥ यद्यप्यागमार्थप्रतिपत्तेः प्राक् देहप्रदेशेष्वेव[2]न्द्रियव्यवहारः, तथाप्यागमप्रामाण्यादतिरिक्तेन्द्रियसद्भावोऽध्यवसेय इत्यर्थः । ननु तथापीन्द्रियाणामाहङ्कारिकत्वान्नास्ति ब्रह्मकार्यभूतोत्पत्तिक्रमस्येन्द्रियोत्पत्तिक्रमविरोधाशङ्केत्यत आह— तयोरपीति ॥ इन्द्रियाणामाहङ्कारिकत्वे प्रमाणाभावाद्ब्रह्मजत्वमवश्यं वाच्यम् । तदा च ब्रह्मकार्येष्वेव कस्मिंश्चिदन्तराले तयोर्बुद्धिसेन्द्रियमनसोरुत्पत्तिप्रलयौ स्वीकरणीयौ; ततोऽस्त्येव सन्देह इत्यर्थः । तर्हि कस्मिन्नन्तराले बुद्धिसेन्द्रियमनसोरुत्पत्तिरित्याकाङ्क्षायां पूर्वपक्षयाह[3]—अपि चाथर्वण इति ॥ सिद्धान्ते 15 20

1. A adds क्रमः.
2. A omits एव.
3. A. राले बुद्धीन्द्रिय.

भाष्यम्

" एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥"

इति । तस्मात्पूर्वोक्तोत्पत्तिप्रलयक्रमभङ्गप्रसङ्गो भूतानामिति चेत्, न; अविशेषात्—यदि तावद्भौतिकानि करणानि, ततो भूतोत्पत्तिप्रलयाभ्यामेवैषामुत्पत्तिप्रलयौ भवत इति नैतयोः क्रमान्तरं मृग्यम्; भवति च भौतिकत्वे लिङ्गं करणानाम्—" अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक् " इत्येवंजातीयकम्; व्यपदेशोऽपि क्वचिद्भूतानां करणानां च ब्राह्मणपरिव्राजकन्यायेन नेतव्यः । अथ त्वभौतिकानि करणानि तथापि भूतोत्पत्तिक्रमो न करणैर्विशेष्यते—प्रथमं करणान्युत्पद्यन्ते चरमं भूतानि, प्रथमं वा भूतान्युत्पद्यन्ते चरमं वा करणानीति; आथर्वणे तु समाम्नायक्रममात्रं करणानां भूतानां च, न तत्रोत्पत्ति-

प्रकटार्थविवरणम्

सूत्रभागमवतारयति—नाविशेषादिति ॥ इन्द्रियाणामुत्पत्तिक्रमस्य भूतोत्पत्तिक्रमविरुद्धविशेषानवगमान्नास्ति विरोधः । कथम्? तत्रैतद्वाच्यम्—किं भौतिकत्वमङ्गीकृत्य[1] विरुद्धक्रमोऽभिधीयते, [2]किं वा अभौतिकत्वम्? प्रथमे न विरोध इत्याह—यदि तावदिति ॥ द्वितीयं दूषयति—भवति चेति ॥ अन्नादिभावाभावाभ्यां उपचितत्वापचितत्वे भौतिकत्वे लिङ्गमित्यर्थः । कथं तर्हि पृथगुपदेश इति; अवान्तरभेदापेक्षयेत्याह—[3]व्यपदेशोऽपीति ॥ इदानीं प्रौढवादेनाभौतिकत्वमङ्गीकृत्याह—अथाभौतिकानीति ॥ तथापि पूर्वोत्तरभावेन विशेषणविशेष्यभावे प्रमाणाभावान्न भूतोत्पत्तिक्रमः करणक्रमेण बाध्यत इत्यर्थः । ननु यथा प्रयाजेषु पाठक्रम एवानुष्ठानक्रमे प्रमाणं तथा " एतस्माज्जायते प्राणः " इत्यादिपाठक्रम एव प्रथमं करणान्युपप[न्युत्प]द्यन्त इत्यत्र प्रमाणमित्याशङ्क्याह—आथर्वणे त्विति ॥ श्रुत्यर्थाविरुद्धो[4] हि पाठक्रमः क्रमे प्रमा-

१. A adds तत्राशङ्का विरुद्धमङ्गीकृत्य    ३. T[1] and P. व्यपदेशोऽपीति.

२. A omits कं वाभौतिकत्वम्.    ४. A. विरुद्धस्तु.

भाष्यम्

क्रम उच्यते ; तथान्यत्रापि पृथगेव भूतक्रमात् करणक्रम आम्नायते— "प्रजापतिर्वा इदमग्र आसीत् स आत्मानमैक्षत स मनोऽसृजत तन्मन एवासीत्तदात्मानमैक्षत तद्वाचमसृजत" इत्यादिना । तस्मान्नास्ति भूतोत्पत्तिक्रमस्य भङ्गः ॥ 5

[ चराचरव्यपाश्रयाधिकरणम् ]

## चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॥ २-३-१६ ॥

स्तो जीवस्याप्युत्पत्तिप्रलयौ, जातो देवदत्तो मृतो देवदत्त इत्येवंजातीयकाल्लौकिकव्यपदेशाज्जातकर्मादिसंस्कारविधानाच्च—इति स्यात् 10 कस्यचिद्भ्रान्तिः ; तामपनुदामः । न जीवस्योत्पत्तिप्रलयौ स्तः शास्त्र-

प्रकटार्थविवरणम्

णम् ; इह तु विद्यत एवार्थविरोधः, करणानां भौतिकत्वेन भूतोत्पत्तिं विनोत्पत्त्यसंभवात् ; अतो यथा "अग्निहोत्रं जुहोति" "यवागूं पचति" इत्यर्थात् पूर्वं पाकः, पश्चाद्धोमः, तथात्रापीत्यर्थः । इतश्च न भूतोत्पत्तिक्रमस्य भङ्ग इत्याह— 15 तथान्यत्रापीति ॥

चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॥

एवं तावद्भूतोत्पत्तिक्रमस्याविप्रतिषेधोपपादनेन[1] जगज्जन्मादिकारणतत्पदार्थसमर्पकसमन्वयस्य[2] विरोधं परिहृत्येदानीं वाक्यार्थान्वयित्वंपदार्थसमर्पकस्याविरोधं दर्शयितुमुपक्रमते । तत्रापि प्रथममजातमुतजीवसमर्पकस्य[3] 20 लौकिकजन्ममरणप्रत्ययविरोधो नास्तीति दर्शयितुं पूर्वपक्षमाह—स्तो जीवस्यापीति ॥ जीवजन्मनिमित्तं हि जातकर्मादिसंस्कारविधानम् ; तदभावे निमित्ताभावात्तदपि न स्यात्, अस्ति च, इत्याह—जातकर्मादीति ॥ उत्सूत्रमेव तावत्सिद्धान्तमाह—न जीवस्येति ॥ जीवस्य जन्ममरणाभाव एव शास्त्रीय-

१. T, T¹, P and TM. भूतोत्पत्त्यादि.
२. A. प्रतिपादनेन.
३. T, T¹ and P. अजातमुत.
४. A adds समन्वयस्य.

भाष्यम्

फलसंबन्धोपपत्तेः ; शरीरानुविनाशिनि हि जीवे शरीरान्तरगतेष्टानि-
ष्टप्राप्तिपरिहारार्थौ विधिप्रतिषेधावनर्थकौ स्याताम् ; श्रूयते च—
"जीवापेतं वाव किलेदं म्रियते न जीवो म्रियते" इति। ननु लौकिको
5 जन्ममरणव्यपदेशो जीवस्य दर्शितः ; सत्यं दर्शितः ; भाक्तस्त्वेष जीवस्य
जन्ममरणव्यपदेशः । किमाश्रयः पुनरयं मुख्यः, यदपेक्षया भाक्त
इति? उच्यते—चराचरव्यपाश्रयः ; स्थावरजङ्गमशरीरविषयौ जन्ममरण-
शब्दौ ; स्थावरजङ्गमानि हि भूतानि जायन्ते च म्रियन्ते च ; अतस्त-
द्विषयौ जन्ममरणशब्दौ मुख्यौ सन्तौ तत्स्थे जीवात्मन्युपचर्येते, तद्भाव-
10 भावित्वात्—शरीरप्रादुर्भावतिरोभावयोर्हि सतोर्जन्ममरणशब्दौ भवतः,
नासतोः ; न हि शरीरसंबन्धादन्यत्र जीवो जातो मृतो वा केनचिल्लक्ष्यते;
"स वा अयं पुरुषो जायमानः शरीरमभिसंपद्यमानः स उत्क्रामन्
म्रियमाणः" इति च शरीरसंयोगवियोगनिमित्तावेव जन्ममरणशब्दौ
दर्शयति। जातकर्मादिविधानमपि देहप्रादुर्भावापेक्षमेव द्रष्टव्यम्, अभा-

15 प्रकटार्थविवरणम्

स्वर्गादिफलसंबन्धोपपत्तिः, तदन्यथानुपपत्त्या न जीवस्य जन्ममरणे स्त इत्यर्थः।
न केवलमनुपपत्तिलभ्यमेवामरणं किन्तु श्रुतिसिद्धमपीत्याह—श्रूयते चेति ॥
जीवेनापेतं परित्यक्तम् ; वाव किल इत्यवधारणार्थौ निपातौ ; जीवो न म्रियत
एवेत्यर्थः। पूर्वपक्षबीजमुद्भाव्य तन्निराकरणे सूत्रं योजयति—ननु लौकिक
20 इत्यादिना ॥ न केवलमन्वयव्यतिरेकसिद्ध एवायमर्थः, किन्तु श्रुतिसिद्धो-
ऽपीत्याह—स वा अयं पुरुष इति ॥ शरीरं स्वकर्मोपार्जितं भोगायतनमभि-
संपद्यमानो जायमान उच्यते। भोगारम्भकादृष्टक्षये चोत्क्रामन् म्रियमाण
उच्यते, न तु जन्मविनाशाभिप्रायेणेत्यर्थः । यच्चोक्तं जातकर्मादिविधानं
तदपि न जीवजन्मापेक्षम्, किन्तु देहजन्मापेक्षमेवेत्याह—जातकर्मादीति ॥

१. T. चेत्क्रमात्.   २. A adds इति.

भाष्यम्

वाज्जीवप्रादुर्भावस्य । जीवस्य परस्मादात्मन उत्पत्तिर्वियदादीनामिवास्ति नास्ति वेत्येतदुत्तरेण सूत्रेण वक्ष्यति ; देहाश्रयौ तावज्जीवस्य स्थूलावुत्पत्तिप्रलयौ न स्त इत्येतदनेन सूत्रेणावोचत् ॥

[ आत्माधिकरणम् ]　　5

## नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः ॥ २-३-१७ ॥

अस्त्यात्मा जीवाख्यः शरीरेन्द्रियपञ्जराध्यक्षः कर्मफलसंबन्धी ; स किं व्योमादिवदुत्पद्यते ब्रह्मणः, आहोस्विद्ब्रह्मवदेव नोत्पद्यते, इति श्रुतिविप्रतिपत्तेर्विशयः ; कासुचिच्छ्रुतिष्वग्निविस्फुलिङ्गादिनिदर्शनैर्जीवात्मनः परस्माद्ब्रह्मण उत्पत्तिराम्नायते ; कासुचित्त्वविकृतस्यैव परस्य　10 ब्रह्मणः कार्यप्रवेशेन जीवभावो विज्ञायते, न चोत्पत्तिराम्नायत इति । तत्र प्राप्तं तावत्—उत्पद्यते जीव इति ; कुतः ? प्रतिज्ञानुपरोधादेव । "एकस्मिन्विदिते सर्वमिदं विदितम्" इतीयं प्रतिज्ञा सर्वस्य वस्तुजातस्य ब्रह्मप्रभवत्वे सति नोपरुध्येत, तत्त्वान्तरत्वे तु जीवस्य प्रतिज्ञेयमुपरुध्येत । न चाविकृतः परमात्मैव जीव इति शक्यते विज्ञातुम्, लक्षणभेदात्—　15

प्रकटार्थविवरणम्

पूर्वोत्तराधिकरणयोः अर्थविशेषाभिधानेन पौनरुक्त्यं परिहरति—जीवस्य परस्मादिति ॥

नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः ॥

विषयं प्रदर्श्य सबीजं संशयमाह—अस्त्यात्मेत्यादिना ॥ पूर्वपक्ष-　20 माह—तत्र प्राप्तं तावदिति ॥ वियदादीनां हि ब्रह्मप्रभवत्वं प्रतिज्ञानुपरोधात् साधितम् ; तेनैव न्यायेन जीवस्यापि ब्रह्मप्रभवत्वमित्यर्थः । ननु प्रतिज्ञानुपरोधो जीवस्य ब्रह्मत्वेऽपि घटत एवेत्याशङ्क्याह — न चाविकृत इति ॥ इतश्च

१. T. रोधात् जीवस्य.

भाष्यम्

अपहतपाप्मत्वादिधर्मको हि परमात्मा, तद्विपरीतो हि जीवः। विभागाच्चास्य विकारत्वसिद्धिः—यावान् हि आकाशादिः प्रविभक्तः, स सर्वो विकारः; तस्य चाकाशादेरुत्पत्तिः समधिगता; जीवात्मापि पुण्यापुण्यकर्मा सुखदुःखयुक् प्रतिशरीरं प्रविभक्त इति, तस्यापि प्रपञ्चोत्पत्त्यवसरे 5 उत्पत्तिर्भवितुमर्हति। अपि च "यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः" इति प्राणादेर्भोग्यजातस्य सृष्टिं शिष्ट्वा "सर्व एत आत्मानो व्युच्चरन्ति" इति भोक्तॄणामात्मनां पृथक्सृष्टिं शास्ति।

10 "यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः।
तथाक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति॥"

इति च जीवात्मनामुत्पत्तिप्रलयावुच्येते, सरूपवचनात्—जीवात्मानो हि परमात्मना सरूपा भवन्ति, चैतन्ययोगात्; न च क्वचिदश्रवणमन्यत्र श्रुतं वारयितुमर्हति, श्रुत्यन्तरगतस्याप्यविरुद्धस्याधिकस्यार्थस्य सर्वत्रोपसं- 15 हर्तव्यत्वात्। प्रवेशश्रुतिरप्येवं सति विकारभावापत्त्यैव व्याख्यातव्या—"तदात्मानं स्वयमकुरुत" इत्यादिवत्। तस्मादुत्पद्यते जीव इति। एवं प्राप्ते, ब्रूमः—

प्रकटार्थविवरणम्

न जीवो ब्रह्म, किन्तु विकार इत्याह—विभागाच्चास्येति॥ न केवलं 20 युक्तितो जीवस्य विकारित्वम्, श्रुतितोऽपीत्याह—अपि च यथाग्नेरिति॥ नन्वक्षराद्ब्रह्मणो भावाः पदार्थाः जायन्त इत्येतावच्छ्रूयते, न जीवानामुत्पत्तिप्रलयावित्याशङ्क्याह सरूपवचनादिति॥ सरूपाः सदृशाः जायन्त इति वचनात् चेतनत्वेन च जीवानां ब्रह्मणा सारूप्यात् जीवानामेव तत्रोत्पत्तिप्रलयावुक्तावित्यर्थः। ननु सर्वत्र सृष्टिप्रकरणे जीवानां उत्पत्त्यश्रवणात् नास्त्यु- 25 त्पत्तिरित्याशङ्क्याह— न च क्वचिदिति॥ कथं तर्हि ब्रह्मण एव प्रवेशश्रवणमवकल्पत इत्याशङ्क्याह-प्रवेशश्रुतिरपीति॥ यथा मृत् स्वविकारे घटे चूर्णा-

१. A omits अपि च.  २. T. घटपूर्णादि.

भाष्यम्

नात्मा जीव उत्पद्यत इति; कस्मात्? अश्रुतेः; न ह्यस्योत्पत्तिप्रकरणे श्रवणमस्ति भूयःसु प्रदेशेषु; ननु क्वचिदश्रवणमन्यत्र श्रुतं न वारयतीत्युक्तम्; सत्यमुक्तम्; उत्पत्तिरेव त्वस्य न संभवतीति वदामः; कस्मात्? नित्यत्वाच्च ताभ्यः—चशब्दादजत्वादिभ्यश्च—नित्यत्वं ह्यस्य श्रुतिभ्योऽवगम्यते, तथा अजत्वम् अविकारित्वम् अविकृतस्यैव ब्रह्मणो जीवात्मनावस्थानं ब्रह्मात्मना चेति; न चैवंरूपस्योत्पत्तिरुपपद्यते। ताः काः श्रुतयः? "न जीवो म्रियते" "स वा एष महानज आत्माजरोऽमरोऽमृतोऽभयो ब्रह्म" "न जायते म्रियते वा विपश्चित्" "अजो नित्यः शाश्वतोऽयं पुराणः" "तत्सृष्ट्वा। तदेवानुप्राविशत्।" "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" "स एष इह प्रविष्ट आ नखाग्रेभ्यः" "तत्त्वमसि" "अहं ब्रह्मास्मि" "अयमात्मा ब्रह्म सर्वानुभूः" इत्येवमाद्या नित्यत्ववादिन्यः सत्यो जीवस्योत्पत्तिं प्रतिबध्नन्ति। ननु प्रविभक्तत्वाद्विकारः, विकारत्वाच्चोत्पद्यते—इत्युक्तम्; अत्रोच्यते—नास्य प्रविभागः स्वतोऽस्ति, "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा" इति श्रुतेः; बुद्ध्याद्युपाधिनिमित्तं त्वस्य प्रविभागप्रतिभानम्, आकाशस्येव घटादिसंबन्धनिमित्तम्; तथा च शास्त्रम्—"स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः" इत्येवमादि ब्रह्मण एवाविकृतस्य सतोऽस्यैकस्यानेक-

प्रकटार्थविवरणम्

द्विविकारान्तररूपेण प्रविशति तथा ब्रह्म शरीरं सृष्ट्वा जीवाख्यविकारेण प्रविष्टमित्यर्थः ॥

सिद्धान्ते सूत्रं योजयति—नात्मा जीव इत्यादिना ॥ ताः श्रुतय उदाह्रियन्त इति शेषः। महावाक्यशेषभूतनित्यत्वाजत्वादिबहुश्रुत्यवष्टम्भेन जीवस्य अनुत्पत्तिं प्रसाध्य पूर्ववाद्युक्तमनूद्य दूषयति—ननु प्रविभक्तत्वादित्यादिना ॥ स्वातन्त्र्येण संख्याघृतबुद्धिविषयत्वं [2]हि कार्यत्वसाधकमुक्तम्

१. A. तत्र श्रुतय उदाह्रियन्त इति शेषः। कार्यत्व.　　२. TM omits हि.

भाष्यम्

बुद्ध्यादिमयत्वं दर्शयति; तन्मयत्वं चास्य तद्विविक्तस्वरूपानभिव्यक्त्या तदुपरक्तस्वरूपत्वं—स्त्रीमयो जाल्म इत्यादिवत्—द्रष्टव्यम् । यदपि क्वचिदस्योत्पत्तिप्रलयश्रवणम्, तदप्यत[1] एवोपाधिसंबन्धान्नेतव्यम्—उपा-
5 ध्युत्पत्त्या अस्योत्पत्तिः, तत्प्रलयेन च प्रलय इति; तथा च दर्शयति—"प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति न प्रेत्य संज्ञास्ति" इति; तथोपाधिप्रलय एवायम्, नात्मविलयः—इत्येतदपि—"अत्रैव मा भगवान्मोहान्तमापीपदन्न वा अहमिमं विजानामि न प्रेत्य संज्ञास्ति" इति प्रश्नपूर्वकं प्रतिपादयति—"न वा अरेऽहं मोहं
10 ब्रवीम्यविनाशी वा अरेऽयमात्मानुच्छित्तिधर्मा मात्रासंसर्गस्त्वस्य भवति"—इति । प्रतिज्ञानुपरोधोऽप्यविकृतस्यैव ब्रह्मणो जीवभावाभ्युपगमात्; लक्षणभेदोऽप्यनयोरुपाधिनिमित्त एव, "अत ऊर्ध्वं विमोक्षायैव ब्रूहि" इति च प्रकृतस्यैव विज्ञानमयस्यात्मनः सर्वसंसारधर्मप्रत्याख्यानेन परमात्मभावप्रतिपादनात् । तस्मान्नैवात्मोत्पद्यते प्रविलीयते
15 चेति ॥

प्रकटार्थविवरणम्

न तदस्ति जीवस्येत्यर्थः । ननु यथा मृन्मयो घटो मृद्विकारः, तथा विज्ञानविकारत्वमेव श्रुतिः प्रतिपादयतीत्याशङ्क्याह — तन्मयत्वं चास्येति ॥ जाल्मः प्राकृतः पुरुषः । यथा स्त्रीपरतन्त्रः स्त्रीमय उच्यते तथा जीवस्य शुद्धस्वभावा-
20 प्रतिपत्त्या बुध्याद्युपरक्तं जीवरूपत्वं बुध्यधीनमिति तन्मयतोच्यत इत्यर्थः । यस्मान्निरूप्यमाणे न जीवस्य निरुपाधिकौ जन्मप्रलयौ स्तः तस्मादुच्चरतिश्रुतिर्न मुख्यार्थेत्याह—यदपि क्वचिदिति ॥ उक्तेऽर्थे संवादकं श्रुत्यन्तरमाह—तथा चेति ॥ तथै[तथै]तदपि प्रश्नपूर्वकं प्रतिपादयति याज्ञवल्क्य इत्यन्वयः । मोहान्तं मोहं मां प्रति भगवानापादितवानस्मिन्नवसरे; अहं तु न जानामीत्यर्थः ॥ अनु-
25 च्छित्तिधर्मेति ॥ अपरिणामीत्यर्थः । यच्चोक्तम् "प्रतिज्ञानुपरोधात्" इत्यादि, तद्दूषयति—प्रतिज्ञेत्यादिना ॥ बिम्बप्रतिबिम्बवदुपाधिकृत एवायं भेदः, न स्वरूपभेदकृत इत्येतत्कस्मादित्याशङ्क्याह—अत ऊर्ध्वमिति ॥

१. T. उच्चरन्ति.    २. T. यापि.

भाष्यम्

[ ज्ञाधिकरणम् ]

# ज्ञोऽत एव ॥ २-३-१८ ॥

स किं काणभुजानामिवागन्तुकचैतन्यः, स्वतोऽचेतनः, आहोस्वित् सांख्यानामिव नित्यचैतन्यस्वरूप एव, इति वादिविप्रतिपत्तेः संशयः। किं तावत्प्राप्तम् ? आगन्तुकमात्मनश्चैतन्यमात्ममनस्संयोगजम्, अग्निघटसंयोगजरोहितादिगुणवदिति प्राप्तम्; नित्यचैतन्यत्वे हि सुप्तमूर्च्छितग्रहाविष्टानामपि चैतन्यं स्यात्; ते पृष्टाः सन्तो न किंचिद्वयमचेतयामहीति जल्पन्ति; स्वस्थाश्च चेतयमाना दृश्यन्ते, अतः कादाचित्कचैतन्यत्वादागन्तुकचैतन्य आत्मेति। एवं प्राप्ते, अभिधीयते—

ज्ञो नित्यचैतन्योऽयमात्मा—अत एव—यस्मादेव नोत्पद्यते, परमेव ब्रह्म अविकृतमुपाधिसंपर्काज्जीवभावेनावतिष्ठते; परस्य हि ब्रह्मणश्चैतन्यस्वरूपत्वमाम्नातम्—"विज्ञानमानन्दं ब्रह्म" "सत्यं ज्ञानमनन्तं

प्रकटार्थविवरणम्

ज्ञोऽत एव ॥

एवं तावन्महावाक्यार्थान्वयित्वंपदार्थसमर्पकावान्तरसमन्वयस्योत्पत्त्यादिश्रुतिविरोधो नास्तीत्युपपाद्य इदानीं जडत्वग्राहकप्रमाणविरोधोऽपि नास्तीत्युपपादयितुं विचारमारभते—स किं काणभुजामिवेति॥ पूर्वपक्षमाह—किं तावदिति ॥ आत्मा न प्रकाशस्वभावः, तदर्थमुपादीयमानसाधनत्वात्, यो यदर्थमुपादीयमानसाधनः, नासौ तत्स्वभावः, यथा छेदार्थमुपादीयमानसाधनो न छिदिस्वभाव इति प्रयोगः । विपक्षे बाधकमाह—नित्यचैतन्यत्वे हीति ॥

सिद्धान्तसूत्रं योजयति—ज्ञो नित्यचैतन्य इत्यादिना ॥ [1]न केवलं नित्यचैतन्यब्रह्मस्वभावत्वात् जीवस्य नित्यचैतन्यत्वम्, स्वप्रकाशश्रवणादपीत्याह—

१. T omits न केवलं...लक्ष्यमाणत्वात्

भाष्यम्

ब्रह्म" "अनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव" इत्यादिषु श्रुतिषु ;
तदेव चेत्परं ब्रह्म जीवः, तस्माज्जीवस्यापि नित्यचैतन्यस्वरूपत्वमग्न्यौ-
ष्ण्यप्रकाशवदिति गम्यते । विज्ञानमयप्रक्रियायां च श्रुतयो भवन्ति—
5 "असुप्तः सुप्तानभिचाकशीति" "अत्रायं पुरुषः स्वयंज्योतिर्भवति"
इति, "न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते" इत्येवंरूपाः । "अथ
यो वेदेदं जिघ्राणीति स आत्मा" इति च—सर्वैः करणद्वारैः इदं
वेद, इदं वेदेति विज्ञानेनानुसंधानात्तद्रूपत्वसिद्धिः । नित्यचैतन्यस्वरूपत्वे
घ्राणाद्यानर्थक्यमिति चेत्, न, गन्धादिविषयविशेषपरिच्छेदार्थत्वात् ;
10 तथा हि दर्शयति—"गन्धाय घ्राणम्" इत्यादि । यत्तु सुप्तादयो न
चेतयन्त इति, तस्य श्रुत्यैव परिहारोऽभिहितः सुषुप्तं प्रकृत्य—"यद्वै तन्न
पश्यति पश्यन्वै तन्न पश्यति; न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशि-
त्वात्, न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्" इत्यादिना ;
एतदुक्तं भवति—विषयाभावादियमचेतयमानता, न चैतन्याभावा-
15 दिति—यथा वियदाश्रयस्य प्रकाशस्य प्रकाश्याभावादनभिव्यक्तिः, न

प्रकटार्थविवरणम्

विज्ञानमयप्रक्रियायां चेति ॥ स्वयमसुप्तः प्रकाशमान एव सुप्तान् करणादीन्
अभिपश्यतीत्यर्थः । किञ्च—विज्ञानेन लक्ष्यमाणत्वादपि न केवलं नित्य-
चैतन्य आत्मेत्याह—अथ[1] यो वेदेदमिति ॥ अत्र प्रयोगः—आत्मा स्वप्रका-
20 शः, स्वसत्तायां प्रकाशव्यतिरेकशून्यत्वात्, सवितृवदिति । प्रतिकूलतर्कं शङ्कते—
नित्यचैतन्यस्वरूपत्व इति ॥ गन्धादिविषयस्य परिच्छेदो नाम गन्धादि-
विषयावच्छिन्नाभिव्यक्तप्रकाशः तद्व्यञ्जकजडप्रकाशान्तःकरणपरिणामोदयार्थत्वात्
घ्राणादीनां[3] नानर्थक्यमित्यर्थः । अत एव पूर्ववादिनो हेतुरसिद्धः । यच्च तेन
बाधकमुक्तं तत् दूषयति—यत्त्वित्यादिना ॥ अन्तःकरणवृत्तियुक्ता रूपादयः
25 चैतन्यस्य विषया भवन्ति । तदभावादचेतयमानं[मानता न] तु चैतन्याभावात्,

१. A omits अथ

२. T. प्रकाशं तत्करण.

३. T, T¹ and P. ब्राह्मणादीनां

भाष्यम्

स्वरूपाभावात्—तद्वत् । वैशेषिकादितर्कश्च श्रुतिविरोध आभासीभवति । तस्मान्नित्यचैतन्यस्वरूप एवात्मेति निश्चिनुमः ॥

[ उत्क्रान्तिगत्यधिकरणम् ]

## उत्क्रान्तिगत्यागतीनाम् ॥ २-३-१९ ॥    5

इदानीं तु किंपरिमाणो जीव इति चिन्त्यते—किमणुपरिमाणः, उत मध्यमपरिमाणः, आहोस्वित् महापरिमाण इति । ननु नात्मोत्पद्यते नित्यचैतन्यश्चायमित्युक्तम्; अतश्च पर एवात्मा जीव इत्यापतति; परस्य चात्मनोऽनन्तत्वमाम्नातम्; तत्र कुतो जीवस्य परिमाणचिन्तावतार इति; उच्यते—सत्यमेवम्; उत्क्रान्तिगत्यागतिश्रवणानि तु    10
जीवस्य परिच्छेदं प्रापयन्ति; स्वशब्देन चास्य क्वचिदणुपरिमाणत्वमाम्नायते; तस्य सर्वस्यानाकुलत्वोपपादनायायमारम्भः । तत्र प्राप्तं तावत्—उत्क्रान्तिगत्यागतीनां श्रवणात्परिच्छिन्नोऽणुपरिमाणो जीव इति; उत्क्रान्तिस्तावत्—"स यदास्माच्छरीरादुत्क्रामति सहैवैतैः

प्रकटार्थविवरणम्    15

अन्यथा परामर्शायोगात् । एतेन विषयविधुरं ज्ञानं नास्तीति प्रत्युक्तम् । नन्वात्मा न स्वप्रकाशः, वस्तुत्वात्, घटवदिति वैशेषिकादितर्कोऽस्तीत्याशङ्क्याह—वैशेषिकादितर्कश्चेति ॥ सुषुप्तसुप्त्यनुपपत्तिकाबाधतर्कानुगृहीतसर्वविशेषणविशिष्टज्योतिष्ट्वश्रुतिविरोधेऽनुमानमाभासीभवतीत्यर्थः ॥

उत्क्रान्तिगत्यागतीनाम् ॥    20

पुनर्जीवस्य परिच्छेदकविरोधापाकरणाय विचारमारभते— इदानीं त्विति ॥ विचारारम्भमाक्षिपति — ननु नात्मोत्पद्यत इति ॥ अर्धाङ्गीकारेण समाधत्ते—सत्यमेवमिति ॥ "श्रवणात्" इति पदमध्याहृत्य पूर्वपक्षसूत्रं योजयति—तत्र प्राप्तं तावदित्यादिना ॥ एतैः सर्वैः प्राणैः तस्माच्छरीरात्लोकात्पुन-

१. T, T[1] and P. आभासीभ.

भाष्यम्

सर्वैकत्क्रामति" इति ; गतिरपि "ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति" इति ; आगतिरपि "तस्माल्लोकात्पुनरैत्यस्मै लोकाय कर्मणे" इति ; आसामुत्क्रान्तिगत्यागतीनां श्रवणात्परिच्छि-
5 न्नस्तावज्जीव इति प्राप्नोति—न हि विभोश्चलनमवकल्पत इति ; सति परिच्छेदे, शरीरपरिमाणत्वस्यार्हतपरीक्षायां निरस्तत्वादणुरात्मेति गम्यते ॥

# स्वात्मना चोत्तरयोः ॥ २-३-२० ॥

उत्क्रान्तिः कदाचिदचलतोऽपि ग्रामस्वाम्यनिवृत्तिवद्देहस्वाम्यनि-
10 वृत्त्या कर्मक्षयेणावकल्पेत ; उत्तरे तु गत्यागती नाचलतः संभवतः ; स्वात्मना हि तयोः संबन्धो भवति, गमेः कर्तृस्थक्रियात्वात् ; अमध्यमपरिमाणस्य च गत्यागती अणुत्व एव संभवतः ; सत्योश्च गत्यागत्योरुत्क्रान्तिरप्यपसृप्तिरेव देहादिति प्रतीयते ; न ह्यनपसृप्तस्य देहाद्-

प्रकटार्थविवरणम्

15 रागच्छतीमं लोकं प्रति कर्मकरणायेत्यर्थः । सर्वगतस्य स्वाश्रयसंयोगविभागहेतुभूतं चलनं नभोवन्न घटते चेन्मा घटिष्ट ; तथापि कुतोऽणुत्वमित्याशङ्क्य परिशेषादित्याह—सति परिच्छेद इति ॥

स्वात्मना चोत्तरयोः ॥

वैशेषिका मन्यन्ते—नात्मनो देहादपसर्पणमुत्क्रमणम् ; किं तु स्वाम्यनि-
20 वृत्तिमात्रम् ; मन एव तूत्क्रम्य भोगदेशं गच्छतीति ; तदपाकरोति—उत्क्रान्तिरिति ॥ प्रामा[श्रुतिप्रामा]ण्याद्गत्यागत्योः जीवेनैव संबन्धो वक्तव्यः, तदा च जीवोऽणुः, अमध्यमपरिमाणत्वे सति गत्यागतिमत्त्वात्, परमाणुवदित्याह—अमध्यमपरिमाणस्य चेति ॥ पूर्वं स्वाम्यनिवृत्तिमात्रमुत्क्रमणमित्यभ्युपगम्य दूषणमभाणि ; तदपीदानीं नास्तीत्याह—सत्योश्चेति ॥ इतश्च देहादपसर्पणमेवोत्क्रमण-

१. T, T¹ and P omit एव    २. A. इदानीं तदपि

भाष्यम्

त्यागती स्याताम्—देहप्रदेशानां चोत्क्रान्तावपादानत्ववचनात्—"चक्षुषो वा मूर्ध्नो वान्येभ्यो वा शरीरदेशेभ्यः" इति; "स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति" "शुक्रमादाय पुनरैति स्थानम्" इति चान्तरेऽपि शरीरे शारीरस्य गत्यागती भवतः; 5
तस्मादप्यस्याणुत्वसिद्धिः ॥

## नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ २-३-२१ ॥

अथापि स्यात्—नाणुरयमात्मा; कस्मात्? अतच्छ्रुतेः; अणुत्वविपरीतपरिमाणश्रवणादित्यर्थः; "स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु" "आकाशवत्सर्वगतश्च नित्यः" "सत्यं ज्ञानमनन्तं ब्रह्म" इत्येवंजातीयका हि श्रुतिरात्मनोऽणुत्वे विप्रतिषिध्येतेति 10
चेत्, नैष दोषः; कस्मात्? इतराधिकारात्—परस्य ह्यात्मनः प्रक्रियायामेषा परिमाणान्तरश्रुतिः, परस्यैवात्मनः प्राधान्येन वेदान्तेषु वेदि-

प्रकटार्थविवरणम्

मित्याह—देहप्रदेशानां चेति ॥ उपादानत्वं[1] विश्लेषावधित्वम्। अन्येभ्यो वा 15
मुखादिभ्यः तं जीवमुत्क्रामन्तं[2] प्राणोऽनूत्क्रामतीत्यर्थः। किंच[3] शरीरमध्येऽपि गत्यागतिभावाज्जीवः परिच्छिन्न इत्याह—स एता इति[4] ॥

नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥

तेजोमात्राः[5] चक्षुरादीन्द्रियाणि गृहीत्वा हृदयं प्रविशति। शुक्रं शोणितस्मरणजातमादाय[6] पुनरागच्छति जागरितस्थानमित्यर्थः। सर्वगतत्वश्रुतिविरो- 20
धमाशङ्क्याणुवादी परमात्मविषयत्वाभिधानेन परिहरति—नाणुरिति ॥

१. TM. अपादानत्वं
२. TM. तज्जीवन्तं
३. A omits किंच
४. T. एता इति ॥
५. TM. तेजोमात्रचक्षु
६. TM. कारण

भाष्यम्

तव्यत्वेन प्रकृतत्वात्, "विरजः पर आकाशात्" इत्येवंविधाच्च परस्यै-
वात्मनस्तत्र तत्र विशेषाधिकारात् । ननु "योऽयं विज्ञानमयः प्राणेषु"
इति शारीर एव महत्त्वसंबन्धित्वेन प्रतिनिर्दिश्यते; शास्त्रदृष्ट्या त्वेष
5 निर्देशो वामदेववद्द्रष्टव्यः । तस्मात्प्राज्ञविषयत्वात्परिमाणान्तरश्रवणस्य
न जीवस्याणुत्वं विरुध्यते ॥

# स्वशब्दोन्मानाभ्यां च ॥ २-३-२२ ॥

इतश्चाणुरात्मा, यतः साक्षादेवास्याणुत्ववाची शब्दः श्रूयते—
"एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन्प्राणः पञ्चधा संविवेश"
10 इति; प्राणसंबन्धाच्च जीव एवायमणुरभिहित इति गम्यते । तथोन्मा-
नमपि जीवस्याणिमानं गमयति—

"वालाग्रशतभागस्य शतधा कल्पितस्य च ।
भागो जीवः स विज्ञेयः"

इति; "आराग्रमात्रो ह्यवरोऽपि दृष्टः" इति चोन्मानान्तरम् ॥

15 प्रकटार्थविवरणम्

परमात्मविषयत्वं महत्त्वश्रुतेराक्षिपति — ननु योऽयमिति ॥ परिहरत्यणु-
वादी शास्त्रदृष्ट्या; परमार्थाभेददृष्ट्या जीवस्यैव महत्त्वनिर्देशो यथा वामदेवस्य
गर्भस्थस्यैव "अहं मनुरभवं सूर्यश्च" इति ॥

स्वशब्दोन्मानाभ्यां च ॥

20 पूर्वं गत्यादिश्रुत्यनुपपत्त्या अनुमानेन चाणुत्वं प्रसाध्य इदानीं श्रुतिरेवास्ती-
त्याह—स्वशब्देति ॥ ननु दुर्ज्ञानत्वाभिप्रायेण परमात्मैवाणुरिवाणुरुक्त इत्या-
शङ्क्याह—प्राणसंबन्धाच्चेति ॥ वृत्तिभेदेन पञ्चधा प्राणो यस्मिन् सन्निविष्टः
स प्राणाधारो जीव एवोक्त इत्यर्थः । उद्धृतं मानमुन्मानम्, अत्यन्तापकृष्टपरि-
माणमित्यर्थः ॥

१. A omits नह   २. A. एव नास्ति

भाष्यम्

नन्वणुत्वे सत्येकदेशस्थस्य सकलदेहगतोपलब्धिर्विरुध्यते ; दृश्यते च जाह्नवीह्रदनिमग्नानां सर्वाङ्गशैत्योपलब्धिः निदाघसमये च सकलशरीरपरितापोपलब्धिरिति—अत उत्तरं पठति—

## अविरोधश्चन्दनवत् ॥ २-३-२३ ॥ 5

यथा हरिचन्दनबिन्दुः शरीरैकदेशसंबद्धोऽपि सन् सकलदेहव्यापिनमाह्लादं करोति, एवमात्मापि देहैकदेशस्थः सकलदेहव्यापिनीमुपलब्धिं करिष्यति ; त्वक्संबन्धाच्चास्य सकलशरीरगता वेदना न विरुध्यते ; त्वगात्मनोर्हि संबन्धः कृत्स्नायां त्वचि वर्तते ; त्वक्च कृत्स्नशरीरव्यापिनीति ॥ 10

## अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥ २-३-२४ ॥

अत्राह—यदुक्तमविरोधश्चन्दनवदिति, तदयुक्तम्, दृष्टान्तदार्ष्टान्ति-

प्रकटार्थविवरणम्

उत्तरसूत्रनिरस्याशङ्कामाह — नन्वणुत्वे सतीति ॥ सकलदेहव्यापि- 15 कार्यान्यथानुपपत्त्या नाणुपरिमाणो जीव इत्यर्थः ॥

अविरोधश्चन्दनवत् ॥

परिच्छिन्नस्यापि स्वभाववशात् व्यापि कार्यं संभवतीति [1]अन्यथाप्युपपत्तिं दृष्टान्तेनाह—यथा हरिचन्दनेति ॥ इतश्चाणोरपि व्यापि कार्यं संभवतीत्याह—त्वक्संबन्धाच्चेति ॥ त्वचः स्वरूपेणात्मसम्बन्धो न प्रदेशेनेत्यभि- 20 प्रायः ॥

अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥

दृष्टान्तदार्ष्टान्तिकयोः वैषम्यं शङ्कते—अत्राहेत्यादिना ॥ [2]अणुपरिमाणत्वादेकदेशवर्तित्वमनुमेयमिति न शक्यं वक्तुम्, अणुपरिमाणत्वस्य सन्दि-

१. T and T¹ omit अन्यथाप्युपपत्तिं  २. TM. नतु

भाष्यम्

कयोरतुल्यत्वात्; सिद्धे ह्यात्मनो देहैकदेशस्थत्वे चन्दनदृष्टान्तो भवति, प्रत्यक्षं तु चन्दनस्यावस्थितिवैशेष्यमेकदेशस्थत्वं सकलदेहाह्लादनं च; आत्मनः पुनः सकलदेहोपलब्धिमात्रं प्रत्यक्षम्, नैकदेशवर्तित्वम्; अनु-
5 मेयं तदिति यदप्युच्येत—न चात्रानुमानं संभवति—किमात्मनः सकलशरीरगता वेदना त्वगिन्द्रियस्येव सकलदेहव्यापिनः सतः, किं वा विभोर्नभस इव, आहोस्विच्चन्दनबिन्दोरिवाणोरेकदेशस्थस्येति संशया-नतिवृत्तेरिति; अत्रोच्यते—नायं दोषः; कस्मात्? अभ्युपगमात्। अभ्युपगम्यते ह्यात्मनोऽपि चन्दनस्येव देहैकदेशवृत्तित्वमवस्थितिवै-
10 शेष्यम्; कथमिति, उच्यते—हृदि ह्येष आत्मा पठ्यते वेदान्तेषु, "हृदि ह्येष आत्मा" "स वा एष आत्मा हृदि" "कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः" इत्याद्युपदेशेभ्यः। तस्माद्दृष्टान्तदार्ष्टान्तिकयोरवैषम्याद्युक्तमेवैतत्—"अविरोधश्चन्दनवत्" इति॥

15 ## गुणाद्वा लोकवत्॥ २-३-२५॥

चैतन्यगुणव्याप्तेर्वाणोरपि सतो जीवस्य सकलदेहव्यापि कार्यं न विरुध्यते—यथा लोके मणिप्रदीपप्रभृतीनामपवरकैकदेशवर्तिनामपि प्रभापवरकव्यापिनी सती कृत्स्नेऽपवरके कार्यं करोति—तद्वत्। स्यात्क-दाचिच्चन्दनस्य सावयवत्वात्सूक्ष्मावयवविसर्पणेनापि सकलदेह आह्ला-

20 प्रकटार्थविवरणम्

ध्यत्वादित्याह—अनुमेयं तदित्यादिना॥ अणुवादी वैषम्यं परिहरति—अत्रोच्यत इत्यादिना॥ यथा प्रत्यक्षेण चन्दनबिन्दोरेकदेशावस्थानं सिद्धम्, तथागमादात्मनोऽप्येकदेशावस्थानं सिद्धमित्यर्थः॥

गुणाद्वा लोकवत्॥

25 सकलदेहव्यापि कार्यं मतान्तरेणाह—गुणाद्वेति॥ मतान्तरपरिग्रहे पूर्व-स्यापरितोषमाह—स्यात्कदाचिदित्यादिना॥

भाष्यम्

दयितृत्वम्; न त्वणोर्जीवस्यावयवाः सन्ति, यैरयं सकलदेहं विप्रसर्पेत्—इत्याशङ्क्य "गुणाद्वा लोकवत्" इत्युक्तम् ॥

कथं पुनर्गुणो गुणिव्यतिरेकेणान्यत्र वर्तेत? न हि पटस्य शुक्लो गुणः पटव्यतिरेकेणान्यत्र वर्तमानो दृश्यते। प्रदीपप्रभावद्भवेदिति चेत्, न; तस्या अपि द्रव्यत्वाभ्युपगमात्—निबिडावयवं हि तेजोद्रव्यं प्रदीपः, प्रविरलावयवं तु तेजोद्रव्यमेव प्रभेति, अत उत्तरं पठति— 5

## व्यतिरेको गन्धवत् ॥ २-३-२६ ॥

यथा गुणस्यापि सतो गन्धस्य गन्धवद्द्रव्यव्यतिरेकेण वृत्तिर्भवति, अप्राप्तेष्वपि कुसुमादिषु गन्धवत्सु कुसुमगन्धोपलब्धेः; एवमणोरपि सतो जीवस्य चैतन्यगुणव्यतिरेको भविष्यति। अतश्चानैकान्तिकमेतत्—गुणत्वाद्रूपादिवदाश्रयविश्लेषानुपपत्तिरिति, गुणस्यैव सतो गन्धस्याश्रयविश्लेषदर्शनात्। गन्धस्यापि सहैवाश्रयेण विश्लेष इति चेत्, तन्न; यस्मान्मूलद्रव्याद्विश्लेषः तस्य क्षयप्रसङ्गात्; अक्षी- 10

प्रकटार्थविवरणम् 15

सूत्रान्तरमवतारयितुमुक्तमाक्षिपति—कथं पुनरिति ॥ चैतन्यं न गुणिनोऽन्यत्र वर्तते, गुणत्वात्, शौक्ल्यवदित्यर्थः ॥

व्यतिरेको गन्धवत् ॥

अनैकान्तिकत्वाभिधानेन परिहरति—व्यतिरेको गन्धवदिति ॥ गन्धस्यापि पक्ष[सपक्ष]त्वान्नानैकान्तिकत्वमित्याह—गन्धस्यापि सहैवेति॥ अणुवादी परिहरति—तन्न यस्मादिति॥ यथैकत्वं का[कतन्त्व]पचये पटस्यापक्षयः[पचयः] पूर्वपरिमाणादिहानिर्वा भवति तथा स्यादित्यर्थः। पूर्वपरिमाणादिहानिः भवत्येव, 20

१. T. भवत्वेव

### भाष्यम्

यमाणमपि तत्पूर्वावस्थातो गम्यते; अन्यथा तत्पूर्वावस्थैर्गुरुत्वादि-
भिर्हीयेत । स्यादेतत्—गन्धाश्रयाणां विश्लिष्टानामवयवानामल्पत्वात्
सन्नपि विशेषो नोपलक्ष्यते; सूक्ष्मा हि गन्धपरमाणवः सर्वतो विप्र-
5 सृता गन्धबुद्धिमुत्पादयन्ति नासिकापुटमनुप्रविशन्त इति चेत्, न;
अतीन्द्रियत्वात्परमाणूनाम्, स्फुटगन्धोपलब्धेश्च नागकेसरादिषु; न च
लोके प्रतीतिः—गन्धवद्द्रव्यमाघ्रातमिति; गन्ध एवाघ्रात इति तु
लौकिकाः प्रतियन्ति । रूपादिष्वाश्रयव्यतिरेकानुपलब्धेर्गन्धस्याप्य-
युक्त आश्रयव्यतिरेक इति चेत्, न; प्रत्यक्षत्वादनुमानाप्रवृत्तेः; तस्मात्
10 यद्यथा लोके दृष्टम्, तत्तथैवानुमन्तव्यं निरूपकैः; नान्यथा; न हि रसो
गुणो जिह्वयोपलभ्यत इत्यतो रूपादयोऽपि गुणा जिह्वयैवोपलभ्येरन्निति
नियन्तुं शक्यते ॥

### प्रकटार्थविवरणम्

किंत्वल्पत्वान्नोपलभ्यत इत्याह—स्यादेतदिति ॥ तर्हि परमाणुरूपाप्रत्यक्ष-
15 त्ववत् गन्धोऽपि प्रत्यक्षो न स्यादित्याह—नातीन्द्रियत्वादिति ॥ किं च भवन्नपि
गन्धोपलम्भः स्फुटो न स्यात्; भवति च नागकेसरादिषु पुष्पविशेषेषु; ततो
न गन्धवन्तः परमाणवः समायान्ति वाताहृता इत्यर्थः । किं च द्रव्यगमन-
कल्पनं नानुभवारूढमपीत्याह—न च लोक इति ॥ यद्यनुभवाभावेऽप्यनु-
मीयते, तदानुभवबाध एव भवतीत्याह—रूपादिष्वित्यादिना ॥ अन्यथाति-
20 प्रसङ्गोऽपि भवतीत्याह—न हि रस इति ॥ तस्मादनुभवानुसारेण गन्धस्य
गुणिनं विनापि वृत्तेश्चैतन्यस्यापि वृत्तिसंभवादणुपरिमाणत्वेऽपि सकलशरीर-
वेदनानुसन्धानं न विरुध्यत इति स्थितम् ॥

१. T and T[1]. अणुत्वेऽपि

भाष्यम्

## तथा च दर्शयति ॥ २-३-२७ ॥

हृदयायतनत्वमणुपरिमाणत्वं चात्मनोऽभिधाय तस्यैव "आ लोमभ्य आ नखाग्रेभ्यः" इति चैतन्येन गुणेन समस्तशरीरव्यापित्वं दर्शयति ॥ 5

## पृथगुपदेशात् ॥ २-३-२८ ॥

"प्रज्ञया शरीरं समारुह्य" इति चात्मप्रज्ञयोः कर्तृकरणभावेन पृथगुपदेशाच्चैतन्यगुणेनैवास्य शरीरव्यापिता गम्यते । "तदेषां प्रणानां विज्ञानेन विज्ञानमदाय" इति च कर्तुः शारीरात्पृथग्विज्ञानस्योपदेश एतमेवाभिप्रायमुपोद्बलयति । तस्मादणुरात्मेति ॥ 10

एवं प्राप्ते ब्रूमः—

## तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ २-३-२९ ॥

तुशब्दः पक्षं व्यावर्तयति । नैतदस्ति—अणुरात्मेति ; उत्पत्त्यश्रवणाद्धि परस्यैव तु ब्रह्मणः प्रवेशश्रवणात्तादात्म्योपदेशाच्च परमेव ब्रह्म

प्रकटार्थविवरणम् 15

तथा च दर्शयति ॥

पृथगुपदेशात् ॥

पुनश्चैतन्येनैव सकलकलेबराकल्पनं कल्पयति सूत्राभ्याम्—तथा चेत्यादिना ॥ प्राणानां चक्षुरादीनाम् ; विज्ञानं ग्राहकशक्तिम् ; विज्ञानेनादायेत्यपि चैतन्येनैवानुसन्धानं द्रढयतीर्थः ॥ 20

तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥

सिद्धान्तसूत्रगतं तुशब्दं व्याचष्टे—तुशब्द इत्यादिना ॥ न केवलं सर्वगतब्रह्माभेदात् जीवस्य स्वाभाविकं सर्वगतत्वम्, श्रुतिस्मृतिप्रामाण्यादपीत्याह—

१. A. चैतन्यस्यैव  २. T. and T¹ omit एव

भाष्यम्

जीव इत्युक्तम्; परमेव चेद्ब्रह्म जीवः, तस्माद्यावत्परं ब्रह्म तावानेव जीवो भवितुमर्हति; परस्य च ब्रह्मणो विभुत्वमाम्नातम्; तस्माद्विभुर्जीवः; तथा च "स वा एष महानज आत्मा योऽयं विज्ञानमयः 5 प्राणेषु" इत्येवंजातीयका जीवविषया विभुत्ववादाः श्रौताः स्मार्ताश्च समर्थिता भवन्ति। न चाणोर्जीवस्य सकलशरीरगता वेदनोपपद्यते; त्वक्संबन्धात्स्यादिति चेत्, न; कण्टकतोदनेऽपि सकलशरीरगतैव वेदना प्रसज्येत—त्वक्कण्टकयोर्हि संयोगः कृत्स्नायां त्वचि वर्तते— त्वक्च कृत्स्नशरीरव्यापिनीति; पादतल एव तु कण्टकनुन्नो वेदनां 10 प्रतिलभते। न चाणोर्गुणव्याप्तिरुपपद्यते, गुणस्य गुणिदेशत्वात्; गुणत्वमेव हि गुणिनमनाश्रित्य गुणस्य हीयेत; प्रदीपप्रभायाश्च द्रव्यान्तरत्वं व्याख्यातम्। गन्धोऽपि गुणत्वाभ्युपगमात्साश्रय एव संचरितुमर्हति, अन्यथा गुणत्वहानिप्रसङ्गात्; तथा चोक्तं द्वैपायनेन—

प्रकटार्थविवरणम्

15 तथा च स वा इति ॥ उक्तं च दोषं स्मारयति—न चाणोरित्यादिना ॥ यथा पादतले कण्टकसंबन्धाद्वेदनोपलम्भः, तथा सकलशरीरे तव कण्टकसंबन्धाद्वेदनोपलम्भः प्रसज्येतेत्युक्तम्। सोऽपि भवत्वित्याशङ्क्याह—पादतल एव त्विति ॥ कण्टकनुन्नां कण्टकतोदनिमित्तां वेदनां पादतल एव प्रतिजानन्ति। ततः प्रदेशवृत्तिरेव संयोग इति भावः। यच्चोक्तं गुणद्वारेणाणोरप्यनु- 20 सन्धानमिति तद्दूषयति—न चाणोरिति ॥ यच्चोक्तं गन्धोऽपि सपक्ष एवेति तदपि न सुस्थमित्याह—गन्धोऽपीति ॥ न च प्रत्यक्षविरोधः प्रत्यक्षेणाश्रयशून्यताया अग्रहणात् महतां च त्रसरेणूनामनुद्भूतरूपस्पर्शानामागमनमिति स्फुटोपलम्भसंभवः। तस्माद्गन्धवन्तः पार्थिवावयवा एवागच्छन्तीति न व्यभिचारः। पार्थिवावयवगमने संवादमाह—तथा चोक्तमिति ॥ पूर्वं चैतन्यस्य

१. TM. भवतीति
२. A adds एव
३. T and T[1] omit रूप

भाष्यम्

"उपलभ्याप्सु चेद्गन्धं केचिद्ब्रूयुरनैपुणाः ।
पृथिव्यामेव तं विद्यादपो वायुं च संश्रितम् ॥"

इति । यदि च चैतन्यं जीवस्य समस्तं शरीरं व्याप्नुयात् नाणुर्जीवः स्यात्[1]; चैतन्यमेव ह्यस्य स्वरूपम्, अग्नेरिवौष्ण्यप्रकाशौ—नात्र गुणगुणिविभागो विद्यत इति। शरीरपरिमाणत्वं च प्रत्याख्यातम् । परिशेषाद्विभुर्जीवः ॥ 5

कथं तर्ह्यणुत्वादिव्यपदेश इत्यत आह "तद्गुणसारत्वात्तु तद्व्यपदेशः" इति । तस्या बुद्धेर्गुणास्तद्गुणाः—इच्छा द्वेषः सुखं दुःखमित्येवमादयः—तद्गुणाः सारः प्रधानं यस्यात्मनः संसारित्वे संभवति, स तद्गुणसारः, तस्य भावः तद्गुणसारत्वम् । न हि बुद्धेर्गुणैर्विना केवलस्यात्मनः संसारित्वमस्ति ; बुद्ध्युपाधिधर्माध्यासनिमित्तं हि कर्तृत्वभोक्तृत्वादिलक्षणं संसारित्वमकर्तुरभोक्तुश्चासंसारिणो नित्यमुक्तस्य सत आत्मनः; तस्मात्तद्गुणसारत्वाद्बुद्धिपरिमाणेनास्य परिमाणव्यपदेशः, तदुत्क्रान्त्यादिभिश्चास्योत्क्रान्त्यादिव्यपदेशः, न स्वतः । तथा च— 10

"वालाग्रशतभागस्य शतधा कल्पितस्य च ।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते ॥" 15

इत्यणुत्वं जीवस्योक्त्वा तस्यैव पुनरानन्त्यमाह ; तच्चैवमेव समञ्जसं स्यात्—यद्यौपचारिकमणुत्वं जीवस्य भवेत्[2], पारमार्थिकं चान-

प्रकटार्थविवरणम्

गुणत्वमभ्युपगम्य गुणस्य गुणिनं विहायान्यत्र गमनानुपपत्तेः सकलशरीरवेदनानुसन्धानानुपपत्तेः नाणुर्जीव इत्युक्तम् ; इदानीं गुणत्वमपि नास्तीत्याह—यदि च चैतन्यमिति ॥ उक्तरीत्याणुपरिमाणत्वं न घटते चेत्तर्हि मध्यमपरिमाणत्वं भवत्वित्यपि नाशङ्कनीयमित्याह—शरीरपरिमाणत्वं चेति ॥ परिशिष्टचोद्यांशापाकरणाय सूत्रभागमवतार्य व्याचष्टे—कथं तर्हीत्यादिना ॥ "अन्तरा विज्ञानमनसी" इत्यत्रोक्तां बुद्धिं तच्छब्देन परामृशति । परोपाधिकमणुत्वम्, स्वतस्त्वानन्त्यमित्यत्र श्रुतिसंमतिमाह—तथा चेति ॥ नन्वणुत्वा- 20 25

१. A. नानुजीवः    २. A omits च

भाष्यम्

न्त्यम्; न ह्युभयं मुख्यमवकल्पेत; न चानन्त्यमौपचारिकमिति शक्यं विज्ञातुम्, सर्वोपनिषत्सु ब्रह्मात्मभावस्य प्रतिपिपादयिषितत्वात्। तथेतरस्मिन्नप्युन्माने "बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रो ह्यवरोऽपि
5 दृष्टः" इति च बुद्धिगुणसंबन्धेनैवाराग्रमात्रतां शास्ति, न स्वेनैवात्मना। "एषोऽणुरात्मा चेतसा वेदितव्यः" इत्यत्रापि न जीवस्याणुपरिमाणत्वं शिष्यते, परस्यैवात्मनश्चक्षुराद्यनवग्राह्यत्वेन ज्ञानप्रसादगम्यत्वेन च प्रकृतत्वात्, जीवस्यापि च मुख्याणुपरिमाणत्वानुपपत्तेः; तस्माद्दुर्ज्ञानत्वाभिप्रायमिदमणुत्ववचनम्, उपाध्यभिप्रायं वा द्रष्टव्यम्। तथा
10 "प्रज्ञया शरीरं समारुह्य" इत्येवंजातीयकेष्वपि भेदोपदेशेषु—बुद्ध्यैवोपाधिभूतया जीवः शरीरं समारुह्य—इत्येवं योजयितव्यम्, व्यपदेशमात्रं वा, 'शिलापुत्रकस्य शरीरम्' इत्यादिवत्; न ह्यत्र गुणगुणिविभा-

प्रकटार्थविवरणम्

नन्वश्रुत्योर्विरोधे किमित्यानन्त्यमेवामुख्यं न भवतीत्याशङ्क्याह—न चान-
15 न्त्यमिति ॥ 'सोऽयं देवदत्तः' इतिवत् "तत्त्वमसि" इति त्वमर्थोद्देशेनानन्तब्रह्मभावस्य विधित्सितत्वात् विधित्सितानन्त्यविरोधात् उद्देश्यगतमेवाणुत्वमविवक्षितमिति भावः। द्वितीयमुन्मानं दूषयति—तथेतरस्मिन्नपीति ॥ बुद्धेर्गुणेनेति बुद्धिगुणसंनिधानेनात्मनि मिथ्यागुणान्तरमुत्पद्यते। तेनात्मगुणेन चोभयोः तादात्म्येनाराग्रपरिमाणोऽपकृष्टश्च दृष्ट इत्यर्थः। आराग्र-
20 परिमाणत्वं चाल्पत्वाभिप्रायम्, न तु परमाणुसमानपरिमाणार्थम्; यतः बुद्धेरपि भौतिकत्वे मध्यमपरिमाणत्वमेवाभ्युपगम्यते। यच्चोक्तम्—स्वशब्दात्—इति, तद्दूषयति—एषोऽणुरात्मेति ॥ यच्च सूत्रद्वयेनाणोरेव चैतन्यगुणेन शरीरव्यापकत्वमित्युक्तं तद्दूषयति—तथा प्रज्ञयेति ॥ प्रज्ञाशब्देन चैतन्यपरिग्रहेऽपि व्यपदेशमात्रमुपचारमात्रं वा द्रष्टव्यमित्यर्थः। ननु गुणगुणिभावेन
25 मुख्यार्थत्वे संभवति किमित्युपचार इत्याशङ्क्याह—न ह्यत्रेति ॥ विज्ञान-

१. T¹. यमजानन्
A. यं मन्वानं
२. T and TM उत्पाद्यते
३. T, T¹ and P omit यतः
४. T. किमुक्त्यपचारः

भाष्यम्

गोऽपि विद्यत इत्युक्तम् । हृदयायतनत्ववचनमपि बुद्धेरेव तदायतन-त्वात् । तथोत्क्रान्त्यादीनामप्युपाध्यायत्ततां दर्शयति—"कस्मिन्नु अह-मुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति" "स प्राणमसृजत" इति; उत्क्रान्त्यभावे हि गत्यागत्योरप्यभावो 5 विज्ञायते; न ह्यनपसृप्तस्य देहाद्गत्यागती स्याताम् । एवमुपाधिगुणसार-त्वाज्जीवस्याणुत्वादिव्यपदेशः, प्राज्ञवत् । यथा प्राज्ञस्य परमात्मनः सगुणेषूपासनेषूपाधिगुणसारत्वादणीयस्त्वादिव्यपदेशः— "अणीयान् व्रीहेर्वा यवाद्वा" "मनोमयः प्राणशरीरः सर्वगन्धः सर्वरसः सत्यकामः सत्यसंकल्पः" इत्येवंप्रकारः—तद्वत् ॥ 10

स्यादेतत्—यदि बुद्धिगुणसारत्वादात्मनः संसारित्वं कल्प्येत, ततो बुद्ध्यात्मनोर्भिन्नयोः संयोगावसानमवश्यंभावीत्यतो बुद्धिवियोगे सत्यात्मनो विभक्तस्यानालक्ष्यत्वादसत्त्वमसंसारित्वं वा प्रसज्येतेति— अत उत्तरं पठति—

## यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ २-३-३० ॥ 15

नेयमनन्तरनिर्दिष्टदोषप्राप्तिराशङ्कनीया; कस्मात्? यावदात्मभावि-त्वाद्बुद्धिसंयोगस्य—यावदयमात्मा संसारी भवति, यावदस्य सम्यग्द-र्शनेन संसारित्वं न निवर्तते, तावदस्य बुद्ध्या संयोगो न शाम्यति;

प्रकटार्थविवरणम्

घन एवेत्यवधारणादित्यर्थः । अन्यदपि पूर्वोक्तं दूषयति—हृदयायतनत्वे- 20 त्यादिना ॥ "प्राज्ञवत्" इति सौत्रदृष्टान्तं विवृणोति—यथेति ॥

उत्तरसूत्र[सूत्रनिरस्या]शङ्कामाह—स्यादेतदिति ॥

यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥

सूत्रं योजयति—नेयमित्यादिना ॥ एवं तावत् श्रुत्यवष्टम्भेन बुद्ध्यवियोग-मुक्त्वा, अधुना बुद्धिसंबन्धे कारणस्वभावपर्यालोचनयापि न प्राक् सम्यग्ज्ञाना- 25

भाष्यम्

यावदेव चायं बुद्ध्युपाधिसंबन्धः, तावदेवास्य जीवत्वं संसारित्वं च; परमार्थतस्तु न जीवो नाम बुद्ध्युपाधिसंबन्धपरिकल्पितस्वरूपव्यतिरेकेणास्ति; न हि नित्यमुक्तस्वरूपात्सर्वज्ञादीश्वरादन्यश्चेतनो धातुर्द्वि-
5 तीयो वेदान्तार्थनिरूपणायामुपलभ्यते—"नान्योऽस्ति द्रष्टा श्रोता मन्ता विज्ञाता" "नान्यदतोऽस्ति द्रष्टृ श्रोतृ मन्तृ विज्ञातृ" "तत्त्वमसि" "अहं ब्रह्मास्मि" इत्यादिश्रुतिशतेभ्यः। कथं पुनरवगम्यते यावदात्मभावी बुद्धिसंयोग इति? तद्दर्शनादित्याह; तथा हि शास्त्रं दर्शयति—"योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः स समानः
10 सन्नुभौ लोकावनुसंचरति ध्यायतीव लेलायतीव" इत्यादि; तत्र विज्ञानमय इति बुद्धिमय इत्येतदुक्तं भवति, प्रदेशान्तरे "विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः" इति विज्ञानमयस्य मनआदिभिः सह पाठात्; बुद्धिमयत्वं च तद्गुणसारत्वमेवाभिप्रेयते—यथा लोके स्त्रीमयो देवदत्त इति स्त्रीरागादिप्रधानोऽभिधीयते, तद्वत्; "स समानः
15 सन्नुभौ लोकावनुसंचरति" इति च लोकान्तरगमनेऽप्यवियोगं बुद्ध्या दर्शयति; केन समानः? तयैव बुद्ध्येति गम्यते, संनिधानात्; तच्च दर्शयति—"ध्यायतीव लेलायतीव" इति; एतदुक्तं भवति—नायं स्वतो ध्यायति, नापि चलति, ध्यायन्त्यां बुद्धौ ध्यायतीव, चलन्त्यां बुद्धौ चलतीवेति। अपि च मिथ्याज्ञानपुरःसरोऽयमात्मनो बुद्ध्युपा-
20 धिसंबन्धः; न च मिथ्याज्ञानस्य सम्यग्ज्ञानादन्यत्र निवृत्तिरस्तीत्यतो यावद्ब्रह्मात्मतानवबोधः, तावदयं बुद्ध्युपाधिसंबन्धो न शाम्यति; दर्शयति च—

"वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्।
तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय॥" इति॥

25 प्रकटार्थविवरणम्

बुद्धिवियोग इत्याह—अपि च मिथ्याज्ञानपुरःसर इति॥ ज्ञानादेवानाद्यनिर्वा[१]च्यजीवोपाध्यज्ञाननिवृत्तौ बुद्धिवियोग इत्यत्र श्रुतिं प्रमाणयति- दर्शयति चेति॥

१. T and TM. अनिर्वाच्यजीवोपा-

भाष्यम्

ननु सुषुप्तप्रलययोर्न शक्यते बुद्धिसंबन्ध आत्मनोऽभ्युपगन्तुम्, "सता सोम्य तदा संपन्नो भवति स्वमपीतो भवति" इति वचनात्, कृत्स्नविकारप्रलयाभ्युपगमाच्च ; तत्कथं यावदात्मभावित्वं बुद्धिसंबन्धस्येति, अत्रोच्यते— 5

## पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥ २-३-३१ ॥

यथा लोके पुंस्त्वादीनि बीजात्मना विद्यमानान्येव बाल्यादिष्वनुपलभ्यमानान्यविद्यमानवदभिप्रेयमाणानि यौवनादिष्वाविर्भवन्ति ; नाविद्यमानान्युत्पद्यन्ते, षण्डादीनामपि तदुत्पत्तिप्रसङ्गात्—एवमयमपि बुद्धिसंबन्धः शक्त्यात्मना विद्यमान एव सुषुप्तप्रलययोः पुनः प्रबोध- 10 प्रसवयोराविर्भवति ; एवं ह्येतद्युज्यते ; न ह्याकस्मिकी कस्यचिदुत्पत्तिः संभवति, अतिप्रसङ्गात् । दर्शयति च सुषुप्तादुत्थानमविद्यात्मकबीजसद्भावकारितम्—"सति संपद्य न विदुः सति संपद्यामह इति", "त इह व्याघ्रो वा सिंहो वा" इत्यादिना । तस्मात्सिद्धमेतत्—यावदात्मभावी बुद्ध्याद्युपाधिसंबन्ध इति ॥ 15

प्रकटार्थविवरणम्

आदित्यवर्णमिति ज्योतीरूपम् ; तमसः अज्ञानात् ; परस्तादिति अज्ञानासंस्पृष्टमित्यर्थः ॥

यावदात्मभावित्वादित्यस्यासिद्धिं शङ्कते—ननु सुषुप्तेति ॥

पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥ 20

अनभिव्यक्तरूपेण सुषुप्तादावप्यस्ति बुद्धिसंबन्धः ; ततो नासिद्धो हेतुरित्याह—पुंस्त्वादिवत्त्विति ॥

भाष्यम्

## नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वान्यथा ॥ २-३-३२ ॥

तच्चात्मन उपाधिभूतम्—अन्तःकरणं मनो बुद्धिर्विज्ञानं चित्त-
5 मिति चानेकधा तत्र तत्राभिलप्यते; क्वचिच्च वृत्तिविभागेन—संशया-
दिवृत्तिकं मन इत्युच्यते, निश्चयादिवृत्तिकं बुद्धिरिति; तच्चैवंभूतमन्तः-
करणमवश्यमस्तीत्यभ्युपगन्तव्यम्, अन्यथा ह्यनभ्युपगम्यमाने तस्मि-
न्नित्योपलब्ध्यनुपलब्धिप्रसङ्गः स्यात्—आत्मेन्द्रियविषयाणामुपलब्धि-
साधनानां संनिधाने सति नित्यमेवोपलब्धिः प्रसज्येत; अथ सत्यपि

10 प्रकटार्थविवरणम्

नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वान्यथा ॥

ननु मनो नाम द्रव्यं नास्तीति बौद्धाः। बुद्धिश्च द्रव्यं न भवतीति
वैशेषिकाः प्रतिपेदिरे, "बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम्" इति सूत्रात्।
अतः कथं मनआद्यवियोगः साध्यत इत्याशङ्क्याह—तच्चात्मन इति ॥ "बुद्धे-
15 र्गुणेन" "बुद्धिश्च नेङ्गते तत्र" "विज्ञानेन विज्ञानमादाय" "मनसा ह्येव पश्यति"
"चेतसा वेदितव्यः" इत्यादिप्रदेशेषु गुणवत्त्वक्रियावत्त्वादिद्रव्यलिङ्गवत्तया
मनोबुध्यादिशब्दवाच्यमन्तःकरणं सिद्धम्। अतः कथं बुद्धिर्द्रव्यं न भवति,
मनो वा नास्तीति शक्यं वदितुमित्यर्थः। अन्तःकरणस्यैवावान्तरविभाग-
माह—क्वचिच्चेति ॥ यद्यपि नित्यानुभवगम्यं मन इति स्वरहस्यम्, तथापि
20 तदपलापिनं प्रति युगपत् ज्ञानानुत्पत्त्यन्यथानुपपत्तिगम्यमिति सूत्रार्थमाह—
तच्चैवंभूतमिति ॥ नित्यमेवोपलब्धिरिति ॥ कदलीफलादौ हस्तगृहीते युग-
पद्रूपगन्धस्पर्शाद्युपलब्धिः प्रसज्येतेत्यर्थः। नित्यानुपलब्धिप्रसङ्गं विवृणोति—
अथ सत्यपीति ॥ ननु करतलानलसंयोगे कदाचित् स्फोटो न जायत इत्येता-

१. A. इत्यतः सदैव

## भाष्यम्

हेतुसमवधाने फलाभावः, ततो नित्यमेवानुपलब्धिः प्रसज्येत; न चैवं दृश्यते । अथ वा अन्यतरस्यात्मन इन्द्रियस्य वा शक्तिप्रतिबन्धोऽभ्युपगन्तव्यः; न चात्मनः शक्तिप्रतिबन्धः संभवति, अविक्रियत्वात्; नापीन्द्रियस्य; न हि तस्य पूर्वोत्तरयोः क्षणयोरप्रतिबद्धशक्तिकस्य सतोऽकस्माच्छक्तिः प्रतिबध्येत । तस्मात् यस्यावधानानवधानाभ्यामुपलब्ध्यनुपलब्धी भवतः, तन्मनः । तथा च श्रुतिः—"अन्यत्रमना अभूवं नादर्शमन्यत्रमना अभूवं नाश्रौषम्" इति, "मनसा ह्येव पश्यति मनसा शृणोति" इति च; कामादयश्चास्य वृत्तय इति दर्शयति—"कामः संकल्पो विचिकित्सा श्रद्धाश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" इति । तास्मद्युक्तमेतत्—"तद्गुणसारत्वात्तद्व्यपदेशः" इति ॥

## प्रकटार्थविवरणम्

वता सदैव न भविष्यतीति किं नियन्तुं पार्यत इत्याशङ्क्य तद्वदेव दोषप्रतिबन्धो वक्तव्य इत्याह—अथ वेति ॥ अस्तु तर्हि[1] प्रतिबन्धकल्पनमित्याशङ्क्याह—न चात्मन इति ॥ अविक्रियत्वादात्मनः शक्तिरेव नास्ति, कुतस्तरां प्रतिबन्धवार्तावतार इति भावः । तर्हीन्द्रियस्य शक्तिमत्त्वादस्तु प्रतिबन्ध इत्याशङ्क्याह—नापीति ॥ न तावन्मण्यादिवद्दृष्टं प्रतिबन्धकं दृश्यते । अदृष्टं तु पूर्वक्षणेऽप्यासीदिति नाकस्मात्तस्य प्रतिबन्धकत्वसंभव इत्यर्थः । यस्मात् युगपद्ज्ञानानुत्पत्तेः नान्या गतिरस्ति तस्मादित्युपसंहारः । अवधानं तत्परता; अनवधानं व्यग्रता । उक्तेऽर्थे श्रुतिसंवादमाह—तथा चेति ॥

१. A omits तर्हि...इत्यर्थः

भाष्यम्

[ कर्त्रधिकरणम् ]

## कर्ता शास्त्रार्थवत्त्वात् ॥ २-३-३३ ॥

तद्गुणसारत्वाधिकारेणैवापरोऽपि जीवधर्मः प्रपञ्च्यते । कर्ता चायं
5 जीवः स्यात्; कस्मात्? शास्त्रार्थवत्त्वात्—एवं च "यजेत", "जुहु-
यात्", "दद्यात्" इत्येवंविधं विधिशास्त्रमर्थवद्भवति; अन्यथा तद-
नर्थकं स्यात् । तद्धि कर्तुः सतः कर्तव्यविशेषमुपदिशति; न चासति
कर्तृत्वे तदुपपद्येत । तथेदमपि शास्त्रमर्थवद्भवति—"एष हि द्रष्टा श्रोता
मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः" इति ॥

10 प्रकटार्थविवरणम्

कर्ता शास्त्रार्थवत्त्वात् ॥

जीवस्य ब्रह्मैक्यवादिना तावत् अकर्तृत्वमभ्युपगन्तव्यम्; तदा च कर्तृत्व-
श्रुतिविरोधः, साधनानुष्ठानाभावान्मोक्षाय शास्त्रारम्भविरोधश्चेत्यस्य दोषस्य
परिहाराय कर्तृत्वमस्मिन्नधिकरणे प्रतिपाद्यते । ननु जीवस्य पारमार्थिकं रूपं
15 ब्रह्म; कर्तृता त्वौपाधिकीति प्रागेव सिद्धम्; अतोऽनेनाधिकरणेन कर्तृत्वं प्रसा-
ध्योत्तरेण तस्यौपाधिकत्वसाधनं पुनरुक्तमित्याशङ्क्याह—तद्गुणसारत्वेति ॥
अधिकारेण प्रसङ्गेन । अधिकरणद्वयस्य पूर्वाधिकरणप्रपञ्चरूपत्वान्न पौनरुक्त्यं
शङ्कनीयम् । किञ्च नेयं जयपराजयप्रयोजनार्था, किं तु तत्त्वज्ञानार्था; तत्त्वं च
परमगम्भीरम्; ततोऽशेषसंशयशान्तयेऽसकृदुपदिशन्ति शिष्यहितैषिणः
20 सर्वथा इति सन्तोष्टव्यम् । जीवो विषयः; स किं कर्ता न वेति श्रुतिविप्रतिपत्तेः
संशये साङ्ख्या मन्यन्ते—बुद्धिः कर्त्री, जीवस्तु भोक्तैवेति; तदपाकरणाय सूत्रं
योजयति—कर्ता चायमिति ॥ कर्तुरभिप्रेतसिद्धये हि शास्त्रं साधनमुपदि-
शति । तत्कर्तृभोक्त्रोर्भेदेन समञ्जसं स्यादित्यर्थः । न केवलमनुपपत्तिलभ्यमेव
कर्तृत्वम्, किं तु श्रौतमपीत्याह—तथेदमपीति ॥

१. A omits विरोध    ३. A. सारेति

२. A omits दोषस्य    ४. A. अधिकरणप्रस-

भाष्यम्

## विहारोपदेशात् ॥ २-३-३४ ॥

इतश्च जीवस्य कर्तृत्वम्, यज्जीवप्रक्रियायां संध्ये स्थाने विहारमुपदिशति—"स ईयतेऽमृतो यत्र कामम्" इति, "स्वे शरीरे यथाकामं परिवर्तते" इति च ॥ 5

## उपादानात् ॥ २-३-३५ ॥

इतश्चास्य कर्तृत्वम्, यज्जीवप्रक्रियायामेव करणानामुपादानं संकीर्तयति—"तदेषां प्राणानां विज्ञानेन विज्ञानमादाय" इति, "प्राणान् गृहीत्वा" इति च ॥

## व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥ २-३-३६ ॥

इतश्च जीवस्य कर्तृत्वम्, यदस्य लौकिकीषु वैदिकीषु च क्रियासु कर्तृत्वं व्यपदिशति शास्त्रम्—"विज्ञानं यज्ञं तनुते। कर्माणि तनुतेऽपि च।" इति। ननु विज्ञानशब्दो बुद्धौ समधिगतः; कथमनेन जीवस्य

प्रकटार्थविवरणम्

विहारोपदेशात् ॥ 15

किञ्च विहरणोपदेशान्यथानुपपत्त्यापि कर्तृत्वमित्याह—विहारोपदेशादिति ॥ यदिति[1] यस्मात् जीवप्रकरणे स्वप्नस्थान इत्यर्थः ॥

उपादानात् ॥

अकर्तुरुपादानानुपपत्त्यापि कर्तृत्वमित्याह—उपादानादिति ॥

व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥ 20

कर्त्रभिधाय्याख्यातश्रुतिबलादपि कर्तृत्वमित्याह — व्यपदेशाच्चेति ॥ "न चेन्निर्देशविपर्ययः" इति सूत्रभागं शङ्कापूर्वकमवतारयति—ननु विज्ञानशब्द

१. A omits यदिति ॥

भाष्यम्

कर्तृत्वं सूच्यत इति ; नेत्युच्यते—जीवस्यैवैष निर्देशः, न बुद्धेः ; न चेज्जीवस्य स्यान्निर्देशविपर्ययः स्यात्—विज्ञानेनेत्येवं निरदेक्ष्यत् ; तथा ह्यन्यत्र बुद्धिविवक्षायां विज्ञानशब्दस्य करणविभक्तिनिर्देशो दृश्यते—
5 "तदेषां प्राणानां विज्ञानेन विज्ञानमादाय" इति ; इह तु "विज्ञानं यज्ञं तनुते" इति कर्तृसामानाधिकरण्यनिर्देशाद्बुद्धिव्यतिरिक्तस्यैवात्मनः कर्तृत्वं सूच्यत इत्यदोषः ॥

अत्राह—यदि बुद्धिव्यतिरिक्तो जीवः कर्ता स्यात्, स स्वतन्त्रः सन्प्रियं हितं चैवात्मनो नियमेन संपादयेत्, न विपरीतम् ; विपरीतमपि तु
10 संपादयन्नुपलभ्यते ; न च स्वतन्त्रस्यात्मन ईदृशी प्रवृत्तिरनियमेनोपपद्यत इति ; अत उत्तरं पठति—

## उपलब्धिवदनियमः ॥ २-३-३७ ॥

यथायमात्मोपलब्धिं प्रति स्वतन्त्रोऽप्यनियमेनेष्टमनिष्टं चोपलभते, एवमनियमेनैवेष्टमनिष्टं च संपादयिष्यति ; उपलब्धावप्यस्वातन्त्र्यम्

15 प्रकटार्थविवरणम्

इति ॥ विज्ञानशब्देन जीवो नोच्यते चेत्तदा प्रथमान्तनिर्देशस्य विपरीतः तृतीयान्तनिर्देशः स्यादित्युक्तम् ; तदेव श्रुत्यन्तरेण द्रढयति—तथा ह्यन्यत्रेति ॥

उत्तरसूत्र[सूत्रनिरस्या]शङ्कामाह — अत्राहेति ॥ [1]अव्यवधानेन सुखकरं प्रियम् । व्यवधानेन हितम् ॥

20 उपलब्धिवदनियमः ॥

प्रतिबन्दिग्रहण सांख्यं दूषयति—यथायमात्मेति ॥ [2]सूत्रार्थेन हि व्यवहारेऽपि कर्तृत्वं नेष्टम् । सुखाद्युपलब्धृत्वं तु भोक्तृत्वमिष्टम् ; तत्रापि स्वस्येष्टमेव कस्मान्नोपलभ्यत इति चोद्यं समानमित्यर्थः । साङ्ख्यस्य परिहारमुद्भावयति—उपलब्धावपीति ॥ चक्षुरादीनां विषयोपस्थापकत्वमेव ; उपस्थितविषयोपलम्भे

१. A omits सुख... धानेन   २. T, T¹, P and A. हि तत् प्रतिबन्दि-

भाष्यम्

उपलब्धिहेतूपादानोपलम्भादिति चेत्, न; विषयप्रकल्पनामात्रप्रयोजनत्वादुपलब्धिहेतूनाम्; उपलब्धौ त्वनन्यापेक्षत्वमात्मनः चैतन्ययोगात्। अपि चार्थक्रियायामपि नात्यन्तमात्मनः स्वातन्त्र्यमस्ति, देशकालनिमित्तविशेषापेक्षत्वात्; न च सहायापेक्षस्य कर्तुः कर्तृत्वं निवर्तते; भवति ह्येधोदकाद्यपेक्षस्यापि पक्तुः पक्तृत्वम्; सहकारिवैचित्र्याच्च इष्टानिष्टार्थक्रियायामनियमेन प्रवृत्तिरात्मनो न विरुध्यते॥ 5

## शक्तिविपर्ययात्॥ २-३-३८॥

इतश्च विज्ञानव्यतिरिक्तो जीवः कर्ता भवितुमर्हति। यदि पुनर्विज्ञानशब्दवाच्या बुद्धिरेव कर्त्री स्यात् ततः शक्तिविपर्ययः स्यात्— 10 करणशक्तिर्बुद्धेर्हीयेत, कर्तृशक्तिश्चापद्येत; सत्यां च बुद्धेः कर्तृशक्तौ, तस्या एवाहंप्रत्ययविषयत्वमभ्युपगन्तव्यम्, अहंकारपूर्विकाया एव प्रवृत्तेः सर्वत्र दर्शनात्—'अहं गच्छामि' 'अहमागच्छामि' 'अहं भुञ्जे' 'अहं पिबामि' इति च; तस्याश्च कर्तृशक्तियुक्तायाः सर्वार्थकारि करणमन्यत्कल्पयितव्यम्; शक्तोऽपि हि सन् कर्ता करणमुपादाय क्रियासु 15

प्रकटार्थविवरणम्

तु स्वातन्त्र्यमात्मनोऽस्त्येव; अतो नायं परिहार इत्याह—न विषयेति॥ किंच[1] यदि तवास्वातन्त्र्यमेव परिहारः सोऽस्माकमपि तुल्य इत्याह—अपि चेति॥ ननु "स्वतन्त्रः कर्ता" इति लक्षणं पाणिनिः निनाय[प्रणिनाय]। अतोऽस्वातन्त्र्ये कर्तृत्वमेव हीयेतेत्याशङ्क्याह—न च सहायेति॥ 20 एधांसि काष्ठानि। कर्ता कारकान्तराणि प्रेरयति, न तु कारकान्तरैः स प्रेर्यत इत्येतावदेव स्वातन्त्र्येण[न्त्र्यम्, न] त्वत्यन्तानपेक्षत्वमिति भावः। पूर्वं प्रतिबन्दिग्रहेण परिहारमुक्त्वा इदानीं स्वपक्षे परिहारमाह—सहकारिवैचित्र्याच्चेति॥

शक्तिविपर्ययात्॥ 25

कर्तृत्वसाधकं हेत्वन्तरमाह—शक्तीति॥ अस्तु शक्तिवैपरीत्यम्, ततः किमित्यत आह—सत्यां च बुद्धेरिति॥ योऽहंप्रत्ययालम्बनश्चेतनः स

१. TM and A omit किंच...न च सहायेति॥

भाष्यम्

प्रवर्तमानो दृश्यते; ततश्च संज्ञामात्रे विवादः स्यात्, न वस्तुभेदः कश्चित्, करणव्यतिरिक्तस्य कर्तृत्वाभ्युपगमात् ॥

## समाध्यभावाच्च ॥ २-३-३९ ॥

5 योऽप्ययमौपनिषदात्मप्रतिपत्तिप्रयोजनः समाधिरुपदिष्टो वेदान्तेषु—"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" "ओमित्येवं ध्यायथ आत्मानम्" इत्येवंलक्षणः, सोऽप्यसत्यात्मनः कर्तृत्वे नोपपद्येत । तस्मादप्यस्य कर्तृत्वसिद्धिः ॥

10 [ तक्षाधिकरणम् ]

## यथा च तक्षोभयथा ॥ २-३-४० ॥

एवं तावच्छास्त्रार्थवत्त्वादिभिर्हेतुभिः कर्तृत्वं शारीरस्य प्रदर्शितम्; तत्पुनः स्वाभाविकं वा स्यात् उपाधिनिमित्तं वेति चिन्त्यते । तत्रैतैरेव शास्त्रार्थवत्त्वादिभिर्हेतुभिः स्वाभाविकं कर्तृत्वम्, अपवादहेत्वभावा-
15 दिति । एवं प्राप्ते, ब्रूमः—

न स्वाभाविकं कर्तृत्वमात्मनः संभवति, अनिर्मोक्षप्रसङ्गात्;

प्रकटार्थविवरणम्

पवात्मा; अन्तस्य चेतनायामसाधारणं करणं तन्मन इति मतान्तरप्रवेशः सांख्यस्येति भावः ॥

20 समाध्यभावाच्च ॥

किञ्च समाधेश्चित्तसंयमनस्य विधानानुपपत्त्यापि कर्तृत्वं वक्तव्यमित्याह—समाध्यभावाच्चेति ॥

यथा च तक्षोभयथा ॥

वृत्तं सङ्कीर्त्य संशयमाह—एवं तावदिति ॥ कर्ममीमांसकानां पूर्वपक्ष-
25 माह—तत्रैतैरेवेति ॥

उत्सूत्रमेव पूर्वपक्षं दूषयति—न स्वाभाविकमिति ॥ कर्तृत्वशक्तिरेव स्वाभाविकी; तस्य यद्युच्छेदो नास्ति, तथापि कर्तृत्वलक्षणं यद्रायास-

## भाष्यम्

कर्तृत्वस्वभावत्वे ह्यात्मनो न कर्तृत्वान्निर्मोक्षः संभवति—अग्नेरिवौष्ण्यात्; न च कर्तृत्वादनिर्मुक्तस्यास्ति पुरुषार्थसिद्धिः, कर्तृत्वस्य दुःखरूपत्वात् । ननु स्थितायामपि कर्तृत्वशक्तौ कर्तृत्वकार्यपरिहारात्पुरुषार्थः सेत्स्यति; तत्परिहारश्च निमित्तपरिहारात्— 5
यथाग्नेर्दहनशक्तियुक्तस्यापि काष्ठवियोगाद्दहनकार्याभावः—तद्वत्—न, निमित्तानामपि शक्तिलक्षणेन संबन्धेन संबद्धानामत्यन्तपरिहारासंभवात् । ननु मोक्षसाधनविधानान्मोक्षः सेत्स्यति—न, साधनायत्तस्यानित्यत्वात् । अपि च नित्यशुद्धबुद्धमुक्तात्मप्रतिपादनान्मोक्षसिद्धिरभिमता; तादृगात्मप्रतिपादनं च न स्वाभाविके कर्तृत्वेऽवकल्पेत; तस्मादु- 10
पाधिधर्माध्यासेनैवात्मनः कर्तृत्वम्, न स्वाभाविकम्; तथा च श्रुतिः—
"ध्यायतीव लेलायतीव" इति "आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" इति च—उपाधिसंपृक्तस्यैवात्मनो भोक्तृत्वादिविशेषलाभं

## प्रकटार्थविवरणम्

रूपं कार्यं तत्परिहारान्मोक्षो भविष्यतीत्याह—ननु स्थितायामपीति ॥ 15
ननु सत्यां शक्तौ कार्यपरिहारो वा कथमात्यन्तिक इत्याशङ्क्याह—
तत्परिहारश्चेति ॥ परिहरति—न निमित्तानामिति ॥ देशकालादृष्टादीनां निमित्तानां निमित्तत्वशक्तेः स्वाभाविक्या उच्छेदानुपपत्तेर्निमित्ताभावात् कार्यानुदय इति न शक्यते वक्तुमित्यर्थः । मोक्षसाधनेन नित्यानुष्ठानेन स्वाभाविकीमपि शक्तिं प्रतिबध्य मोक्षः साध्यतामित्याह—ननु मोक्षेति ॥ कर्म- 20
साध्यस्य शक्तिप्रतिबन्धस्यानित्यत्वं[त्यत्वात्] न मोक्षसाधनम[नत्वम् । अ]-
भ्युपगम्य दूषणमुक्तम्; इदानीं तदपि नास्तीत्याह—अपि चेति ॥ उपसंहृतेऽर्थे श्रुतिमाह—तथा चेति ॥ ननु उपाधिसंयुक्तस्यात्मनो भोक्तृत्वं श्रुति-

१. A omits न

२. A omits मोक्षः...अनित्यत्वं न and has instead नित्यत्वान्मोक्षः संभवतीत्याह साधनाय...गम्यते.

भाष्यम्

दर्शयति । न हि विवेकिनां परस्मादन्यो जीवो नाम कर्ता भोक्ता वा विद्यते, "नान्योऽतोऽस्ति द्रष्टा" इत्यादिश्रवणात् । पर एव तर्हि संसारी कर्ता भोक्ता च प्रसज्येत ; परस्मादन्यश्चेच्चितिमाञ्जीवः कर्ता,
5 बुद्ध्यादिसंघातव्यतिरिक्तो न स्यात्—न, अविद्याप्रत्युपस्थापितत्वात्कर्तृत्वभोक्तृत्वयोः ; तथा च शास्त्रम्—"यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति" इत्यविद्यावस्थायां कर्तृत्वभोक्तृत्वे दर्शयित्वा, विद्यावस्थायां ते एव कर्तृत्वभोक्तृत्वे निवारयति—"यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" इति ; तथा स्वप्नजागरितयोरात्मन उपाधिसंप-
10 र्ककृतं श्रमं श्येनस्येवाकाशे विपरिपततः श्रावयित्वा, तदभावं सुषुप्तौ प्राज्ञेनात्मना संपरिष्वक्तस्य श्रावयति—"तद्वा अस्यैतदाप्तकाममात्मकाममकामं रूपं शोकान्तरम्" इत्यारभ्य "एषास्य परमा गतिरेषास्य परमा संपदेषोऽस्य परमो लोक एषोऽस्य परम आनन्दः" इत्युपसंहारात् ॥

15 तदेतदाहाचार्यः—"यथा च तक्षोभयथा" इति । त्वर्थे चायं चः पठितः । नैवं मन्तव्यं—स्वाभाविकमेवात्मनः कर्तृत्वम्, अग्नेरिवौष्ण्यमिति ; यथा तु तक्षा लोके वास्यादिकरणहस्तः कर्ता दुःखी

प्रकटार्थविवरणम्

राह ; तच्च परेषामपीष्टम् ; न हि देहादिसंबन्धं विना भोक्तृत्वादि परैरपीष्यत
20 इत्याशङ्क्य विशेषमाह—न हि विवेकिनामिति ॥ अगृहीताभिप्रायश्चोदयति—पर एव तर्हीति ॥ निरुपाधिकं हि चैतन्यं परं ब्रह्म ; न तस्य कर्तृत्वादिप्रसङ्गोऽस्ति । किन्त्वविद्याप्रतिबिम्बितस्यैव चिद्धातोस्तत्कृतकर्तृत्वादिसम्बन्धः स्वरूपभेदाभावाभिप्रायेण चान्यो भोक्ता नास्तीत्युक्तमित्याह—नाविद्येति ॥ किञ्चोपाध्युद्भवाभिभवयोः दुःखोद्भवाभिभवाभिधानादप्यौपाधिक-
25 मेव कर्तृत्वादीत्याह—तथा स्वप्नजागरितयोरिति ॥ उक्तेऽर्थे सूत्रमवतार्य योजयति—तदेतदाहेत्यादिना ॥ ननु तक्ष्णो हस्तादिना वास्याद्युपादानं

भाष्यम्

भवति, स एव स्वगृहं प्राप्तो विमुक्तवास्यादिकरणः स्वस्थो निवृत्तो निर्व्यापारः सुखी भवति—एवमविद्याप्रत्युपस्थापितद्वैतसंपृक्त आत्मा स्वप्नजागरितावस्थयोः कर्ता दुःखी भवति, स तच्छ्रमापनुत्तये स्वमात्मानं परं ब्रह्म प्रविश्य विमुक्तकार्यकरणसंघातोऽकर्ता सुखी भवति 5
संप्रसादावस्थायाम्—तथा मुक्त्यवस्थायामप्यविद्याध्वान्तं विद्याप्रदीपेन विधूयात्मैव केवलो निर्वृत्तः सुखी भवति । तक्षदृष्टान्तश्चैतावतांशेन द्रष्टव्यः—तक्षा हि विशिष्टेषु तक्षणादिव्यापारेष्वपेक्ष्यैव प्रतिनियतानि करणानि वास्यादीनि कर्ता भवति, स्वशरीरेण त्वकर्तैव; एवमयमात्मा सर्वव्यापारेष्वपेक्ष्यैव मनआदीनि करणानि कर्ता भवति, स्वात्मना 10
त्वकर्तैवेति । नत्वात्मनस्तक्ष्ण इवावयवाः सन्ति, यैर्हस्तादिभिरिव वास्यादीनि तक्षा, मनआदीनि करणान्यात्मोपाददीत न्यस्येद्वा ॥

यत्तूक्तम्, शास्त्रार्थवत्त्वादिभिर्हेतुभिः स्वाभाविकमात्मनः कर्तृत्वमिति, तन्न—विधिशास्त्रं तावद्यथाप्राप्तं कर्तृत्वमुपादाय कर्तव्यविशेषमुपदिशति, न कर्तृत्वमात्मनः प्रतिपादयति, न च स्वाभाविकमस्य कर्तृ- 15
त्वमस्ति, ब्रह्मात्मत्वोपदेशात्—इत्यवोचाम ; तस्मादविद्याकृतं कर्तृत्वमुपादाय विधिशास्त्रं प्रवर्तिष्यते । कर्ता विज्ञानात्मा पुरुषः—इत्येवंजातीयकमपि शास्त्रमनुवादरूपत्वाद्यथाप्राप्तमेवाविद्याकृतं कर्तृत्वमनुवदिष्यति । एतेन विहारोपादाने परिहृते, तयोरप्यनुवादरूपत्वात् । ननु संध्ये स्थाने प्रसुप्तेषु करणेषु स्वे शरीरे यथाकामं परिवर्तते—इति विहार 20

प्रकटार्थविवरणम्

स्यागो वा घटते, न तथा चैतन्यस्य निरवयवस्येति नायं दृष्टान्त इत्याशङ्कयाह—तक्षदृष्टान्तश्चेति ॥

पूर्वपक्षहेतूननूद्य दूषयति—यत्तूक्तमित्यादिना ॥ कर्तृत्वमात्रं विध्यादिनापेक्ष्यते, न तु पारमार्थिकत्वमपि; तत्रापि तात्पर्ये वाक्यभेदप्रसङ्ग 25
इति भावः । करणाभावे यत्कर्तृत्वं तत्स्वाभाविकमेवेत्याह—ननु सन्ध्ये स्थान इति ॥ किं च यदि करणविशिष्टस्यात्मनः कर्तृत्वं स्यात्, तदा करणा-

भाष्यम्

उपदिश्यमानः केवलस्यात्मनः कर्तृत्वमावहति ; तथोपादानेऽपि "तदेषां प्राणानां विज्ञानेन विज्ञानमादाय" इति करणेषु कर्मकरणविभक्ती श्रूयमाणे केवलस्यात्मनः कर्तृत्वं गमयत इति ; अत्रोच्यते—न तावत्संध्ये
5 स्थानेऽत्यन्तमात्मनः करणविरमणमस्ति ; "सधीः स्वप्नो भूत्वेमं लोकमतिक्रामति" इति तत्रापि धीसंबन्धश्रवणात् ; तथा च स्मरन्ति—

"इन्द्रियाणामुपरमे मनोऽनुपरतं यदि ।
सेवते विषयानेव तद्विद्यात्स्वप्नदर्शनम् ॥"

इति ; "कामादयश्च मनसो वृत्तयः" इति श्रुतिः ; ताश्च स्वप्ने दृश्यन्ते ;
10 तस्मात्समना एव स्वप्ने विहरति ; विहारोऽपि च तत्रत्यो वासनामय एव, न तु पारमार्थिकोऽस्ति ; तथा च श्रुतिरिवाकारानुबद्धमेव स्वप्नव्यापारं वर्णयति—"उतेव स्त्रीभिः सह मोदमानो जक्षदुतेवापि भयानि पश्यन्" इति ; लौकिका अपि तथैव स्वप्नं कथयन्ति—'आरुक्षमिव गिरिशृङ्गम्' 'अद्राक्षमिव वनराजिम्' इति ; तथोपादाने यद्यपि
15 करणेषु कर्मकरणविभक्तिनिर्देशः, तथापि तत्संपृक्तस्यैवात्मनः कर्तृत्वं द्रष्टव्यम्, केवले कर्तृत्वासंभवस्य दर्शितत्वात् ; भवति च लोकेऽनेकप्रकारा विवक्षा—योधा युध्यन्ते योधै राजा युध्यत इति । अपि चास्मिन्नुपादाने करणव्यापारोपरममात्रं विवक्ष्यते न स्वातन्त्र्यं कस्यचित् ; अबुद्धिपूर्वकस्यापि स्वापे करणव्यापारोपरमस्य दृष्टत्वात् ।

20 प्रकटार्थविवरणम्

नामपि कर्त्रन्तर्भूतत्वात् करणेषु कर्तृविभक्तिरपि स्यात् ; न त्वस्तीत्युपपत्त्यन्तरमाह—तथोपादानेऽपीति ॥ प्रथमानुपपत्तिं परिहरति—न तावत्सन्ध्य इति ॥ द्वितीयानुपपत्तिं प्रत्याह—तथोपादाने यद्यपीति ॥ यच्चोक्तं करणेष्वपि कर्तृविभक्त्या भवितव्यमिति तत्रास्त्येव लोके विवक्षावशात् प्रयोग
25 इत्याह—भवति च लोक इति ॥ पूर्वं करणविशिष्टस्य उपादानकर्तृत्वमभ्युपगम्योक्तम् ; इदानीं तदपि नास्तीत्याह—अपि चास्मिन्निति ॥ अविचारितसंसिद्धं कर्तृत्वमापाततः श्रुतिदर्शनेन पूर्वमुक्तम् । इदानीं विचार्यमाणे

## भाष्यम्

यस्त्वयं व्यपदेशो दर्शितः, "विज्ञानं यज्ञं तनुते" इति, स बुद्धेरेव कर्तृत्वं प्रापयति—विज्ञानशब्दस्य तत्र प्रसिद्धत्वात्, मनोऽनन्तरं पाठाच्च, "तस्य श्रद्धैव शिरः" इति च विज्ञानमयस्यात्मनः श्रद्धाद्यवयवत्वसंकीर्तनात्—श्रद्धादीनां च बुद्धिधर्मत्वप्रसिद्धेः "विज्ञानं 5 देवाः सर्वे । ब्रह्म ज्येष्ठमुपासते ।" इति च वाक्यशेषात्—ज्येष्ठत्वस्य च प्रथमजत्वस्य बुद्धौ प्रसिद्धत्वात् । "स एष वाचश्चित्तस्योत्तरोत्तरक्रमो यद्यज्ञः" इति च श्रुत्यन्तरे यज्ञस्य वाग्बुद्धिसाध्यत्वावधारणात् ।. न च बुद्धेः शक्तिविपर्ययः करणानां कर्तृत्वाभ्युपगमे भवति, सर्वकारकाणामेव स्वस्वव्यापारेषु कर्तृत्वस्यावश्यंभावित्वात्, उपलब्ध्यपेक्षं 10

## प्रकटार्थविवरणम्

पुनर्बुद्धिगतमेव कर्तृत्वमात्मन्यध्यारोपितमिति श्रुत्यर्थमाह—यस्त्वयं व्यपदेश इति ॥ [1]विज्ञानमयं व्याख्यायोक्तार्थेऽवतारितोऽयं मन्त्रः "विज्ञानं यज्ञं तनुते" इति । तस्य शेषे ज्येष्ठं विज्ञानं हिरण्यगर्भाभेदेन ब्रह्म देवाः [2]इन्द्रियाण्युपासत इति ज्येष्ठत्वं विशेषेण श्रुतम् । तच्चाग्रजहिरण्यगर्भाभेदेन बुद्धौ 15 प्रसिद्धम्; ततो बुद्धिरेव विज्ञानशब्देनोच्यत इत्याह—विज्ञानं देवाः इति ॥ किं च श्रुत्यन्तरे यज्ञस्य बुद्धिसाध्यत्वावगमादपि यज्ञकर्तृ विज्ञानं बुद्धिरेवेत्याह—स एष इति ॥ चित्तेनाभिध्याय मन्त्रप्रयोगाद्धि यज्ञो निष्पद्यते; अत उक्तम्—यो यज्ञः स एष वाचश्चित्तस्य च [च संततः] पूर्वोत्तरभाव इति । यच्चोक्तं बुद्धेः कर्तृत्वे शक्तिवैपरीत्यप्रसङ्ग इति, तत्राह—न च [न च बुद्धेः] शक्तीति ॥ 20 ज्वलन्ति काष्ठानि, स्थाली पिनष्टि, चक्षुर्गृह्णाति रूपम् इत्याद्यनुभवादस्त्येव कारणानामपि कर्तृत्वमित्यर्थः । कथं तर्हि व्यापारकर्तृत्वविशेषे करणत्वमित्याशङ्क्याह—उपलब्ध्यपेक्षमिति ॥ यथा काष्ठानां पाकापेक्षयैव करणत्वम्, तथा चक्षुरादीनामप्युपलब्ध्यपेक्षया करणत्वं स्वव्यापारकर्तृत्वेऽपीत्यर्थः । किमा-

१. A adds पूर्वं    २. T, T¹ and P. ब्रह्मवेदाः

भाष्यम्

त्वेषां करणानां करणत्वम्, सा चात्मनः ॥ न च तस्यामप्यस्य कर्तृत्व-मस्ति, नित्योपलब्धिस्वरूपत्वात् । अहंकारपूर्वकमपि कर्तृत्वं नोपलब्धु-र्भवितुमर्हति, अहंकारस्याप्युपलभ्यमानत्वात् ॥ न चैवं सति करणान्तर-
5 कल्पनाप्रसङ्गः, बुद्धेः करणत्वाभ्युपगमात् । समाध्यभावस्तु शास्त्रार्थ-वत्त्वेनैव परिहृतः, यथाप्राप्तमेव कर्तृत्वमुपादाय समाधिविधानात् । तस्मात् कर्तृत्वमप्यात्मन उपाधिनिमित्तमेवेति स्थितम् ॥

प्रकटार्थविवरणम्

अथा तर्हि सोपलब्धिरित्याशङ्क्याह — सा चात्मन इति ॥ सिद्धं तर्ह्यात्मनः
10 कर्तृत्वमित्याशङ्क्याह—न च तस्यामपीति ॥ वृत्तिव्याप्तो हि[वृत्तिव्याप्ते हि] विषये प्रतिबिम्बितमात्मचैतन्यं विषयोपलब्धिः; तत्र यद्यपि प्रतिबिम्बमेवा-निरूप्यमाणेऽपि तथापि बिम्बाधीनं प्रतिबिम्बमित्यस्ति लोकानुभवः, तद्वदा-त्मनोऽपि चित्प्रतिबिम्बनिमित्तत्वेन व्यावहारिकमुपलब्धृत्वं न तूपलब्धिक्रिया-श्रयत्वेनेति भावः । ननु 'अहं करोमि' इति प्रत्यक्षमात्मनः कर्तृत्वमनुभूयते ।
15 तद्बुद्धेरापद्यत इत्यनिष्टमुक्तमित्याशङ्क्याह—अहङ्कारपूर्वकमपीति[1] ॥ 'अहं करोमि' इति अहङ्कारसामानाधिकरण्येन कर्तृत्वमनुभूयते । न चानुभूयमान-गतो धर्मोऽनुभवितुरारोपमन्तरेण भवितुमर्हतीति भावः । यच्चोक्तं बुद्धेः कर्तृत्वे कारणान्तरं वाच्यम्, तदा नाममात्रे विवाद इति, तत्राह—न चैवं सतीति ॥ न तावद्बुद्धेः स्वव्यापारे करणान्तरं मृग्यम्, कारकान्तरव्यापारे
20 व्यभिचारात्; नाप्युपलब्धिसिद्धये बुद्धेरेव तत्र[2] कारणत्वादिति भावः । यच्चोक्तम् आत्मनोऽकर्तृत्वे समाध्यभावः स्यादिति तत्राह—समाध्यभाव-स्त्विति ॥ यस्मात्तात्त्विककर्तृत्वे न प्रमाणमस्ति, तस्मात्प्रतीयमानं मिथ्येत्युप-संहरति—तस्मादिति ॥

अत्र किञ्चिदुवाच भास्करः—"न चौपाधिकं कर्तृत्वमपारमार्थिकम्,
25 यथाग्निगतेनौष्ण्यगुणेन दाहोऽनुभूयते । न चासावपारमार्थिको भवति ।

१. A. इत्यादिना
२. T, T¹ and P omit तत्र
३. A. पारमार्थिकत्वं

भाष्यम्

[परायत्ताधिकरणम्]

## परात्तु तच्छ्रुतेः ॥ २-३-४१ ॥

यदिदमविद्यावस्थायामुपाधिनिबन्धनं कर्तृत्वं जीवस्याभिहितम्, तत्किमनपेक्ष्येश्वरं भवति, आहोस्विदीश्वरापेक्षमिति भवति विचारणा। 5
तत्र प्राप्तं तावत्—नेश्वरमपेक्षते जीवः कर्तृत्व इति; कस्मात्? अपेक्षा-

प्रकटार्थविवरणम्

यद्यपि ह्यात्मन्यौष्ण्यं स्वतो नास्ति तथोपाधिवशात्[१] कर्तृत्वमुपजायते" इति, तदसत्। यद्युपाधिसंयोगादात्मनि परमार्थतः कर्तृत्वमुत्पद्यते अग्निसंयोगादिव घटे लौहित्यम्, तदोपाधिविगमेऽप्यात्मनः कर्तृत्वमापद्येतेत्यनिर्मोक्ष- 10
प्रसङ्गः। न चाग्नेरौष्ण्यं दाह्ये तत्त्वतो भवति, परधर्मस्य परत्र गमनानुपपत्तेः। न चौष्ण्यान्तरं तत्रोत्पन्नम्, निमित्ताभावेऽपि नैमित्तिकसद्भावोपलम्भात्। तथापि तत्रौष्ण्यप्रत्ययोऽन्यथाख्यातिरेव; तच्च सामानाधिकरण्यमस्माकं दृष्टान्तो भविष्यति। विमतं मिथ्या, औपाधिकत्वात्, संप्रतिपन्नवत्। किंच तथापि कर्तृत्वादेः सत्यत्वं नाम यावदुपाधि सद्भावः; तदिष्टमेवास्माकम्। 15
परमार्थतोऽतथाभूतस्वदेशकालार्थक्रियाप्रसञ्जक उपाधिरिति लक्षणाभ्युपगमात्। अत्यन्ताबाध्यत्वं च प्रत्युक्तम्। किं चोपाधिसंयोगोऽपि निरवयवस्य निरूपणं न सहते। तस्मात् कर्त्रन्तःकरणप्रतिबिम्बिततया मिथ्यैवात्मनः कर्तृत्वम्; तयोश्च तादात्म्यात्तदैकरूप्यावभास इति स्थितम्॥

परात्तु तच्छ्रुतेः॥ 20

उक्तमनूद्य संशयमाह—यदिदमिति॥ जीवस्य करणादिपौष्कल्यादीश्वरस्य कारयितृत्वश्रवणाच्च संशयो द्रष्टव्यः। कर्ममीमांसकानां पूर्वपक्षमाह—तत्र प्राप्तमिति॥ पूर्वत्रोपाध्यन्वयव्यतिरेकाभ्यामौपाधिकं कर्तृत्वं जीव-

१. T. औष्ण्यप्रयोगो

२. T, P, TM and A omit कर्तृत्वं ...व्यतिरेकाभ्यां

### भाष्यम्

प्रयोजनाभावात् । अयं हि जीवः स्वयमेव रागद्वेषादिदोषप्रयुक्तः कार-
कान्तरसामग्रीसंपन्नः कर्तृत्वमनुभवितुं शक्नोति ; तस्य किमीश्वरः करि-
ष्यति ? न च लोके प्रसिद्धिरस्ति कृष्यादिकासु क्रियास्वनडुहादिव-
5 दीश्वरोऽपरोऽपेक्षितव्य इति । क्लेशात्मकेन च कर्तृत्वेन जन्तून्संसृजत
ईश्वरस्य नैर्घृण्यं प्रसज्येत ; विषमफलं चैषां कर्तृत्वं विदधतो वैषम्यम् ।
ननु "वैषम्यनैर्घृण्ये न सापेक्षत्वात्" इत्युक्तम्—सत्यमुक्तम्, सति
त्वीश्वरस्य सापेक्षत्वसंभवे ; सापेक्षत्वं चेश्वरस्य संभवति सतोर्जन्तूनां
धर्माधर्मयोः ; तयोश्च सद्भावः सति जीवस्य कर्तृत्वे ; तदेव चेत्कर्तृत्व-
10 मीश्वरापेक्षं स्यात् किंविषयमीश्वरस्य सापेक्षत्वमुच्येत । अकृताभ्याग-
मश्चैवं जीवस्य प्रसज्येत । तस्मात्स्वत एवास्य कर्तृत्वमिति—एतां प्राप्तिं
तुशब्देन व्यावर्त्य प्रतिजानीते—"परात्" इति । अविद्यावस्थायां
कार्यकरणसंघाताविवेकदर्शिनो जीवस्याविद्यातिमिरान्धस्य सतः परस्मा-
दात्मनः कर्माध्यक्षात्सर्वभूताधिवासात्साक्षिणश्चेतयितुरीश्वरात्तदनुज्ञया

15 ### प्रकटार्थविवरणम्

स्येत्युक्तम् ; तथाऽपि कारकान्तरसहकृतस्यैवान्वयव्यतिरेकाभ्यां कर्तृत्व-
मित्यर्थः । किं च यदि कारकान्तरसमवधानेऽपि ईश्वराभावापराधेन अकर्तृत्वं
दृष्टं स्यात्, तदेश्वरस्यापि निमित्तत्वं केवलव्यतिरेकाभावात् कल्प्येत, न
तु तदस्तीत्याह—न च लोक इति ॥ इतश्च नेश्वरस्य निमित्तत्वमित्याह—
20 क्लेशात्मकेन चेति ॥ पूर्वं परिहृतमिदं चोद्यमित्याह—नन्विति ॥ जीवस्य
धर्माधर्मवत्त्वं तत्सापेक्षत्वं चेश्वरस्य सिद्धवत्कृत्य जगत्सर्गे वैषम्यनैर्घृण्ये न स्त
इति पूर्वमुक्तम्; इह तु तदेवासिद्धमित्युच्यते, परस्पराश्रयप्रसङ्गादित्याह—
सत्यमुक्तमिति ॥ किंचेश्वरश्चेद्बलात् प्रवर्तयति, तदा साधुकारिणोऽप्यसाधु-
प्राप्तिः कदाचित् स्यादित्याह—अकृताभ्यागमश्चेति ॥ पूर्वपक्षमुपसंहृत्य
25 सिद्धान्तमवतारयति—तस्मादित्यादिना ॥ यथा केवलव्यतिरेकाभावेऽपि
सुखस्य धर्मकार्यत्वं शास्त्रप्रामाण्यादेव तथेश्वरस्यापि निमित्तत्वं दृष्टकारण-
कॢप्तावेव केवलव्यतिरेकस्य प्रामाण्यादिति सिद्धान्त्याशयः ॥

भाष्यम्

कर्तृत्वभोक्तृत्वलक्षणस्य संसारस्य सिद्धिः, तदनुग्रहहेतुकेनैव च विज्ञानेन मोक्षसिद्धिर्भवितुमर्हति; कुतः? तच्छ्रुतेः। यद्यपि दोषप्रयुक्तः सामग्रीसंपन्नश्च जीवः, यद्यपि च लोके कृष्यादिषु कर्मसु नेश्वरकारणत्वं प्रसिद्धम्, तथापि सर्वास्वेव प्रवृत्तिष्वीश्वरो हेतुकर्तेति श्रुतेरवसीयते; तथा हि श्रुतिर्भवति—"एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते। एष ह्येवासाधु कर्म कारयति तं यमधो निनीषते" इति, "य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति" इति चैवंजातीयका॥ 5

नन्वेवमीश्वरस्य कारयितृत्वे सति वैषम्यनैर्घृण्ये स्यातामकृताभ्यागमश्च जीवस्येति; नेत्युच्यते— 10

## कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥ २-३-४२ ॥

तुशब्दश्चोदितदोषव्यावर्तनार्थः। कृतो यः प्रयत्नो जीवस्य धर्माधर्मलक्षणस्तदपेक्ष एवैनमीश्वरः कारयति; ततश्चैते चोदिता दोषा न प्रसज्यन्ते—जीवकृतधर्माधर्मवैषम्यापेक्ष एव तत्तत्फलानि विषमं विभजेत्पर्जन्यवदीश्वरो निमित्तत्वमात्रेण—यथा लोके नानाविधानां गुच्छगुल्मादीनां व्रीहियवादीनां चासाधारणेभ्यः स्वस्वबीजेभ्यो जायमानानां 15

प्रकटार्थविवरणम्

उक्तचोद्यनिरासाय सूत्रान्तरमवतारयति — नन्वेवमिति ॥ 20

कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥

गुच्छगुल्मादीनां स्तबकप्रभृत्यादीनाम् । गुच्छा ह्रस्वपल्लीरूपाः; गुल्मा अपि दीर्घवल्ल्यः; पलालादि पर्णादि; स्वेच्छया यदि जीवेन कृतः कश्चित्प्रयत्नः

१. T, T[1] and P. ह्रस्वपल्लीरूपा  २. T, T[1] and P. गुल्मास्तु अपि दीर्घ

भाष्यम्

साधारणं निमित्तं भवति पर्जन्यः—न ह्यसति पर्जन्ये रसपुष्प-
फलपलाशादिवैषम्यं तेषां जायते, नाप्यसत्सु स्वस्वबीजेषु, एवं जीवकृत-
प्रयत्नापेक्ष ईश्वरस्तेषां शुभाशुभं विदध्यादिति श्लिष्यते। ननु कृत-
5 प्रयत्नत्वमेव जीवस्य परायत्ते कर्तृत्वे नोपपद्यते—नैष दोषः;
परायत्तेऽपि हि कर्तृत्वे करोत्येव जीवः, कुर्वन्तं हि तमीश्वरः कारयति;
अपि च पूर्वं प्रयत्नमपेक्ष्येदानीं कारयति, पूर्वतरं च प्रयत्नमपेक्ष्य पूर्वम-
कारयदित्यनादित्वात्संसारस्येत्यनवद्यम्। कथं पुनरवगम्यते—कृत-
प्रयत्नापेक्ष ईश्वर इति? विहितप्रतिषिद्धावैयर्थ्यादिभ्य इत्याह; एवं
10 हि "स्वर्गकामो यजेत" "ब्राह्मणो न हन्तव्यः" इत्येवंजातीयकस्य
विहितस्य प्रतिषिद्धस्य चावैयर्थ्यं भवति; अन्यथा तदनर्थकं स्यात्;
ईश्वर एव विधिप्रतिषेधयोर्नियुज्येत, अत्यन्तपरतन्त्रत्वाज्जीवस्य। तथा
विहितकारिणमप्यनर्थेन संसृजेत्, प्रतिषिद्धकारिणमप्यर्थेन; ततश्च

प्रकटार्थविवरणम्

15 स्यात्तदा तदपेक्ष ईश्वरो विषमं कर्तृत्वं प्रयच्छतीति वक्तुं शक्येत; तदेव
नास्तीत्याह—ननु कृतप्रयत्नत्वमेवेति॥ जीवेन कृतः प्रयत्न एव नास्तीति
न शक्यते वक्तुम्, तस्यैव प्रधानकर्तृत्वात्; न ह्याचार्याधीनो माणवक इत्येता-
वता नाध्ययनस्य कर्तेत्याह—नैष दोष इति॥ यच्चोक्तमितरेतराश्रयत्वं
तदपि नास्तीत्याह—अपि च पूर्वमिति॥ उत्तरं सूत्रभागमवतारयति—
20 कथं पुनरित्यादिना॥ अन्यथेति॥ ईश्वरस्य अनपेक्षत्वे सति तद्विध्यादि-
कर्मनर्थं स्यात्। न हि बलवदनिलसलिलौघनुद्यमान इव पुरुषे बलादीश्वरेण
प्रवर्त्यमाने विध्यादेरर्थवत्त्वसंभावनेति भावः। आनर्थक्यमेव स्फुटयति—ईश्वर
एव विधिप्रतिषेधयोः स्थाने नियुज्येत; यद्विधिप्रतिषेधाभ्यां कर्तव्यं तदीश्वर
एव कुर्यादित्यर्थः। आदिशब्दाद्दोषान्तरमाह — तथा विहितकारिण-

१. T. दिकमनेकं
TM. दिकमनन्तं
A. दिकमर्थं

२. T and T[1] संभावने विभावः

भाष्यम्

प्रामाण्यं वेदस्यास्तमियात्; ईश्वरस्य चात्यन्तानपेक्षत्वे लौकिकस्यापि पुरुषकारस्य वैयर्थ्यम्, तथा देशकालनिमित्तानाम्; पूर्वोक्तदोषप्रसङ्गश्चेत्येवंजातीयकं दोषजातमादिग्रहणेन दर्शयति ॥

[अंशाधिकरणम्]

## अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥ २-३-४३ ॥

जीवेश्वरयोरुपकार्योपकारकभाव उक्तः; स च संबद्धयोरेव लोके दृष्टः—यथा स्वामिभृत्ययोः, यथा वाग्निविस्फुलिङ्गयोः; ततश्च जीवेश्वरयोरप्युपकार्योपकारकभावाभ्युपगमात् किं स्वामिभृत्यवत्संबन्धः, आहोस्विदग्निविस्फुलिङ्गवत्? इत्यस्यां विचिकित्सायामनियमो वा प्राप्नोति। अथवा स्वामिभृत्यप्रकारेष्वेव ईशितृईशितव्यभावस्य प्रसिद्धत्वात्तद्विध एव संबन्ध इति प्राप्नोति। अतो ब्रवीत्यंश इति। जीव ईश्वरस्यांशो भवितुमर्हति, यथाग्नेर्विस्फुलिङ्गः; अंश इवांशः; न हि निरवयवस्य मुख्योऽंशः संभवति; कस्मात्पुनर्निरवयवत्वात्स एव न भवति? नानाव्यपदेशात्; "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः"

प्रकटार्थविवरणम्

मित्यादिना ॥ पूर्वोक्तदोषप्रसङ्गश्चेति ॥ वैषम्यनैर्घृण्यादिप्रसङ्गश्चेत्यर्थः । इदमधिकरणं वाचस्पतेर्दुर्बोधम्, यतः—

प्रेरकत्वे परेशस्य जीवस्य भ्रान्तिकर्तृता ।
जीवभ्रान्त्या परेशस्य प्रेरकत्वं सुदुर्घटम् ॥

**अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥**

एवं सङ्गतिं संशयपूर्वपक्षौ दर्शयति—जीवेश्वरयोरित्यादिना ॥ सूत्रं योजयति—जीव ईश्वरस्येति ॥ न केवलं श्रुतिभ्य एवांशत्वावगमः,

भाष्यम्

"एतमेव विदित्वा मुनिर्भवति" "य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति" इति चैवंजातीयको भेदनिर्देशो नासति भेदे युज्यते। ननु चायं नानाव्यपदेशः सुतरां स्वामिभृत्यसारूप्ये युज्यत इत्यत आह—
5 अन्यथा चापीति; न च नानाव्यपदेशादेव केवलादंशत्वप्रतिपत्तिः; किं तर्हि? अन्यथा चापि व्यपदेशो भवत्यनानात्वस्य प्रतिपादकः; तथा हि—एके शाखिनो दाशकितवादिभावं ब्रह्मण आमनन्त्याथर्वणिका ब्रह्मसूक्ते—"ब्रह्म दाशा ब्रह्म दासा ब्रह्मैवेमे कितवाः" इत्यादिना। दाशा य एते कैवर्ताः प्रसिद्धाः, ये चामी दासाः स्वामिष्वात्मान-
10 मुपक्षपयन्ति, ये चान्ये कितवा द्यूतकृतः ते सर्वे ब्रह्मैव—इति हीन-जन्तूदाहरणेन सर्वेषामेव नामरूपकृतकार्यकरणसंघातप्रविष्टानां जीवानां ब्रह्मत्वमाह। तथान्यत्रापि ब्रह्मप्रक्रियायामेवायमर्थः प्रपञ्च्यते—

"त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी।
त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतोमुखः॥" इति।

15 "सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन्यदास्ते" इति च। "नान्योऽतोऽस्ति द्रष्टा" इत्यादिश्रुतिभ्यश्चास्यार्थस्य सिद्धिः। चैतन्यं चाविशिष्टं जीवेश्वरयोर्यथाग्निविस्फुलिङ्गयोरौष्ण्यम्। अतो भेदाभेदावगमाभ्यामंशत्वावगमः॥

कुतश्चांशत्वावगमः—

20 प्रकटार्थविवरणम्

किं तु तर्कतोऽपि इत्याह—चैतन्यं चाविशिष्टमिति॥ जीवो नात्यन्तं ब्रह्मणो भिद्यते, चिद्रूपत्वात्, ब्रह्मवदेवेत्यर्थः। फलितमाह—अतो भेदाभेदा-वगमाभ्यामिति॥

अंशत्वमेव सूत्रद्वयेनाह—कुतश्चेत्यादिना॥

भाष्यम्

## मन्त्रवर्णाच्च ॥ २-३-४४ ॥

मन्त्रवर्णश्चैतमर्थमवगमयति—

" तावानस्य महिमा ततो ज्यायांश्च पूरुषः ।
पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि ॥" इति ।    5

अत्र भूतशब्देन जीवप्रधानानि स्थावरजङ्गमानि निर्दिशति, "अहिंसन्सर्वभूतान्यन्यत्र तीर्थेभ्यः" इति प्रयोगात्; अंशः पादो भाग इत्यनर्थान्तरम्; तस्मादप्यंशत्वावगमः ॥

कुतश्चांशत्वावगमः—

## अपि च स्मर्यते ॥ २-३-४५ ॥    10

ईश्वरगीतास्वपि चेश्वरांशत्वं जीवस्य स्मर्यते—"ममैवांशो जीवलोके जीवभूतः सनातनः" इति; तस्मादप्यंशत्वावगमः । यत्तूक्तम्, स्वामिभृत्यादिष्वेवेशित्रीशितव्यभावो लोके प्रसिद्ध इति—यद्यप्येषा लोके प्रसिद्धिः, तथापि शास्त्रात्त्वत्रांशांशित्वमीशित्रीशितव्यभावश्च

प्रकटार्थविवरणम्    15

मन्त्रवर्णाच्च ॥

ननु भूतशब्दस्य महाभूतेषु रूढत्वात् नात्र जीवानामंशत्वमुच्यत इत्याशङ्क्याह—अत्र भूतशब्देनेति ॥ तीर्थेभ्यः शास्त्रविहितेभ्यः । 'अन्यत्र सर्वभूतान्यहिंसान्' इति प्रयोगान्महाभूतेषु रूढत्वं नास्तीत्यर्थः । तथापि भूतानां    20 पादत्वमेवात्रोच्यते, न त्वंशत्वमित्याशङ्क्याह—अंशः पाद इति ॥ अनर्थान्तरम् एतेषां अर्थान्तरं नास्ति, एते पर्याया इत्यर्थः ॥

अपि च स्मर्यते ॥

संप्रति परोक्तमनूद्य दूषयति—यत्तूक्तमित्यादिना ॥ ननु [1]द्वयोरपि

[1] A. उभयोरपि

भाष्यम्

निश्चीयते ; निरतिशयोपाधिसंपन्नश्चेश्वरो निहीनोपाधिसंपन्नाञ्जीवान् प्रशास्तीति न किंचिद्विप्रतिषिध्यते ॥

अत्राह—ननु जीवस्येश्वरांशत्वाभ्युपगमे तदीयेन संसारदुःखोपभो-
5 गेनांशिन ईश्वरस्यापि दुःखित्वं स्यात्—यथा लोके हस्तपादाद्यन्यत-माङ्गगतेन दुःखेनाङ्गिनो देवदत्तस्य दुःखित्वम्, तद्वत् ; ततश्च तत्प्राप्तानां महत्तरं दुःखं प्राप्नुयात् ; अतो वरं पूर्वावस्थः संसार एवास्तु इति सम्यग्दर्शनानर्थक्यप्रसङ्गः स्यादिति—अत्रोच्यते—

## प्रकाशादिवन्नैवंपरः ॥ २-३-४६ ॥

10 यथा जीवः संसारदुःखमनुभवति, नैवं पर ईश्वरोऽनुभवतीति प्रतिजानीमहे ; जीवो ह्यविद्यावेशवशाद्देहाद्यात्मभावमिव गत्वा, तत्कृतेन दुःखेन दुःखी अहमित्यविद्यया कृतं दुःखोपभोगमभिमन्यते ; नैवं परमेश्वरस्य देहाद्यात्मभावो दुःखाभिमानो वास्ति ; जीवस्याप्यविद्या-

प्रकटार्थविवरणम्

15 चिन्मात्रत्वाविशेषे केन[2] विशेषेणैको नियम्यः, अपरो नियामक इति तत्राह—निरतिशयेति ॥

उत्तरसूत्रनिरस्याशङ्कामाह — अत्राहेत्यादिना ॥ ईश्वरः स्वांशगतैः दुःखैः दुःखी स्यात्, अंशित्वात्, देवदत्तवदित्यर्थः। ततः किं भवतीत्याशङ्क्याह—ततश्चेति ॥

20 प्रकाशादिवन्नैवं परः ॥

पूर्वं स्वशरीरमात्रगतमेव दुःखमासीत्। सम्यग्ज्ञानात्तु सकलसंसार-दुःखानुषङ्गो भवतीति व्यर्थमेव तत्स्यादित्यर्थः। "नैवंपरः" इति सूत्रभागं व्याचष्टे—यथा जीव इति ॥ देवदत्तस्य नांशित्वाद्दुःखित्वम्; किन्तु अवि-द्याकामकर्मोत्थदुःखसाधनत्वात्; अतोऽप्रयोजको हेतुरित्यर्थः। ननु जीवस्य
25 स्वाभाविकमेव दुःखित्वम्, नाविद्यादिकृतमित्याशङ्क्याह—जीवस्यापीति ॥

१. TM. चिन्मात्रत्वात्  २. T and T[1] omit केन विशेषे

भाष्यम्

कृतनामरूपनिर्वृत्तदेहेन्द्रियाद्युपाध्यविवेकभ्रमनिमित्त एव दुःखाभिमानः, न तु पारमार्थिकोऽस्ति ; यथा च स्वदेहगतदाहच्छेदादिनिमित्तं दुःखं तदभिमानभ्रान्त्यानुभवति, तथा पुत्रमित्रादिगोचरमपि दुःखं तदभिमानभ्रान्त्यैवानुभवति—अहमेव पुत्रः, अहमेव मित्रम् इत्येवं स्नेहवशेन पुत्रमित्रादिष्वभिनिविशमानः ; ततश्च निश्चितमेतदवगम्यते—मिथ्याभिमानभ्रमनिमित्त एव दुःखानुभव इति । व्यतिरेकदर्शनाच्चैवमवगम्यते—तथा हि—पुत्रमित्रादिमत्सु बहुषूपविष्टेषु तत्संबन्धाभिमानिष्वितरेषु च, पुत्रो मृतः, मित्रं मृतम् इत्येवमाद्युद्घोषिते, येषामेव पुत्रमित्रादिमत्त्वाभिमानस्तेषामेव तन्निमित्तं दुःखमुत्पद्यते, नाभिमानहीनानां परिव्राजकादीनाम् । अतश्च लौकिकस्यापि पुंसः सम्यग्दर्शनार्थवत्त्वं दृष्टम्, किमुत विषयशून्यादात्मनोऽन्यद्वस्त्वन्तरमपश्यतो नित्यचैतन्यमात्रस्वरूपस्येति ; तस्मान्नास्ति सम्यग्दर्शनानर्थक्यप्रसङ्गः । प्रकाशादिवदिति निदर्शनोपन्यासः—प्रकाशः सौरश्चान्द्रमसो वा वियद्व्याप्यावतिष्ठमानोऽङ्गुल्याद्युपाधिसंबन्धात् तेष्वृजुवक्रादिभावं प्रतिपद्यमानेषु तत्तद्भावमिव प्रति-

प्रकटार्थविवरणम्

सोपाध्यविद्यया[1] कृतो यो नामरूपाभ्यां निर्वृत्तेन देहेन्द्रियाद्युपाधिना सहाविवेकभ्रमः तादात्म्यभ्रमः[2] तन्निबन्धन एवायं दुःखानुभवो न पारमार्थिकः, अनिर्मोक्षप्रसङ्गादित्यर्थः । उक्तमेवान्वयमुखेनोदाहरणतः स्पष्टयति—यथा चेत्यादिना ॥ सति मिथ्याभिमाने दुःखम्—इत्यन्वयो दर्शितः । इदानीं[3] मिथ्याभिमानाभावे दुःखमपि नास्तीति व्यतिरेकादपि मिथ्याभिमानकार्यत्वमवगम्यत इत्याह—व्यतिरेकेति ॥ इतरेषु चेति ॥ अभिमानहीनेषु परिव्राजकादिष्वित्यर्थः ॥ विषयशून्यादिति ॥ अविषयादित्यर्थः ॥ नित्यचैतन्येति ॥ बिम्बभूतब्रह्मरूपेण व्यवस्थितस्येत्यर्थः । पूर्वं हेतोरप्रयोजकत्वमुक्त्वेदानीं अनैकान्तिकत्वमाह — प्रकाशादिवदिति ॥ अङ्गुल्यादिसंपृक्तः प्रकाशांशो

१. T¹ adds विद्यया

२. T¹, TM and A add तादात्म्यभ्रमः

३. TM and A. मुक्तम् । इदानीं

भाष्यम्

पद्यमानोऽपि न परमार्थतस्तद्भावं प्रतिपद्यते, यथा चाकाशो घटादिषु गच्छत्सु गच्छन्निव विभाव्यमानोऽपि न परमार्थतो गच्छति, यथा चोदशरावादिकम्पनात्तद्गते सूर्यप्रतिबिम्बे कम्पमानेऽपि न तद्वान्सूर्यः
5 कम्पते, एवमविद्याप्रत्युपस्थापिते बुद्ध्याद्युपहिते जीवाख्ये अंशे दुःखायमानेऽपि न तद्वानीश्वरो दुःखायते । जीवस्यापि तु दुःखप्राप्तिरविद्यानिमित्तैवेत्युक्तम् । तथा चाविद्यानिमित्तजीवभावव्युदासेन ब्रह्मभावमेव जीवस्य प्रतिपादयन्ति वेदान्ताः—"तत्त्वमसि" इत्येवमादयः; तस्मान्नास्ति जैवेन दुःखेन परमात्मनो दुःखित्वप्रसङ्गः ॥

10

## स्मरन्ति च ॥ २-३-४७ ॥

स्मरन्ति च व्यासादयः—यथा जैवेन दुःखेन न परमात्मा दुःखायत इति ;

प्रकटार्थविवरणम्

यद्यपि ऋजुवक्रादिभावं मिथ्यैवापद्यते, तथाप्युपाध्यसंपृक्तस्वरूपो वक्रादिभावं
15 नापद्यते, औपाधिकांशरूपेण निरुपाधिकस्यांशिकस्य दुष्टत्वादर्शनादनैकान्तिकत्वमिति भावः । यदुक्तं जीवस्यापि पारमार्थिकं दुःखित्वं नास्तीति तदनूद्य लिङ्गान्तरमाह—जीवस्यापीत्यादिना ॥ पारमार्थिके दुःखित्वे सति जीवत्वापोहेन ब्रह्मभावोऽपि नोपदिश्येतेत्यर्थः ॥

स्मरन्ति च ॥

20 इदानीं स्मृतिविरोधात् वेदविरोधाच्च कालात्ययापदिष्टत्वमाह—स्मरन्ति चेति ॥ कर्मात्मा कर्माश्रयः; पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि

१. TM. वक्रादिभिः
२. T, T¹ and A स्वरूपेण
३. T, T¹ and A. दृष्टत्व
४. T¹ adds दर्शनं
५. A. जीवस्यापोहेन
६. T and T¹. भावेऽपि
७. T and T¹ omits वेदविरोधात्

भाष्यम्

"तत्र यः परमात्मा हि स नित्यो निर्गुणः स्मृतः ।
न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा ॥

कर्मात्मा त्वपरो योऽसौ मोक्षबन्धैः स युज्यते ।
स सप्तदशकेनापि राशिना युज्यते पुनः ॥" इति । 5

चशब्दात्समामनन्ति चेति वाक्यशेषः । "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्यो अभिचाकशीति" इति, "एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः" इति च ॥

अत्राह—यदि तर्ह्येक एव सर्वेषां भूतानामन्तरात्मा स्यात्, कथमनुज्ञापरिहारौ स्यातां लौकिकौ वैदिकौ चेति । ननु चांशो जीव ईश्वरस्येत्युक्तम्; तद्भेदाच्चानुज्ञापरिहारौ तदाश्रयावव्यतिकीर्णावुपपद्येते; किमत्र चोद्यत इति, उच्यते—नैतदेवम्; अनंशत्वमपि हि जीवस्याभेदवादिन्यः श्रुतयः प्रतिपादयन्ति—"तत्सृष्ट्वा । तदेवानुप्राविशत्" "नान्योऽतोऽस्ति द्रष्टा" "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" "तत्त्वमसि" "अहं ब्रह्मास्मि" इत्येवंजातीयकाः । ननु भेदाभेदावगमाभ्यामंशत्वं सिद्ध्यतीत्युक्तम्—स्यादेतदेवम्, यद्युभावपि भेदाभेदौ प्रतिपिपादयिषितौ स्याताम्; अभेद एव त्वत्र प्रतिपिपादयिषितः, ब्रह्मात्मत्वप्रतिपत्तौ पुरुषार्थसिद्धेः, स्वभावप्राप्तस्तु भेदोऽनूद्यते; न च निरवयवस्य ब्रह्मणो मुख्योंऽशो जीवः संभवतीत्युक्तम्; तस्मात्पर

प्रकटार्थविवरणम् 20

पञ्च वायवो मनो बुद्धिश्चेति सप्तदशसंख्यावच्छिन्नेन समूहेन संबध्यत इत्यर्थः । एवं तावदंशांशिभावमभ्युपगम्य अंशित्वात् इत्यस्य हेतोः अप्रयोजकत्वादि दूषणमुक्तम् । इदानीं यदुक्तमंश इवांश इति तदाक्षेपसमाधानपूर्वकं स्पष्टीकर्तुं स्वरूपैक्यमुपादायाक्षिपति — यदि तर्हीत्यादिना ॥ अनुज्ञा-

१. T, TM and A. अंशमिवा २. T, T¹ and TM add अत्राह

भाष्यम्

एवैकः सर्वेषां भूतानामन्तरात्मा जीवभावेनावस्थित इत्यतो वक्तव्या अनुज्ञापरिहारोपपत्तिः । तां ब्रूमः—

## अनुज्ञापरिहारौ देहसंबन्धात् ज्योतिरादिवत् ॥

5 ## २-३-४८ ॥

"ऋतौ भार्यामुपेयात्" इत्यनुज्ञा, "गुर्वङ्गनां नोपगच्छेत्" इति परिहारः; तथा "अग्नीषोमीयं पशुं संज्ञपयेत्" इत्यनुज्ञा, "न हिंस्यात्सर्वा भूतानि" इति परिहारः; एवं लोकेऽपि 'मित्रमुपसेवितव्यम्' इत्यनुज्ञा, 'शत्रुः परिहर्तव्यः' इति परिहारः; एवंप्रकारावनुज्ञापरिहारा-
10 वेकत्वेऽप्यात्मनो देहसंबन्धात् स्याताम् । देहैः संबन्धो देहसंबन्धः; कः पुनर्देहसंबन्धः? देहादिरयं संघातोऽहमेवेत्यात्मनि विपरीतप्रत्ययोत्पत्तिः; दृष्टा च सा सर्वप्राणिनाम्—अहं गच्छामि, अहमागच्छामि, अहमन्धः, अहमनन्धः, अहं मूढः, अहममूढ इत्येवमात्मिका; न ह्यस्याः सम्यग्दर्शनादन्यन्निवारकमस्ति; प्राक्तु सम्यग्दर्शनात्प्रततैषा
15 भ्रान्तिः सर्वजन्तुषु । तदेवमविद्यानिमित्तदेहाद्युपाधिसंबन्धकृताद्विशेषादेकात्म्याभ्युपगमेऽप्यनुज्ञापरिहाराववकल्पेते । सम्यग्दर्शिनस्तर्ह्यनुज्ञा-

प्रकटार्थविवरणम्

परिहारव्यवस्थान्यथानुपपत्त्या स्वरूपभेदो वक्तव्य इत्यर्थः । अन्यथाप्युपपत्तिमाह—तां ब्रूम इति ॥

20 अनुज्ञापरिहारौ देहसंबन्धात् ज्योतिरादिवत् ॥

यदि स्वरूपैक्येऽपि अविद्यासिद्धदेहसंबन्धावच्छेदात् कचिदनुज्ञा कचित्परिहार इति व्यवस्था कल्प्यते, तदा सम्यग्दर्शिनोऽविद्याभावात् अनुज्ञादिशास्त्रानर्थक्यं प्राप्तमित्याह—सम्यग्दर्शिनस्तर्हीति ॥ यथा बृहस्पति-

१. T. अविद्यादि

२. T, TM and A omit शास्त्रा... र्थक्यं

भाष्यम्

परिहारानर्थक्यं प्राप्तम्—न, तस्य कृतार्थत्वान्नियोज्यत्वानुपपत्तेः—हेयोपादेययोर्हि नियोज्यो नियोक्तव्यः स्यात्; आत्मनस्त्वतिरिक्तं हेयमुपादेयं वा वस्त्वपश्यन् कथं नियुज्येत; न चात्मा आत्मन्येव नियोज्यः स्यात् । शरीरव्यतिरेकदर्शिन इव नियोज्यत्वमिति चेत्, नैतत्; संहतत्वाभिमानात्—सत्यं व्यतिरेकदर्शिनो नियोज्यत्वम्; तथापि व्योमादिवद्देहाद्यसंहतत्वमपश्यत एवात्मनो नियोज्यत्वाभिमानः; न हि देहाद्यसंहतत्वदर्शिनः कस्यचिदपि नियोगो दृष्टः, किमुतैकात्म्यदर्शिनः । न च नियोगाभावात्सम्यग्दर्शिनो यथेष्टचेष्टाप्रसङ्गः, सर्वत्राभिमानस्यैव प्रवर्तकत्वात्, अभिमानाभावाच्च सम्यग्दर्शिनः । तस्माद्देहसंबन्धादेवानुज्ञापरिहारौ—ज्योतिरादिवत्—यथा ज्योतिष एकत्वेऽप्यग्निः क्रव्यात्परिह्रियते, नेतरः; यथा च प्रकाश एकस्यापि सवितुरमेध्य-

प्रकटार्थविवरणम्

सवशास्त्रानर्थक्यं क्षत्रियं प्रति न दूषणम्, तत्र तस्यानियोज्यत्वात्, तथा सम्यग्दर्शिनं प्रत्यनुज्ञादिशास्त्रानर्थक्यमप्यदूषणमित्याह—न तस्येति ॥ सम्यग्ज्ञान्यपि नियोज्यः, विवेकित्वात्, देहव्यतिरिक्तात्मदर्शिवदित्याह—शरीरव्यतिरेकेति ॥ नैतत्संहतत्वाभिमानादिति परिहारं विवृणोति—सत्यमित्यादिना ॥ असंहतत्वदर्शिन इति ॥ संहतत्वादर्शिनः मुमुक्षोरित्यर्थः । तर्हि सम्यग्दर्शिनो विधिप्रतिषेधाभावे यथेष्टाचरणप्रसङ्ग इत्याशङ्क्याह—न च नियोगाभावादिति ॥ विषयाभिनिविष्टचेतसो ज्ञानोदयासंभवादवश्यं तावत्साधकावस्थायां विषयाभिनिवेशवर्जनेन भाव्यम्, तस्य सम्यग्ज्ञानोदयेऽपि पूर्ववासनावशात् विषयाभिनिवेशाभावान्नियत एवार्थे प्रवृत्तिः संभवतीत्यर्थः । एवं प्रासङ्गिकं परिहृत्य प्रकृतमुपसंहरति—तस्मादिति ॥ उपाधिविशेषवशादनुज्ञापरिहारयोः दृष्टान्तमाह — ज्योतिरादिवदिति ॥ क्रव्यं मांसं अत्तीति क्रव्यात्, श्मशानादिसम्बन्धीत्यर्थः ॥

१. A. ज्योतिरादेरिति

भाष्यम्

देहसंबद्धः परिह्रियते, नेतरः शुचिर्भूमिष्ठः; तथा भौमाः प्रदेशा वज्र-वैडूर्यादय उपादीयन्ते, भौमा अपि सन्तो नरकलेबरादयः परिह्रियन्ते; तथा मूत्रपुरीषं गवां पवित्रतया परिगृह्यते, तदेव जात्यन्तरे परिवर्ज्यते—
5 तद्वत् ॥

# असंततेश्चाव्यतिकरः ॥ २-३-४९ ॥

स्यातां तावदनुज्ञापरिहारावेकस्याप्यात्मनो देहविशेषयोगात्; यस्त्वयं कर्मफलसंबन्धः, स चैकात्म्याभ्युपगमे व्यतिकीर्येत, स्वाम्ये-कत्वादिति चेत्, नैतदेवम्, असंततेः; न हि कर्तुर्भोक्तुश्चात्मनः संततः
10 सर्वैः शरीरैः संबन्धोऽस्ति; उपाधितन्त्रो हि जीव इत्युक्तम्; उपाध्य-संतानाच्च नास्ति जीवसंतानः—ततश्च कर्मव्यतिकरः फलव्यतिकरो वा न भविष्यति ॥

प्रकटार्थविवरणम्

असंततेश्चाव्यतिकरः ॥

15 शङ्कापूर्वकं सूत्रं व्याचष्टे—स्यातां तावदित्यादिना ॥ स्थूलदेहावच्छे-दात् यद्यप्यनुज्ञापरिहारौ संभवतः, तथापि कर्मफलसंबन्धसाङ्कर्यं स्यादेव; एतद्देहविशिष्टस्य स्वर्गभोगायोगात्स्वरूपस्यैव तत्संबन्धो वक्तव्यः; तस्मात् स्वर्गीतरादिव्यवस्थानुपपत्त्या स्वरूपभेदो वक्तव्य इति शङ्काशयः । भवेदेवं स्वर्ग्यादिसाङ्कर्यम्, यद्यनवच्छिन्नस्य फलसंबन्धो भवेत्; न त्वस्ति; स्थूलदेह-
20 संबन्धव्यभिचारेऽप्यविद्यातज्जान्तःकरणसम्बन्धस्यासंसारविमोक्षात् व्यभि-चाराभावात्तदवच्छिन्नस्यैव स्वर्गादिभोगोपपत्तेः न स्वरूपभेदाक्षेपकत्वमिति सिद्धान्ताशयः ॥

१. T. अवच्छेदाय्यनुज्ञा
A. अवच्छेदाद्यप्यनुज्ञा
TM. अवच्छेदाद्यनुज्ञा

२. TM and A. स्वामीतरादि

भाष्यम्

## आभास एव च ॥ २-३-५० ॥

आभास एव चैष जीवः परस्यात्मनो जलसूर्यकादिवत्प्रतिपत्तव्यः, न स एव साक्षात्, नापि वस्त्वन्तरम् । अतश्च यथा नैकस्मिञ्जलसूर्यके कम्पमाने जलसूर्यकान्तरं कम्पते, एवं नैकस्मिञ्जीवे कर्मफलसंबन्धिनि जीवान्तरस्य तत्संबन्धः । एवमप्यव्यतिकर एव कर्मफलयोः । आभासस्य चाविद्याकृतत्वात्तदाश्रयस्य संसारस्याविद्याकृतत्वोपपत्तिरिति, 5

प्रकटार्थविवरणम्

आभास एव च ॥

यदाद्ये सूत्रे जीवस्यांशत्वात् सूत्रितं[त्वमासूत्रितं] तदवच्छेदाभिप्रायेण 10
इत्युक्त्वाधुना "आभास एव च" इत्येवकारं प्रयुञ्जानः "रूपंरूपं प्रतिरूपो बभूव" इत्यादिश्रुतिसिद्धं प्रतिबिम्बपक्षं स्वरहस्यं सूचयामास भगवान् सूत्रकारः । तद्व्याख्याति — आभास एवेत्यादिना ॥ स एव अनौपाधिकः; साक्षात् अव्यवधानेन; जीव उपाधिव्यवधानस्यानुभवात्; नापि तद्वस्त्वन्तरम् "तत्सृष्ट्वा । तदेवानुप्राविशत्" इत्यादिश्रुतिस्मृति- 15
शतेभ्य इत्यर्थः । स्वर्गीतरादिव्यवस्था अस्मिन्पक्षे सुतरां घटत इत्याह— अतश्च यथेति ॥ अज्ञानाद्बन्धो ज्ञानान्मोक्षो भवतीत्येतदपि घटत इत्याह— आभासस्य चेति ॥ यथा दर्पणे मुखप्रतिबिम्बं दर्पणाधीनत्वात् प्रतिबिम्बभावः स्वोप[स्वभावस्योप]चारतो दर्पणकृतमुच्यते, तत्र यथा दर्पणकृतमेवाल्पत्वमलीमसत्वादि भाति, तथा चित्प्रतिबिम्बे जीवेऽपि यत्किञ्चिदब्रह्मस्वरूपं 20
भाति, तत्सर्वमविद्याकृतमेवेति बन्ध[प्रतिबन्ध]सिद्धिः । यथा च प्रतिबिम्बं बिम्बमेवेति वाक्येनोपाधितत्स्थताव्यावर्तनेन मुखस्वरूपैक्यमेव लक्ष्यते, तथा "तत्त्वमसि" इत्यप्यविद्यातत्स्थत्वव्यपोहेन सबाह्याभ्यन्तरादिग्देशकालावच्छिन्नचैतन्यं ब्रह्मैकरूपैक्यमेव लक्षयति इति न कोऽप्यत्रावकरः । अत्र भास्करः "आभासा एव च" इति सूत्रं पठित्वा अद्वैतवादा आभासा एव 25
चेति व्याख्याय प्रतिबिम्बपक्षं दूषयांबभूव "प्रतिबिम्बस्यावस्तुत्वाभ्युपगमात्" इति । तत्रासौ स्वपररहस्यानभिज्ञ इति शोच्य एव । तथा हि—स्वपक्षे

१. TM. तर्हि

भाष्यम्

तद्व्युदासेन च पारमार्थिकस्य ब्रह्मात्मभावस्योपदेशोपपत्तिः । येषां तु बहव आत्मानः, ते च सर्वे सर्वगताः, तेषामेवैष व्यतिकरः प्राप्नोति ; कथम् ? बहवो विभवश्चात्मानश्चैतन्यमात्रस्वरूपा निर्गुणा निरतिशयाश्च ;
5 तदर्थं साधारणं प्रधानम् ; तन्निमित्तैषां भोगापवर्गसिद्धिरिति सांख्याः । सति बहुत्वे विभुत्वे च घटकुड्यादिसमाना द्रव्यमात्रस्वरूपाः स्वतोऽचेतना आत्मानः, तदुपकरणानि चाणूनि मनांस्यचेतनानि, तत्र आत्मद्रव्याणां मनोद्रव्याणां च संयोगात् नव इच्छादयो वैशेषिका आत्मगुणा उत्पद्यन्ते, ते चाव्यतिकरेण प्रत्येकमात्मसु समवयन्ति, स संसारः,
10 तेषां नवानामात्मगुणानामत्यन्तानुत्पादो मोक्ष इति काणादाः । तत्र सांख्यानां तावच्चैतन्यस्वरूपत्वात्सर्वात्मनां संनिधानाद्यविशेषाच्च एकस्य सुखदुःखसंबन्धे सर्वेषां सुखदुःखसंबन्धः प्राप्नोति । स्यादेतत्—प्रधान-

प्रकटार्थविवरणम्

तावत् तस्यान्यथाख्यातिवादित्वाद्देशान्तरे सदेव मुखं दर्पणसंसृष्टं भाति । तत्र
15 संसर्गाभासो विभ्रमः ; मुखावभासस्तु अविभ्रम एव ; अस्माकमपि नेदं मुखमिति स्वरूपबाधाभावात्, नात्र मुखं किन्तु मदीयमेवेति देशसंसर्गमात्रबाधया स्वरूपैक्यप्रत्यभिज्ञानात् एकस्मिन्नेकदेशस्थे च मुखे भेदो भिन्नदेशस्थता चानिर्वाच्या भातीति कुतः प्रतिबिम्बस्योपाधिस्थतया भासमानस्वरूपस्यावस्तुत्वं पराचक्रमिरे चात्राचार्याः दर्पणटीकायामित्युपरम्यते । एवं तावत्स्वरूपैक्ये
20 नास्ति दुःखादिसङ्कर इत्युपपाद्य, परेषामेव सङ्करो दुर्वारः, अतः तत्स्वरूपभेदकल्पना निष्प्रमाणिका निष्प्रयोजनेति[ना चेति] चकारसूचितमुपपादयितुमुपक्रमते—येषां बहव इत्यादिना ॥ सांख्यस्याभिप्रायमाशङ्कते–स्यादेतदिति ॥ यद्यपि पुंसां सर्वेषां सन्निधानं निर्विशेषत्वं चाविशिष्टम्, तथापि प्रधानमेव तेषां मोक्षार्थत्वेन प्रवर्तते ; अतः कञ्चित्कालं नर्तकीव स्वात्मानं

१. T and T¹. सदेवं दर्पण-
२. T, T¹ and TM omit एकस्मिन्नेक
३. T, T¹ and TM omit इति कुतः प्रति
४. T, T¹ and TM. समान
५. TM. दपर्णभित्तिकायाम्
६. A. सङ्करोऽतः
TM. सङ्करस्तत्स्वरूप

भाष्यम्

प्रवृत्तेः पुरुषकैवल्यार्थत्वाद्व्यवस्था भविष्यति ; अन्यथा हि स्वविभूति-
ख्यापनार्था प्रधानप्रवृत्तिः स्यात् ; तथा चानिर्मोक्षः प्रसज्येतेति—
नैतत्सारम्—न ह्यभिलषितसिद्धिनिबन्धना व्यवस्था शक्या विज्ञातुम् ;
उपपत्त्या तु कयाचिद्व्यवस्थोच्येत ; असत्यां पुनरुपपत्तौ कामं मा　　5
भूदभिलषितं पुरुषकैवल्यम्, प्राप्नोति तु व्यवस्थाहेत्वभावाद्व्यतिकरः ।
काणादानामपि यदैकेनात्मना मनः संयुज्यते, तदात्मान्तरैरपि नान्त-
रीयकः संयोगः स्यात्, संनिधानाद्यविशेषात् ; ततश्च हेत्वविशेषात्फ-
लाविशेष इत्येकस्यात्मनः सुखदुःखयोगे सर्वात्मनामपि समानं सुखदुः-
खित्वं प्रसज्येत ॥　　10

स्यादेतत् । अदृष्टनिमित्तो नियमो भविष्यतीति । नेत्याह—

प्रकटार्थविवरणम्

प्रवृत्त्यर्थं स्वयमेवोपरमति । तत्र सविकारप्रधानदर्शनमेव पुंसां बन्धः,
तदुपरमे च मोक्ष उपचर्यते ; अतो व्यवस्थोपपत्तिः ॥ अन्यथेति ॥ यदि प्रति-
नियता प्रधानप्रवृत्तिर्नाङ्गीक्रियते तदा प्रधानं स्व[1] विभूतिख्यापनाय प्रवर्तेत　　15
इति पुंसां मोक्षो न स्यादित्यर्थः । प्रधानप्रवृत्तेः मोक्षार्थत्वेऽपि युगपत्सर्वेषां
मोक्षः कस्मान्न भवेत् ? कस्यचिन्मोक्षः कस्यचिद्बन्धः इति व्यवस्थायां त्वया
प्रमाणं वाच्यम् ; तच्च नास्तीत्याह—नैतत्सारमिति ॥ यदुक्तं प्रधानस्य
स्वविभूतिख्यापनपरिहाराय नियता प्रवृत्तिरिति तत्राह—न हीति ॥ ननु
नास्त्यत्रोपपत्तिः, किन्त्वनादिरेवायं प्रतिनियम इत्याशङ्क्याह—असत्यां पुन-　　20
रिति ॥ अनियम एवानादिः कस्मान्न भवतीति भावः । इदानीं कणादसमये
अव्यवस्थामाह—काणादानामपीति ॥

यददृष्टनिबन्धनमनःकर्मजः संयोगः, तस्यैव तन्निमित्तं सुखं दुःखं वा
भवति, नान्यस्य सन्निधाने सत्यपीति शङ्कते—स्यादेतदिति ॥

१. T adds अपि

भाष्यम्

## अदृष्टानियमात् ॥ २-३-५१ ॥

बहुष्वात्मस्वाकाशवत्सर्वगतेषु प्रतिशरीरं बाह्याभ्यन्तराविशेषेण संनिहितेषु मनोवाक्कायैर्धर्माधर्मलक्षणमदृष्टमुपार्ज्यते । सांख्यानां तावत्त-
5 दनात्मसमवायि प्रधानवर्ति प्रधानसाधारण्यान्न प्रत्यात्मं सुखदुःखोपभोगस्य नियामकमुपपद्यते । काणादानामपि पूर्ववत्साधारणेनात्ममनःसंयोगेन निर्वर्तितस्यादृष्टस्याप्यस्यैवात्मन इदमदृष्टमिति नियमे हेत्वभावादेष एव दोषः ॥

स्यादेतत्—अहमिदं फलं प्राप्नवानि, इदं परिहराणि, इत्थं प्रयते,
10 इत्थं करवाणि—इत्येवंविधा अभिसंध्यादयः प्रत्यात्मं प्रवर्तमाना अदृष्टस्यात्मनां च स्वस्वामिभावं नियंस्यन्तीति ; नेत्याह—

## अभिसंध्यादिष्वपि चैवम् ॥ २-३-५२ ॥

अभिसंध्यादीनामपि साधारणैनैवात्ममनःसंयोगेन सर्वात्मसंनिधौ क्रियमाणानां नियमहेतुत्वानुपपत्तेरुक्तदोषानुषङ्ग एव ॥

15 प्रकटार्थविवरणम्

अदृष्टानियमात् ॥

भवेदेवं यद्यदृष्टमसाधारणं स्यात्, न तु तदस्तीत्याह — अदृष्टानियमादिति ॥

अभिसन्ध्यादिष्वपि चैवम् ॥

20 अदृष्टहेतुसाधारण्येनादृष्टस्य साधारण्यमाशङ्क्य दूषयति— स्यादेतदहमित्यादिना ॥

भाष्यम्

## प्रदेशादिति चेन्नान्तर्भावात् ॥ २-३-५३ ॥

अथोच्येत—विभुत्वेऽप्यात्मनः शरीरप्रतिष्ठेन मनसा संयोगः शरीरावच्छिन्न एवात्मप्रदेशे भविष्यति; अतः प्रदेशकृता व्यवस्थाभिसंध्यादीनामदृष्टस्य सुखदुःखयोश्च भविष्यतीति, तदपि नोपपद्यते; कस्मात्? अन्तर्भावात्; विभुत्वाविशेषाद्धि सर्वशरीरेष्वन्तर्भवन्ति। तत्र न वैशेषिकैः शरीरावच्छिन्नोऽप्यात्मनः प्रदेशः कल्पयितुं शक्यः; कल्प्यमानोऽप्ययं निष्प्रदेशस्यात्मनः प्रदेशः काल्पनिकत्वादेव न पारमार्थिकं कार्यं नियन्तुं शक्नोति; शरीरमपि सर्वात्मसंनिधावुत्पद्यमानम्—अस्यैवात्मनः, नेतरेषाम्—इति न नियन्तुं शक्यम्। प्रदेशविशेषाभ्युपगमेऽपि च द्वयोरात्मनोः समानसुखदुःखभाजोः कदाचिदेकेनैव तावच्छरीरेणोपभोगसिद्धिः स्यात्, समानप्रदेशस्यापि द्वयोरात्मनोरदृष्टस्य संभवात्; तथा हि—देवदत्तो यस्मिन्प्रदेशे सुखःदुःखमन्वभूत्; तस्मात्प्रदेशादपक्रान्ते तच्छरीरे यज्ञदत्तशरीरे च तं प्रदेशमनुप्राप्ते, तस्यापीतरेण समानः सुखदुःखानुभवो दृश्यते; स न स्यात्, यदि देवदत्तयज्ञदत्तयोः समानप्रदेशमदृष्टं न स्यात्। स्वर्गाद्यनुपभोगप्रसङ्गश्च प्रदेशवादिनः स्यात्, ब्राह्मणादिशरीरप्रदेशेष्वदृष्टनिष्पत्तेः प्रदेशान्तरवर्तित्वाच्च स्वर्गाद्युपभोगस्य। सर्वगतत्वानुपपत्तिश्च बहूना-

प्रकटार्थविवरणम्

प्रदेशादिति चेन्नान्तर्भावात् ॥

प्रकारान्तरेणासाधारण्यमाशङ्क्य दूषयति—अथोच्येत विभुत्वेऽपीत्यादिना[1] ॥ ननु यस्यात्मनः शरीरं तस्यैव तत्र वृत्तिलाभः, नान्येषामित्याशङ्क्याह—शरीरमपीति ॥ प्रदेशपक्षे दोषान्तरमाह—प्रदेशविशेषाभ्युपगमे चेति ॥ पूर्वं बहूनां सर्वगतत्वमभ्युपगम्य व्यवस्थोक्ता; अधुना सापि नास्तीत्याह—सर्वगतत्वानुपपत्तिश्चेति ॥ रूपरसादीनां[2] बहूनामेक एव घटो

१. A. विभुत्वमित्यादिना २. T and T[1]. रूपादीनां

भाष्यम्

मात्मनाम्, दृष्टान्ताभावात् । वद तावत् त्वम्—के बहवः समानप्रदेशा-
श्चेति; रूपादय इति चेत्, न; तेषामपि धर्म्यंशेनाभेदात्, लक्षण-
भेदाच्च—न तु बहूनामात्मनां लक्षणभेदोऽस्ति; अन्त्यविशेषवशाद्भे-
5 दोपपत्तिरिति चेत्, न; भेदकल्पनाया अन्त्यविशेषकल्पनायाश्चेतरेत-
राश्रयत्वात्; आकाशादीनामपि विभुत्वं ब्रह्मवादिनोऽसिद्धम्, कार्य-
त्वाभ्युपगमात् । तस्मादात्मैकत्वपक्ष एव सर्वदोषाभाव इति सिद्धम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपाद-
शिष्यस्य श्रीमच्छंकरभगवतः कृतौ शारीरकमीमांसासूत्रभाष्ये
10 द्वितीयाध्यायस्य तृतीयः पादः

देशो दृष्टः, परस्परपराहतिश्च नास्ति, निरवयवत्वादित्याह—रूपादय इति ॥
नायमपि दृष्टान्तोऽस्माकं संमतः, तैजसांशस्य रूपवत्त्वात्; आप्यांशस्य
रसवत्त्वात्; पार्थिवांशस्य गन्धवत्त्वात्; इत्येवं तत्तद्गुणस्य स्वस्य धर्म्यंशेन
तादात्म्यात्तद्व्यतिरिक्तस्य घटस्याभावादिति भावः । किं च बहुत्ववादिना
15 लक्षणभेदात् बहुत्वं वाच्यम्, तदपि नास्तीत्यर्थः । काणादसमयं शङ्कते—
अन्त्यविशेषा[शेषवशा]दिति ॥ नित्येष्वेव द्रव्येष्वेव वर्तन्त एव ये विशेषाः
तेऽन्त्या विशेषाः नित्यानुमेयाः[1], तद्वशाद्व्यावृत्तिसिद्धिरित्यर्थः । अन्त्यविशेषाणां
व्यावृत्तिबुद्धिहेतुत्वं निर्भिन्ने चेत्तदा स्वरूपादपि व्यावृत्तिबुद्धिप्रसक्तौ नैकं किं-
चित्स्यात्; अतो भेदे सिद्धेऽन्त्यविशेषसिद्धिः, तत्सिद्धौ च भेदसिद्धिरितीतरेत-
20 राश्रयान्नैकमपि सिध्यतीत्याह—न भेदकल्पनाया इति ॥ यच्च बहूनां
विभूनामेकदेशत्वं दृष्टमाकाशादीनामिति वदन्ति तदप्यस्माकमसिद्धमित्याह—
आकाशादीनामपीति ॥ एवं[2] परपक्षं निराकृत्य स्वपक्षमुपसंहरति—
तस्मादिति ॥ यो हि बहून्कल्पयति कल्पयत्यसावेकमिति न्यायादेकस्ताव-
दात्मा सर्वसंमतः; तस्मिंश्चाकाशकल्पे परोपाधिकसकलव्यवहारसिद्धौ न
25 तात्त्विकभेदकल्पनायां किञ्चित्प्रमाणं प्रयोजनं चास्तीति भावः । आत्मा द्रव्यत्व-

१. T and T¹. नित्यमेयाः  २. T, TM and A omit एवं

## प्रकटार्थविवरणम्

व्यतिरिक्तापरजात्याधारः, अश्रावणविशेषगुणाधिकरणत्वात्, घटवदित्यत्र [अत्र जातिः पक्षः, व्यक्तिर्वा ?] जातेः पक्षीकरणेऽपसिद्धान्तः ; द्वितीये सन्दिग्ध-विशेष्यः पक्षाभासः जात्याधारत्वे सन्दिग्धे व्यक्तित्वसन्देहात् ; लोकसिद्धस्य पक्षीकरणे देहादेरेवात्मत्वप्रसिद्धेः सिद्धसाधनम् ; ईश्वरस्याप्यपरजात्याधार-     5
त्वसाधनेन प्रतिकूलतर्क[1]पराहतत्वादनुकूलतर्कविरहाद्वाप्रयोजकतान्यतरा-सिद्धिश्च । जीवः शरीरत्वात् [जीवशरीरस्य] स्वसङ्ख्यासङ्ख्येयात्मत्वसाधने सिद्धसाधनम् ; एकत्वस्यापि स्वकीयत्वात्, सकलविशेषणे साध्यवैकल्यम् । अपरोक्षज्ञानं वर्तमानपरोक्षज्ञानाश्रयाद्भिन्नाश्रयम्, परतन्त्रत्वे सत्यपरोक्षत्वात्, रूपवत् इत्यपि सिद्धसाधनम्, औपाधिका[कभेदा]ङ्गीकारादिति ॥     10

इति श्रीमच्छारीरकमीमांसाभाष्यविवरणे प्रकटार्थे
द्वितीयस्याध्यायस्य तृतीयः पादः

---

१. T, TM and A omit परा...तर्क

# अथ चतुर्थः पादः

भाष्यम्

[ प्राणोत्पत्त्यधिकरणम् ]

वियदादिविषयः श्रुतिविप्रतिषेधस्तृतीयेन पादेन परिहृतः; चतुर्थेन
5 इदानीं प्राणविषयः परिह्रियते । तत्र तावत्—"तत्तेजोऽसृजत" इति,
"तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इति चैवमादिषु उत्पत्तिप्रकरणेषु प्राणानामुत्पत्तिर्नाम्नायते; क्वचिच्चानुत्पत्तिरेवैषामाम्नायते,
"असद्वा इदमग्र आसीत्" "तदाहुः किं तदसदासीदित्यृषयो वाव तेऽग्रेऽसदासीत् । तदाहुः के ते ऋषय इति । प्राणा वाव ऋषयः"
10 इत्यत्र प्रागुत्पत्तेः प्राणानां सद्भावश्रवणात्; अन्यत्र तु प्राणानामप्युत्पत्तिः पठ्यते—"यथाग्नेर्ज्वलतः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवैतस्मादात्मनः सर्वे प्राणाः" इति, "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" इति, "सप्त प्राणाः प्रभवन्ति तस्मात्" इति, "स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नम्"
15 इति च एवमादिप्रदेशेषु । तत्र तत्र श्रुतिविप्रतिषेधादन्यतरनिर्धारणकारणानिरूपणाच्चाप्रतिपत्तिः प्राप्नोति । अथ वा प्रागुत्पत्तेः सद्भावश्रवणा-

प्रकटार्थविवरणम्

तथा प्राणः ॥

पूर्वोत्तरपादयोः सङ्गतिमाह—वियदादिविषय इति ॥ तमेव विप्रतिषे-
20 धमाह—तत्र तावदित्यादिना ॥ ननु क्वचिदुत्पत्तिर्नाम्नायते क्वचिदाम्नायते इत्येवंरूपो विप्रतिषेधो वियदधिकरणन्यायेनैव निरस्त इत्याशङ्क्य ततो विशेषमाह—क्वचिच्चानुत्पत्तिरेवेति ॥ आपाततः पूर्वपक्षमाह—तत्र श्रुतेर्विप्रतिषेधादित्यादिना ॥ साक्षात्पूर्वपक्षमाह—अथ वेति ॥ यथा पूर्वस्मि-

१. T omits वियदादि
२. TM. ततो
३. T and A omits क्वचिदाम्नायते

भाष्यम्

द्गौणी प्राणानामुत्पत्तिश्रुतिरिति प्राप्नोति। अत इदमुत्तरं पठति—
"तथा प्राणाः" इति।

## तथा प्राणाः ॥ २-४-१ ॥

कथं पुनरत्र तथा इत्यक्षरानुलोम्यं प्रकृतोपमानाभावात्— 5
सर्वगतात्मबहुत्ववादिदूषणम् अतीतानन्तरपादान्ते प्रकृतम्; तत्ता-
वन्नोपमानं संभवति, सादृश्याभावात्; सादृश्ये हि सत्युपमानं स्यात्—
यथा सिंहस्तथा बलवर्मेति; अदृष्टसाम्यप्रतिपादनार्थमिति यद्युच्येत—
यथा अदृष्टस्य सर्वात्मसंनिधावुत्पद्यमानस्यानियतत्वम्, एवं प्राणाना-
मपि सर्वात्मनः प्रत्यनियतत्वमिति—तदपि देहानियमेनैवोक्तत्वात्पुन- 10
रुक्तं भवेत्; न च जीवेन प्राणा उपमीयेरन्सिद्धान्तविरोधात्, जीवस्य
ह्यनुत्पत्तिराख्याता, प्राणानां तु उत्पत्तिर्व्याचख्यासिता तस्मात्तथेत्य-
संबद्धमिव प्रतिभाति—न उदाहरणोपात्तेनाप्युपमानेन संबन्धोपपत्तेः—
अत्र प्राणोत्पत्तिवादिवाक्यजातमुदाहरणम्—"एतस्मादात्मनः सर्वे
प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति" इत्येवं- 15
जातीयकम्; तत्र यथा लोकादयः परस्माद्ब्रह्मण उत्पद्यन्ते तथा प्राणा
अपीत्यर्थः; तथा—

"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी॥"

इत्येवमादिष्वपि खादिवत्प्राणानामुत्पत्तिरिति द्रष्टव्यम्। अथ वा "पान- 20

प्रकटार्थविवरणम्

न्पादे जीवानां क्वचिदुत्पत्तिश्रवणेऽप्यजत्वश्रुतिविरोधाद्गौणी जन्मश्रुतिर्व्या-
ख्याता, तथात्रापि मुख्यप्राणातिरिक्तानां प्राणानां सृष्टेः प्राक् सद्भाव-
श्रवणाद्देहोत्पत्त्या जन्मश्रुतिर्गौणीति भावः। सूत्रमवतार्य रचनामाक्षिपति—
कथं पुनरत्रेति॥ आनुलोम्यमाञ्जस्यमित्यर्थः। समाधत्ते—नोदाहरणोपात्ते- 25
नापीति॥ सन्निहितमेवोपमानमित्यङ्गीकृत्यैकवाक्योपात्तत्वेन सान्निध्य-
मुक्तम्। इदानीं नायं नियमः, जैमिनिना व्यवहितस्याप्युपमानस्याश्रितत्वा-
दित्याह—अथ वेति॥ सोमपाने क्रियमाणे यदा व्यापद्वमनं भवति, तदा

भाष्यम्

व्यापश्च तद्वत्" इत्येवमादिषु व्यवहितोपमानसंबन्धस्याप्याश्रितत्वात्—
यथातीतानन्तरपादादावुक्ता वियदादयः परस्य ब्रह्मणो विकाराः
समधिगताः, तथा प्राणा अपि परस्य ब्रह्मणो विकारा इति योज-
5 यितव्यम् । कः पुनः प्रणानां विकारत्वे हेतुः? श्रुतत्वमेव; ननु
केषुचित्प्रदेशेषु न प्राणनामुत्पत्तिः श्रूयत इत्युक्तम्—तदयुक्तम्, प्रदे-
शान्तरेषु श्रवणात्; न हि क्वचिदश्रवणमन्यत्र श्रुतं निवारयितुमुत्सहते;
तस्माच्छ्रुतत्वाविशेषादाकाशादिवत्प्राणा अप्युत्पद्यन्त इति सूक्तम् ॥

## गौण्यसंभवात् ॥ २-४-२ ॥

10 यत्पुनरुक्तं प्रागुत्पत्तेः सद्भावश्रवणाद्गौणी प्राणानामुत्पत्तिश्रुति-
रिति, तत्प्रत्याह—गौण्यसंभवादिति; गौण्या असंभवो गौण्यसंभवः;
न हि प्राणानामुत्पत्तिश्रुतिर्गौणी संभवति, प्रतिज्ञाहानिप्रसङ्गात्—
"कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति" इति हि एकविज्ञानेन
सर्वविज्ञानं प्रतिज्ञाय तत्साधनायेदमाम्नायते—"एतस्माज्जायते प्राणः"
15 इत्यादि; सा च प्रतिज्ञा प्राणादेः समस्तस्य जगतो ब्रह्मविकारत्वे
सति प्रकृतिव्यतिरेकेण विकाराभावात्सिद्ध्यति; गौण्यां तु प्राणाना-

प्रकटार्थविवरणम्

"सोमेन्द्रं चरुं निर्वपेत्" इति श्रुतम् । तत्किं लौकिके वैदिके वेति संशये अधि-
करणद्वयव्यवहितमश्वप्रतिग्रहेष्ट्यधिकरणन्यायं पूर्ववादी तद्वदित्यतिदिशति ।
20 तत्र हि "वरुणो वा एतं गृह्णाति । योऽश्वं प्रतिगृह्णाति । यावतोऽश्वान् प्रति-
गृह्णीयात् । तावतश्चतुष्कपालान् वारुणान्निर्वपेत्" इतीयमिष्टिर्लौकिकाश्वप्रति-
ग्रहे, न वैदिक इति स्थापितम्, तद्वदित्यर्थः । प्रतिज्ञामात्रं सूत्रेऽस्ति । हेतुं प्रश्न-
पूर्वकमाह—कः पुनरिति ॥ उक्तमनूद्य दूषयति—ननु केषुचिदित्यादिना ॥

१. TM. न्द्रः चरुं       २. T. न्यायः
A. न्द्रः चरुः

भाष्यम्

मुत्पत्तिश्रुतौ प्रतिज्ञा इयं हीयेत । तथा च प्रतिज्ञातार्थमुपसंहरति—
"पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम्" इति, "ब्रह्मैवेदं विश्व-
मिदं वरिष्ठम्" इति च; तथा "आत्मनो वा अरे दर्शनेन श्रवणेन
मत्या विज्ञानेनेदं सर्वं विदितम्" इत्येवंजातीयकासु श्रुतिषु एषैव प्रतिज्ञा　5
योजयितव्या । कथं पुनः प्रागुत्पत्तेः प्राणानां सद्भावश्रवणम्? नैत-
न्मूलप्रकृतिविषयम्, "अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः"
इति मूलप्रकृतेः प्राणादिसमस्तविशेषरहितत्वावधारणात्; अवान्तर-
प्रकृतिविषयं त्वेतत् स्वविकारापेक्षं प्रागुत्पत्तेः प्राणानां सद्भावावधा-
रणमिति द्रष्टव्यम्, व्याकृतविषयाणामपि भूयसीनामवस्थानां श्रुति-　10

प्रकटार्थविवरणम्

गौण्यसंभवात् ॥

ननु सा प्रतिज्ञापि गौणी, न तत्सिद्ध्यर्थं प्राणानामुत्पत्तिः मुख्या वक्तव्ये-
त्याशङ्क्याह—तथा च प्रतिज्ञातार्थमिति ॥ उपक्रमोपसंहारपर्यालोचनया प्रति-
पिपादयिषिताद्वितीयत्वप्रतिज्ञानुरोधेन प्राणानामुत्पत्तिर्मुख्यैव[त्तिर्वेत्युक्त्वा]　15
इदानीं सद्भावश्रवणस्य गतिं प्रश्नपूर्वकमाह—कथं पुनरित्यादिना ॥ एतद्वचनं
मूलप्रकृतेः ब्रह्मणः प्राणसद्भावविषयं न भवति। किंविषयं तर्हीत्यत आह—
अवान्तरप्रकृतिः हिरण्यगर्भः; तत्प्राणास्तित्वविषयं तद्वाक्यमित्यर्थः । ननु
हिरण्यगर्भस्यापि विकारान्तःपातित्वात् कथं विकारासत्त्वाभिधानपूर्वकं
प्राणसद्भावावधारणं घटत इत्याशङ्क्याह — स्वविकारापेक्षमिति ॥ अवा-　20
न्तरप्रलये हिरण्यगर्भविकारजातस्यापेक्षया तदीयप्राणसद्भावावधारणं द्रष्ट-
व्यमित्यर्थः । ननु ब्रह्मण एव सकलजगत्प्रकृतित्वात् नास्त्यवान्तरप्रकृतौ मान-
मित्याशङ्क्याह–व्याकृतविषयाणामपीति ॥ "हिरण्यगर्भः समवर्तताग्रे भूतस्य
जातः पतिरेक आसीत्", "आदिकर्ता स भूतानाम्" इत्यादिश्रुतिस्मृत्योः
कार्यावच्छिन्नानामपि मूलकारणस्यैवावस्थाविशेषाणां प्रकृतिविकारभावेन　25

१. T omits कथं विकारासत्त्वा　　२. T, T[1] and TM. मानमित्याह

भाष्यम्

स्मृत्योः प्रकृतिविकारभावप्रसिद्धेः । वियदधिकरणे हि "गौण्यसंभवात्" इति पूर्वपक्षसूत्रत्वात्—गौणी जन्मश्रुतिः, असंभवात्—इति व्याख्यातम्, प्रतिज्ञाहान्या च तत्र सिद्धान्तोऽभिहितः । इह तु सिद्धान्तसूत्रत्वात्—गौण्या जन्मश्रुतेरसंभवात्—इति व्याख्यातम्; तदनुरोधेन तु इहापि—गौणी जन्मश्रुतिः, असंभवात्—इति व्याचक्षाणैः प्रतिज्ञाहानिरुपेक्षिता स्यात् ॥

## तत्प्राक्श्रुतेश्च ॥ २-४-३ ॥

इतश्च आकाशादीनामिव प्राणानामपि मुख्यैव जन्मश्रुतिः—यत् "जायते" इत्येकं जन्मवाचिपदं प्राणेषु प्राक्श्रुतं सत् उत्तरेष्वाकाशादिष्वनुवर्तते "एतस्माज्जायते प्राणः" इत्यत्र; आकाशादिषु मुख्यं जन्मेति प्रतिष्ठापितम्; तत्सामान्यात् प्राणेष्वपि मुख्यमेव जन्म भवितुमर्हति; न हि एकस्मिन्प्रकरण एकस्मिंश्च वाक्य एकः शब्दः सकृदुच्चरितो बहुभिः संबध्यमानः क्वचिन्मुख्यः क्वचिद्गौण इत्यध्यवसातुं

प्रकटार्थविवरणम्

प्रसिद्धेरवान्तरप्रकृतिरेव नास्तीति न शक्यते वक्तुमित्यर्थः । तस्मात्प्राणानां सद्भावश्रुतेः महाप्रलयविषयत्वाभावात् महाप्रलयान्तरमुत्पत्तिश्रुतेर्न गौणत्व[१]मिति स्थितम् । एवं तावत्स्वाभिप्रायेण सूत्रं व्याख्याय, यत् कैश्चिद्वियदधिकरणानुसारेणेहापि व्याख्यातम्, दू[तद्]षयितुं विशेष[२]माह—वियदधिकरणे हीत्यादिना ॥

तत्प्राक्श्रुतेश्च ॥

आकाशादिषु मुख्यजन्मवाचकस्य जायत इति पदस्य तदितरेषु[३] पूर्वं श्रुतत्वाच्च प्राणानां मुख्यजन्मेति योजना । एकस्मिन्वाक्ये प्रयुक्तस्यैकस्य शब्दस्य

१. T, T¹ and TM. गौणमिति    ३. T, T¹ and TM. इतरे
२. T and T¹ omit विशेषं

भाष्यम्

शक्यम्, वैरूप्यप्रसङ्गात्। तथा "स प्राणमसृजत प्राणाच्छ्रद्धाम्" इत्यत्रापि प्राणेषु श्रुतः सृजतिः परेष्वप्युत्पत्तिमत्सु श्रद्धादिष्वनुषज्यते। यत्रापि पश्चाच्छ्रुत उत्पत्तिवचनः शब्दः पूर्वैः संबध्यते, तत्राप्येष एव न्यायः—यथा "सर्वाणि भूतानि व्युच्चरन्ति" इत्ययमन्ते पठितो व्युच्चरन्तिशब्दः पूर्वैरपि प्राणादिभिः संबध्यते ॥ 5

## तत्पूर्वकत्वाद्वाचः ॥ २-४-४ ॥

यद्यपि "तत्तेजोऽसृजत" इत्येतस्मिन्प्रकरणे प्राणानामुत्पत्तिर्न पठ्यते, तेजोबन्नानामेव त्रयाणां भूतानामुत्पत्तिश्रवणात्; तथापि ब्रह्मप्रकृतिकतेजोबन्नपूर्वकत्वाभिधानाद्वाक्प्राणमनसाम्, तत्सामान्याच्च सर्वेषामेव प्राणानां ब्रह्मप्रभवत्वं सिद्धं भवति। तथा हि—अस्मिन्नेव प्रकरणे तेजोबन्नपूर्वकत्वं वाक्प्राणमनसामाम्नायते—"अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक्" इति; तत्र यदि तावन्मुख्य- 10

प्रकटार्थविवरणम्

क्वचिन्मुख्यत्वं क्वचिद्गौणत्वमित्येवं वैरूप्यं शुकरूपं न भवतीत्येष न्यायोऽन्य- 15
त्रापि द्रष्टव्य इत्याह—यत्रापि पश्चाच्छ्रुत इति ॥

तत्पूर्वकत्वाद्वाचः ॥

यच्चोक्तं छान्दोग्ये प्राणानामुत्पत्तिर्नाम्नायत इति तत्राह—तत्पूर्वकत्वाद्वाच इति ॥ वाग्ग्रहणमुपलक्षणार्थम्। वाक्प्राणमनसामपि छान्दोग्ये सृष्टिप्रकरणे तावत्तेजोबन्नपूर्वकत्वमाम्नायते। तत्किं मुख्यं गौणं वेति निरूपणीयम्। प्रथमं प्रत्याह—तत्र यदि तावदिति ॥ ततो वर्तत एवेति ॥ विद्यत एव छान्दोग्येऽपि प्राणानामुत्पत्तिरिति शेषः। भाक्तं गौणं प्राणानामन्नादिमयत्वं 20

१. T and T[1] omit वैरूप्यं
२. TM and A omit रूपं
३. A: मुख्यमय वा गौणी
४. A omits तत्र
५. A adds अत्र

भाष्यम्

मेवैषामन्नादिमयत्वम्, ततो वर्तत एव ब्रह्मप्रभवत्वम्; अथ भाक्तम्, तथापि ब्रह्मकर्तृकायां नामरूपव्याक्रियायां श्रवणात् "येनाश्रुतं श्रुतं भवति" इति चोपक्रमात्, "ऐतदात्म्यमिदं सर्वम्" इति चोपसंहारात्, 5 श्रुत्यन्तरप्रसिद्धेश्च ब्रह्मकार्यत्वप्रपञ्चनार्थमेव मनआदीनामन्नादिमयत्व-वचनमिति गम्यते। तस्मादपि प्राणानां ब्रह्मविकारत्वसिद्धिः॥

[सप्तगत्यधिकरणम्]

## सप्त गतेर्विशेषितत्वाच्च॥ २-४-५॥

उत्पत्तिविषयः श्रुतिविप्रतिषेधः प्राणानां परिहृतः; संख्याविषय 10 इदानीं परिह्रियते। तत्र मुख्यं प्राणमुपरिष्टाद्वक्ष्यति; संप्रति तु कति इतरे प्राणा इति संप्रधारयति। श्रुतिविप्रतिपत्तेश्चात्र विशयः—क्वचित् सप्त प्राणाः संकीर्त्यन्ते—"सप्त प्राणाः प्रभवन्ति तस्मात्" इति; क्वचिच्च अष्टौ प्राणा ग्रहत्वेन गुणेन संकीर्त्यन्ते—"अष्टौ ग्रहा अष्टावतिग्रहाः"

प्रकटार्थविवरणम्

15 अन्नाद्युपयोगात्प्रागपि सिद्धत्वादित्यर्थः। यद्यपीदानीं उपयुज्यमानान्नादिम-यत्वं नास्ति, तथापि भौतिकानामेव परंपरया ब्रह्मकार्यत्वं न विरुध्यत इत्याह—तथापीति॥

सप्त गतेर्विशेषितत्वाच्च॥

अवान्तरसङ्गतिमाह—उत्पत्तिविषय इति॥ सबीजं संशयमाह— 20 श्रुतिविप्रतिपत्तेश्चात्र॥ विशयः संशयः। सप्त प्राणाः चक्षुर्घ्राणरसनवाक्-श्रोत्रमनस्त्वगिति। एवं हस्ताधिका अष्टौ ग्रहाः प्राणाः ग्रहत्वेन बन्धनेन गुणेन विशिष्टा निर्दिश्यन्त इत्यर्थः। शीर्ष्णि भवाः शीर्षण्याः। द्वाववाञ्चौ पायूपस्थौ पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि इति दशेमे पुरुषाश्रयाः प्राणाः। [आत्मा].

१. T[1] omits ब्रह्म
२. A. निरूप्यते
३. A adds प्राणाः

भाष्यम्

इति ; क्वचिन्नव—“ सप्त वै शीर्षण्याः प्राणा द्वाववाञ्चौ ” इति ; क्वचि-
द्दश—“ नव वै पुरुषे प्राणाः । नाभिर्दशमी । ” इति ; क्वचिदेकादश—
“ दशेमे पुरुषे प्राणा आत्मैकादशः ” इति ; क्वचित् द्वादश—“ सर्वेषां
स्पर्शानां त्वगेकायनम् ” इत्यत्र ; क्वचित् त्रयोदश “ चक्षुश्च द्रष्टव्यं च ” 5
इत्यत्र ; एवं हि विप्रतिपन्नाः प्राणेयत्तां प्रति श्रुतयः । किं तावत्प्राप्तम् ?
सप्तैव प्राणा इति । कुतः ? गतेः ; यतस्तावन्तोऽवगम्यन्ते—“ सप्त
प्राणाः प्रभवन्ति तस्मात् ” इत्येवंविधासु श्रुतिषु, विशेषिताश्चैते “ सप्त
वै शीर्षण्याः प्राणाः ” इत्यत्र । ननु “ प्राणा गुहाशया निहिताः सप्त-
सप्त ” इति वीप्सा श्रूयते ; सा सप्तभ्योऽतिरिक्तान्प्राणान्गमयतीति— 10
नैष दोषः ; पुरुषभेदाभिप्रायेयं वीप्सा—प्रतिपुरुषं सप्त सप्त प्राणा इति ;
न तत्त्वभेदाभिप्राया—सप्त सप्त अन्येऽन्ये प्राणा इति । नन्वष्टत्वादिकापि
संख्या प्राणेषूदाहृता ; कथं सप्तैव स्युः ? सत्यमुदाहृता ; विरोधात्त्व-
न्यतमा संख्याध्यवसातव्या ; तत्र स्तोककल्पनानुरोधात्सप्तसंख्याध्य-
वसानम् ; वृत्तिभेदापेक्षं च संख्यान्तरश्रवणमिति मन्यते ॥ 15

प्रकटार्थविवरणम्

आप्नोत्यधितिष्ठति इतरकरणग्राममिति, अन्तःकरणमित्यर्थः । द्वादशेति हृदय-
मधिकम् । त्रयोदशेत्यहङ्कारोऽधिकः । प्राणानामियत्ताम् संख्यापरिमितिम्
प्रतिप्रश्नपूर्वकं सूत्रं योजयति—किं तावदित्यादिना ॥ गतेरिति सप्तानामव-
गमादित्युक्तम् ; तदाक्षिपति—ननु प्राणा गुहाशया इति ॥ गुहायां हृदये 20
शेरत इति गुहाशयाः सप्ताः । निहिताः निक्षिप्ता इत्यर्थः । वीप्सा पुनर्वचनम्
अन्यथापि संभवतीत्याह पूर्ववादी—नैष दोष इति ॥ पुनः सप्तत्वमाक्षिपति
—नन्वष्टत्वादिकापीति ॥ अष्टत्वादिसंख्योदाहृतेत्येतत्सत्यम् ; किं तु सप्त-
त्वावच्छिन्नानामेवाष्टत्वादिसंख्यान्तरावच्छेदविरोधादवश्यमन्यतमा त्याज्या,

१. T. नन्वष्टत्वादिसंख्योदाहृतेति　　३. T and T¹. सप्तत्वा

२. A omits किं तु

भाष्यम्

अत्रोच्यते—

## हस्तादयस्तु स्थितेऽतो नैवम् ॥ २-४-६ ॥

हस्तादयस्त्वपरे सप्तभ्योऽतिरिक्ताः प्राणाः श्रूयन्ते—"हस्तौ
5 वै ग्रहः स कर्मणातिग्राहेण गृहीतो हस्ताभ्यां हि कर्म करोति" इत्येव-
माद्यासु श्रुतिषु; स्थिते च सप्तत्वातिरेके सप्तत्वमन्तर्भावाच्छक्यते संभा-
वयितुम्; हीनाधिकसंख्याविप्रतिपत्तौ हि अधिका संख्या संग्राह्या भवति;
तस्यां हीना अन्तर्भवति न तु हीनायामधिका; अतश्च नैवं मन्तव्यम्—
स्तोककल्पनानुरोधात्सप्तैव प्राणाः स्युरिति । उत्तरसंख्यानुरोधात्
10 एकादशैव ते प्राणाः स्युः; तथा चोदाहृता श्रुतिः—"दशेमे पुरुषे
प्राणा आत्मैकादशः" इति; आत्मशब्देन च अत्र अन्तःकरणं परिगृह्यते,

प्रकटार्थविवरणम्

अन्यतमा च ग्राह्या । तत्र कतमोपादानं भवत्विति वीक्षायां लाघवसाहाय्यात्
सप्तत्वनिश्चयं मन्यते पूर्ववादीत्याह—सत्यमित्यादिना ॥

15 हस्तादयस्तु स्थितोऽतो नैवम् ॥

सिद्धान्तसूत्रं योजयति—हस्तादयस्त्वित्यादिना ॥ गृह्णाति पुरुषं
बध्नातीति ग्रहः; तत्रेन्द्रियाणां विषयसमर्पणेनैव पुरुषबन्धनहेतुत्वादतिग्रहत्वं
विषयाणाम्; ततोऽतिग्रहेण कर्मणा हस्तनिर्वर्त्येन दानेन हस्तो गृहीतः सम्बद्धः;
तदेवाह—हस्ताभ्यां हीति ॥ सप्तत्वातिरेकस्य श्रुतत्वात् सप्तैवेति न शक्यते वक्तु-
20 मित्यर्थः । ननु सप्तत्वमपि श्रुतमेवेत्याशङ्क्याह—स्थिते चेति ॥ किं च कल्पनायां
लाघवमन्वेषणीयम्; नैकादशत्वं कल्पनामात्रमित्याह—तथा चोदाहृतेति ॥
नन्वात्मशब्दः प्रत्यगात्मनि रूढ इत्याशङ्क्याह—आत्मशब्देन चेति ॥ एकाद-
शत्वस्य श्रुतत्वाद्ग्रहणं तर्हि द्वादशत्वत्रयोदशत्वे श्रुतिः किं[श्रुते] न गृह्यते

१. A. विषयान्तराणां   २. TM. दशत्वाभ्युप-

भाष्यम्

करणाधिकारात् । नन्वेकादशत्वादप्यधिके द्वादशत्रयोदशत्वे उदाहृते—सत्यमुदाहृते; न त्वेकादशभ्यः कार्यजातेभ्योऽधिकं कार्यजातमस्ति, यदर्थमधिकं करणं कल्प्येत; शब्दस्पर्शरूपरसगन्धविषयाः पञ्च बुद्धिभेदाः, तदर्थानि पञ्च बुद्धीन्द्रियाणि; वचनादानविहरणोत्सर्गानन्दाः 5 पञ्च कर्मभेदाः, तदर्थानि च पञ्च कर्मेन्द्रियाणि; सर्वार्थविषयं त्रैकाल्यवृत्ति मनस्तु एकम् अनेकवृत्तिकम्; तदेव वृत्तिभेदात् क्वचिद्भिन्नवद्व्यपदिश्यते—"मनो बुद्धिरहंकारश्चित्तं च" इति; तथा च श्रुतिः कामाद्या नानाविधा वृत्तीरनुक्रम्याह—"एतत्सर्वं मन एव" इति । अपि च सप्तैव शीर्षण्यान्प्राणानभिमन्यमानस्य चत्वार एव प्राणा अभिमताः 10 स्युः; स्थानभेदाद्ध्येते चत्वारः सन्तः सप्त गण्यन्ते—"द्वे श्रोत्रे द्वे चक्षुषी द्वे नासिके एका वाक्" इति; न च तावतामपि वृत्तिभेदा इतरे प्राणा इति शक्यते वक्तुम्, हस्तादिवृत्तीनामत्यन्तविजातीयत्वात् । तथा "नव वै पुरुषे प्राणाः । नाभिर्दशमी ।" इत्यत्रापि देहच्छिद्रभेदाभिप्रायेणैव दश प्राणा उच्यन्ते, न प्राणतत्त्वभेदाभिप्रायेण, "नाभिर्दशमी" 15 इति वचनात्; न हि नाभिर्नाम कश्चित्प्राणः प्रसिद्धोऽस्ति; मुख्यस्य तु प्राणस्य भवति नाभिरप्येकं विशेषायतनमिति—अतः "नाभिर्दशमी"

प्रकटार्थविवरणम्

[गृह्येते] इत्याह—नन्वेकादशत्वादपीति ॥ न श्रुतत्वमात्रेणैकादशत्वाङ्गीकारः, किंतु कार्यदर्शनबलेनापीत्याह—सत्यमुदाहृते इत्यादिना ॥ यच्चोक्तं विशेषितत्वा- 20 दिति तद्दूषयति—अपि च सप्तैवेति ॥ यच्चोक्तं वृत्तिभेदापेक्षं संख्यान्तरश्रवणमिति तत्राह—न च तावतामिति ॥ अन्धबधिरादेरपि हस्तादिदर्शनादिति भावः । पूर्वोदाहृतवचनान्तरस्य गतिमाह—तथा नवेति ॥ किंनिमित्तस्तर्हि तत्र प्राणशब्दप्रयोग इत्याशङ्कयाह—मुख्यस्य त्विति ॥ वाक्यान्तराणामपि गत्यन्तरमुक्त्वा सिद्धान्तमुपसंहरति—क्वचिदुपासनार्थमित्यादिना ॥ 25

१. T, T¹ and TM. तावदिति २. A omits वचन

भाष्यम्

इति उच्यते। क्वचिदुपासनार्थं कतिचित्प्राणा गण्यन्ते, क्वचित्प्रदर्शनार्थम्; तदेवं विचित्रे प्राणेयत्ताम्नाने सति, क्व किं परम् आम्नानमिति विवेक्तव्यम्; कार्यजातवशात्त्वेकादशत्वाम्नानं प्राणविषयं प्रमाणमिति
5 स्थितम्॥

इयमपरा सूत्रद्वययोजना—सप्तैव प्राणाः स्युः यतः सप्तानामेव गतिः श्रूयते—"तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" इत्यत्र। ननु सर्वशब्दोऽत्र पठ्यते, तत्कथं सप्तानामेव गतिः प्रतिज्ञायत इति; विशेषितत्वादित्याह—सप्तैव हि प्राणा-
10 श्चक्षुरादयस्त्वक्पर्यन्ता विशेषिता इह प्रकृताः "स यत्रैष चाक्षुषः पुरुषः पराङ् पर्यावर्ततेऽथारूपज्ञो भवत्येकीभवति न पश्यतीत्याहुः" इत्येवमादिनानुक्रमणेन; प्रकृतगामी च सर्वशब्दो भवति; यथा सर्वे ब्राह्मणा भोजयितव्या इति ये निमन्त्रिताः प्रकृता ब्राह्मणास्त एव सर्वशब्देनोच्यन्ते, नान्ये—एवमिहापि ये प्रकृताः सप्त प्राणास्त एव
15 सर्वशब्देनोच्यन्ते, नान्य इति। नन्वत्र विज्ञानमष्टममनुक्रान्तम्; कथं सप्तानामेवानुक्रमणम्? नैष दोषः। मनोविज्ञानयोस्तत्त्वाभेदात् वृत्ति-

प्रकटार्थविवरणम्

वर्णकान्तरमाह—इयमपरेत्यादि॥ सप्तानामेव गमनश्रवणादित्यस्यासिद्धिमाशङ्क्य पदान्तरमवतारयति—ननु सर्वशब्द इति॥ यत्र यस्मि-
20 न्मरणकाले स एष चक्षुरनुग्राहकः सूर्यपुरुषः पराङ् पर्यावर्तते बहिः स्वस्थानं प्रति व्यावर्तते, तदानीं अरूपज्ञो[1] जीवो भवति एकीभवति हृदये चक्षुः; न पश्यतीत्याहुः पार्श्वस्थाः; न जिघ्रति न रसयतीत्यादिना पठनेन सप्तैव विशेषिता इत्यर्थः। ननु तथापि सर्वशब्दः सर्वान् परामृशतीत्याशङ्क्याह—प्रकृतगामी चेति॥ एकीभवति न विजानातीत्यनेन बुद्धिरपि पठि-
25 तास्तीत्याह—नन्वत्रेति॥ सतत्त्वविघातकारणं[2] न भवतीत्याह—नैष दोष

१. T and T¹. रूपज्ञो २. T and T¹. सपूर्वत्वविचारकरं

भाष्यम्

भेदेऽपि सप्तत्वोपपत्तेः । तस्मात्सप्तैव प्राणा इति—एवं प्राप्ते, ब्रूमः—हस्तादयस्त्वपरे सप्तभ्योऽतिरिक्ताः प्राणाः प्रतीयन्ते "हस्तौ वै ग्रहः" इत्यादिश्रुतिषु ; ग्रहत्वं च बन्धनभावः, गृह्यते बध्यते क्षेत्रज्ञः अनेन ग्रहसंज्ञकेन बन्धनेनेति ; स च क्षेत्रज्ञो नैकस्मिन्नेव शरीरे बध्यते, शरीरान्तरेष्वपि, तुल्यत्वाद्बन्धनस्य ; तस्माच्छरीरान्तरसंचारि इदं ग्रहसंज्ञकं बन्धनम् इत्यर्थादुक्तं भवति । तथा च स्मृतिः— 5

"पुर्यष्टकेन लिङ्गेन प्राणाद्येन स युज्यते ।
तेन बद्धस्य वै बन्धो मोक्षो मुक्तस्य तेन च ॥"

इति प्राङ्मोक्षात् ग्रहसंज्ञकेनानेन बन्धनेन अवियोगं दर्शयति ; आथर्वणे च विषयेन्द्रियानुक्रमणे "चक्षुश्च द्रष्टव्यं च" इत्यत्र तुल्यवद्धस्तादीनीन्द्रियाणि सविषयाण्यनुक्रामति—"हस्तौ चादातव्यं चोपस्थश्चानन्दयितव्यं च पायुश्च विसर्जयितव्यं च पादौ च गन्तव्यं च" इति ; तथा "दशेमे पुरुषे प्राणा आत्मैकादशस्ते यदास्माच्छरीरान्मर्त्यादुत्क्रामन्त्यथ रोदयन्ति" इत्येकादशानां प्राणानामुत्क्रान्तिं दर्शयति । सर्वशब्दोऽपि च प्राणशब्देन संबध्यमानोऽशेषान्प्राणानभिदधानो न 10 15

प्रकटार्थविवरणम्

इति ॥ सप्तानां गमनादिति हेत्वसिद्ध्या परिहरति—हस्तादयस्त्वित्यादिना ॥ नन्वत्र हस्तादीनां ग्रहत्वमात्रं प्रतीयते, न तु जीवेन सह उत्क्रमणमित्याशङ्क्य शरीरान्तरसञ्चारित्वमापादयति — ग्रहत्वं चेत्यादिना ॥ प्राणादिभूतपञ्चकं भूतसूक्ष्मपञ्चकं कर्मेन्द्रियपञ्चकं ज्ञानेन्द्रियपञ्चकं मनआदिशब्दवाच्यमन्तःकरणम् अविद्या कामः कर्म चेति पुर्यष्टकम् । लिङ्ग्यतेऽनुमीयत इति लिङ्गम् । वाक्यान्तरबलादपि हस्तादीनामिन्द्रियत्वं देहान्तरसञ्चारित्वं चाह—आथर्वणे चेत्यादिना ॥ यच्चोक्तं प्रकृतगामी सर्वशब्द इति तद्दूषयति—सर्वशब्दोऽपि चेति ॥ 20 25

१. A omits अन्तःकरणं　　२. T and T[1] omit तत्

भाष्यम्

प्रकरणवशेन सप्तस्वेवावस्थापयितुं शक्यते, प्रकरणाच्छब्दस्य बलीयस्त्वात्; सर्वे ब्राह्मणा भोजयितव्या इत्यत्रापि सर्वेषामेव अवनिवर्तिनां ब्राह्मणानां ग्रहणं न्याय्यम्, सर्वशब्दसामर्थ्यात्; सर्वभोजनासंभवात्तु
5 तत्र निमन्त्रितमात्रविषया सर्वशब्दस्य वृत्तिराश्रिता। इह तु न किंचित्सर्वशब्दार्थसंकोचने कारणमस्ति; तस्मात्सर्वशब्देनात्र अशेषाणां प्राणानां परिग्रहः। प्रदर्शनार्थं च सप्तानामनुक्रमणमित्यनवद्यम्। तस्मादेकादशैव प्राणाः—शब्दतः कार्यतश्चेति सिद्धम्॥

[ प्राणाणुत्वाधिकरणम् ]

10 अणवश्च ॥ २-४-७ ॥

अधुना प्राणानामेव स्वभावान्तरमभ्युच्चिनोति। अणवश्चैते प्रकृताः प्राणाः प्रतिपत्तव्याः; अणुत्वं चैषां सौक्ष्म्यपरिच्छेदः, न परमाणुतुल्यत्वम्, कृत्स्नदेहव्यापिकार्यानुपपत्तिप्रसङ्गात्—सूक्ष्मा एते प्राणाः, स्थूलाश्चेत्स्युः मरणकाले शरीरान्निर्गच्छन्तः, बिलादहिरिव उपलभ्ये-

15 प्रकटार्थविवरणम्

अणवश्च ॥

संक्षेपतस्तात्पर्यमाह—अधुनेति ॥ उत्पत्तिसङ्ख्याविषयश्रुतिविप्रतिषेधः[1] परिहृतः; इदानीं परिमाणविषयश्रुतिविप्रतिषेधः[2] परिह्रियत इत्यर्थः। उत्क्रान्त्यानन्त्यश्रुतिभ्यां परिच्छेदसर्वगतत्वसन्देहे सिद्धान्तमेव तावदुपक्रमते—
20 अणवश्चैत इति ॥ अणुशब्दप्रयोगात् परमाणुपरिमाणत्वाशङ्कां प्राप्तां पराकरोति—अणुत्वं चैषामिति[3] ॥ सूक्ष्मत्वं नामानुद्भूतरूपस्पर्शत्वम्; परिच्छेदो मध्यमपरिमाणत्वम्; तदुभयं विवृणोति—सूक्ष्मा एत इत्यादिना ॥

१. T omits परिहृतः...प्रतिषेधः TM and A. प्रतिषेधपरिहारानन्तरं परि-
२. T¹ omits विषय
३. A omits अणुत्वं चैषामिति ॥

भाष्यम्

रन् म्रियमाणस्य पार्श्वस्थैः; परिच्छिन्नाश्चैते प्राणाः, सर्वगताश्चेत्स्युः उत्क्रान्तिगत्यागतिश्रुतिव्याकोपः स्यात्, तद्गुणसारत्वं च जीवस्य न सिध्येत्। सर्वगतानामपि वृत्तिलाभः शरीरदेशे स्यादिति चेत् न, वृत्तिमात्रस्य करणत्वोपपत्तेः; यदेव हि उपलब्धिसाधनम्—वृत्तिः अन्यद्वा—तस्यैव नः करणत्वम्, संज्ञामात्रे विवाद इति करणानां व्यापित्वकल्पना निरर्थिका। तस्मात्सूक्ष्माः परिच्छिन्नाश्च प्राणा इत्यध्यवस्यामः ॥

[ प्राणश्रैष्ठ्याधिकरणम् ]

## श्रेष्ठश्च ॥ २-४-८ ॥

मुख्यश्च प्राण इतरप्राणवद्ब्रह्मविकारः—इत्यतिदिशति। तत्राविशेषेणैव सर्वप्राणानां ब्रह्मविकारत्वमाख्यातम्—"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" इति सेन्द्रियमनोव्यतिरेकेण प्राणस्योत्पत्तिश्रवणात्, "स प्राणमसृजत" इत्यादिश्रवणेभ्यश्च। किमर्थः

प्रकटार्थविवरणम्

पूर्वपक्षमाह—सर्वगतानामपीति ॥ प्राणाः सर्वगताः, सर्वत्रदृष्टकार्यत्वात्, आकाशवत्; "सर्वेऽनन्ताः" इत्यादिश्रुत्यनुमानाभ्यां सर्वगतत्वं सांख्याः प्रतिजानते च [ते; न च] सर्वगतत्वे सर्वत्र तेषामुपलम्भप्रसङ्गः, शरीरदेश एव व्यक्तिलाभादित्यर्थः। दूषयति—नेति ॥ हेतोरसिद्धत्वात् श्रुतेश्चोपासनपरत्वान्नास्ति सर्वगतत्वे तावन्मानम्; रूपादिदर्शनसाधनस्य चास्माकं करणत्वाभ्युपगमान्न संज्ञामात्रे विवादः कर्तव्य इत्यर्थः ॥

श्रेष्ठश्च ॥

एवं तावन्मुख्यप्राणातिरिक्तानां प्राणानां सृष्ट्यादिकमुपपाद्य इदानीं मुख्येऽप्यतिदिशति—मुख्यश्चेति ॥ कुतस्तर्हि ब्रह्मविकारत्वमित्याशङ्क्याह—तत्रेति ॥ पूर्वोक्तन्यायेनैव सिद्धं चेत् किं तर्ह्यतिदेशेनेत्याह—किमर्थ इति ॥

भाष्यम्

पुनरतिदेशः? अधिकाशङ्कापाकरणार्थः—नासदासीये हि ब्रह्मप्रधाने सूक्ते मन्त्रवर्णो भवति—

"न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत्प्रकेतः।
आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किंचनास ॥"

5 इति; आनीदिति प्राणकर्मोपादानात् प्रागुत्पत्तेः सन्तमिव प्राणं सूचयति; तस्मादजः प्राण इति जायते कस्यचिन्मतिः; तामतिदेशेनापनुदति। आनीच्छब्दोऽपि न प्रागुत्पत्तेः प्राणसद्भावं सूचयति, "अवातम्" इति विशेषणात्, "अप्राणो ह्यमनाः शुभ्रः" इति च मूलप्रकृतेः प्राणादिसमस्तविशेषरहितत्वस्य दर्शितत्वात्; तस्मात्कारण-

10 प्रकटार्थविवरणम्

अतिदेशप्रयोजनमाह—आशङ्कापाकरणार्थ इति ॥ आशङ्कास्वरूपं तावदाह—नासदासीये हीति ॥ "नासदासीत्" इत्यारभ्य प्रवृत्तं सूक्तं नासदासीयम्; तस्मिन् ब्रह्मपरे सूक्ते; मन्त्र एव वर्णयतीति मन्त्रवर्णः; भवति दृश्यते इत्यर्थः। तर्हि तस्मिन् महाप्रलयकाले न मृत्युर्मारक आसीत्; अमृतमपि देवानामुपभोग्यं

15 नासीत्; तथा रात्रेर्दिवसस्य चोदयास्तमयाभ्यां प्रकेतश्चिह्नभूतः सवितापि नासीत्; स्वधया सह इति सम्बन्धः, स्वधेति पितृभ्यो दीयमानमन्नम्; पित्राद्यचेनमपि नासीदित्यर्थः। किन्त्ववातमविक्रियं तदेकमानीत्; तस्माद्ध किलान्यत् किंचन परं प्रकृष्टं नास न बभूवेत्यर्थः। अत्र मन्त्रे विवक्षितांशमाह—आनीदितीति ॥ स मन्त्रः सन्तमेव प्राणं सूचयति; कुतः? आनीदचलत् इति प्राणव्या-

20 पारोपादानादित्यर्थः। प्राणव्यापारोपादानं लिङ्गम् "स प्राणमसृजत" इत्यादिबहुश्रुतिविरोधे बाध्यत इति सिद्धान्ताशयः। किंच धातूनां नानार्थत्वात् आनीच्छब्दोऽप्यासीच्छब्दार्थे व्याख्येय इत्याह—आनीच्छब्दोऽपीति ॥ अस्त्वेवं निराकरणप्रकारः; तथापि श्रेष्ठशब्दस्य प्राणे प्रसिद्ध्यभावात् कथं

१. T, T¹ and TM. नास्ति
२. A. किञ्च
३. A. भासीत् तस्माद्यत्
४. T, T¹ and TM omit इति

भाष्यम्

सद्भावप्रदर्शनार्थ एवायम् आनीच्छब्द इति । "श्रेष्ठः" इति च मुख्यं प्राणमभिदधाति, "प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च" इति श्रुतिनिर्देशात्; ज्येष्ठश्च प्राणः शुक्रनिषेककालादारभ्य तस्य वृत्तिलाभात्—न चेत्तस्य तदानीं वृत्तिलाभः स्यात्, योनौ निषिक्तं शुक्रं पूयेत, न संभवेद्वा; 5 श्रोत्रादीनां तु कर्णशष्कुल्यादिस्थानविभागनिष्पत्तौ वृत्तिलाभान्न ज्येष्ठत्वम्; श्रेष्ठश्च प्राणः, गुणाधिक्यात्—"न वै शक्ष्यामस्त्वदृते जीवितुम्" इति श्रुतेः ॥

[ वायुक्रियाधिकरणम् ]

## न वायुक्रिये पृथगुपदेशात् ॥ २-४-९ ॥ 10

स पुनर्मुख्यः प्राणः किंस्वरूप इतीदानीं जिज्ञास्यते । तत्र प्राप्तं तावत्—श्रुतेर्वायुः प्राण इति; एवं हि श्रूयते—"यः प्राणः स वायुः स एष वायुः पञ्चविधः प्राणोऽपानो व्यान उदानः समानः" इति । अथ वा तन्त्रान्तरीयाभिप्रायात् समस्तकरणवृत्तिः प्राण इति प्राप्तम्; एवं हि तन्त्रान्तरीया आचक्षते—"सामान्या करणवृत्तिः प्राणाद्या 15 वायवः पञ्च" इति ॥

अत्रोच्यते—न वायुः प्राणः, नापि करणव्यापारः; कुतः? पृथगुप-

प्रकटार्थविवरणम्

सूत्रकारः "श्रेष्ठश्च" इति सूत्रयामासेत्याशङ्क्याह — श्रेष्ठ इति चेति ॥ श्रुतिं योजयति—श्रेष्ठश्च प्राण इत्यादिना ॥ 20

न वायुक्रिये पृथगुपदेशात् ॥

एवं प्राणस्योत्पत्तिं निरूप्य स्वभावविशेषं निरूपयितुमुपक्रमत इत्याह— स पुनरिति ॥ पूर्वपक्षमाह—तत्र प्राप्तमिति ॥ सांख्याभिप्रायेण पूर्व-पक्ष इत्याह—अथ वेति ॥ सिद्धान्तसूत्रमवतारयति—अत्रोच्यत इति ॥

१. T omits स

२. TM. विपूर्वपक्ष

T and T[1] add वायु

भाष्यम्

देशात्; वायोस्तावत्प्राणस्य पृथगुपदेशो भवति—"प्राण एव ब्रह्मण-श्चतुर्थः पादः स वायुना ज्योतिषा भाति च तपति च" इति; न हि वायुरेव सन् वायोः पृथगुपदिश्येत। तथा करणवृत्तेरपि पृथगुपदेशो
5 भवति, वागादीनि करणान्यनुक्रम्य तत्र तत्र पृथक्प्राणस्यानुक्रमणात्, वृत्तिवृत्तिमतोश्चाभेदात्; न हि करणव्यापार एव सन् करणेभ्यः पृथ-गुपदिश्येत। तथा "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुः" इत्येवमादयोऽपि वायोः करणेभ्यश्च प्राणस्य पृथगुपदेशा अनु-सर्तव्याः। न च समस्तानां करणानामेका वृत्तिः संभवति, प्रत्येक-
10 मेकैकवृत्तित्वात्, समुदायस्य च अकारकत्वात्; ननु पञ्जरचालनन्या-येनैतद्भविष्यति—यथा एकपञ्जरवर्तिन एकादश पक्षिणः प्रत्येकं प्रतिनिय-तव्यापाराः सन्तः संभूयैकं पञ्जरं चालयन्ति, एवमेकशरीरवर्तिन एकादश प्राणाः प्रत्येकं प्रतिनियतवृत्तयः सन्तः संभूय एकां प्राणाख्यां

प्रकटार्थविवरणम्

15 भाति प्रकाशते; तपति व्यवहारक्षमो भवति; वाय्वधिष्ठितत्वेन वायोर्ज्यो-तिष्ट्वमौपचारिकम्। ननु करणेभ्य एव प्राणस्य पृथगुपदेशः, न वृत्तेरित्या-शङ्क्याह—वृत्तिवृत्तिमतोश्चेति॥ एवं श्रुत्यवष्टम्भेन पक्षद्वयं निराकृत्य करण-वृत्तित्वे दूषणान्तरमाह—न च समस्तानामिति॥ या चक्षुःसाध्या वृत्तिः सैव श्रोत्रसाध्या न भवति। चक्षुरादीनां प्रत्येकमेकैकरूपग्रहणादिवृत्तौ स्वातन्त्र्यात्,
20 समुदायस्य च तथावस्तुत्वेनाकरण[नाकरक]त्वादित्यर्थः। दृष्टान्तावष्टम्भेन समुदितानां कारकत्वं शङ्कते–ननु पञ्जरेत्यादिना॥ वैलक्षण्याभिधानेन परि-

१. T and T[1] परिव्यव
२. T[1]. कारणेभ्यः
३. T and T[1]. ष्टम्भौ
४. A. तथावस्तु

भाष्यम्

वृत्तिं प्रतिलप्स्यन्त इति; नेत्युच्यते—युक्तं तत्र प्रत्येकवृत्तिभिरवान्तरव्यापारैः पञ्जरचालनानुरूपैरेवोपेताः पक्षिणः संभूय एकं पञ्जरं चालयेयुरिति, तथा दृष्टत्वात्; इह तु—श्रवणाद्यवान्तरव्यापारोपेताः प्राणा न संभूय प्राण्युरिति युक्तम्, प्रमाणाभावात्, अत्यन्तविजातीयत्वाच्च श्रवणादिभ्यः प्राणनस्य । तथा प्राणस्य श्रेष्ठत्वाद्युद्घोषणम्, गुणभावोपगमश्च तं प्रति वागादीनाम्, न करणवृत्तिमात्रे प्राणेऽवकल्पते । तस्मादन्यो वायुक्रियाभ्यां प्राणः । कथं तर्हीयं श्रुतिः "यः प्राणः स वायुः" इति? उच्यते—वायुरेवायम् अध्यात्ममापन्नपञ्चव्यूहो विशेषात्मनावतिष्ठमानः प्राणो नाम भण्यते, न तत्त्वान्तरम्, नापि वायुमात्रम्; अतश्चोभे अपि भेदाभेदश्रुती न विरुध्येते ॥

स्यादेतत्—प्राणोऽपि तर्हि जीववदस्मिञ्शरीरे स्वातन्त्र्यं प्राप्नोति, श्रेष्ठत्वात्, गुणभावोपगमाच्च तं प्रति वागादीनामिन्द्रियाणाम्; तथा हि अनेकविधा विभूतिः प्राणस्य श्राव्यते—सुप्तेषु वागादिषु प्राण एवैको जागर्ति, प्राण एवैको मृत्युना अनाप्तः, प्राणः संवर्गो वागादीन् संवृङ्क्ते, प्राण इतरान्प्राणान्रक्षति मातेव पुत्रान्—इति; तस्मात्प्राणस्यापि जीववत्स्वातन्त्र्यप्रसङ्गः; तं परिहरति—

प्रकटार्थविवरणम्

हरति—नेत्युच्यत इत्यादिना ॥ प्रमाणाभावादिति ॥ अन्धबधिरादीनां प्राणाभावप्रसङ्गादिति भावः । किंच वागादिवृत्तित्वे प्राणस्य वागादिपारतन्त्र्यं वक्तव्यम् । तद्विपरीत्यं च प्रतीयत इत्याह—तथा प्राणस्येति ॥ श्रुतेर्गतिं पृच्छति—कथं तर्हीति ॥ यथा मृदोऽवस्थाविशेषो घटो मृदात्मा, तथा वायोरवस्थाविशेषः प्राणो वाय्वात्मेति गतिमाह—उच्यत इति ॥ अध्यात्मं देहे प्राप्तपञ्चरूपो व्यावृत्तरूपेणावतिष्ठमानो वायुरेव प्राणो भण्यत इत्यर्थः ॥

यद्युक्तनीत्या वागादिवृत्तिः प्राणो न भवति, तर्हि तस्य भोक्तृत्वं प्रसज्येत; अतोऽनिष्टपरिहाराय बलात्करणवृत्तित्वमभ्युपगन्तव्यामित्याह — स्यादेतदिति ॥

भाष्यम्

# चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ २-४-१० ॥

तुशब्दः प्राणस्य जीववत् स्वातन्त्र्यं व्यावर्तयति। यथा चक्षुरादीनि, राजप्रकृतिवत्, जीवस्य कर्तृत्वं भोक्तृत्वं च प्रत्युपकरणानि,
5 न स्वतन्त्राणि; तथा मुख्योऽपि प्राणः, राजमन्त्रिवत् जीवस्य सर्वार्थकरत्वेन उपकरणभूतः, न स्वतन्त्रः। कुतः? तत्सहशिष्ट्यादिभ्यः; तैश्चक्षुरादिभिः सहैव प्राणः शिष्यते प्राणसंवादादिषु; समानधर्माणां च सह शासनं युक्तं बृहद्रथन्तरादिवत्; आदिशब्देन संहतत्वाचेतनत्वादीन् प्राणस्य स्वातन्त्र्यनिराकरणहेतून् दर्शयति ॥

10 स्यादेतत्—यदि चक्षुरादिवत् प्राणस्य जीवं प्रति करणभावोऽभ्युपगम्येत, विषयान्तरं रूपादिवत्प्रसज्येत—रूपालोचनादिभिर्वृत्तिभिर्यथास्वं चक्षुरादीनां जीवं प्रति करणभावो भवति। अपि च एकादशैव

प्रकटार्थविवरणम्

चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥

15 प्राणो न स्वतन्त्रः, जीवस्य भोगसाधनत्वात्, चक्षुरादिवदित्याह—तुशब्द इत्यादिना ॥ ननु सहपाठमात्रेण कथं चक्षुरादिसाम्यमित्याशङ्क्याह—समानधर्माणां चेति ॥ यथा बृहद्रथन्तरे समानीया इत्यादौ बृहद्रथन्तरयोः सहपाठः कर्मणि सह प्रयोगसाम्येन तद्वदित्यर्थः। इतश्च प्राणो न स्वतन्त्रः, सावयवत्वात्, अचेतनत्वात्, परिच्छिन्नत्वात्, शरीरवदित्याह—
20 आदिशब्देनेति ॥

यज्जीवस्य भोगकरणं तत् सविषयं दृष्टम्, यथा चक्षुरादि; तथा प्राणस्यापि विषयो वक्तव्यः; तदभावात् स्वतन्त्रः प्राण इत्याह—स्यादेतदिति ॥ किं च प्राणसाध्यप्रयोजनाभावादपि न प्राणाख्यं तत्त्वमभ्युपगन्तव्यम्, द्वादशेन्द्रियवदित्याह—अपि चेति ॥

१. A adds आशङ्क्य

भाष्यम्

कार्यजातानि रूपालोचनादीनि परिगणितानि, यदर्थमेकादश प्राणाः संगृहीताः; न तु द्वादशमपरं कार्यजातमवगम्यते, यदर्थमयं द्वादशः प्राणः प्रतिज्ञायत इति; अत उत्तरं पठति—

## अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॥ २-४-११ ॥

न तावद्विषयान्तरप्रसङ्गो दोषः, अकरणत्वात्प्राणस्य; न हि चक्षुरादिवत्प्राणस्य विषयपरिच्छेदेन करणत्वमभ्युपगम्यते; न च अस्य एतावता कार्याभाव एव; कस्मात्? तथा हि श्रुतिः प्राणान्तरेष्वसंभाव्यमानं मुख्यप्राणस्य वैशेषिकं कार्यं दर्शयति प्राणसंवादादिषु— "अथ ह प्राणा अहंश्रेयसि व्यूदिरे" इत्युपक्रम्य, "यस्मिन्व उत्क्रान्ते शरीरं पापिष्ठतरमिव दृश्येत स वः श्रेष्ठः" इति च उपन्यस्य, प्रत्येकं वागाद्युत्क्रमणेन तद्वृत्तिमात्रहीनं यथापूर्वं जीवनं दर्शयित्वा, प्राणोच्चिक्रमिषायां वागादिशैथिल्यापत्तिं शरीरपातप्रसङ्गं च दर्श-

प्रकटार्थविवरणम्

अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॥

आद्यदोषं परिहरति—न तावदिति ॥ शरीरवद्विषयाभावेऽपि जीवभोगसाधनत्वं प्राणस्य भविष्यतीत्यर्थः। द्वितीयदोषं परिहरति—न चास्यैतावतेति ॥ अहंश्रेयसीति स्वस्य[1] स्वस्य श्रेष्ठतानिमित्तम्[2]; व्यूदिरे[3] विवादं चक्रिरे ॥ तद्व्यक्ति[तद्वृत्ति]मात्रहीनामिति ॥ मूकादिभावेन। न केवलं प्राणस्योत्क्रमणेच्छायां वागादिशैथिल्यापत्तिलिङ्गेन प्राणनिबन्धना शरीरादिस्थितिः, किं

१. T[1] omits स्वस्य

२. T, TM and A. श्रेष्ठानिमित्तं

३. T and T[1]. व्यूचिरे

भाष्यम्

यन्ती श्रुतिः प्राणनिमित्तां शरीरेन्द्रियस्थितिं दर्शयति ; "तान्वरिष्ठः प्राण उवाच मा मोहमापद्यथाहमेवैतत्पञ्चधात्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारयामि " इति च एतमेवार्थं श्रुतिराह ; "प्राणेन रक्षन्नवरं
5 कुलायम् " इति च सुप्तेषु चक्षुरादिषु प्राणनिमित्तां शरीररक्षां दर्शयति ; "यस्मात्कस्माच्चाङ्गात्प्राण उत्क्रामति तदेव तच्छुष्यति " इति "तेन यदश्नाति यत्पिबति तेनेतरान्प्राणानवति " इति च प्राणनिमित्तां शरीरेन्द्रियपुष्टिं दर्शयति ; "कस्मिन्न्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति स प्राणमसृजत " इति च प्राण-
10 निमित्ते जीवस्योत्क्रान्तिप्रतिष्ठे दर्शयति ॥

## पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ २-४-१२ ॥

इतश्चास्ति मुख्यस्य प्राणस्य वैशेषिकं कार्यम्, यत्कारणं पञ्चवृत्तिरयं व्यपदिश्यते श्रुतिषु—"प्राणोऽपानो व्यान उदानः समानः " इति ;

प्रकटार्थविवरणम्

15 त्विममर्थं स्वयं निर्वक्तीत्याह—तान्वरिष्ठ इति ॥ श्रुत्यन्तरमाह—प्राणेन रक्षन्निति ॥ अवरं निकृष्टम् ; कुलायं गृहं शरीराख्यम् ; प्राणानुपसंहारेण रक्षन् जीवः सुषुप्तिं याति । प्राणस्याप्युपसंहारेऽमृतभ्रान्तिरेव भवेदित्यर्थः । प्राणस्य कार्यान्तरं श्रुत्यन्तरेणाह यस्मात्कस्माच्चेत्यादिना ॥

पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥

20 पञ्चसंख्याभिप्रायाच्चेत् कामाद्या वृत्तयो न[1] परिगृह्यन्ते, तर्हि ज्ञानेऽपि

१. A omits न

भाष्यम्

वृत्तिभेदश्चायं कार्यभेदापेक्षः—प्राणः प्राग्वृत्तिरुच्छ्वासादिकर्मा, अपानः अवाग्वृत्तिर्निश्वासादिकर्मा, व्यानः तयोः संधौ वर्तमानो वीर्यवत्कर्महेतुः, उदान ऊर्ध्ववृत्तिरुत्क्रान्त्यादिहेतुः, समानः समं सर्वेष्वङ्गेषु योऽन्नरसान्नयति—इत्येवं पञ्चवृत्तिः प्राणः, मनोवत्—यथा मनसः पञ्च वृत्तयः, एवं प्राणस्यापीत्यर्थः । श्रोत्रादिनिमित्ताः शब्दादिविषया मनसः पञ्च वृत्तयः प्रसिद्धाः, न तु "कामः संकल्पः" इत्याद्याः परिपठिता गृह्येरन्, पञ्चसंख्यातिरेकात् । नन्वत्रापि श्रोत्रादिनिरपेक्षा भूतभविष्यदादिविषया अपरा मनसो वृत्तिरस्तीति समानः पञ्चसंख्यातिरेकः; एवं तर्हि "परमतमप्रतिषिद्धमनुमतं भवति" इति न्यायात् इहापि योगशास्त्रप्रसिद्धा मनसः पञ्चवृत्तयः परिगृह्यन्ते "प्रमाणविपर्ययविकल्पनिद्रास्मृतयः" नाम; बहुवृत्तित्वमात्रेण वा मनः प्राणस्य निदर्शनमिति द्रष्टव्यम् । जीवोपकरणत्वमपि प्राणस्य पञ्चवृत्तित्वात्, मनोवत्—इति वा योजयितव्यम् ॥

प्रकटार्थविवरणम्

पञ्चत्वनियमो नास्तीत्याह—नन्वत्रापीति ॥ अरुचिं प्रदर्श्य प्रकारान्तरेणाह—एवं तर्हीति ॥ प्रमासाधनं प्रमाणमिति; अध्यवसायो विपर्ययः; "शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः"; अग्रहणं निद्रा; अनुभूतमात्रज्ञानं स्मृतिः; परसिद्धोदाहरणेन परः प्रतिबोधनीय इत्यस्मिन्नंशे विरोधाभावाभिप्रायेणाप्रतिषिद्धत्वमुक्तम्, न तु रहस्याभिप्रायेण, विपर्ययादीनां अविद्यावृत्तित्वाभ्युपगमात् । अत एव पतञ्जलिपरिगणिता वृत्तीर्हित्वा स्वाभिप्रायेण व्याचष्टे—बहुवृत्तित्वमात्रेण वेति ॥ एवं प्राणस्य कार्यसद्भावे सूत्रं व्याख्यायेदानीं जीवोपकरणत्वेऽपि योजयितव्यमित्याह—जीवोपकरणत्वमपीति ॥

भाष्यम्

[ श्रेष्ठाणुत्वाधिकरणम् ]

# अणुश्च ॥ २-४-१३ ॥

अणुश्चायं मुख्यः प्राणः प्रत्येतव्यः, इतरप्राणवत् । अणुत्वं च
5 इहापि सौक्ष्म्यपरिच्छेदौ, न परमाणुतुल्यत्वम् , पञ्चभिर्वृत्तिभिः कृत्स्न-
शरीरव्यापित्वात् ; सूक्ष्मः प्राणः, उत्क्रान्तौ पार्श्वस्थेन अनुपलभ्य-
मानत्वात् ; परिच्छिन्नश्च, उत्क्रान्तिगत्यागतिश्रुतिभ्यः । ननु विभुत्व-
मपि प्राणस्य समाम्नायते—"समः प्लुषिणा समो मशकेन समो नागेन
सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण" इत्येवमादिषु प्रदेशेषु ; तदु-
10 च्यते—आधिदैविकेन समष्टिव्यष्टिरूपेण हैरण्यगर्भेण प्राणात्मनैव
एतद्विभुत्वमाम्नायते, न आध्यात्मिकेन । अपि च "समः प्लुषिणा" इत्या-
दिना साम्यवचनेन प्रतिप्राणिवर्तिनः प्राणस्य परिच्छेद एव प्रदर्श्यते ;
तस्माददोषः ॥

प्रकटार्थविवरणम्

15 अणुश्च ॥

एवं तावन्मुख्यस्य प्राणस्य सृष्टिं स्वभावविशेषं निरूप्येदानीं परिमाण-
मतिदिशति—अणुश्चायमिति ॥ अभ्यधिकाशङ्कां दर्शयति—ननु विभुत्वम-
पीति ॥ प्लुषिः मशकादपि सूक्ष्मो जन्तुः ; नागः हस्ती ; प्राणस्य सर्वात्मत्व-
प्रतिपादनात्[१] विभुत्वमवगम्यते ; अतस्तद्विरुद्धं परिच्छेदाङ्गीकरणमिति भावः ।
20 आधिदैविकस्य विभुत्वम् , आध्यात्मिकस्य चोत्क्रमणादिश्रवणेन परिच्छिन्नत्व-
मिति विषयभेदान्न विरोध इत्याह—आधिदैविकेनेति ॥ समष्टिव्यष्टिरूपेण
अनुगतव्यावृत्तरूपेणेत्यर्थः । विभुत्वप्रतिपादनमङ्गीकृत्योक्तम् ; इदानीं तदेव
नास्तीत्याह—अपि चेति ॥

१. T and A omit विभुत्वमाध्यात्मिकस्य

भाष्यम्

[ ज्योतिराद्यधिकरणम् ]

## ज्योतिराद्यधिष्ठानं तु तदामननात् ॥ २-४-१४ ॥

ते पुनः प्रकृताः प्राणाः किं स्वमहिम्नैव स्वस्मै स्वस्मै कार्याय प्रभवन्ति, आहोस्विद्देवताधिष्ठिताः प्रभवन्ति इति विचार्यते । तत्र प्राप्तं 5 तावत्—यथास्वं कार्यशक्तियोगात् स्वमहिम्नैव प्राणाः प्रवर्तेरन्निति ; अपि च देवताधिष्ठितानां प्राणानां प्रवृत्तावभ्युपगम्यमानायां तासामेवाधिष्ठात्रीणां देवतानां भोक्तृत्वप्रसङ्गात् शारीरस्य भोक्तृत्वं प्रलीयेत ; अतः स्वमहिम्नैव एषां प्रवृत्तिरिति ; एवं प्राप्ते, इदमुच्यते—ज्योतिराद्यधिष्ठानं तु—इति । तुशब्देन पूर्वपक्षो व्यावर्त्यते ; ज्योतिरादिभिर- 10 ग्न्याद्यभिमानिनीभिर्देवताभिरधिष्ठितं वागादिकरणजातं स्वकार्येषु प्रवर्तत इति प्रतिजानीते । हेतुं च व्याचष्टे—तदामननादिति; तथा हि आमनन्ति—“अग्निर्वाग्भूत्वा मुखं प्राविशत्” इत्यादि ; अग्नेश्चायं वाग्भावो

प्रकटार्थविवरणम्

ज्योतिराद्यधिष्ठानं तु तदामननात् ॥ 15

रूपग्रहण[हणादि]कार्याश्चक्षुरादयः पूर्वं निर्णीताः ; तत्रान्वयव्यतिरेकाभ्याम्, देवताधिष्ठितत्ववचनाच्च संशयमाह–ते पुनरिति ॥ पूर्वपक्षमाह—तत्र प्राप्तं तावदिति ॥ सूत्रं योजयति—तुशब्देनेत्यादिना ॥ नन्वग्नेर्वाग्भावो मुखप्रवेशश्च श्रूयते, न तु देवतात्वेन अधिष्ठातृत्वमित्याशङ्क्याह—अग्नेश्चायमिति ॥ कण्ठोष्ठादिप्रदेशसमवेतं शब्दव्यञ्जकं करणं वागुच्यते । तस्याश्च 20 वाचः श्रोत्रवच्छब्दव्यञ्जकत्वेन आकाशकार्यत्वान्नाग्नेरुपादानतया वाग्भावः संभवति ; नापि मुखे प्रवेशः, दाहप्रसङ्गात् ; अतोऽग्निर्वागभिमानिनी देवता, तस्या वागधिष्ठातृत्वमात्रं तद्भाव उपचर्यत इति भावः । उक्तं व्याख्यानमन्य-

१. T and TM. ग्न्यभिमानिनी

A. साग्न्यभि-

भाष्यम्

मुखप्रवेशश्च देवतात्मना अधिष्ठातृत्वमङ्गीकृत्य उच्यते; न हि देवता-
संबन्धं प्रत्याख्याय अग्नेः वाचि मुखे वा कश्चिद्विशेषसंबन्धो दृश्यते;
तथा "वायुः प्राणो भूत्वा नासिके प्राविशत्" इत्येवमाद्यपि योजयित-
5 व्यम् । तथान्यत्रापि "वागेव ब्रह्मणश्चतुर्थः पादः सोऽग्निना ज्योतिषा
भाति च तपति च" इत्येवमादिना वागादीनाम् अग्न्यादिज्योतिष्ट्वादि-
वचनेन एतमेवार्थं द्रढयति । "स वै वाचमेव प्रथमामत्यवहत्सा यदा
मृत्युमत्यमुच्यत सोऽग्निरभवत्" इति च एवमादिना वागादीनामग्न्या-
दिभावापत्तिवचनेन एतमेवार्थं द्योतयति । सर्वत्र च अध्यात्माधिदैवत-
10 विभागेन वागाद्यग्न्याद्यनुक्रमणम् अनयैव प्रत्यासत्त्या भवति । स्मृता-
वपि—

"वागध्यात्ममिति प्राहुर्ब्राह्मणास्तत्त्वदर्शिनः ।
वक्तव्यमधिभूतं तु वह्निस्तत्राधिदैवतम् ॥"

इत्यादिना वागादीनामग्न्यादिदेवताधिष्ठितत्वं सप्रपञ्चं दर्शितम् । यदु-
15 क्तम्—स्वकार्यशक्तियोगात्स्वमहिम्नैव प्राणाः प्रवर्तेरन्निति, तदयुक्तम्,

प्रकटार्थविवरणम्

श्रुत्यतिदिशति—तथा वायुरिति ॥ घ्राणस्य पार्थिवत्वात् न साक्षाद्वायोस्त-
द्भावः संभवति; ततोऽत्राप्यधिष्ठातृत्वमेव विवक्षितमित्यर्थः । लिङ्गान्तरमाह—
स वै वाचमेवेति ॥ स प्राणः; प्रथमां प्रधानां उद्गाने वाचमेवात्यवहत्
20 प्रापयत् स्वरूपं मृत्युमोक्षणेन; सा मृत्युं पाप्मानं यदातीत्यामुच्यत मोचिता
प्राणज्ञानेन, "तदा सोऽग्निरभवत्" इति वाचोऽग्निभावः प्रतीयते स मुख्यो न
संभवति, कारणादन्यत्र कार्यस्य लयानुपपत्तेः; तस्माद्वागिति वागभिमानिनी
देवता तदभिमानं हित्वा केवलाग्न्यभिमानिन्यभवदित्यर्थः । किं च संवर्ग-
विद्यादिषु अध्यात्मं वागादयः, अधिदैवमग्न्यादयः पठ्यन्ते । तदप्यधिष्ठा-
25 तृत्वाधिष्ठेयत्वसम्बन्धेनैवेत्याह — सर्वत्र चेति ॥ पूर्वपक्षबीजमुन्मूलयति—
यदुक्तमित्यादिना ॥ ननु शकटादीनां यद्यपि बलीवर्दाद्यधिष्ठितानां प्रवृत्ति-

१. T omits मोक्षणेन सा मृत्युं

भाष्यम्

शक्तानामपि शकटादीनामनडुदाद्यधिष्ठितानां प्रवृत्तिदर्शनात्; उभयथोपपत्तौ चागमाद्देवताधिष्ठितत्वमेव निश्चीयते ॥

यदप्युक्तम्—देवतानामेवाधिष्ठात्रीणां भोक्तृत्वप्रसङ्गः, न शारीरस्येति, तत्परिह्रियते— 5

## प्राणवता शब्दात् ॥ २-४-१५ ॥

सतीष्वपि प्राणानामधिष्ठात्रीषु देवतासु प्राणवता कार्यकरणसंघातस्वामिना शारीरेणैव एषां प्राणानां संबन्धः श्रुतेरवगम्यते; तथा हि श्रुतिः—"अथ यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुरथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणम्" इत्येवंजातीयका शारीरेणैव प्राणानां संबन्धं श्रावयति । अपि च अनेकत्वात्प्रतिकरणमधिष्ठात्रीणां देवतानां न भोक्तृत्वमस्मिञ्शरीरेऽवकल्पते; एको ह्ययमस्मिन् शरीरे शारीरो भोक्ता प्रतिसंधानादिसंभवादवगम्यते ॥ 10

प्रकटार्थविवरणम्

दृष्टा, तथापि क्षीरादीनामनधिष्ठितानामपि दध्यादिप्रवृत्तिर्दृष्टा; उभयथा संभवे कथं निर्णय इत्याशङ्क्याह—उभयथोपपत्तौ चेति ॥ 15

पूर्ववाद्युक्तमुपपत्त्यन्तरं निराकर्तुं उत्तरसूत्रमवतारयति—यदप्युक्तमित्यादिना ॥

प्राणवता शब्दात् ॥

यत्र यस्मिन्काले देहच्छिद्रमेव एतदाकाशमनुविषण्णमनुगतं चक्षुर्भवति, तत्र स पुरुषश्चाक्षुषः चक्षुरभिमानी सन्द्रष्टा भवति। तस्य च दर्शनाय साधनं चक्षुरित्यर्थः। 'योऽहं रूपमद्राक्षं सोऽहं शृणोमि' इत्येकस्यैव प्रत्यभिज्ञानात् बहूनां च भोक्तृत्वे विरुद्धदिक्क्रियस्य शरीरस्य भेदप्रसङ्गान्न बहूनां भोक्तृत्वं युक्तमित्याह—अपि चानेकत्वादिति ॥ 20

१. T, T[1] and TM omit यत्र

भाष्यम्

## तस्य च नित्यत्वात् ॥ २-४-१६ ॥

तस्य च शारीरस्यास्मिन् शरीरे भोक्तृत्वेन नित्यत्वम्—पुण्यपापोपलेपसंभवात् सुखदुःखोपभोगसंभवाच्च, न देवतानाम्; ता हि परस्मिन्नैश्वर्ये पदेऽवतिष्ठमाना न हीनेऽस्मिञ्शरीरे भोक्तृत्वं प्रतिलब्धुमर्हन्ति; श्रुतिश्च भवति—"पुण्यमेवामुं गच्छति न ह वै देवान्पापं गच्छति" इति। शारीरेणैव च नित्यः प्राणानां संबन्धः, उत्क्रान्त्यादिषु तदनुवृत्तिदर्शनात्—"तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" इत्यादिश्रुतिभ्यः। तस्मात्सतीष्वपि करणानां नियन्त्रीषु देवतासु न शारीरस्य भोक्तृत्वमपगच्छति; करणपक्षस्यैव हि देवताः, न भोक्तृपक्षस्येति ॥

[ इन्द्रियाधिकरणम् ]

## त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ २-४-१७ ॥

मुख्यश्चैक इतरे चैकादश प्राणा अनुक्रान्ताः; तत्रेदमपरं संदिह्यते—किं मुख्यस्यैव प्राणस्य वृत्तिभेदा इतरे प्राणाः, आहोस्वित् तत्त्वा-

प्रकटार्थविवरणम्

तस्य च नित्यत्वात् ॥

किं च स्वकर्मोपार्जितशरीरे जीवस्य भोक्तृत्वस्य प्रतिनियतत्वादनियमेन कदाचिद्देवतानां भोक्तृत्वम्, कदाचिज्जीवस्येत्यपि नाशङ्कनीयमित्याह—तस्य च नित्यत्वादिति ॥ प्रकारान्तरेण व्याचष्टे—शारीरेणैव च नित्य इति ॥ उत्क्रमणादिषु शारीरस्य प्राणसंबन्धाव्यभिचारात् तस्यैव प्राणस्वामित्वम्, देवतानां तु परस्वामिकरथसारथिवदधिष्ठातृत्वमात्रमिति भावः ॥

त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥

उक्तमनूद्य भेदाभेदश्रुतिद्वयदर्शनात् सन्देहमाह—मुख्यश्चैक इत्यादिना ॥

१. A omits मात्र

भाष्यम्

न्तराणीति । किं तावत्प्राप्तम्? मुख्यस्यैवेतरे वृत्तिभेदा इति; कुतः? श्रुतेः । तथा हि श्रुतिर्मुख्यमितरांश्च प्राणान्संनिधाप्य, मुख्यात्मतामितरेषां ख्यापयति—"हन्तास्यैव सर्वे रूपमसामेति त एतस्यैव सर्वे रूपमभवन्" इति; प्राणैकशब्दत्वाच्चैकत्वाध्यवसायः; इतरथा ह्यन्याय्यमनेकार्थत्वं प्राणशब्दस्य प्रसज्येत, एकत्र वा मुख्यस्येतरत्र लाक्षणिकत्वमापद्येत । तस्माद्यथैकस्यैव प्राणस्य प्राणाद्याः पञ्च वृत्तयः, एवं वागाद्या अप्येकादशेति; एवं प्राप्ते, ब्रूमः—तत्त्वान्तराण्येव प्राणाद्वागादीनीति; कुतः? व्यपदेशभेदात्; कोऽयं व्यपदेशभेदः? ते प्रकृताः प्राणाः श्रेष्ठं वर्जयित्वा अवशिष्टा एकादशेन्द्रियाणीत्युच्यन्ते, श्रुतावेवं व्यपदेशदर्शनात्—"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" इति ह्येवंजातीयकेषु प्रदेशेषु पृथक् प्राणो व्यपदिश्यते, पृथक्चेन्द्रियाणि । ननु मनसोऽप्येवं सति वर्जनम्, इन्द्रियत्वेन, प्राणवत् स्यात्, "मनः सर्वेन्द्रियाणि च" इति पृथग्व्यपदेशदर्शनात्; सत्यमेतत्—स्मृतौ तु एकादशेन्द्रियाणीति मनोऽपि इन्द्रियत्वेन श्रोत्रादिवत्संगृह्यते; प्राण-

प्रकटार्थविवरणम्

पूर्वपक्षं रचयति—किं तावदित्यादिना ॥ हन्तेदानीमस्यैव मुख्यस्यैव सर्वे वयं रूपमसाम भवामेत्याशिषं कृत्वा ते वागादयः एतस्यैव मुख्यस्य रूपं बभूवुरिति श्रुतेर्वचनमित्यर्थः । उपपत्त्यन्तरमाह—प्राणैकशब्दत्वाच्चेति ॥ बहिरेव सिद्धान्तं प्रतिज्ञाय सूत्रं योजयति—तत्त्वान्तराण्येवेत्यादिना ॥ भेदव्यपदेशस्यातिप्रसक्तित्वं शङ्कते—ननु मनसोऽपीति ॥ यद्यप्यापाततो मनसोऽनिन्द्रियत्वं प्राप्नोति, तथापि सकलश्रुतिस्मृतिपर्यालोचनया मनसोऽपीन्द्रियत्वमेव; भेदव्यपदेशस्त्वन्तर्बहिर्भावापेक्ष इत्याह—सत्यमेतदिति[1] । प्राणस्य तद्वैलक्षण्यमाह—प्राणस्य त्विति ॥ यथेन्द्रियत्वे नास्ति मानं तथा

१. A. त्वादिति

भाष्यम्

स्य तु इन्द्रियत्वं न श्रुतौ स्मृतौ वा प्रसिद्धमस्ति । व्यपदेशभेदश्चायं तत्त्वभेदपक्ष उपपद्यते ; तत्त्वैकत्वे तु स एवैकः सन् प्राण इन्द्रियव्यपदेशं लभते न लभते च इति विप्रतिषिद्धम् । तस्मात्तत्त्वान्तरभूता
5 मुख्यादितरे ॥

कुतश्च तत्त्वान्तरभूताः ?

## भेदश्रुतेः ॥ २-४-१८ ॥

भेदेन वागादिभ्यः प्राणः सर्वत्र श्रूयते—"ते ह वाचमूचुः" इत्युपक्रम्य, वागादीनसुरपाप्मविध्वस्तानुपन्यस्य, उपसंहृत्य वागादि-
10 प्रकरणम्, "अथ हेममासन्यं प्राणमूचुः" इत्यसुरविध्वंसिनो मुख्यस्य

प्रकटार्थविवरणम्

भेदेऽपि नास्तीत्याशङ्क्याह—व्यपदेशभेदश्चायमिति ॥

भेदश्रुतेः ॥

पूर्वं संज्ञाभेदात् तत्त्वभेदो दर्शितः । इदानीं प्रकरणभेदाद्भेदमाह—
15 भेदश्रुतेरिति ॥ शास्त्रोद्भासिता [ताः सत्त्विकयः] इन्द्रियवृत्तयो देवाः ; स्वाभाविकतमआत्मिकाः इन्द्रियवृत्तयोऽसुराः ; तयोः सदान्योन्याभिभवरूपः सङ्ग्रामः प्रवृत्तः ; तत्रासुरपराजयाय देवा औद्गात्रं कर्मारेभिरे । 'ते ह देवा वाचमूचुः त्वं न उद्गाय' इत्युपक्रम्य "तान् हासुराः पाप्मना विविधुः" इत्यादिना वागादीनसुरैः पाप्मना कल्याणासङ्गनिमित्तेन विद्धानुपन्यस्य वागा-
20 दिप्रकरणमुपसंहृत्याह "अथ ह" इति । अथेति प्रकरणविच्छेदे । ह किल । इमं आसि भवमासन्यम् । मुख्यं प्राणमूचुः वागादयः "त्वं न उद्गाय" इति तेन चोद्गाने प्रारब्धे पूर्ववत् वेधायोपक्रममात्रेण सुरा विध्वंसिरे पाषाणक्षिप्तलोष्टवदिति

१. T, T[1] and TM. शास्त्रे भाविता इतियवृत्तयः

२. T. प्राणमुपर्यागायः

३. T, T[1] and TM. पूर्वं द्वेष

भाष्यम्

प्राणस्य पृथगुपक्रमणात् । तथा "मनो वाचं प्राणं तान्यात्मनेऽकुरुत" इत्येवमाद्या अपि भेदश्रुतय उदाहर्तव्याः । तस्मादपि तत्त्वान्तरभूता मुख्यादितरे ॥

कुतश्च तत्त्वान्तरभूताः ? 5

## वैलक्षण्याच्च ॥ २-४-१९ ॥

वैलक्षण्यं च भवति, मुख्यस्य इतरेषां च—सुप्तेषु वागादिषु मुख्य एको जागर्ति; स एव च एको मृत्युना अनाप्तः, आप्तास्त्वितरे; तस्यैव च स्थित्युत्क्रान्तिभ्यां देहधारणपतनहेतुत्वम्, नेन्द्रियाणाम्; विषयालोचनहेतुत्वं च इन्द्रियाणाम् न प्राणस्य इत्येवंजातीयको 10 भूयांल्लक्षणभेदः प्राणेन्द्रियाणाम्; तस्मादप्येषां तत्त्वान्तरभावसिद्धिः। यदुक्तम्—"त एतस्यैव सर्वे रूपमभवन्" इति श्रुतेः प्राण एवेन्द्रियाणीति, तदयुक्तम्, तत्रापि पौर्वापर्यालोचनाद्भेदप्रतीतेः; तथा हि—"वदिष्याम्येवाहमिति वाग्दध्रे" इति वागादीनीन्द्रियाण्यनुक्रम्य, "तानि मृत्युः श्रमो भूत्वोपयेमे तस्माच्छ्राम्यत्येव वाक्" इति च 15 श्रमरूपेण मृत्युना ग्रस्तत्वं वागादीनामभिधाय, "अथेममेव नाप्नो-

प्रकटार्थविवरणम्

असुरविध्वंसिनो[1] मुख्यस्य प्राणस्य पृथगुपक्रमाद्भेद इत्यर्थः । त्रीण्यन्नानि प्रजापतिरात्मने कृतवानिति सङ्ख्याभेदश्रवणादपि भेद इत्याह—तथा मन इति ॥

वैलक्षण्याच्च ॥ 20

विरुद्धधर्माक्रान्तत्वादपि भेद इत्याह—वैलक्षण्याच्चेति ॥ अभेदश्रुतिमुत्थाप्य पराकरोति—यदुक्तमित्यादिना ॥ दध्रे धारणाभिप्रायं चक्रे । बहुतरभेदलिङ्गविरोधात् वागादीनां प्राणरूपभवनं प्राणाधीनवृत्तिमात्र-

१. T and T¹. विध्वंसिनोऽप्यस्य

भाष्यम्

घोऽयं मध्यमः प्राणः ” इति पृथक् प्राणं मृत्युना अनभिभूतं तमनु-
क्रामति ; “ अयं वै नः श्रेष्ठः ” इति च श्रेष्ठतामस्यावधारयति ; तस्मात्
तदविरोधेन वागादिषु परिस्पन्दलाभस्य प्राणायत्तत्वम्—तद्रूपभवनं
5 वागादीनाम्—इति मन्तव्यम्, न तादात्म्यम् । अत एव च प्राणशब्द-
स्येन्द्रियेषु लाक्षणिकत्वसिद्धिः ; तथा च श्रुतिः—“ त एतस्यैव सर्वे
रूपमभवन् । तस्मादेत एतेनाख्यायन्ते प्राणाः ” इति मुख्यप्राणविषय-
स्यैव प्राणशब्दस्येन्द्रियेषु लाक्षणिकीं वृत्तिं दर्शयति । तस्मात्तत्त्वान्त-
राणि प्राणात् वागादीनि इन्द्रियाणीति ॥

10 [ संज्ञामूर्तिकॢप्त्यधिकरणम् ]

## संज्ञामूर्तिकॢप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ २-४-२० ॥

सत्प्रक्रियायां तेजोबन्नानां सृष्टिमभिधायोपदिश्यते—“ सेयं देव-
तैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे
व्याकरवाणीति । तासां त्रिवृतं त्रिवृतमेकैकां करवाणि ” इति । तत्र

15 प्रकटार्थविवरणम्

मित्युक्तम् । अत एव मुख्यप्राणात्मत्वासंभवात् लाक्षणिकत्वमप्यदोष इत्याह—
अत एवेति ॥

संज्ञामूर्तिकॢप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥

एवं तावत्प्राणानां सृष्ट्यादिश्रुतिविप्रतिषेधं परिहृत्य एतेषां नामरूप-
20 व्याकरणमितरनामरूपव्याकरणान्तर्भूतमिति प्रासङ्गिकं प्राणवादे वाक्यान्तरं
विचारयितुमुपक्रमते—सत्प्रक्रियायामिति ॥ जीवेनेत्यस्य[2] प्रवेशव्याकर-
णाभ्यां संबन्धानिरूपणात् संशयमाह—तत्र संशय इति ॥ पूर्वपक्षमाह—

१. T and T¹. नामरूपव्याकरणान्तर्भूत-मिति    २. A. त्यनेन

भाष्यम्

संशयः—किं जीवकर्तृकमिदं नामरूपव्याकरणम्, आहोस्वित्परमेश्वरकर्तृकमिति। तत्र प्राप्तं तावत् जीवकर्तृकमेवेदं नामरूपव्याकरणमिति; कुतः? "अनेन जीवेनात्मना" इति विशेषणात्—यथा लोके 'चारेणाहं परसैन्यमनुप्रविश्य संकलयानि' इत्येवंजातीयके प्रयोगे, चारकर्तृकमेव सत् सैन्यसंकलनं हेतुकर्तृत्वात् राजा आत्मन्यध्यारोपयति संकलयानीत्युत्तमपुरुषप्रयोगेण; एवं जीवकर्तृकमेव सन् नामरूपव्याकरणं हेतुकर्तृत्वात् देवता आत्मन्यध्यारोपयति व्याकरवाणीत्युत्तमपुरुषप्रयोगेण। अपि च डित्थडवित्थादिषु नामसु घटशरावादिषु च रूपेषु जीवस्यैव व्याकर्तृत्वं दृष्टम्। तस्माज्जीवकर्तृकमेवेदं नामरूपव्याकरणमित्येवं प्राप्ते—

अभिधत्ते—संज्ञामूर्तिकॢप्तिस्तु इति। तुशब्देन पक्षं व्यावर्तयति। संज्ञामूर्तिकॢप्तिरिति—नामरूपव्याक्रियेत्येतत्; त्रिवृत्कुर्वत इति परमेश्वरं लक्षयति, त्रिवृत्करणे तस्य निरपवादकर्तृत्वनिर्देशात्—येयं संज्ञाकॢप्तिः मूर्तिकॢप्तिश्च अग्निः आदित्यः चन्द्रमा विद्युदिति, तथा कुशकाशपलाशादिषु पशुमृगमनुष्यादिषु च, प्रत्याकृति प्रतिव्यक्ति चानेकप्रकारा, सा खलु परमेश्वरस्यैव तेजोबन्नानां निर्मातुः कृतिर्भवितुमर्हति; कुतः? उपदेशात्; तथा हि—"सेयं देवता" इत्युपक्रम्य "व्याकरवाणि" इत्युत्तमपुरुषप्रयोगेण परस्यैव ब्रह्मणो व्याकर्तृत्वमिहोपदिश्यते। ननु "जीवेन" इति विशेषणाज्जीवकर्तृकत्वं व्याकरणस्याध्यवसितम्। नैत-

प्रकटार्थविवरणम्

तत्र प्राप्तं तावदिति ॥ क्रियापदस्य प्राधान्यात् प्रधानेनैव चेतरेषामन्वयात् जीवेनेत्यस्य व्याकरवाणीत्यनेन संबन्ध इति भावः। कथं तर्हि देवताविषय उत्तमपुरुषप्रयोग इत्याशङ्क्य औपचारिकत्वमाह—यथा लोक इत्यादिना ॥ किं च प्रत्यक्षानुग्रहादपि जीवकर्तृत्वनिश्चय इत्याह—अपि च डित्थेति ॥

सूत्रं पदशो विभजते-तुशब्देनेत्यादिना ॥ परोक्तमनुकीर्त्य पराकरोति—ननु जीवेनेत्यादिना ॥ आकाङ्क्षासंनिधियोग्यतावशेन अन्वयो भवति।

### भाष्यम्

देवम्; "जीवेन" इत्येतत् अनुप्रविश्य इत्यनेन संबध्यते, आनन्तर्यात्, न व्याकरवाणी इत्यनेन; तेन हि संबन्धे "व्याकरवाणि" इत्ययं देवताविषय उत्तमपुरुष औपचारिकः कल्प्येत; न च गिरिनदी- 5 समुद्रादिषु नानाविधेषु नामरूपेषु अनीश्वरस्य जीवस्य व्याकरण- सामर्थ्यमस्ति; येष्वपि च अस्ति सामर्थ्यम्, तेष्वपि परमेश्वरायत्तमेव तत्; न च जीवो नाम परमेश्वरादत्यन्तभिन्नः चार इव राज्ञः, "आत्मना"—इति विशेषणात्, उपाधिमात्रनिबन्धनत्वाच्च जीव- भावस्य; तेन तत्कृतमपि नामरूपव्याकरणं परमेश्वरकृतमेव भवति; 10 परमेश्वर एव च नामरूपयोर्व्याकर्तेति सर्वोपनिषत्सिद्धान्तः, "आकाशो ह वै नाम नामरूपयोर्निर्वहिता" इत्यादिश्रुतिभ्यः; तस्मात्परमेश्वरस्यैव त्रिवृत्कुर्वतः कर्म नामरूपयोर्व्याकरणम्। त्रिवृत्करणपूर्वकमेवेदम् इह नाम- रूपव्याकरणं विवक्ष्यते, प्रत्येकं नामरूपव्याकरणस्य तेजोबन्नो- त्पत्तिवचनेनैवोक्तत्वात्; तच्च त्रिवृत्करणमग्न्यादित्यचन्द्रविद्युत्सु श्रुति- 15 र्दर्शयति—"यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं

### प्रकटार्थविवरणम्

तत्र जीवेनेत्यस्य प्रविश्येत्यनेन सन्निधिः; अस्ति च सकलनामरूपव्याकरणेऽ- योग्यता; अतो जीवस्य प्रवेशेनैव संबन्ध इति भावः। ननु समानकर्तृकयोः पूर्वकाले क्त्वास्मरणात् पूर्वकालीनं प्रवेशनं जीवकर्तृकं चेत् उत्तरं व्याकरण- 20 मपि तत्कृतं वक्तव्यमित्याशङ्क्याह—न च जीवो नामेति॥ स्मरणप्रामाण्य- मभ्युपगम्य स्वरूपाभेदाभिप्रायेण जीवकर्तृकमपि व्याकरणं परमेश्वरकर्तृकमे- वेत्युक्तम्; इदानीमेवंविधे[1]ऽर्थे स्मरणं[2] प्रमाणमपि भवतीत्याह—परमेश्वर एव चेति॥ एवं तावत्सूत्रं व्याख्यायेदानीमुत्सूत्रमेव त्रिवृत्करणनामरूपव्याकरणयोः पाठक्रमातिलङ्घनेन अर्थक्रममाह—त्रिवृत्करणपूर्वकमेव चेति॥ त्रिवृत्करणा- 25 भिधानं च छन्दोगश्रुत्यनुसारेणाह—तच्च त्रिवृत्करणमिति॥ तैत्तिरीयकपर्या- लोचनया तु पञ्चानां भूतानां सृष्टेरुपपादितत्वात् पञ्चीकरणं द्रष्टव्यम्।

१. T and T[1] विषेऽर्थे
२. T, A and TM प्रमाणं भवति

भाष्यम्

तदन्नस्य" इत्यादिना; तत्राग्निरितीदं रूपं व्याक्रियते, सति च रूपव्याकरणे विषयप्रतिलम्भादग्निरितीदं नाम व्याक्रियते; एवमेवादित्यचन्द्रविद्युत्स्वपि द्रष्टव्यम्। अनेन चाग्न्याद्युदाहरणेन भौमाम्भसतैजसेषु त्रिष्वपि द्रव्येष्वविशेषेण त्रिवृत्करणमुक्तं भवति, उपक्रमोपसंहारयोः साधारणत्वात्; तथा हि अविशेषेणैव उपक्रमः—"इमास्तिस्रो देवतास्त्रिवृत्त्रिवृदेकैका भवति" इति, अविशेषेणैव च उपसंहारः—"यदु रोहितमिवाभूदिति तेजसस्तद्रूपम्" इत्येवमादिः, "यदविज्ञातमिवाभूदित्येतासामेव देवतानां समासः" इति एवमन्तः॥

प्रकटार्थविवरणम्

तथा हि—मायाप्रविष्टं ब्रह्म सच्छब्दवाच्यम्, पञ्च भूतानि सूक्ष्माणि सृष्ट्वा तावता व्यवहारासिद्धेः तानि द्विधा विभज्य एकैकशो विभक्तं च भागं पुनश्चतुर्धा कृत्वा विभक्तेतरेषु निक्षिप्य पञ्चीकृतान्यकरोत्; सर्वेषां पञ्चात्मकत्वाविशेषेऽपि करणगुणस्यैव कार्येष्वभिव्यक्तेः वैपरीत्यादर्शनात् पूर्वपूर्वस्य सौक्ष्म्यं गुणापचयात्, उत्तरोत्तरस्य स्थौल्यं गुणोपचयाच्च विरुद्ध्यते। तस्मात् पञ्चीकरणोपलक्षणार्था त्रिवृत्करणश्रुतिरिति द्रष्टव्यम्। इदानीं नामरूपव्याकरणे क्रममाह—तत्राग्निरितीदमिति॥ नन्वादित्यादीनां तैजसानामेव श्रुत्योदाहृतत्वात् न सर्वत्र त्रिवृत्करणं विवक्षितमित्याशङ्क्याह—अनेन चेति॥ "इमास्तिस्रो देवताः" इति तिसृणां देवतानामेतासां[1] तेजोबन्नानामेकैका देवता त्रिवृत्त्वात्मिका भवतीत्यर्थः। यत्कार्ष्ण्यादिविशेषरूपेणाविज्ञातमेवाभूत् कपोतरूपादि तिसृणामेव देवतानां समासः समुदायो द्रष्टव्य इत्यर्थः॥

नन्वेकैकस्यात्र्यात्मकत्वं त्रिवृच्छब्दार्थो न भवति अप्यात्ममन्यथा त्रिवृच्छब्दार्थावधारणात्; अतो नोपक्रमोपसंहारसाधारण्येन सर्वे..त्र्यात्मकमित्या-

१. A omits एतासां

भाष्यम्

तासां त्रिसृणां देवतानां बहिस्त्रिवृत्कृतानां सतीनाम् अध्यात्ममपरं त्रिवृत्करणमुक्तम्—"इमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति" इति ; तदिदानीमाचार्यो यथाश्रुत्यैवोपदर्शयति
5 आशङ्कितं कंचिद्दोषं परिहरिष्यन्—

## मांसादि भौमं यथाशब्दमितरयोश्च ॥ २-४-२१ ॥

भूमेस्त्रिवृत्कृतायाः पुरुषेणोपभुज्यमानाया मांसादि कार्यं यथाशब्दं निष्पद्यते ; तथा हि श्रुतिः—"अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मनः"
10 इति ; त्रिवृत्कृता भूमिरेवैषा व्रीहियवाद्यन्नरूपेण अद्यत इत्यभिप्रायः ; तस्याश्च स्थविष्ठं रूपं पुरीषभावेन बहिर्निर्गच्छति ; मध्यममध्यात्मं मांसं वर्धयति ; अणिष्ठं तु मनः । एवमितरयोरप्तेजसोर्यथाशब्दं कार्य-

प्रकटार्थविवरणम्

शङ्कयाह—तासां तिसृणामिति ॥ अध्यात्मं देहकार्यत्रयरूपेण वर्तमानत्रिवृत्क-
15 रणमन्यदेवोक्तमित्येतत्सत्यम्, न तु पूर्वमपि उदाहरणविरोधादिति भावः ।
आध्यात्मत्रिवृत्करणमन्यादृशमित्यत्रैव सूत्रमवतारयति—तदिदानीमिति ॥

मांसादि भौमं यथाशब्दमितरयोश्च ॥

अणिष्ठं त्वन्नस्य रूपं मनो वर्धयति ; अनेनान्ननिमित्तवृद्ध्यभिधानेन मनसो भौतिकत्वं सूचितम् । तेन नित्यं मनः, निरवयवद्रव्यत्वादिति वैशेषिकप्रक्रिया,
20 साङ्ख्यानां चाहङ्कारिकत्वप्रक्रिया निरस्ता द्रष्टव्या । मनः परमाणुपरिमाणम्, परविशेषगुणासमवायित्वे सति नित्यत्वात्, संप्रतिपन्नवदिति विशेष्यासिद्धिः । द्व्यणुकसमवायित्वं चोपाधिः । मनो विभु, सर्वदा रूपस्पर्शशून्यद्रव्यत्वात्, आत्मवदित्यत्रापि असिद्धिः, अनुद्भूतरूपस्पर्शत्वाभ्युपगमादिति । सूत्रमागं व्याख्याति—एवमितरयोरपीति ॥ प्राणस्य वाय्ववस्थाभेदत्वं प्राग-

१. T and T¹. मही   २. T, T¹ and TM. विमतः

## भाष्यम्

मवगन्तव्यम्—मूत्रं लोहितं प्राणश्चापां कार्यम्, अस्थि मज्जा वाक् तेजसः—इति ॥

## प्रकटार्थविवरणम्

वनिर्धारितमित्यप्कार्यत्वमपामुपष्टम्भकत्वमात्रेण [1]ग्रीष्मोपासनीयपानाभाव- 5
प्रयुक्तया प्राणविप[2]त्तिप्रसिद्धेः ; तेजसो घृतादेर्वाचः स्पष्टतानिमित्तत्वात् तत्का-
र्यत्वाभिधानं भौतिकत्वोपलक्षणार्थम् । तथा हि—श्रोत्रमाकाशकार्यम्, शब्दा-
दिषु शब्दस्यैव व्यञ्जकत्वात्, शब्दशब्दवत्; त्वक् वायवीयम्, स्पर्शस्यैव व्यञ्ज-
कत्वात्, व्यजनवायुवात्; चक्षुः तैजसम्, रूपस्यैव व्यञ्जकत्वात्, प्रदीपवत्;
र[3]सनमाप्यम्, रसस्यैव व्यञ्जकत्वात्, आस्योदकवत्; घ्राणं पार्थिवम्, गन्ध- 10
स्यैव व्यञ्जकत्वात्, हिङ्ग्वादिवत्; मनश्च सर्वाभिव्यक्तिसाधारणत्वात् सर्वा-
रब्धम्; तथा वागिन्द्रियं आकाशकार्यम्, शब्दाभिव्यक्तिसाधनत्वात्; पाणि-
र्वायवीयः, स्पर्शवत एव द्रव्यस्य ग्राहकत्वात्; पादौ तैजसौ, रूपवन्तं प्रत्येव
धावनात्; पायुराप्यः, स्निग्धत्वात्; उपस्थः पार्थिवः, गन्धविशेषवत्त्वात् । ननु
भौतिकत्वाविशेषे कथं केषांचित् ज्ञानसाधनत्वम्, केषांचित्कर्मसाधनत्वमिति, 15
तदुच्यते । सत्त्वरजस्तमोगुणवद्द्रव्यं तावन्माया; तत्र सत्त्वं ज्ञानशक्तिमत्; रजः
प्रवृत्तिशक्तिमत्; तमः मोहशक्तिमत्; तत्कार्याणि च भूतानि तत्तच्छक्तिमन्ति
कार्ये कारणशक्तेराविर्भावात् । तत्र सत्त्वप्रधानभूतविकारत्वा[4]च्चक्षुरादीनि,
ज्ञानजननशक्तिमन्ति; रजःप्रधानभूतविकारत्वाद्घ्राणादीनि क्रियासमर्थानि;
मौढ्यप्रधानभूतविकारत्वात् प्रायेण मोहकाः स्थूला विषयाः; स्थौल्यं च पञ्ची- 20
करणप्रक्रियया दर्शितमिति सर्वेषामेव भौतिकत्वे न दोषः कश्चित् ॥

यत्तु काणादा मन्यन्ते—कर्णशष्कुल्यवच्छिन्नो नभोदेशः श्रोत्रम्, अस्पर्श-
वद्द्रव्यारब्धस्य द्रव्यत्वा[द्रव्यस्या]नुपलम्भादिति, तदसत्; यथा निरवयवद्रव्यार-
ब्धस्य द्रव्यस्य लोकेऽनुपलम्भेऽपि बलवन्मानादभ्युपगमः, तथात्रापि संभवात्;
किंच विवरस्य श्रोत्रत्वे बधिराभावप्रसङ्गः, सत्यपि शब्दसमवाये दृष्टवैकल्या- 25

१. TM and A. ग्रीष्मे पानीयपानाभाव

२. T and T¹. विपर्व

३. T omits रसन.....उदकवत्

४. T, TM and A. त्वाच्च कर्मादीनि

भाष्यम्

अत्राह—यदि सर्वमेव त्रिवृत्कृतं भूतभौतिकम् अविशेषश्रुतेः, "तासां त्रिवृतं त्रिवृतमेकैकामकरोत्" इति, किंकृतस्तर्ह्ययं विशेषव्यपदेशः—"इदं तेजः, इमा आपः, इदमन्नम्" इति ? तथा अध्यात्मम्—इदमन्नस्याशितस्य कार्यं मांसादि, इदमपां पीतानां कार्यं लोहितादि, इदं तेजसोऽशितस्य कार्यमस्थ्यादि इति ? अत्रोच्यते—

## वैशेष्यात्तु तद्वादस्तद्वादः ॥ २-४-२२ ॥

तुशब्देन चोदितं दोषमपनुदति ; विशेषस्य भावो वैशेष्यम्, भूयस्त्वमिति यावत् ; सत्यपि त्रिवृत्करणे क्वचित्कस्यचिद्भूतधातोर्भूयस्त्वमुपलभ्यते—अग्नेस्तेजोभूयस्त्वम्, उदकस्याब्भूयस्त्वम्, पृथिव्या

प्रकटार्थविवरणम्

वदुपलम्भाभावानुभाव[1]वशानोदयो न भवेत्; "सर्वे प्राणा अनूत्क्रामन्ति" इति च श्रुतिर्विरुध्येत । अतः करणत्वाच्चक्षुरादिवच्छ्रोत्रस्यापि सावयवत्वादिसिद्धिः । न च वीचीसन्तानन्यायावतारो दूरस्थशब्दानुभवात्; दिक्सम्बन्धानुपपत्तिस्तु श्रोत्रदेशोपलम्भे समाना । या चाप्राप्यकारीणीन्द्रियाणीति सुगतानां कल्पना साप्यसङ्गतैव । विमतं प्राप्यकारि, बाह्येन्द्रियत्वात्, त्वगिन्द्रियवत् । गोलकमात्रस्येन्द्रियत्वे च सर्पादीनां तद्विरहिणां अनुपलम्भप्रसङ्गः ; अत एव तच्छक्तिपक्षोऽप्यसङ्गतः । कल्पनालाघवात्तदाश्रयणे जीवस्यैव क्रमकार्यनेकशक्तिकल्पनं ततो लघीयः । तस्मात् आगमप्रामाण्यात् भौतिकानीन्द्रियाण्यभ्युपगन्तव्यानीत्यलम् ॥

"आशङ्कितं कंचिद्दोषं परिहरिष्यन्" इत्युक्तम् । तामाशङ्कामाह — अत्राहेत्यादिना ॥ परिहारसूत्रमवतारयति—अत्रोच्यत इति ॥

वैशेष्यात्तु तद्वादस्तद्वादः ॥

न केवलमनुभवसिद्धं भूयस्त्वम्, त्रिवृत्करणप्रयोजनसिद्ध्यनुपपत्तिगम्यं

[1] T. लम्भावशानादयो

भाष्यम्

अन्नभूयस्त्वम् इति । व्यवहारप्रसिद्ध्यर्थं चेदं त्रिवृत्करणम्; व्यवहारश्च त्रिवृत्कृतरज्जुवदेकत्वापत्तौ सत्याम्, न भेदेन भूतत्रयगोचरो लोकस्य प्रसिद्ध्येत् । तस्मात्सत्यपि त्रिवृत्करणे वैशेष्यादेव तेजोबन्नविशेषवादो भूतभौतिकविषय उपपद्यते । तद्वादस्तद्वाद इति पदाभ्यासोऽध्यायपरि- 5
समाप्तिं द्योतयति ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपाद-
शिष्यस्य श्रीमच्छंकरभगवतः कृतौ शारीरकमीमांसासूत्रभाष्ये
द्वितीयाध्यायस्य चतुर्थः पादः ॥
द्वितीयोऽध्यायः समाप्तः ॥ 10

प्रकटार्थविवरणम्

चेत्याह—व्यवहारप्रसिद्ध्यर्थं चेति ॥ द्विरुक्तेरर्थमाह—तद्वाद इति ॥

श्रुति[स्मृति]न्यायविरोधौ न मतान्तरविरुद्धता ।
श्रुतिविप्रतिषेधो वा वेदान्तार्थसमन्वये ॥

इति श्रीमच्छारीरकमीमांसाभाष्यव्याख्याने प्रकटार्थे 15
द्वितीयस्याध्यायस्य चतुर्थः पादः ॥
समाप्तश्च द्वितीयोऽध्यायः ॥

# अथ तृतीयोऽध्यायः

## प्रथमः पादः

——:o:——

### [ तदन्तरप्रतिपत्त्यधिकरणम् ]

द्वितीयेऽध्याये स्मृतिन्यायविरोधो वेदान्तविहिते ब्रह्मदर्शने परिहृतः, परपक्षाणां च अनपेक्षत्वं प्रपञ्चितम्, श्रुतिविप्रतिषेधश्च परिहृतः;
5 तत्र च जीवव्यतिरिक्तानि तत्त्वानि जीवोपकरणानि ब्रह्मणो जायन्त इत्युक्तम् । अथेदानीमुपकरणोपहितस्य जीवस्य संसारगतिप्रकारः, तदवस्थान्तराणि ब्रह्मतत्त्वम्, विद्याभेदाभेदौ गुणोपसंहारानुपसंहारौ,

#### प्रकटार्थविवरणम्

वृत्तवर्तिष्यमाणयोरध्याययोः[1] हेतुहेतुमद्भावलक्षणसम्बन्धाभिधित्सया
10 वृत्तं सङ्क्षेपतः सङ्कीर्तयति—द्वितीयेऽध्याय इति ॥ शब्दात् परोक्षतया प्रतिपन्ने परमपुरुषार्थरूपे ब्रह्मणि सकलविरोधविधुरे चावधारिते तत्साक्षात्करणाय साधनजिज्ञासोल्लसति इति अविरोधसाधनाध्याययोः हेतुहेतुमद्भाव इति भावः । पूर्वाध्यायान्त्यपादेनोत्तराध्यायाद्यपादस्य[2] अवान्तरसम्बन्धाभिधानाय अवान्तरार्थभेदमाह—तत्र चेति ॥ श्रुतिविप्रतिषेधपरिहारावसरे[3]
15 जीवस्य[4] भोगसाधनानि प्राणादीनि भूतपञ्चकद्वारेण ब्रह्मणो जायन्त इत्युक्तम्; इदानीं तैरेवोपकरणैः उपहितस्य संसारप्रकारः चिन्त्यते तृतीयस्याद्यपादेन[5] वैराग्याख्यसाधनसिद्धय[6] इत्यर्थः । द्वितीयेन च पादेन संसारे विरक्तस्य मुमुक्षोः मोक्षसाधनापरोक्षवाक्यार्थज्ञानसाधनलक्ष्यपदार्थज्ञानाय तस्य जीवस्यावस्थान्तराणि ब्रह्मरूपं च निरूप्यत इत्यर्थः । तृतीयेन च पादेन
20 निर्गुणब्रह्मवाक्यगतापुनरुक्तवादो[पदो]पसंहारासिद्धये मन्दाधिकारिणां सगुणो-

१. A omits अध्याययोः
२. A omits पादेनोत्तराध्यायाद्य
३. T. श्रुतिविग्रह
४. A omits जीवस्य
५. A omits तृतीयस्याद्यपादेन
६. A. वैराग्यसाधन

## भाष्यम्

सम्यग्दर्शनात्पुरुषार्थसिद्धिः सम्यग्दर्शनोपायविधिप्रभेदः मुक्तिफला-
नियमश्च—इत्येतदर्थजातं तृतीये निरूपयिष्यते; प्रसङ्गागतं च किम-
प्यन्यत्। तत्र प्रथमे तावत्पादे पञ्चाग्निविद्यामाश्रित्य संसारगतिप्रभेदः
प्रदर्श्यते वैराग्यहेतोः—"तस्माज्जुगुप्सेत" इति च अन्ते श्रवणात्। 5
जीवो मुख्यप्राणसचिवः सेन्द्रियः समनस्कोऽविद्याकर्मपूर्वप्रज्ञापरिग्रहः

## प्रकटार्थविवरणम्

पासनैकरूप्यसिद्धये च सर्वशाखासु विद्या भिन्ना उताभिन्ना, गुणानामुपसंहा-
रोऽस्ति नास्ति वा—इति विचार्यत इत्यर्थः। चतुर्थे च पादे विरक्तस्य लक्ष्यपदा-
र्थाभिज्ञस्य सकलशाखागतापुनरुक्तपदोपसंहारेणैकरूपवाक्यार्थाभिज्ञस्य यद्ज्ञानं 10
जायते तावन्मात्रादेव पुरुषार्थसिद्धिरित्युच्यते; तथा सम्यग्ज्ञानोपायानां यज्ञा-
दिविधीनां शमादिविधीनां च बहिरङ्गत्वान्तरङ्गत्वप्रभेदः प्रदर्श्यते शुद्धसत्त्वानां
बहिरङ्गव्यपोहेनान्तरङ्गपरिग्रहायेत्यर्थः। तथा यस्मिन् जन्मनि ज्ञानसाधनानुष्ठानं
तस्मिन्नेव जन्मनि ज्ञानोदयेन मोक्षो भवतीति न नियम इत्यपि प्रदर्श्यते जन्मान्त-
रीयसंस्कारस्यापि साधनत्वसिद्धय इत्यर्थः॥ प्रसङ्गागतं चेति॥ देहात्मत्वनिरा- 15
करणादित्यर्थः[दीत्यर्थः]। एवं तावत्सकलाध्यायार्थं सङ्क्षेपतोऽभिधाय विभज्य
प्रथमपादार्थमाह—तत्र प्रथम इति॥ पञ्चसु द्युपर्जन्यपृथिवीपुरुषयोषित्सु
अग्निदृष्ट्योपासनं पञ्चाग्निविद्या; तामाश्रित्य संसारे पुण्यपापफलगतिप्रभे-
दश्चिन्त्यते। वैराग्यसिध्यर्थं बह्वायासं कर्म कृत्वापि न क्वापि स्वातन्त्र्यं लभ्यते;
ततोऽधिकं[ततो धिक्] कर्मफलमित्यर्थः। न केवलं कर्मफलवैराग्यं दोषदर्शना- 20
न्वयव्यतिरेकसिद्धम्, श्रुतिसिद्धं चेत्याह—तस्मादिति॥ यस्मात्कर्मफल-
भूतः संसारो गत्यागतिरूप एव तस्माज्जुगुप्सां घृणां कुर्वीत कर्मफले
विद्वानिति पञ्चाग्निविद्योपसंहारे श्रवणादित्यर्थः। एवं पादस्य तात्पर्य-
मुक्त्वा प्रथमाधिकरणविचारविषयमाह—जीव इत्यादिना॥ अविद्या अना-

१. T, T¹ and TM. न मुक्तिः भवतीति नियमः
२. ' M omits संसारे
३. T and T¹. अतोधि कर्म
४. TM. श्रवणमित्यर्थः
५. A. करणस्य

भाष्यम्

पूर्वदेहं विहाय देहान्तरं प्रपद्यत इत्येतदवगतम्—"अथैनमेते प्राणा अभिसमायन्ति" इत्येवमादेः "अन्यन्नवतरं कल्याणतरं रूपं कुरुते" इत्येवमन्तात्संसारप्रकरणस्थाच्छब्दात्, धर्माधर्मफलोपभोगसंभवाच्च; स
5 किं देहबीजैर्भूतसूक्ष्मैरसंपरिष्वक्तो गच्छति आहोस्वित्संपरिष्वक्तः—इति चिन्त्यते ॥

किं तावत्प्राप्तम्? असंपरिष्वक्त इति; कुतः? करणोपादानवद्भूतोपादानस्याश्रुतत्वात्—"स एतास्तेजोमात्राः समभ्याददानः" इति ह्यत्र तेजोमात्राशब्देन करणानामुपादानं संकीर्तयति, वाक्यशेषे चक्षुरादि-
10 संकीर्तनात्; नैवं भूतमात्रोपादानसंकीर्तनमस्ति; सुलभाश्च सर्वत्र भूतमात्राः, यत्रैव देह आरब्धव्यस्तत्रैव सन्ति, ततश्च तासां नयनं निष्प्रयोजनम्; तस्मादसंपरिष्वक्तो याति—इत्येवं प्राप्ते पठत्याचार्यः—

प्रकटार्थविवरणम्

चिरनिर्वोढव्या चितः प्रतिबिम्बभावनिमित्तहेतुतया जीवत्वहेतुः; कर्म शुभा-
15 शुभव्यामिश्ररूपम्; पूर्वप्रज्ञा जन्मान्तरीयः संस्कारः; ते परिग्रहाः प्रधानभूताः संसरणे यस्य स तथोक्तः; पूर्वदेहं विहाय देहान्तरप्राप्तिः न केवलं शब्दैकसमधिगम्या, युक्तिसिद्धापि भवतीत्याह—धर्माधर्मेति ॥ प्रतिनियतकालोपभोगान्यथानुपपत्त्यापि देहान्तरसञ्चरणमवश्यं वाच्यमित्यर्थः[1]।
असौ देहान्तरसञ्चारी जीवो विषयः; स किं कालान्तरे प्रारब्धः[आरब्धव्य]-
20 स्थूलदेहारम्भकैः भूतसूक्ष्मैः परिवेष्टितो गच्छति, किं वा नेति संशयमाह—स किं देहबीजैरिति ॥ वादिविप्रतिपत्तिरत्र संशयकारणम् ॥

पूर्वपक्षं रचयति—किं तावदिति ॥ "स यत्रैष चाक्षुषः पुरुषः" इति वाक्यशेषे भूतान्येव नीयन्त इति मात्राः। श्रुत्यभावेऽपि देहान्तरानुपपत्त्या भूतपरिवेष्टितस्य गमनं कल्प्यत इत्याशङ्क्याह—सुलभाश्चेति ॥

१. A. देहान्तरमवश्यवाच्य

भाष्यम्

## तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ ३-१-१ ॥

तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्त इति । तदन्तरप्रतिपत्तौ 5
देहान्तरप्रतिपत्तौ, देहबीजैर्भूतसूक्ष्मैः संपरिष्वक्तः, रंहति गच्छति—
इत्यवगन्तव्यम् । कुतः? प्रश्ननिरूपणाभ्याम्; तथा हि प्रश्नः—"वेत्थ
यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इति; निरूपणं च
प्रतिवचनम्, द्युपर्जन्यपृथिवीपुरुषयोषित्सु पञ्चस्वग्निषु श्रद्धासोमवृष्ट्यन्न-
रेतोरूपाः पञ्चाहुतीर्दर्शयित्वा—"इति तु पञ्चम्यामाहुतावापः पुरुष- 10
वचसो भवन्ति" इति; तस्मादद्भिः परिवेष्टितो जीवो रंहति व्रजतीति

प्रकटार्थविवरणम्

तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥

सूत्रं योजयति—तदन्तरप्रतिपत्तावित्यादिना ॥ पञ्चसु स्थानेषु हूय-
माना आपः पञ्चम्यामाहुतौ यथा पुरुषशब्दवाच्या भवन्ति, पुरुषाकारेण परि- 15
णमन्ते, तथा किं त्वं वेत्थ इति श्वेतकेतुं प्रति प्रवाहणस्य प्रश्नः; तस्य चोत्तरा-
परिज्ञाने तत्पितरं प्रति निरूपणं राज्ञा कृतम् "असौ वाव लोको गौतमाग्निः"
इत्यादिना । तदेव संक्षेपतः कथयति—द्युपर्जन्येत्यादिना ॥ द्युप्रभृतीनाम-
ग्नित्वं होमाधारत्वसाम्येनोपासनार्थं संपादितम् । श्रद्धादीनां चाहुतित्वं
तत्र तत्र सन्निपातमात्रेण । उपक्रमोपसंहारवाक्ययोरेकवाक्यतावगमादयम- 20
र्थोऽधिगतः, पञ्चमे स्थाने गर्भाकारेणापः परिणमन्त इति, ततस्तत्परिवेष्टितो
गच्छतीति । यदि शरीराद्विनिर्मुक्तस्य गमनं स्यात्तदा परिवेष्टितस्य गमनं
कल्प्येत । न तु तदस्ति, किं तु यथा तृणजलूका तृणान्तरं गृहीत्वा पूर्वं तृणं

१. T, T[1] and TM. तत्तत्परि

भाष्यम्

गम्यते । नन्वन्या श्रुतिः जलूकावत्पूर्वदेहं न मुञ्चति यावन्न देहान्तरमाक्रामतीति दर्शयति—“तद्यथा तृणजलायुका” इति ; तत्राप्यप्परिवेष्टितस्यैव जीवस्य कर्मोपस्थापितप्रतिपत्तव्यदेहविषयभावनादीर्घीभावमात्रं जलूकयोपमीयत इत्यविरोधः । एवं श्रुत्युक्ते देहान्तरप्रतिपत्तिप्रकारे सति, याः पुरुषमतिप्रभवाः कल्पनाः—व्यापिनां करणानामात्मनश्च देहान्तरप्रतिपत्तौ कर्मवशाद्वृत्तिलाभस्तत्र भवति, केवलस्यैवात्मनो वृत्तिलाभस्तत्र भवति, इन्द्रियाणि तु देहवदभिनवान्येव तत्र तत्र भोगस्थाने उत्पद्यन्ते, मन एव वा केवलं भोगस्थानमभिप्रतिष्ठते, जीव एव वा, उत्प्लुत्य देहाद्देहान्तरं प्रतिपद्यते, शुक इव वृक्षाद्वृक्षान्तरम्—इत्येवमाद्याः, ताः सर्वा एवानादर्तव्याः, श्रुतिविरोधात् ॥

ननु उदाहृताभ्यां प्रश्नप्रतिवचनाभ्यां केवलाभिरद्भिः संपरिष्वक्तो रंहतीति प्राप्नोति, अप्शब्दश्रवणसामर्थ्यात् ; तत्र कथं सामान्येन प्रति-

प्रकटार्थविवरणम्

त्यजति तथा जीवोऽपीत्याह—नन्वन्या श्रुतिरिति ॥ अप्परिवेष्टितस्य गमनप्रतिपादकवाक्यस्य गत्यन्तराभावात् तृणजलूकादृष्टान्तगत्यन्तरसंभवान्न विरोध इत्याह—तत्रापीति ॥ मरणकाले कर्मणोपस्थापिता या प्राप्तव्यदेहविषया वासना [भावना] ; तस्याः सन्ततत्वमात्रं तृणजलूकादृष्टान्तेनोच्यते, न तु शरीरान्तरप्रवेश इत्यर्थः । एवं स्वमतमुक्त्वा मतान्तराणां निष्प्रमाणत्वादनादरणीयत्वं दर्शयति—एवं श्रुत्युक्त इत्यादिना ॥ साङ्ख्यकल्पनामाह—व्यापिनामिति ॥ सुगतकल्पनामाह—केवलस्यैवेति ॥ आत्मन आलयविज्ञानस्येत्यर्थः । वैशेषिकाणां कल्पनामाह—मन एवेति ॥ दिगम्बरकल्पनामाह—जीव एव वेति ॥ आदिशब्दान्मरणमेवापवर्ग इति लोकायतिककल्पनां कश्चिचकार ॥

आद्यसूत्रे भूतसूक्ष्मपरिवेष्टितस्य गमने प्रश्नप्रतिवचनाभ्यामिति हेतुरुक्तः । स न विवक्षितार्थसाधक इत्याह—ननूदाहृताभ्यामिति ॥

१. T and T[1]. तत्र हीति २. A. सूक्ष्मैः

भाष्यम्

ज्ञायते—सर्वैरेव भूतसूक्ष्मैः संपरिष्वक्तो रंहतीति? अत उत्तरं पठति—

## त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ ३-१-२ ॥

तुशब्देन चोदितामाशङ्कामुच्छिनत्ति । त्र्यात्मिका हि आपः, 5 त्रिवृत्करणश्रुतेः; तास्वारम्भिकास्वभ्युपगतास्वितरदपि भूतद्वयमवश्यमभ्युपगन्तव्यं भवति । त्र्यात्मकश्च देहः, त्रयाणामपि तेजोबन्नानां तस्मिन्कार्योपलब्धेः । पुनश्च त्र्यात्मकः, त्रिधातुत्वात्—त्रिभिर्वातपित्तश्लेष्मभिः; न स भूतान्तराणि प्रत्याख्याय केवलाभिरद्भिरारब्धुं

प्रकटार्थविवरणम् 10

त्र्यात्मकत्वात्तु भूयस्त्वात् ॥

नायमप्शब्दः केवलाब्वाचकः, व्यवहारकालीनाब्वाचकत्वात्; अतो नासाधको हेतुरित्याह—त्र्यात्मिका ह्याप इति ॥ किञ्च कार्यानुसरणेनापि कारणवाचकस्याप्शब्दस्य न केवलाब्वाचकत्वमित्याह — त्र्यात्मकश्च देह इति ॥ पाकस्नेहधारणादीनां कार्याणामुपलब्धेर्न केवलाप्कार्यत्वं 15 देहस्येत्यर्थः । केवलाप्कार्यत्वापाकरणाय प्रकारान्तरेण त्र्यात्मकत्वमाह—पुनश्चेति ॥ अविकृताः वातपित्तश्लेष्माणः : शरीरं धारयन्तीति धातवः; तत्र च तस्य[तत्र वातस्य]अङ्गचलनादिकार्यकरत्वाद्वाय्वात्मकत्वम्; पित्तस्य च तापहेतुत्वात् तैजसत्वम्; श्लेष्मणश्च अत्यम्बुपाननिमित्तहेतुत्वादाप्यत्वम्; तैस्त्रिधातुत्वादपरं त्र्यात्मकत्वमित्यर्थः । ततः किमित्यत आह—न स भूतान्तराणीति ॥ 20 भूतान्तरकार्योपलम्भादेकैकापचये स्वरूपापचयाच्च पञ्चभूतात्मको देह इत्यर्थः । वायुवनस्पतिसंयोगस्याप्रत्यक्षत्वे प्रत्यक्षाप्रत्यक्षसंयोगत्वमेव प्रयोजकम्; घटे च व्यभिचारः, अन्तर्वर्तिनामयोग्यत्वादिति । भूयस्त्वादिति सूत्रपदमुपसंहा-

१. A omits कारण

२. A. omits न

३. A. पाचकहेतुत्वात्

भाष्यम्

शक्यते । तस्माद्भूयस्त्वापेक्षोऽयम्—"आपः पुरुषवचसः" इति—प्रश्न-
प्रतिवचनयोरप्शब्दः, न कैवल्यापेक्षः; सर्वदेहेषु हि रसलोहितादिद्रव-
द्रव्यभूयस्त्वं दृश्यते । ननु पार्थिवो धातुर्भूयिष्ठो देहेषूपलक्ष्यते; नैष
5 दोषः—इतरापेक्षया अपां बाहुल्यं भविष्यति; दृश्यते च शुक्रशोणित-
लक्षणेऽपि देहबीजे द्रवबाहुल्यम् । कर्म च निमित्तकारणं देहान्तरा-
रम्भे; कर्माणि च अग्निहोत्रादीनि सोमाज्यपयःप्रभृतिद्रवद्रव्यव्यपा-
श्रयाणि; कर्मसमवायिन्यश्च आपः श्रद्धाशब्दोदिताः सह कर्मभिः
द्युलोकाख्येऽग्नौ हूयन्त इति वक्ष्यति; तस्मादप्यपां बाहुल्यप्रसिद्धिः ।
10 बाहुल्याच्च अप्शब्देन सर्वेषामेव देहबीजानां भूतसूक्ष्माणामुपपादनमिति
निरवद्यम् ॥

प्रकटार्थविवरणम्

रच्छलेन व्याचष्टे—तस्मादिति ॥ द्रवांशस्य भूयस्त्वाच्चेदप्ग्रहणं तर्हि
कठिनांशस्य बाहुल्योपलम्भात् तदयुक्तमित्याह—ननु पार्थिव इति ॥ पञ्चा-
15 त्मके देहे पार्थिवांशस्य भूयस्त्वेऽपि अपां भूयस्त्वं न विरुध्यते, भूतान्तरा-
पेक्षया संभवादित्याह—नैष दोष इति ॥ किं च अपां बाहुल्यं यत्सूत्र-
कृतोक्तं तद्देहबीजयो रेतोलोहितयोरब्बाहुल्यापेक्षया; अतो न विरोध इत्याह—
दृश्यते चेति ॥ किंच न केवलमुपादाने द्रवबाहुल्यम्, निमित्तेऽप्यस्तीत्याह—
कर्म चेति ॥ ननु सोमादीनामिहैव भस्मीभावान्न तद्गतमब्बाहुल्यं देहारम्भ उप-
20 युज्यत इत्याशङ्क्याह—कर्मसमवायिन्यश्चेति ॥ स्थूलकर्मसाधनतया तत्सं-
बन्धिन्य आपः सूक्ष्मरूपेण पुरुषमाश्रित्यावतिष्ठमानाः श्रद्धाशब्दवाच्याः
सह कर्मसंस्कारैः द्युलोकाख्ये अग्नौ हूयन्ते; ताश्च चन्द्रलोके शरीरमारभन्त
इति वक्ष्यति । ततो विद्यत एव तासामपि देहारम्भोपयोग इत्यर्थः । यस्मान्नि-
मित्तकारणगतमपि द्रवबाहुल्यं देहारम्भोपयोगि तस्मादित्युपसंहारः ॥

१. T and T¹. द्रव्याङ्गस्य

भाष्यम्

## प्राणगतेश्च ॥ ३-१-३ ॥

प्राणानां च देहान्तरप्रतिपत्तौ गतिः श्राव्यते—"तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" इत्यादिश्रुतिभिः; सा च प्राणानां गतिर्नाश्रयमन्तरेण संभवतीत्यतः प्राणगतिप्रयुक्ता तदाश्रयभूतानामपामपि भूतान्तरोपसृष्टानां गतिरर्थादवगम्यते; न हि निराश्रयाः प्राणाः क्वचिद्गच्छन्ति तिष्ठन्ति वा, जीवतोऽदर्शनात् ॥ 5

## अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ३-१-४ ॥

स्यादेतत्—नैव प्राणा देहान्तरप्रतिपत्तौ सह जीवेन गच्छन्ति, अग्न्यादिगतिश्रुतेः; तथा हि श्रुतिः मरणकाले वागादयः प्राणा अग्न्यादीन्देवान्गच्छन्तीति दर्शयति "यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणः" इत्यादिना इति चेत्, न, भाक्तत्वात्; वागादीनामग्न्यादिगतिश्रुतिर्गौणी, लोमसु केशेषु चादर्शनात्—"ओषधीर्लो- 10

प्रकटार्थविवरणम् 15

प्राणगतेश्च ॥

किं च भौतिकानां प्राणानां[1] गत्यन्यथानुपपत्त्यावश्यं तत्कारणानां भूतानां गतिर्वक्तव्या। अङ्गीकृता चेत् भूतगतिः किं तव शरीरारम्भकैरपराद्धमित्याह—प्राणगतेश्चेति ॥

अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ 20

प्राणानामप्यगमनमाशङ्क्य परिहरति— अग्न्यादिगतीति ॥ लोमकेशयोर्गमनस्य गौणत्वदर्शनेन इतरस्यापि वागादेः अग्न्यादिगमनं गौणमेवेत्यु-

१. A omits प्राणानां

भाष्यम्

मानि वनस्पतीन्केशाः" इति हि तत्राम्नायते, न हि लोमानि केशा-
श्चोत्प्लुत्य ओषधीर्वनस्पतींश्च गच्छन्तीति संभवति; न च जीवस्य प्राणो-
पाधिप्रत्याख्याने गमनमवकल्प्यते; नापि प्राणैर्विना देहान्तरे उपभोग
5 उपपद्यते; विस्पष्टं च प्राणानां सह जीवेन गमनमन्यत्र श्रावितम्; अतो
वागाद्यधिष्ठात्रीणामग्न्यादिदेवतानां वागाद्युपकारिणीनां मरणकाले उप-
कारनिवृत्तिमात्रमपेक्ष्य—वागादयोऽग्न्यादीन्गच्छन्तीत्युपचर्यते ॥

## प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ३-१-५ ॥

10 स्यादेतत्—कथं पुनः "पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति"
इत्येतन्निर्धारयितुं पार्यते, यावता नैव प्रथमेऽग्नावपां श्रवणमस्ति?
इह हि द्युलोकप्रभृतयः पञ्चाग्नयः पञ्चानामाहुतीनामाधारत्वेनाधीताः;
तेषां च प्रमुखे "असौ वाव लोको गौतमाग्निः" इत्युपन्यस्य तस्मिन्ने-
तस्मिन्नग्नौ देवाः श्रद्धां जुह्वति इति श्रद्धा होम्यद्रव्यत्वेन आवेदिता;

15 प्रकटार्थविवरणम्

कम्। इदानीं जीवेन सह गमनाभावे बाधकसद्भावाच्च अग्न्यादिगमनं गौण-
मेवेत्याह—न च जीवस्येति ॥

प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥

एवं तावत् भूतोपसृष्टानामपां गमनमुपपाद्येदानीं यदुक्तं पञ्चम्यामाहु-
20 तावपां पुरुषाकारः परिणाम इति तदाक्षिप्य समाधत्ते—प्रथमेऽश्रवणादिति ॥
ननु देवा यजमानप्राणाः अग्न्यादयश्च श्रद्धां जुह्वतीत्येतावन्मात्रं यद्यपि श्रुतम्,
तथापि तत्रापां होम्यद्रव्यतया कल्प्यन्ते[1] यथोत्तरेषु पर्जन्यादिष्वादिषु [षु इति]

1. T and T¹. तप्यन्ते   2. A omits पर्जन्य.....यदि नाम

### भाष्यम्

न तत्र आपो होम्यद्रव्यतया श्रुताः; यदि नाम पर्जन्यादिषूत्तरेषु चतु-र्ष्वग्निष्वपां होम्यद्रव्यता परिकल्प्येत, परिकल्प्यतां नाम, तेषु होतव्य-तयोपात्तानां सोमादीनां अब्बहुलत्वोपपत्तेः; प्रथमे त्वग्नौ श्रुतां श्रद्धां परित्यज्य अश्रुता आपः परिकल्प्यन्त इति साहसमेतत्; श्रद्धा च नाम प्रत्ययविशेषः, प्रसिद्धिसामर्थ्यात्; तस्मादयुक्तः पञ्चम्यामाहुता-वपां पुरुषभाव इति चेत्—  5

नैष दोषः; हि यतः; तत्रापि प्रथमेऽग्नौ ता एवापः श्रद्धाशब्देनाभि-प्रेयन्ते; कुतः? उपपत्तेः; एवं हि आदिमध्यावसानसंगानात् अनाकुलमेत-देकवाक्यमुपपद्यते; इतरथा पुनः, पञ्चम्यामाहुतावपां पुरुषवच-स्त्वप्रकारे पृष्टे, प्रतिवचनावसरे प्रथमाहुतिस्थाने यद्यनपो होम्यद्रव्यं श्रद्धां नामावतारयेत् ततः अन्यथा प्रश्नोऽन्यथा प्रतिवचनमित्येक-वाक्यता न स्यात्। "इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इति च उपसंहरन् एतदेव दर्शयति। श्रद्धाकार्यं च सोम-वृष्ट्यादि स्थूलीभवदब्बहुलं लक्ष्यते; सा च श्रद्धाया अप्त्वे युक्तिः।  10 15

### प्रकटार्थविवरणम्

आशङ्क्याह—यदि नाम पर्जन्यादिष्विति ॥ नन्वपां श्रद्धाहेतुत्वात् लक्षणया श्रद्धाशब्दोऽप्स्वेव वर्तेत इति नापामश्रुतत्वमित्याशङ्क्याह—श्रद्धा च नामेति ॥ मुख्यार्थपरिहारेण लक्षणाश्रयणे नास्ति कारणमिति भावः ॥

सिद्धान्तभागं व्याख्याति—नैष दोष इत्यादिना ॥ छागानां[छन्दोगानां] संप्रतिपत्तेः यदि चतुर्ष्वेव स्थानेष्वपां होम्यद्रव्यता, तदा चतुर्थ्यामाहुताविति वाच्यम्; पञ्चम्यामिति विशेषणात् प्रथमस्थानेऽप्यपामेव होम इति भावः। अतश्च श्रद्धाशब्दवाच्या आप इत्याह—श्रद्धाकार्यं चेति ॥ गोमयवृश्चिकादौ प्रत्यक्षबलेनैव विलक्षणयोरपि कार्यकारणभावः स्वीक्रियते; यत्र तु कल्प्यः तत्र कार्यानुगुणमेव कारणं कल्प्यते। अत्र च श्रद्धापरिणामस्य सोमादेः अब्बहु-लत्वोपलम्भात् श्रद्धाया अप्यब्बहुलत्वं कल्प्यत इत्यर्थः। यथोक्तं प्रसिद्धि-  20 25

१. A. आहुतावपीति

भाष्यम्

कारणानुरूपं हि कार्यं भवति । न च श्रद्धाख्यः प्रत्ययः, मनसो जीवस्य वा धर्मः सन् धर्मिणो निष्कृष्य होमायोपादातुं शक्यते । पश्वादिभ्य इव हृदयादीनि इति, आप एव श्रद्धाशब्दा भवेयुः । श्रद्धा-
5 शब्दश्चाप्सूपपद्यते, वैदिकप्रयोगदर्शनात्—"श्रद्धा वा आपः" इति । तनुत्वं श्रद्धासारूप्यं गच्छन्ति आपो देहबीजभूता इत्यतः, श्रद्धाशब्दाः स्युः—यथा सिंहपराक्रमो नरः सिंहशब्दो भवति । श्रद्धापूर्वककर्मसमवायाच्च अप्सु श्रद्धाशब्द उपपद्यते, मञ्चशब्द इव पुरुषेषु ; श्रद्धाहेतुत्वाच्च श्रद्धाशब्दोपपत्तिः, "आपो हास्मै श्रद्धां संनमन्ते पुण्याय
10 कर्मणे" इति श्रुतेः ॥

## अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ३-१-६ ॥

अथापि स्यात्—प्रश्नप्रतिवचनाभ्यां नाम आपः श्रद्धादिक्रमेण पञ्चम्यामाहुतौ पुरुषाकारं प्रतिपद्येरन् ; न तु तत्संपरिष्वक्ता जीवा

प्रकटार्थविवरणम्

15 बलात् प्रत्ययविशेषः श्रद्धा नामेति, तत्राह—न च श्रद्धाख्य इति ॥ जुहोतिश्रुतिबलान्मुख्यार्थत्याग एव युक्त[1] इत्यर्थः । "उपपत्तेः" इति सूत्रभागं प्रकारान्तरेण व्याचष्टे—श्रद्धाशब्दश्चाप्स्विति ॥ वैदिको वा प्रयोगः कया वृत्त्येत्याशङ्क्याह—तनुत्वमिति ॥ सूक्ष्मत्वगुणयोगात् गौणत्वमुक्तम् । इदानीं लक्षणामाह—श्रद्धापूर्वकेति ॥ श्रद्धापूर्वकं यत्कर्म तत्साधनतया अपां तत्सं-
20 बन्धात्परम्परया श्रद्धासंबन्धिनीष्वप्सु श्रद्धाशब्दो वर्तेत इत्यर्थः । लक्षणानिमित्तं संबन्धान्तरमाह—श्रद्धाहेतुत्वाच्चेति ॥ अस्मै पुरुषायाधिकारिणे सन्नमन्ते जनयन्ति दर्शनमात्रेणेत्यर्थः ॥

अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥

एवं तावत्प्रथमप्रश्ने ह्यपामेव होतव्यत्वादापः पञ्चम्यामाहुतौ पुरुषाकारं
25 प्रतिपद्येरन्नाम ; तथाप्याद्ये सूत्रे यत्प्रतिज्ञातमद्भिः परिवेष्टितो गच्छति इति

१. A. युक्त्या

भाष्यम्

रंहेयुः, अश्रुतत्वात्—न ह्यत्र अपामिव जीवानां श्रावयिता कश्चिच्छ-
ब्दोऽस्ति; तस्मात् रंहति संपरिष्वक्त इत्ययुक्तम्—इति चेत्, नैष दोषः;
कुतः? इष्टादिकारिणां प्रतीतेः—"अथ य इमे ग्राम इष्टापूर्ते दत्तमि-
त्युपासते ते धूममभिसंभवन्ति" इत्युपक्रम्य इष्टादिकारिणां धूमादिना 5
पितृयाणेन पथा चन्द्रप्राप्तिं कथयति "आकाशाच्चन्द्रमसमेष सोमो
राजा" इति; त एवेहापि प्रतीयन्ते, "तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां
जुह्वति तस्या आहुतेः सोमो राजा संभवति" इति श्रुतिसामान्यात्।
तेषां च अग्निहोत्रदर्शपूर्णमासादिकर्मसाधनभूता दधिपयःप्रभृतयो द्रव-
द्रव्यभूयस्त्वात्प्रत्यक्षमेवापः सन्ति; ता आहवनीये हुताः सूक्ष्मा 10
आहुतयोऽपूर्वरूपाः सत्यः तानिष्टादिकारिण आश्रयन्ति—तेषां च
शरीरं नैधनेन विधानेनान्त्येऽग्नावृत्विजो जुह्वति—"असौ स्वर्गाय
लोकाय स्वाहा" इति; ततस्ताः श्रद्धापूर्वककर्मसमवायिन्य आहुति-
मय्य आपोऽपूर्वरूपाः सत्यः तानिष्टादिकारिणो जीवान्परिवेष्ट्य
अमुं लोकं फलदानाय नयन्तीति यत्, तदत्र जुहोतिना अभिधीयते— 15

प्रकटार्थविवरणम्

तदसदित्याह—अश्रुतत्वादिति ॥ समाधानभागं विवृणोति—नैष दोष इत्या-
दिना ॥ इष्टादिकारिणां प्रदेशान्तरे गमनं प्रतीयतां नाम; ततः प्रकृते किमा-
यातमित्याह—त एवेहापीति ॥ द्युलोकप्राप्त्यनन्तरं सोमसमानशरीरसंभव-
श्रुतिसाम्यादित्यर्थः। ननु महद्वैलक्षण्यं श्रुत्योः दृश्यते कचिच्छ्रद्धाशब्द- 20
वाच्यानामपां द्युलोके होमः, कचिदिष्टादिकारिणां धूमादिक्रमेणाकाशप्राप्तिः;
न चेष्टादिकारिणामापः सन्ति, येन तत्परिवेष्टितानां गमनं स्यादित्याशङ्क्याह—
तेषां चाग्निहोत्रेत्यादिना ॥ नैधनेन अन्त्येष्टिविधानेन। तत्रायं मन्त्रः
असौ तन्नामा स्वर्गाय लोकाय गच्छतु। स्वाहाकारो मन्त्रान्तज्ञापनाय;
श्रद्धाहोमोऽप्यप्परिवेष्टितानामिष्टादिकारिणां द्युलोके नयनमेव। अतो न 25
श्रुत्योर्वैलक्षण्यमिति भावः। वाजसनेयकेऽप्यग्निहोत्राहुत्योः या लोका-

भाष्यम्

"श्रद्धां जुह्वति" इति। तथा च अग्निहोत्रे षट्प्रश्नीनिर्वचनरूपेण वाक्यशेषेण "ते वा एते आहुती हुते उत्क्रामतः" इत्येवमादिना अग्निहोत्राहुत्योः फलारम्भाय लोकान्तरप्राप्तिर्दर्शिता । तस्मादाहुति-
5 मयीभिरद्भिः संपरिष्वक्ता जीवा रंहन्ति स्वकर्मफलोपभोगायेति श्लिष्यते ॥

कथं पुनरिदमिष्टादिकारिणां स्वकर्मफलोपभोगाय रंहणं प्रतिज्ञायते, यावता तेषां धूमप्रतीकेन वर्त्मना चन्द्रमसमधिरूढानामन्नभावं दर्शयति—"एष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति" इति ;
10 "ते चन्द्रं प्राप्यान्नं भवन्ति तांस्तत्र देवा यथा सोमं राजानमाप्यायस्वापक्षीयस्वेत्येवमेतांस्तत्र भक्षयन्ति" इति च समानविषयं श्रुत्यन्तरम्? न च व्याघ्रादिभिरिव देवैर्भक्ष्यमाणानामुपभोगः संभवतीति ; अत उत्तरं पठति—

प्रकटार्थविवरणम्

15 न्तरप्राप्तिरुक्ता, स्वापीष्टादिकारिणां परिवेष्टयैव गतिर्द्रष्टव्येत्याह—तथा चेति॥ "न त्वेवैतयोः त्वमुत्क्रान्तिं न गतिं न तृप्तिं न प्रतिष्ठां न पुनरावृत्तिं न लोकं प्रत्युत्थायिनं वेत्थ" इति जनकेन षट् प्रश्नाः कृताः प्रकृताग्निहोत्रशेषभूताः ; तन्निरूपणं चाकारि याज्ञवल्क्येन "तेवापिते [ते वा एते] आहुती हुते उत्क्रामतः तेऽन्तरिक्षमाविशतः" इत्युपक्रम्य "दिवं पृथिवीं पुरुषं योषितं वाविश्य
20 पुरुषरूपेणोत्तिष्ठतः" इति। वाचस्पतिस्त्वेतदज्ञात्वा अग्निसमिद्धूमार्चिरङ्गारविस्फुलिङ्गविषयाः षट् प्रश्ना इति व्याचख्यौ ॥

सूत्रान्तरशङ्कामाह–कथं पुनरित्यादिना ॥ ननु भक्षशब्देन चन्द्रमा गृह्यते, नेष्टादिकारिणः; ततस्तेऽपि सोमं वा राजानं देवत्वादि तव[?]देववद्भक्षयन्तीत्याशङ्क्य श्रुत्यन्तराद्वेतेषां भक्षत्वसिद्धेर्नैवमित्याह — ते चन्द्रमिति ॥
25 आप्यायस्वापक्षीयस्वेति ॥ पुनःपुनराप्याययन्त्यपक्षयन्ति[क्षपयन्ति]चेत्यर्थः॥

१. A. त्वनूत्क्रान्तिः न गतिः न तृप्तिः न प्रतिष्ठा न पुनरावृत्तिः

२. A. तथा हि

३. T, T¹ and TM omit ननु...ते चन्द्रमिति ॥

भाष्यम्

## भाक्तं वानात्मवित्त्वात्तथा हि दर्शयति ॥ ३-१-७ ॥

वाशब्दश्चोदितदोषव्यावर्तनार्थः । भाक्तमेषामन्नत्वम्, न मुख्यम्; मुख्ये ह्यन्नत्वे "स्वर्गकामो यजेत" इत्येवंजातीयकाधिकारश्रुतिरुपरुध्येत; चन्द्रमण्डले चेदिष्टादिकारिणामुपभोगो न स्यात्, किमर्थमधिकारिण इष्टाद्यायासबहुलं कर्म कुर्युः । अन्नशब्दश्च उपभोगहेतुत्वसामान्यात् अनन्नेऽप्युपचर्यमाणो दृश्यते, यथा—विशोऽन्नं राज्ञां पशवोऽन्नं विशामिति । तस्मादिष्टस्त्रीपुत्रमित्रभृत्यादिभिरिव गुणभावोपगतैरिष्टादिकारिभिर्यत्सुखविहरणं देवानाम्, तदेवैषां भक्षणमभिप्रेतम्, न मोदकादिवच्चर्वणं निगरणं वा । "न ह वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति" इति च देवानां चर्वणादिव्यापारं वारयति । तेषां च इष्टादिकारिणां देवान्प्रति गुणभावोपगतानामप्युपभोग उपपद्यते, राजोपजीविनामिव परिजनानाम् । अनात्मवित्त्वाच्चेष्टादि-

प्रकटार्थविवरणम्

भाक्तं वानात्मवित्त्वात्तथा हि दर्शयति ॥

मुख्यं चेदन्नत्वं स्यात्तदा भवेदुपभोगाभावः, न तु तदस्तीत्याह — वाशब्द इति ॥ अधिक्रियतेऽनेनेत्यधिकारो विधिपुरुषसम्बन्धनिमित्तं कामादि; तद्युक्ता श्रुतिरधिकारश्रुतिः; तस्या उपरोधो वैयर्थ्यमापद्येत । तदेव स्फुटयति—चन्द्रमण्डले चेदिति ॥ न केवलं मुख्यार्थे बाधादन्नशब्दस्यामुख्यार्थत्वम्, अन्यत्र प्रयोगाच्चेत्याह—अन्नशब्दश्चेति ॥ तथापि पारतन्त्र्यान्न सुखसम्बन्ध इत्याशङ्क्याह — तेषां चेष्टादिकारिणामिति ॥ केन दोषेण तेषां देवोपभोग्यत्वं इत्याशङ्क्याह—अनात्मवित्त्वाच्चेति ॥ न केवलं श्रुतिबलाद्, उपपद्यते चेत्याह—स चास्मिन्नपीत्यादिना ॥

१. T and T¹ omit तेषां...भोग्यत्वमित्याशङ्क्याह

भाष्यम्

कारिणां देवोपभोग्यभाव उपपद्यते; तथा हि श्रुतिरनात्मविदां देवोपभोग्यतां दर्शयति—"अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानाम्" इति; स चास्मिन्नपि
5 लोके इष्टादिभिः कर्मभिः प्रीणयन्पशुवद्देवानामुपकरोति, अमुष्मिन्नपि लोके तदुपजीवी तदादिष्टं फलमुपभुञ्जानः पशुवदेव देवानामुपकरोतीति गम्यते ॥

"अनात्मवित्त्वात् तथा हि दर्शयति" इत्यस्य अपरा व्याख्या—अनात्मविदो ह्येते केवलकर्मिण इष्टादिकारिणः, न ज्ञानकर्मसमुच्चयानु-
10 ष्ठायिनः, पञ्चाग्निविद्यामिह आत्मविद्येत्युपचरन्ति, प्रकरणात्; पञ्चाग्निविद्याविहीनत्वाच्चेदमिष्टादिकारिणां गुणवादेनान्नत्वमुद्भाव्यते पञ्चाग्निविद्याज्ञानप्रशंसायै; पञ्चाग्निविद्येह विधित्सिता, वाक्यतात्पर्यावगमात्; तथा हि श्रुत्यन्तरं चन्द्रमण्डले भोगसद्भावं दर्शयति—"स सोमलोके विभूतिमनुभूय पुनरावर्तते" इति; तथान्यदपि श्रुत्यन्तरम् "अथ ये
15 शतं पितॄणां जितलोकानामानन्दाः स एकः कर्मदेवानामानन्दो ये कर्मणा देवत्वमभिसंपद्यन्ते" इति इष्टादिकारिणां देवैः सह संवसतां भोगप्राप्तिं दर्शयति। एवं भाक्तत्वादन्नभाववचनस्य, इष्टादिकारिणोऽत्र जीवा रंहन्तीति प्रतीयते। तस्मात् "रंहति संपरिष्वक्तः" इति युक्तमेवोक्तम् ॥

20 प्रकटार्थविवरणम्

अनात्मवित्त्वादिति ॥ पञ्चाग्निविद्याविहीनत्वात् अन्नत्वं निन्दार्थं केवलकर्मिणाम्; न तु उपभोगाभावार्थमित्याह—अनात्मविदो हीत्यादिना ॥

१. A. अनात्मवित्त्वा च केवलकर्मिणां

भाष्यम्

[ कृतात्ययाधिकरणम् ]

## कृतात्ययेऽनुशयवान्दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ३-१-८ ॥

इष्टादिकारिणां धूमादिना वर्त्मना चन्द्रमण्डलमधिरूढानां भुक्तभोगानां ततः प्रत्यवरोह आम्नायते—"तस्मिन्यावत्संपातमुषित्वाथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतम्" इत्यारभ्य—यावत् रमणीयचरणा ब्राह्मणादियोनिमापद्यन्ते कपूयचरणाः श्वादियोनिमिति । तत्रेदं विचार्यते—किं निरनुशया भुक्तकृत्स्नकर्माणोऽवरोहन्ति, आहोस्वित्सानुशया इति । किं तावत्प्राप्तम्? निरनुशया इति; कुतः? "यावत्संपातम्" इति विशेषणात्—संपातशब्देनात्र कर्माशय उच्यते, संपतन्त्यनेनास्माल्लोकादमुं लोकं फलोपभोगायेति; "यावत्संपातमुषित्वा" इति च कृत्स्नस्य तस्य कृतस्य तत्रैव भुक्ततां दर्शयति; "तेषां यदा तत्पर्यवैति" इति च श्रुत्यन्तरेणैष एवार्थः प्रदर्श्यते । स्यादेतत्—यावदमुष्मिल्लोके उपभोक्तव्यं कर्म तावदुपभुक्त इति कल्पयिष्यामीति; नैवं

प्रकटार्थविवरणम्

कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ॥

येषां पूर्वत्र चन्द्रमण्डलारोहणमुक्तं त एव प्रत्यवरोहन्तो विषय इत्येतद्दर्शयितुं प्रत्यवरोहवाक्यमाह–इष्टादिकारिणामित्यादिना ॥ "यावत्संपातम्" इति विशेषणात् "रमणीयचरणा रमणीयां योनिम्" इति वाक्याच्च संशयमाह—तत्रेदमिति ॥ पूर्वपक्षं कक्षीकरोति—किं तावदित्यादिना ॥ यावदित्यवधिकरणं कृत्स्नोपभोगे लिङ्गमित्यर्थः । कृत्स्नभोगे श्रुत्यन्तरमाह—तेषां यदेति ॥ तेषामिष्टादिकारिणां यदा तत्कर्म भोक्तव्यं पर्यवैति परिसमाप्यते । "अथेममाकाशं पुनरावर्तन्ते" इति वाक्यार्थमन्वयति—स्यादेतदिति ॥ श्रुत्यन्तरविरुद्धमिदं व्याख्यानमित्याह—नैवं कल्पयितुमिति ॥ किं च मरणं तत्सन्निधि-

१. T and T[1] omit तत्

भाष्यम्

कल्पयितुं शक्यते, "यत्किंच" इत्यन्यत्र परामर्शात्—

"प्राप्यान्तं कर्मणस्तस्य यत्किंचेह करोत्ययम् ।
तस्माल्लोकात्पुनरैत्यस्मै लोकाय कर्मणे ॥"

5 इति हि अपरा श्रुतिः "यत्किंच" इत्यविशेषपरामर्शेन कृत्स्नस्येह कृतस्य कर्मणस्तत्र क्षपिततां दर्शयति । अपि च प्रायणमनारब्धफलस्य कर्मणोऽभिव्यञ्जकम्; प्राक्प्रायणात् आरब्धफलेन कर्मणा प्रतिबद्धस्याभिव्यक्त्यनुपपत्तेः; तच्च अविशेषाद्यावत्किंचिदनारब्धफलं तस्य सर्वस्याभिव्यञ्जकम्; न हि साधारणे निमित्ते नैमित्तिकमसा-
10 धारणं भवितुमर्हति; न ह्यविशिष्टे प्रदीपसंनिधौ, घटोऽभिव्यज्यते न पट इत्युपपद्यते । तस्मान्निरनुशया अवरोहन्तीत्येवं प्राप्ते ब्रूमः—

कृतात्ययेऽनुशयवानिति । येन कर्मवृन्देन चन्द्रमसमारूढाः फलोपभोगाय, तस्मिन्नुपभोगेन क्षयिते, तेषां यदम्मयं शरीरं चन्द्रमस्युपभोगायारब्धम्, तत् उपभोगक्षयदर्शनशोकाग्निसंपर्कात्प्रविलीयते—
15 सवितृकिरणसंपर्कादिव हिमकरकाः, हुतभुगर्चिःसंपर्कादिव च घृतकाठिन्यम्; ततः कृतात्यये कृतस्येष्टादेः कर्मणः फलोपभोगेन उपक्षये सति, सानुशया एवेममवरोहन्ति; केन हेतुना? दृष्टस्मृतिभ्यामित्याह । तथा हि प्रत्यक्षा श्रुतिः सानुशयानामवरोहं दर्शयति—"तद्य

प्रकटार्थविवरणम्

20 तावच्छेषाभिव्यञ्जकम्, अभिव्यञ्जकत्वात्, प्रदीपवत्; अभिव्यक्तिश्च कर्मणां फलदानायोन्मुखत्वम्; तत्र किंचिद्भुज्यते, किंचिन्न भुज्यत इति न शक्यं वक्तुमित्याह— अपि चेत्यादिना ॥ प्रतिज्ञाभागं व्याचष्टे— येन कर्मवृन्देनेत्यादिना ॥ हेतुभाष्यमवतारयति—केन हेतुनेति ॥ तत्तत्र तेषु मध्ये ये रमणीयचरणाः इह ते रमणीयां योनिमापद्येरन्निति यत् तदभ्याशो ह क्षिप्रमेवाप्रतिबन्धेनेत्यर्थः ।
25 कपूयचरणाः कुत्सितचरणाः । [illegible] दर्शयति, नानुशया-

१. TM. तेषां

२. T¹. अभ्याशो वा
TM. अभ्याशे इति-
A. अभ्याशो क्षिप्र-

भाष्यम्

इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्ब्राह्मण-
योनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा अथ य इह कपूयचरणा
अभ्याशो ह यत्ते कपूयां योनिमापद्येरञ्श्वयोनिं वा सूकरयोनिं वा
चण्डालयोनिं वा" इति; चरणशब्देनानुशयः सूच्यत इति वर्णयि- 5
ष्यति। दृष्टश्चायं जन्मनैव प्रतिप्राण्युच्चावचरूप उपभोगः प्रविभज्यमान
आकस्मिकत्वासंभवादनुशयसद्भावं सूचयति, अभ्युदयप्रत्यवाययोः
सुकृतदुष्कृतहेतुत्वस्य सामान्यतः शास्त्रेणावगमितत्वात्। स्मृतिरपि—
"वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण
विशिष्टदेशजातिकुलरूपायुःश्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्ते" 10
इति सानुशयानामेवावरोहं दर्शयति—

कः पुनरनुशयो नामेति—केचित्तावदाहुः—स्वर्गार्थस्य कर्मणो

प्रकटार्थविवरणम्

विस्याशङ्कयाह—चरणशब्देनेति॥ अनुशेते भोक्तारमनुगच्छतीत्यनुशयः,
कर्मसमूह इत्यर्थः। इहशब्देन प्रत्यक्षा श्रुतिर्व्याख्याता। अधुना दृष्टं लिङ्गमाह- 15
दृष्टश्चायमिति॥ जन्मारभ्य दृष्टोऽयमुत्कृष्टापकृष्टरूपो भोगः कर्मनिमित्तः,
उपभोगत्वात्, स्वर्गनरकोपभोगवदित्यर्थः। य उपभोगः स कर्मनिमित्त इति
व्याप्तिः कुतः सिद्धा? तत्राह—अभ्युदयेति॥ 'पुण्यः पुण्येन कर्मणा पापः
पापेन' इति सामान्यशास्त्रेण सुखदुःखयोः सुकृतदुष्कृतकार्यत्वस्य बोधि-
तत्वादियं व्याप्तिः सिद्धेत्यर्थः। दृष्टं व्याख्याय स्मृतिं व्याचष्टे—स्मृतिरपीति॥ 20
प्रेत्य प्रायणं कृत्वा, चन्द्रलोकमधिरुह्येत्यर्थः। ततः शेषेण भुक्तादन्येन जन्म
प्रतिपद्यन्त इत्यन्वयः। श्रुतं ज्ञानम्; वृत्तमाचारः; देशश्च जातिश्च कुलं च
रूपं चायुश्च श्रुतं च वृत्तं च सुखं च मेधा च एते विशिष्टा येषां ते तथोक्ताः॥

एकदेशिमतनिरासायानुशयं शङ्कते—कः पुनरिति॥ निरस्यस्वरूपमुप-
न्यस्यति—केचिदिति॥ भाष्यानुसारिश्लोकस्याविरोधायुक्तः विशेषः[अवशेषः]; 25

१. T¹. दृष्टशब्देन
२. A. प्रत्यक्षदृष्टा
३. TM and A. देशीय.

भाष्यम्

भुक्तफलस्यावशेषः कश्चिदनुशयो नाम, भाण्डानुसारिस्नेहवत्—यथा हि स्नेहभाण्डं रिच्यमानं न सर्वात्मना रिच्यते, भाण्डानुसार्येव कश्चित्स्नेहशेषोऽवतिष्ठते, तथा अनुशयोऽपीति । ननु कार्यविरोधित्वाददृष्टस्य न भुक्तफलस्यावशेषावस्थानं न्याय्यम्; नायं दोषः; न हि सर्वात्मना भुक्तफलत्वं कर्मणः प्रतिजानीमहे । ननु निरवशेषकर्मफलोपभोगाय चन्द्रमण्डलमारूढाः; बाढम्—तथापि स्वल्पकर्मावशेषमात्रेण तत्रावस्थानं न लभ्यते; यथा किल कश्चित्सेवकः सकलैः सेवोपकरणैः राजकुलमुपसृप्तश्चिरप्रवासात्परिक्षीणबहूपकरणः छत्रपादुकादिमात्रावशेषो न राजकुलेऽवस्थातुं शक्नोति, एवमनुशयमात्रपरिग्रहो न चन्द्रमण्डलेऽवस्थातुं शक्नोतीति ॥

न चैतद्युक्तमिव । न हि स्वर्गार्थस्य कर्मणो भुक्तफलस्यावशेषानुवृत्तिरुपपद्यते, कार्यविरोधित्वात्—इत्युक्तम् । नन्वेतदप्युक्तम्—न

प्रकटार्थविवरणम्

कर्मणः पुनः कदलीवत्फलोदय एव विरोधी; ततो जातं चेत् फलं नष्टमेव कर्मेति न शेषावस्थानमित्याह—ननु कार्यविरोधित्वादिति ॥ भवेदयं दोषो यदि कृत्स्नं कर्म फलितं स्यात्; न तु तदस्तीत्याह—नायं दोष इति ॥ येन कर्मणा चन्द्रमण्डलं प्राप्तास्तत्कर्म कृत्स्नं तत्र न भुज्यत इति विरुद्धमित्याह—ननु निरवशेषेति ॥ दृष्टान्तेनाविरोधमाह—बाढमित्यादिना ॥

एतदेकदेशिमतं दूषयति— न चैतद्युक्तमित्यादिना ॥ स्वर्गार्थेन कर्मणा स्वर्ग आरब्धो न वेति वक्तव्यम्; प्रथमे नास्त्यवशेषः; चरमे कर्मव्यर्थतेति भावः । आरब्ध एव स्वर्गः, किं तु कृत्स्नो नारब्ध इत्याह—नन्वेतदप्युक्तमिति ॥

१, T, T[1] and TM. नन्वेतदुक्तं

भाष्यम्

स्वर्गफलस्य कर्मणो निखिलस्य भुक्तफलत्वं भविष्यतीति; तदेतदपेशलम् । स्वर्गार्थं किल कर्म स्वर्गस्थस्यैव स्वर्गफलं निखिलं न जनयति, स्वर्गच्युतस्यापि कंचित्फललेशं जनयतीति न शब्दप्रमाणकानामीदृशी कल्पनावकल्पते; स्नेहभाण्डे तु स्नेहलेशानुवृत्तिर्दृष्टत्वादुपपद्यते; तथा सेवकस्योपकरणलेशानुवृत्तिश्च दृश्यते; न त्विह तथा स्वर्गफलस्य कर्मणो लेशानुवृत्तिर्दृश्यते; नापि कल्पयितुं शक्यते, स्वर्गफलत्वशास्त्रविरोधात् । अवश्यं चैतदेवं विज्ञेयम्—न स्वर्गफलस्य इष्टादेः कर्मणो भाण्डानुसारिस्नेहवदेकदेशोऽनुवर्तमानोऽनुशय इति; यदि हि येन सुकृतेन कर्मणा इष्टादिना स्वर्गमन्वभूवन्, तस्यैव कश्चिदेकदेशोऽनुशयः कल्प्यते, ततो रमणीय एवैकोऽनुशयः स्यात्, न विपरीतः; तत्रेयमनुशयविभागश्रुतिरुपरुध्येत—"तद्य इह रमणीयचरणा...अथ य इह कपूयचरणाः" इति । तस्मादामुष्मिकफले कर्मजात उपभुक्तेऽवशिष्टमैहिकफलं कर्मान्तरजातमनुशयः, तद्वन्तोऽवरोहन्तीति ॥

यदुक्तम्—"यत्किंच" इत्यविशेषपरामर्शात्सर्वस्येह कृतस्य कर्मणः फलोपभोगेनान्तं प्राप्य निरनुशया अवरोहन्तीति, नैतदेवम्; अनुशयसद्भावस्यावगमितत्वात्, यत्किंचिदिह कृतमामुष्मिकफलं कर्मारब्धभोगं तत्सर्वं फलोपभोगेन क्षपयित्वा—इति गम्यते । यदप्युक्तम्—प्रायणं

प्रकटार्थविवरणम्

तदेतदशोभनम्, स्वर्गार्थताव्याघातप्रसङ्गादित्याह—तदेतदपेशलमिति ॥ दृष्टान्तं विघटयति—स्नेहभाण्डे त्विति ॥ किं च स्वर्गभ्रष्टानां सर्वेषामेव रमणीयचरणत्वप्रसङ्गादप्यसङ्गतमेतन्मतमित्याह—अवश्यं चैतदिति ॥ इदानीं स्वमतमुपसंहरति—तस्मादिति ॥

प्रथमं पूर्वपक्षबीजमनूद्य दूषयति—यदुक्तमित्यादिना ॥ सामान्यवचनस्यैहिककर्मसद्भावविषयविशेषालिङ्गेन सङ्कोचः क्रियत इति भावः । पुनरप्युक्तमनुभाषते —यदप्युक्तमिति ॥ प्रायणमपि न सकलाभिव्यञ्जकमनुमातुं

१. A omits रप्युक्त...अपि चेत्यादिना

### भाष्यम्

अविशेषादनारब्धफलं कृत्स्नमेव कर्माभिव्यनक्ति; तत्र केनचित्कर्मणामुष्मिँल्लोके फलमारभ्यते, केनचिदस्मिन्नित्ययं विभागो न संभवतीति—तदप्यनुशयसद्भावप्रतिपादनेनैव प्रत्युक्तम्। अपि च केन हेतुना
5 प्रायणमनारब्धफलस्य कर्मणोऽभिव्यञ्जकं प्रतिज्ञायत इति वक्तव्यम्; आरब्धफलेन कर्मणा प्रतिबद्धस्येतरस्य वृत्त्युद्भवानुपपत्तेः, तदुपशमात् प्रायणकाले वृत्त्युद्भवो भवतीति यद्युच्येत—ततो वक्तव्यम्—यथैव तर्हि प्राक्प्रायणात् आरब्धफलेन कर्मणा प्रतिबद्धस्य इतरस्य वृत्त्युद्भवानुपपत्तिः, एवं प्रायणकालेऽपि विरुद्धफलस्यानेकस्य कर्मणो युगप-
10 त्फलारम्भासंभवात् बलवता प्रतिबद्धस्य दुर्बलस्य वृत्त्युद्भवानुपपत्तिरिति। न हि अनारब्धफलत्वसामान्येन जात्यन्तरोपभोग्यफलमप्यनेकं कर्म एकस्मिन्प्रायणे युगपदभिव्यक्तं सत् एकां जातिमारभत इति शक्यं वक्तुम्, प्रतिनियतफलत्वविरोधात्; नापि कस्यचित्कर्मणः प्रायणे-

### प्रकटार्थविवरणम्

15 शक्यते। "तद्य इह रमणीयचरणाः" इत्यादिविशेषवचनविरोधादित्यर्थः॥ पूर्वं प्रायणस्य व्यञ्जकत्वमभ्युपगम्योक्तम्; इदानीं तदपि नास्तीत्याह—अपि चेत्यादिना॥ प्राप्ताप्राप्तविवेकेन बलवता प्रतिबन्धं दुर्बलं तिष्ठतीति वक्तव्यम्; न तु प्रायणं सर्वाभिव्यञ्जकमिति भावः। युगपत्फलारम्भासंभवादित्येतदसिद्धम्, यतो विरुद्धे अपि सुखदुःखे एकेन देहेन भोक्तुं शक्येते;
20 प्रवृत्तफले चोपभुक्ते अनारब्धफलत्वाविशेषात् सर्वमेव कर्मैकं जन्मारभत इत्याशङ्क्याह—न ह्यनारब्धफलत्वेति॥ भवेदेवं यदि सुखदुःखमात्रं फलं स्यात्; न तु तथा; किं तु देवदेहोपभोग्य आनन्दः फलमेकस्य, अपरस्य नारककलेवरे प्रचुरं दुःखम्; एवंजातीयकविरुद्धानेकफलस्य ब्रह्महत्याश्वमेधादेर्नैकजन्मारम्भसंभव इति भावः। ननु यदत्यन्तमेव विरुद्धफलं कर्मद्वयं तत्रैकेनापरस्य
25 उच्छेद एवास्त्वित्याशङ्क्याह—नापि कस्यचिदिति॥ ननु कृतस्य कर्मणः

१. A. युगपत्सर्वारम्भ-
२. A. त्वेऽपीति
३. T and T¹. संमुखः

भाष्यम्

भिव्यक्तिः कस्यचिदुच्छेद इति शक्यते वक्तुम्, ऐकान्तिकफलत्व-
विरोधात्; न हि प्रायश्चित्तादिभिर्हेतुभिर्विना कर्मणामुच्छेदः संभा-
व्यते; स्मृतिरपि विरुद्धफलेन कर्मणा प्रतिबद्धस्य कर्मान्तरस्य चिरमव-
स्थानं दर्शयति— 5

"कदाचित्सुकृतं कर्म कूटस्थमिह तिष्ठति ।
मज्जमानस्य संसारे यावद्दुःखाद्विमुच्यते ॥"

इत्येवंजातीयका । यदि च कृत्स्नमनारब्धफलं कर्म एकस्मिन्प्राय-
णेऽभिव्यक्तं सत् एकां जातिमारभेत, ततः स्वर्गनरकतिर्यग्योनिष्व-
धिकारानवगमात् धर्माधर्मानुत्पत्तौ निमित्ताभावात् नोत्तरा जाति- 10
रुपपद्येत, ब्रह्महत्यादीनां च एकैकस्य कर्मणोऽनेकजन्मनिमित्तत्वं
स्मर्यमाणमुपरुध्येत; न च धर्माधर्मयोः स्वरूपफलसाधनादिसम-

प्रकटार्थविवरणम्

फलमवश्यं भुज्यत इति नास्त्येकान्तः, प्रायश्चित्तेन ब्रह्मज्ञानेन च क्षयस्य शास्त्र-
सिद्धत्वादित्याशङ्क्य सत्यं तद्व्यतिरेकेण नियतफलत्वमेवेत्याह—न हीति ॥ 15
उक्तेऽर्थे स्मृतिं प्रमाणयति—स्मृतिरपीति ॥ इतश्च प्रायणेऽभिव्यक्तं कृत्स्नमेव
कर्मैकं देहमारभत इति न शक्यं वक्तुमित्याह—यदि च कृत्स्नमित्यादिना ॥
मनुष्याधिकारत्वाच्छास्त्रस्य अन्यत्र धर्माद्यनिष्पत्तेः नोत्तरं जन्म स्यादित्यर्थः ॥

"श्वसूकरखरोष्ट्राणां गोऽजाविमृगपक्षिणाम् ।
चण्डालपुल्कसानां च ब्रह्महा योनिमृच्छति ॥" 20

इत्यादिस्मृतिविरोधोऽप्यैकभविकः कर्माशय इति वदतः स्यादित्याह—
ब्रह्महत्यादीनां चेति ॥ नन्वेकं कर्म एकफलं दृष्टम्; ततः सामान्यतोदृष्ट-
विरुद्धं वचनमित्याशङ्क्याह—न च धर्माधर्मयोरिति ॥ इतश्च प्रायणं सकल-

१. T. प्रायश्चित्तौ
२. T M. भावितः
३. TM and A. अतः

## भाष्यम्

धिगमे शास्त्रादतिरिक्तं कारणं शक्यं संभावयितुम् । न च दृष्ट-
फलस्य कर्मणः कारीर्यादेः प्रायणमभिव्यञ्जकं संभवतीति, अव्या-
पिकापीयं प्रायणस्याभिव्यञ्जकत्वकल्पना ; प्रदीपोपन्यासोऽपि कर्म-
5 बलाबलप्रदर्शनेनैव प्रतिनीतः ; स्थूलसूक्ष्मरूपाभिव्यक्त्यनभिव्यक्तिव-
च्चेदं द्रष्टव्यम्—यथा हि प्रदीपः समानेऽपि संनिधाने स्थूलं रूपमभि-
व्यनक्ति, न सूक्ष्मम्—एवं प्रायणं समानेऽप्यनारब्धफलस्य कर्मजातस्य
प्राप्तावसरत्वे बलवतः कर्मणो वृत्तिमुद्भावयति, न दुर्बलस्येति । तस्मात्
श्रुतिस्मृतिन्यायविरोधादश्लिष्टोऽयमशेषकर्माभिव्यक्त्यभ्युपगमः । शेष-
10 कर्मसद्भावेऽनिर्मोक्षप्रसङ्ग इत्ययमप्यस्थाने संभ्रमः, सम्यग्दर्शनादशेष-
कर्मक्षयश्रुतेः । तस्मात् स्थितमेतदेव—अनुशयवन्तोऽवरोहन्तीति । ते
चावरोहन्तो यथेतमनेवं च अवरोहन्ति ; यथेतमिति यथागतमित्यर्थः ;
अनेवमिति तद्विपर्ययेणेत्यर्थः । धूमाकाशयोः पितृयाणेऽध्वन्युपात्तयोरव-
रोहे संकीर्तनात् यथेतंशब्दाच्च यथागतमिति प्रतीयते ; रात्र्याद्यसंकी-
15 र्तनादभ्राद्युपसंख्यानाच्च विपर्ययोऽपि प्रतीयते ॥

## प्रकटार्थविवरणम्

कर्मव्यञ्जकमिति न शक्यं वक्तुमित्याह—न च दृष्टफलस्येति ॥ यश्च प्रदीप-
दृष्टान्तः, सोऽपि प्रायणस्य सति व्यञ्जकत्वेऽनुकूलः स्यात् । यदा तु न प्रायणं
व्यञ्जकं किन्तु बलवता प्रतिबद्धं दुर्बलं तिष्ठति इति दर्शितम्, तदा तेनैव
20 सोऽपि निरस्तो भवतीत्यर्थः । किंच प्रायणस्य व्यञ्जकत्वाङ्गीकारेऽपि न सकल-
व्यञ्जकत्वे प्रदीपदृष्टान्तः साध्यवैकल्यादित्याह—स्थूलसूक्ष्मेति ॥ ननु यदि
सकलं कर्मैकस्मिन् मुमुक्षुदेहे न भुज्यते, तदावशिष्टकर्मानन्त्यान्न कदाचि-
न्मोक्षोपपत्तिः ; अतो मोक्षसिद्ध्यन्यथानुपपत्त्या प्रायणेनाभिव्यक्तं सकलं कर्म
एकं शरीरमारभत इत्यभ्युपगच्छाम इत्याशङ्क्याह—शेषकर्मसद्भाव इति ॥
25 सूत्रशेषं व्याचष्टे—ते चावरोहन्त इति ॥

१. T. न शेषकर्मसंभावः
T¹. अशेषकर्मसंभावः

भाष्यम्

## चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः ॥ ३-१-९ ॥

अथापि स्यात्—या श्रुतिरनुशयसद्भावप्रतिपादनायोदाहृता—"तद्य इह रमणीयचरणाः" इति, सा खलु चरणात् योन्यापत्तिं दर्शयति, नानुशयात्; अन्यच्चरणम्, अन्योऽनुशयः—चरणं चारित्रम् आचारः शीलमित्यनर्थान्तरम्, अनुशयस्तु भुक्तफलात्कर्मणोऽतिरिक्तं कर्म अभिप्रेतम्; श्रुतिश्च कर्मचरणे भेदेन व्यपदिशति—"यथाकारी यथाचारी तथा भवति" इति "यान्यनवद्यानि कर्माणि। तानि सेवितव्यानि। नो इतराणि। यान्यस्माकँ सुचरितानि। तानि त्वयोपास्यानि।" इति च; तस्मात् चरणाद्योन्यापत्तिश्रुतेः नानुशयसिद्धिः इति चेत्, नैष दोषः, यतोऽनुशयोपलक्षणार्थैव एषा चरणश्रुतिरिति कार्ष्णाजिनिराचार्यो मन्यते ॥

## आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ ३-१-१० ॥

स्यादेतत्—कस्मात्पुनश्चरणशब्देन श्रौतं शीलं विहाय लाक्षणिकः अनुशयः प्रत्याय्यते; ननु शीलस्यैव श्रौतस्य विहितप्रतिषिद्धस्य साध्वसाधुरूपस्य शुभाशुभयोन्यापत्तिः फलं भविष्यति; अवश्यं च शीलस्यापि किंचित्फलमभ्युपगन्तव्यम्; अन्यथा ह्यानर्थक्यमेव शीलस्य

प्रकटार्थविवरणम्

चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनः ॥

पूर्वोदाहृतां श्रुतिमाक्षेपसमाधानाभ्यां विवृणोति—चरणादित्यादिना ॥

आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥

कार्ष्णाजिनिवाक्यं पौरुषेयम्; तस्य मूलं वक्तव्यम्; अतो मुख्यपरित्यागेन लक्षणाश्रयणे किं कारणमित्युत्सूत्रमाह—स्यादेतत् कस्मात्पुनरिति ॥ अथ शीलाद्योन्यापत्त्यनुपपत्त्या कर्म लक्ष्यत इत्याशङ्क्याह—ननु शीलस्यैवेति ॥ "यथाचारी तथा भवति" इति श्रुतेरित्यर्थः । किं च वैयर्थ्यपरिहारार्थमपि फलं कल्पनीयमित्याह सूत्रभागेन—अवश्यं चेति ॥ आचारस्य क्रत्वर्थत्वात् प्रया-

भाष्यम्

प्रसज्येत—इति चेत्, नैष दोषः; कुतः? तदपेक्षत्वात्; इष्टादि हि कर्मजातं चरणापेक्षम्; न हि सदाचारहीनः कश्चिदधिकृतः स्यात्—"आचारहीनं न पुनन्ति वेदाः" इत्यादिस्मृतिभ्यः पुरुषार्थत्वेऽप्याचारस्य नानर्थक्यम्; इष्टादौ हि कर्मजाते फलमारभमाणे तदपेक्ष एवाचारस्तत्रैव कंचिदतिशयमारप्स्यते। कर्म च सर्वार्थकारि—इति श्रुतिस्मृतिप्रसिद्धिः। तस्मात्कर्मैव शीलोपलक्षितमनुशयभूतं योन्यापत्तौ कारणमिति कार्ष्णाजिनेर्मतम्; न हि कर्मणि संभवति शीलात् योन्यापत्तिर्युक्ता; न हि पद्भ्यां पलायितुं पारयमाणो जानुभ्यां रंहितुमर्हति—इति॥

## सुकृतदुष्कृते एवेति तु बादरिः॥ ३-१-११॥

बादरिस्त्वाचार्यः सुकृतदुष्कृते एव चरणशब्देन प्रत्याय्येते इति मन्यते; चरणम् अनुष्ठानं कर्मेत्यनर्थान्तरम्। तथा हि अविशेषेण कर्ममात्रे चरतिः प्रयुज्यमानो दृश्यते—यो हि इष्टादिलक्षणं पुण्यं कर्म करोति, तं लौकिका आचक्षते 'धर्मं चरत्येष महात्मा' इति। आचारोऽपि

प्रकटार्थविवरणम्

आदिवत् तत्फलेनैव फलवत्त्वाद्वैयर्थ्यं तावन्नास्तीत्याह—नैष दोष इति॥ इदानीं स्नानादिवत् पुरुषार्थत्वमङ्गीकृत्याह—पुरुषार्थत्वेऽपीति॥ यथोक्तं कर्मलक्षणायाः किं कारणमिति, तत्राह—कर्म चेति॥ यथोक्तं शीलस्यैव योन्यापत्तिः फलं भविष्यतीति, तत्राह—न हि कर्मणीति॥

सुकृतदुष्कृते एवेति तु बादरिः॥

मतान्तरमाह— बादरिस्त्विति॥ यदुक्तं कर्म सर्वार्थकारि, नाचारो नाम कर्मास्तीति, तत्राह—आचारोऽपि चेति॥

"अक्रोधः सर्वभूतेषु कर्मणा मनसा गिरा।
अनुग्रहश्च दानं च शीलमेतद्विदुर्बुधाः॥"

इति स्मृतेरक्रोधादेः साधारणधर्मस्य शीलत्वावगमादित्यर्थः। आचारश्चापि

भाष्यम्

च धर्मविशेष एव । भेदव्यपदेशस्तु कर्मचरणयोर्ब्राह्मणपरिव्राजकन्यायेनाप्युपपद्यते । तस्मात् रमणीयचरणाः प्रशस्तकर्माणः, कपूयचरणा निन्दितकर्माण इति निर्णयः ॥

[ अनिष्टादिकार्यधिकरणम् ]　　5

## अनिष्टादिकारिणामपि च श्रुतम् ॥ ३-१-१२ ॥

इष्टादिकारिणश्चन्द्रमसं गच्छन्तीत्युक्तम् । ये त्वितरेऽनिष्टादिकारिणः, तेऽपि किं चन्द्रमसं गच्छन्ति, उत न गच्छन्तीति चिन्त्यते । तत्र तावदाह—इष्टादिकारिण एव चन्द्रमसं गच्छन्तीत्येतत् न ; कस्मात् ? यतोऽनिष्टादिकारिणमपि चन्द्रमण्डलं गन्तव्यत्वेन श्रुतम् । तथा हि 10 अविशेषेण कौषीतकिनः समामनन्ति “ ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति ” इति । देहारम्भोऽपि च पुनर्जायमानानां न अन्तरेण चन्द्रमासिमवकल्पते, “ पञ्चम्यामाहुतौ ” इत्याहुतिसंख्यानियमात् । तस्मात्सर्व एव चन्द्रमसमासीदेयुः । इष्टादिकारिणामितरेषां च समानगतित्वं न युक्तमिति चेत्, न, इतरेषां चन्द्रमण्डले भोगा- 15 भावात् ॥

प्रकटार्थविवरणम्

कर्मत्वे कथं यथाकारी यथाचारी चेति भेदव्यपदेश इत्याशङ्क्याह—[भेद]-व्यपदेशस्त्विति ॥ यस्माल्लक्षणायां नास्ति निमित्तम्, तस्माच्चरणशब्दोऽनुशये मुख्य इति बादरीमतं सिद्धान्त इत्याह—तस्मादिति ॥ 20

अनिष्टादिकारिणामपि च श्रुतम् ॥

प्रथमाधिकरणेन सम्बन्धमाह—इष्टादिकारिण इति ॥ “ ये वै के च ” इत्यविशेषवचनात् “वैवस्वतं सङ्गमनम्” इति वचनाच्च संशय इत्यर्थः । पूर्वपक्षसूत्रं योजयति—तत्र तावदाहेति ॥ चकारसूचितामुपपत्तिमाह —देहारम्भोऽपि चेति ॥ ननु साध्वसाधुकारिणोः समानमार्गत्वं लोकानुभवबाधित- 25 मित्याशङ्क्य विशेषमाह—इष्टादिकारिणामित्यादिना ॥

भाष्यम्

## संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ ३-१-१३ ॥

तुशब्दः पक्षं व्यवर्तयति । नैतदस्ति—सर्वे चन्द्रमसं गच्छन्तीति ;
5 कस्मात्? भोगार्थैव हि चन्द्रारोहणम्, न निष्प्रयोजनम्; नापि प्रत्यवरोहार्थैव—यथा कश्चिद्वृक्षमारोहति पुष्पफलोपादानाय, न निष्प्रयोजनम्, नापि पतनायैव ; भोगश्चानिष्टादिकारिणां चन्द्रमसि नास्तीत्युक्तम् ; तस्मादिष्टादिकारिण एव चन्द्रमसमारोहन्ति, नेतरे । ते तु संयमनं यमालयमवगाह्य स्वदुष्कृतानुरूपा यामीर्यातना अनुभूय पुनरेवेमं लोकं
10 प्रत्यवरोहन्ति ; एवंभूतौ तेषामारोहावरोहौ भवतः ; कुतः ? तद्गतिदर्शनात् ; तथा हि यमवचनरूपा श्रुतिः प्रयतामनिष्टादिकारिणां यमवश्यतां दर्शयति—

“न सांपरायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम् ।
अयं लोको नास्ति पर इतिमानी पुनः पुनर्वशमापद्यते मे ॥”

15 इति, “वैवस्वतं संगमनं जनानाम्” इत्येवंजातीयकं च बह्वेव यमवश्यताप्राप्तिलिङ्गं भवति ॥

## स्मरन्ति च ॥ ३-१-१४ ॥

अपि च मनुव्यासप्रभृतयः शिष्टाः संयमने पुरे यमायत्तं कपूयकर्मविपाकं स्मरन्ति नाचिकेतोपाख्यानादिषु ॥

20 प्रकटार्थविवरणम्

संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥

सूत्रान्तरेण सिद्धान्तमुपक्रमते—संयमने त्विति ॥ संपरायः परलोकः ; तत्प्राप्तिसाधनभूतो धर्मविशेषः सांपरायः; स चायमविवेकिनं प्रति न प्रतिभाति, नात्मानं प्रकटीकरोतीत्यर्थः । अनिष्टादिकारिणां चन्द्रमण्डले भोगाभावाद्यमव-
25 श्यतायाश्च श्रुतिस्मृतिसिद्धत्वान्नास्ति चन्द्रमण्डलगमनमिति संक्षेपः ॥

भाष्यम्

## अपि च सप्त ॥ ३-१-१५ ॥

अपि च सप्त नरका रौरवप्रमुखा दुष्कृतफलोपभोगभूमित्वेन स्मर्यन्ते पौराणिकैः ;ताननिष्टादिकारिणः प्राप्नुवन्ति ; कुतस्ते चन्द्रं प्राप्नुयुरि- त्यभिप्रायः ॥ 5

ननु विरुद्धमिदम्—यमायत्ता यातनाः पापकर्माणोऽनुभवन्तीति, यावता तेषु रौरवादिषु अन्ये चित्रगुप्तादयो नानाधिष्ठातारः स्मर्यन्त इति ; नेत्याह—

## तत्रापि च तद्व्यापारादविरोधः ॥ ३-१-१६ ॥

तेष्वपि सप्तसु नरकेषु तस्यैव यमस्याधिष्ठातृत्वव्यापाराभ्युपगमा- 10 दविरोधः ; यमप्रयुक्ता एव हि ते चित्रगुप्तादयोऽधिष्ठातारः स्मर्यन्ते ॥

## विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ ३-१-१७ ॥

पञ्चाग्निविद्यायाम् "वेत्थ यथासौ लोको न संपूर्यते" इत्यस्य प्रश्नस्य प्रतिवचनावसरे श्रूयते—"अथैतयोः पथोर्न कतरेण चन तानी- मानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयं 15

प्रकटार्थविवरणम्

अपि च सप्त ॥

तत्रापि च तद्व्यापारादविरोधः ॥

इदानीं यमवश्यतामाक्षिप्य समाधत्ते—ननु विरुद्धमित्यादिना ॥

विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ 20

मार्गद्वयभ्रष्टानां तृतीयस्थानसङ्कीर्तनादपि नानिष्टादिकारिणां चन्द्रमण्डल- गमनमिति हेत्वन्तरं दर्शयितुं श्रुतिं तावदाह—पञ्चाग्निविद्यायामित्यादिना ॥

भाष्यम्

स्थानं तेनासौ लोको न संपूर्यते " इति। तत्र एतयोः पथोरिति विद्या-
कर्मणोरित्येतत्; कस्मात्? प्रकृतत्वात्; विद्याकर्मणी हि देवयानपितृ-
याणयोः पथोः प्रतिपदे प्रकृते—" तद्य इत्थं विदुः " इति विद्या,
5 तया प्रतिपत्तव्यो देवयानः पन्थाः प्रकीर्तितः; " इष्टापूर्ते दत्तम् " इति
कर्म, तेन प्रतिपत्तव्यः पितृयाणः पन्थाः प्रकीर्तितः—तत्प्रक्रियायाम्
" अथैतयोः पथोर्न कतरेण चन " इति श्रुतम्। एतदुक्तं भवति—ये न
विद्यासाधनेन देवयाने पथ्यधिकृताः, नापि कर्मणा पितृयाणे, तेषामेष
क्षुद्रजन्तुलक्षणोऽसकृदावर्ती तृतीयः पन्था भवतीति; तस्मादपि न अनि-
10 ष्टादिकारिभिश्चन्द्रमाः प्राप्यते। स्यादेतत्—तेऽपि चन्द्रबिम्बमारुह्य ततोऽ-
वरुह्य क्षुद्रजन्तुत्वं प्रतिपत्स्यन्त इति; तदपि नास्ति, आरोहानर्थक्यात्।
अपि च सर्वेषु प्रयत्सु चन्द्रलोकं प्राप्नुवत्स्वसौ लोकः प्रयद्भिः संपूर्येत
इत्यतः—प्रश्नविरुद्धं प्रतिवचनं प्रसज्येत; तथा हि प्रतिवचनं दातव्यम्,
यथासौ लोको न संपूर्यते। अवरोहाभ्युपगमादसंपूर्णोपपत्तिरिति
15 चेत्, न, अश्रुतत्वात्; सत्यम् अवरोहादप्यसंपूरणमुपपद्यते; श्रुतिस्तु

प्रकटार्थविवरणम्

श्रुत्यर्थं सूत्रयोजनया दर्शयति—तत्रैतयोरित्यादिना॥ प्रतिपद्यन्ते याभ्यां
ते प्रतिपदे साधनभेदे[भूते] विद्याकर्मणी इति सम्बन्धः। तृतीयस्थानसङ्कीर्तनं
चन्द्रगमनं निवारयितुं न शक्नोति, आगत्यापि तृतीयस्थानप्राप्तिसंभवादित्याह—
20 स्यादेतत्तेऽपीति॥ एवंविधकल्पनायां फलाभावात्प्रमाणाभावाच्च नैवं कल्प-
नीयमित्याह—तदपि नास्तीति॥ प्रश्नाननुरूपत्वप्रसङ्गादपि नेयं कल्पना
युक्तेत्याह—अपि चेति॥ गमनपक्षेऽपि प्रश्नाननुरूपत्वं नास्तीत्याह—अवरो-
हाभ्युपगमादिति॥ अवरोहेणासंपूर्णत्वस्याश्रुतत्वान्नैतदपि श्रुतहान्या कल्पयितुं
युक्तमित्याह—नाश्रुतत्वादिति॥ एतदेव विवृणोति—सत्यमित्यादिना॥

१. A adds स्यादेतदित्यादिना

२. TM. रूपत्वात्

३. TM. हत्वाभ्युपगमात्

भाष्यम्

तृतीयस्थानसंकीर्तनेन असंपूरणं दर्शयति—“एतत्तृतीयं स्थानं तेनासौ लोको न संपूर्यते” इति; तेन अनारोहादेव असंपूरणमिति युक्तम्; अवरोहस्येष्टादिकारिष्वप्यविशिष्टत्वे सति तृतीयस्थानोक्त्यानर्थक्यप्रसङ्गात्। तुशब्दस्तु शाखान्तरीयवाक्यप्रभवामशेषगमनाशङ्कामुच्छिनत्ति; एवं सति अधिकृतापेक्षः शाखान्तरीये वाक्ये सर्वशब्दोऽवतिष्ठते—ये वै केचिदधिकृता अस्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्तीति॥ 5

यत्पुनरुक्तम्—देहलाभोपपत्तये सर्वे चन्द्रमसं गन्तुमर्हन्ति, “पञ्चम्यामाहुतौ” इत्याहुतिसंख्यानियमादिति, तत्प्रत्युच्यते— 10

## न तृतीये तथोपलब्धेः॥ ३-१-१८॥

न तृतीये स्थाने देहलाभाय पञ्चसंख्यानियम आहुतीनामादर्तव्यः; कुतः? तथोपलब्धेः; तथा हि अन्तरेणैवाहुतिसंख्यानियमं वर्णितेन प्रकारेण तृतीयस्थानप्राप्तिरुपलभ्यते—“जायस्व म्रियस्वेत्येतत्तृतीयं स्थानम्” इति। अपि च “पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति” इति मनुष्य- 15

प्रकटार्थविवरणम्

एवं तावदुपपत्तिभिः स्वपक्षमुपपाद्य परपक्षं च प्रतिषिध्य इदानीं पूर्ववादिनोद्भावितवाक्यगतिं दर्शयितुमुपक्रमते—तुशब्दस्त्वित्यादिना॥

न तृतीये तथोपलब्धेः॥

जायस्व म्रियस्वेति॥ पुनः पुनः जायन्ते म्रियन्ते चेति प्रसिद्धमेव कृमिकीटादीनामनवरतं जन्ममरणं सङ्कीर्तयति; न तत्राहुतिसङ्ख्या लभ्यते; न च दृष्टविरोधे कल्पयितुं शक्यत इत्यर्थः। किं च पुरुषशब्दप्रयोगात् कीटाद्याकारेण न पञ्चम्यामाहुतावापः परिणमन्त इत्याह—अपि चेति॥ 20

१. T, T[1] and TM add सूत्रं

भाष्यम्

शरीरहेतुत्वेन आहुतिसंख्या कीर्त्यते, न कीटपतङ्गादिशरीरहेतुत्वेन, पुरुषशब्दस्य मनुष्यजातिवचनत्वात् । अपि च पञ्चम्यामाहुतावपां पुरुषवचस्त्वमुपदिश्यते, न अपञ्चम्यामाहुतौ पुरुषवचस्त्वं प्रतिषिध्यते,
5 वाक्यस्य द्व्यर्थतादोषात् । तत्र येषामारोहावरोहौ संभवतः, तेषां पञ्चम्यामाहुतौ देह उद्भविष्यति; अन्येषां तु विनैवाहुतिसंख्याया भूतान्तरोपसृष्टाभिरद्भिर्देह आरप्स्यते ॥

## स्मर्यतेऽपि च लोके ॥ ३-१-१९ ॥

अपि च स्मर्यते लोके, द्रोणधृष्टद्युम्नप्रभृतीनां सीताद्रौपदीप्रभृतीनां
10 च अयोनिजत्वम् । तत्र द्रोणादीनां योषिद्विषया एका आहुतिर्नास्ति; धृष्टद्युम्नादीनां तु योषित्पुरुषविषये द्वे अप्याहुती न स्तः । यथा च तत्राहुतिसंख्यानियमानादरो भवति, एवमन्यत्रापि भविष्यति । बलाकापि अन्तरेणैव रेतःसेकं गर्भं धत्त इति लोकरूढिः ॥

## दर्शनाच्च ॥ ३-१-२० ॥

15 अपि च चतुर्विधे भूतग्रामे जरायुजाण्डजस्वेदजोद्भिज्जलक्षणे स्वेदजोद्भिज्जयोरन्तरेणैव ग्राम्यधर्मम् उत्पत्तिदर्शनात् आहुतिसंख्यानादरो भवति । एवमन्यत्रापि भविष्यति ॥

ननु "तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्ति आण्डजं

प्रकटार्थविवरणम्

20 इदानीं मनुष्यशरीरेऽपि नास्त्याहुतिसङ्ख्यानियम इत्याह—अपि च पञ्चम्यामिति ॥

स्मर्यतेऽपि च लोके ।

दर्शनाच्च ॥

"स्मर्यतेऽपि च" इत्यादिसूत्रद्वयेनोदाहरणादाहुतिसङ्ख्यानादरं विवृणोति॥

25 ऐतरेयकावष्टम्भेन चतुर्विधो भूतग्राम इत्युक्तम् । तत्र छान्दोगश्रुतिविरोधं प्रसङ्गादाशङ्कते—ननु तेषामिति ॥ अण्डजमेव आण्डजम्, पक्ष्यादि

भाष्यम्

जीवजमुद्भिज्जम्" इत्यत्र त्रिविध एव भूतग्रामः श्रूयते; कथं चतुर्विधत्वं भूतग्रामस्य प्रतिज्ञातमिति, अत्रोच्यते—

## तृतीयशब्दावरोधः संशोकजस्य ॥ ३-१-२१ ॥

"आण्डजं जीवजमुद्भिज्जम्" इत्यत्र तृतीयेनोद्भिज्जशब्देनैव स्वेदजोपसंग्रहः कृतः प्रत्येतव्यः, उभयोरपि स्वेदजोद्भिज्जयोः भूम्युदकोद्भेदप्रभवत्वस्य तुल्यत्वात्। स्थावरोद्भेदात्तु विलक्षणो जङ्गमोद्भेद इत्यन्यत्र स्वेदजोद्भिज्जयोर्भेदवाद इत्यविरोधः ॥ 5

[साभाव्यापत्त्यधिकरणम्]

## साभाव्यापत्तिरुपपत्तेः ॥ ३-१-२२ ॥ 10

इष्टादिकारिणश्चन्द्रमसमारुह्य तस्मिन्यावत्संपातमुषित्वा ततः सानुशया अवरोहन्तीत्युक्तम्; अथावरोहप्रकारः परीक्ष्यते। तत्रेयमवरोहश्रुतिर्भवति—"अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाभ्रं भवत्यभ्रं भूत्वा मेघो भवति

प्रकटार्थविवरणम् 15

पश्वाद्यन्तरस्य बीजम्; जायजं जरायुजम्; उद्भिद्य जायत इत्युद्भिज्जम्; तरुगुल्माद्यन्तरस्य बीजमित्यर्थः ॥

तृतीयशब्दावरोधः संशोकजस्य ॥

स्वेदजस्योद्भिज्जेऽन्तर्भावान्नास्ति छान्दोग्यैतरेयकयोर्विरोध इत्याह—तृतीयेति ॥ 20

साभाव्यापत्तिरुपपत्तेः ॥

व्यवहितसंबन्धमभिदधाति — इष्टादिकारिण इति ॥ प्रवतिश्रुतेः उपरम रमणीयचरणादिसंयुक्तचेतनस्य स्वरूपेणाभिनिष्क्रमणश्रवणाच्च संशय-

भाष्यम्

मेघो भूत्वा प्रवर्षति " इति। तत्र संशयः—किमाकाशादिस्वरूपमेवा-
वरोहन्तः प्रतिपद्यन्ते, किं वाकाशादिसाम्यमिति। तत्र प्राप्तं तावत्—
आकाशादिस्वरूपमेव प्रतिपद्यन्त इति; कुतः? एवं हि श्रुतिर्भवति; इत-
5 रथा लक्षणा स्यात्; श्रुतिलक्षणविशये च श्रुतिर्न्याय्या, न लक्षणा;
तथा च " वायुर्भूत्वा धूमो भवति " इत्येवमादीन्यक्षराणि तत्तत्स्वरूपोप-
पत्तौ आञ्जस्येन अवकल्पन्ते; तस्मादाकाशादिस्वरूपप्रतिपत्तिरिति;
एवं प्राप्ते ब्रूमः—आकाशादिसाम्यं प्रतिपद्यन्त इति; चन्द्रमण्डले यद्-
म्मयं शरीरमुपभोगार्थमारब्धम्, तदुपभोगक्षये सति प्रविलीयमानं सूक्ष्म-
10 माकाशसमं भवति; ततो वायोर्वशमेति ततो धूमादिभिः संपृच्यत इति।
तदेतदुच्यते—" यथेतमाकाशमाकाशाद्वायुम् " इत्येवमादिना। कुत
एतत्? उपपत्तेः; एवं हि एतदुपपद्यते; न हि अन्यस्यान्यभावो मुख्य
उपपद्यते। आकाशस्वरूपप्रतिपत्तौ च वाय्वादिक्रमेणावरोहो नोप-
पद्यते। विभुत्वाच्चाकाशेन नित्यसंबन्धात् न तत्सादृश्यापत्तेरन्यः
15 तत्संबन्धो घटते। श्रुत्यसंभवे च लक्षणाश्रयणं न्याय्यमेव। अत आका-
शादितुल्यतापत्तिरेव अत्र आकाशादिभाव इत्युपचर्यते॥

प्रकटार्थविवरणम्

माह—तत्र संशय इति॥ पूर्वपक्षमुपक्षिपति—तत्र प्राप्तं तावदिति॥
भवतिधातुर्जीवस्याकाशादिभावपरिणामे श्रुतिर्भवति, अतः स्वरूपमेव प्रति-
20 पद्यते, श्रुतेः प्राबल्यादित्यर्थः। [1]उक्तं स्फुटयति—तथा चेति॥ तथा हीत्यर्थः।
स्वसमानो भावः सभावः; तस्य भावः साभाव्यं सादृश्यम्; तदापत्तिरिति योजन-
मभिप्रेत्याह—आकाशादिसाम्यमिति॥ [2]आकाशादिसाम्यं स्वस्थूलशरीर-
राहित्यं भेदास्फुरणं च। हेतुमवतारयति—कुत एतदिति॥ रमणीयचरणादि-
संयुक्तचेतनस्याकाशादिभ्यस्तिलमाषान्तेभ्यः स्वेनैव रूपेणाभिनिष्क्रमणान्यथा-
25 नुपपत्तिलक्षणया श्रुतार्थापत्त्यान्यस्य पूर्वसिद्धस्यान्यभावानुपपत्त्यनुगृहीतया
[3]विरोधात् श्रुतेरुपचरिततद्भावापत्तिविषयत्वमित्यर्थः॥

१. A omits उक्तं...तथा हीत्यर्थः
२. T, T¹ and TM. आकाशादीति स्वसाम्यं
३. T and T¹ विरोधभुवेः

भाष्यम्

[ नातिचिराधिकरणम् ]

## नातिचिरेण विशेषात् ॥ ३-१-२३ ॥

तत्राकाशादिप्रतिपत्तौ प्रागव्रीह्यादिप्रतिपत्तेः भवति विशयः—किं दीर्घं कालं पूर्वपूर्वसादृश्येनावस्थायोत्तरोत्तरसादृश्यं गच्छन्ति, उताल्प- 5
मल्पमिति । तत्रानियमः, नियमकारिणः शास्त्रस्याभावादित्येवं प्राप्ते, इदमाह—नातिचिरेणेति । अल्पमल्पं कालमाकाशादिभावेनावस्थाय वर्षधाराभिः सह इमां भुवमापतन्ति; कुत एतत्? विशेषदर्शनात्; तथा हि व्रीह्यादिभावापत्तेरनन्तरं विशिनष्टि—“अतो वै खलु दुर्निष्प्रपत- 10
रम्” इति; तकार एकश्छान्दस्यां प्रक्रियायां लुप्तो मन्तव्यः; दुर्निष्प्रपततरं दुर्निष्क्रमतरं—दुःखतरमस्माद्व्रीह्यादिभावान्निःसरणं भवतीत्यर्थः; तत् अत्र दुःखं निष्प्रपतनं प्रदर्शयन्पूर्वेषु सुखं निष्प्रपतनं दर्शयति; सुखदुःखताविशेषश्चायं निष्प्रपतनस्य कालाल्पत्वदीर्घत्वनिमित्तः, तस्मिन्नवधौ शरीरानिष्पत्तेरुपभोगासंभवात् । तस्माद्व्रीह्यादिभावापत्तेः प्रागल्पेनैव कालेनावरोहः स्यादिति ॥ 15

प्रकटार्थविवरणम्

नातिचिरेण विशेषात् ॥

तत्रैवावरोहे सन्देहान्तरमाह—तत्राकाशादिति ॥ गमनं कस्यचिच्चिरेण कस्यचिदचिरेणेत्युभयथा दर्शनात् संशयः । शास्त्रं ह्यतीन्द्रियार्थे विज्ञानकारणम्; नेह नियामकं शास्त्रं दृश्यते; अतो न निर्धारणमित्याह—तत्रेति ॥ सूत्रं योज- 20
यति—अल्पमल्पमिति ॥ ननु व्रीह्यादिभावात् दुःखेन निष्क्रमणान्यथानुपपत्त्या पूर्वत्र सुखेन निष्क्रमणमित्येतावद्गम्यते; न त्वल्पकालतेत्याशङ्क्याह—सुखदुःखताविशेषश्चेति ॥

भाष्यम्

[ अन्याधिष्ठिताधिकरणम् ]

## अन्याधिष्ठितेषु पूर्ववदभिलापात् ॥ ३-१-२४ ॥

तस्मिन्नेवावरोहे प्रवर्षणानन्तरं पठ्यते—"त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते" इति । तत्र संशयः—किमस्मिन्नवधौ स्थावरजात्यापन्नाः स्थावरसुखदुःखभाजोऽनुशयिनो भवन्ति, आहोस्वित्क्षेत्रज्ञान्तराधिष्ठितेषु स्थावरशरीरेषु संश्लेषमात्रं गच्छन्तीति । किं तावत्प्राप्तम्? स्थावरजात्यापन्नास्तत्सुखदुःखभाजोऽनुशयिनो भवन्तीति; कुत एतत्? जनेर्मुख्यार्थत्वोपपत्तेः, स्थावरभावस्य च श्रुतिस्मृत्योरुपभोगस्थानत्वप्रसिद्धेः, पशुहिंसादियोगाच्चेष्टादेः कर्मजातस्यानिष्टफलत्वोपपत्तेः; तस्मान्मुख्यमेवेदमनुशयिनां व्रीह्यादिजन्म, श्वादिजन्मवत्—यथा "श्वयोनिं वा सूकरयोनिं वा चाण्डालयोनिं वा" इति मुख्यमेवानुशयिनां श्वादिजन्म तत्सुखदुःखान्वितं भवति, एवं व्रीह्यादिजन्मापीति ॥

प्रकटार्थविवरणम्

अन्याधिष्ठितेषु पूर्ववदभिलापात् ॥

अवरोहवाक्यैकदेशं विचार्य परिशिष्टांशविचारमुपक्रमते–तस्मिन्नेवेति ॥ जनिश्रुतेः कर्मव्यापारसंकीर्तनविधुरत्वाच्च संशयमाह — तत्रेति ॥ पूर्वपक्षं निक्षिपति—किं तावदिति ॥

"स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम्"

"शरीरजैः कर्मदोषैर्याति स्थावरतां नरः"

इत्यादि[1]श्रुतिस्मृत्योः । नन्विष्टादिकारिणां मध्ये दुःखोपभोगो नोपपद्यत इत्याशङ्क्याह—पशुहिंसादीति ॥

१. T omits श्रुति

भाष्यम्

एवं प्राप्ते ब्रूमः—अन्यैर्जीवैरधिष्ठितेषु व्रीह्यादिषु संसर्गमात्रमनुशयिनः प्रतिपद्यन्ते, न तत्सुखदुःखभाजो भवन्ति, पूर्ववत्—यथा वायुधूमादिभावोऽनुशयिनां तत्संश्लेषमात्रम्, एवं व्रीह्यादिभावोऽपि जातिस्थावरैः संश्लेषमात्रम् । कुत एतत्? तद्वदेवेहाप्यभिलापात्; कोऽभिलापस्य तद्भावः? कर्मव्यापारमन्तरेण संकीर्तनम्—तथाकाशादिषु प्रवर्षणान्तेषु न किंचित्कर्मव्यापारं परामृशति, एवं व्रीह्यादिजन्मन्यपि । तस्मान्नास्त्यत्र सुखदुःखभाक्त्वमनुशयिनाम् । यत्र तु सुखदुःखभाक्त्वमभिप्रैति, परामृशति तत्र कर्मव्यापारम्—"रमणीयचरणाः...कपूयचरणाः" इति । अपि च मुख्येऽनुशयिनां व्रीह्यादिजन्मनि, व्रीह्यादिषु लूयमानेषु कण्ड्यमानेषु पच्यमानेषु भक्ष्यमाणेषु च तदभिमानिनोऽनुशयिनः प्रवसेयुः; यो हि जीवो यच्छरीरमभिमन्यते, स तस्मिन्पीड्यमाने प्रवसति—इति प्रसिद्धम्; तत्र व्रीह्यादिभावाद्रेतःसिग्भावोऽनुशयिनां नाभिलप्येत; अतः संसर्गमात्रमनुशयिनामन्याधिष्ठितेषु व्रीह्यादिषु भवति । एतेन जनेर्मुख्यार्थत्वं प्रतिब्रूयात्, उपभोगस्थानत्वं च स्थावरभावस्य; न च वयमुपभोगस्थानत्वं स्थावरभावस्यावजानीमहे; भवत्वन्येषां जन्तूनामपुण्यसामर्थ्येन स्थावरभावमुपगतानाम् एतत् उप-

प्रकटार्थविवरणम्

सूत्रं योजयति—अन्यैरित्यादिना ॥ यत्र मुख्यं जन्मास्मिन् प्रकरणे विवक्षितं तत्र कर्मसङ्कीर्तनमस्ति । तदिह व्यापकं व्यावर्तमानं स्वव्याप्यं मुख्यं जन्मापि व्यावर्तयतीति भावः । किं च व्रीह्यादिद्वारेण पितृशरीरप्रवेशान्यथानुपपत्त्यापि संश्लेषमात्रमित्याह — अपि च मुख्येऽनुशयिनामिति ॥ यदुक्तं जनेः मुख्यार्थत्वादुपभोगस्थानत्वाच्च स्थावरभावस्येति, तत्राह—एतेनेति ॥ व्रीह्यादिद्वारेण पितृशरीरप्रवेशासंभवप्रसङ्गेनेत्यर्थः । ननु स्थावरभावस्य भोगस्थानत्वं निराकर्तुं न शक्यते, श्रुतिस्मृतिविरोधादित्याशङ्क्याह — न च वयमिति ॥

१. TM गोजनापि

भाष्यम्

भोगस्थानम्; चन्द्रमसस्त्ववरोहन्तोऽनुशयिनो न स्थावरभावमुपभुञ्जत इत्याचक्ष्महे ॥

## अशुद्धमिति चेन्न शब्दात् ॥ ३-१-२५ ॥

5 यत्पुनरुक्तम्—पशुहिंसादियोगादशुद्धमाध्वरिकं कर्म, तस्यानिष्टमपि फलमवकल्पत इत्यतो मुख्यमेवानुशयिनां व्रीह्यादिजन्म अस्तु; तत्र गौणीकल्पना अनर्थिकेति—तत्परिह्रियते—न, शास्त्रहेतुत्वाद्धर्माधर्मविज्ञानस्य; अयं धर्मोऽयमधर्म इति शास्त्रमेव विज्ञाने कारणम्, अतीन्द्रियत्वात्तयोः; अनियतदेशकालनिमित्तत्वाच्च—यस्मिन्देशे काले 10 निमित्ते च यो धर्मोऽनुष्ठीयते, स एव देशकालनिमित्तान्तरेष्वधर्मो भवति; तेन न शास्त्रादृते धर्माधर्मविषयं विज्ञानं कस्यचिदस्ति। शास्त्राच्च हिंसानुग्रहाद्यात्मको ज्योतिष्टोमो धर्म इत्यवधारितः, स कथमशुद्ध इति शक्यते वक्तुम्। ननु "न हिंस्यात्सर्वा भूतानि" इति शास्त्रमेव भूतविषयां हिंसामधर्म इत्यवगमयति; बाढम्—उत्सर्गस्तु 15 सः; अपवादोऽयम् "अग्नीषोमीयं पशुमालभेत" इति; उत्सर्गापवा-

प्रकटार्थविवरणम्

### अशुद्धमिति चेन्न शब्दात् ॥

परोक्तमनूद्य निराचष्टे—यत्पुनरित्यादिना ॥ अन्वयव्यतिरेकाद्यिगम्यत्वनिराकरणायोक्तम्—अनियतदेशकालनिमित्तत्वाच्चेति ॥ तद्विवृणोति— 20 यस्मिन्देश इति ॥ यत्रभूमौ दर्शादिकाले चोदनानिमित्तत्वेन च क्रियमाणा हिंसा यद्यपि धर्मः, तथापि सैव हिंसा रागाक्रान्तस्वान्ततया देशान्तरादौ क्रियमाणा भवत्येवाधर्मः; ततो या हिंसासौ धर्म इत्यन्वयादिनावगन्तुं न शक्यते। भवतु तर्हि शास्त्रैकगम्योऽयमर्थः; ततः किमित्यत आह— शास्त्राच्चेति ॥ दुष्टत्वमपि शास्त्रान्तरात्प्रतीयत इत्याह—ननु न हिंस्यादिति ॥ 25 सत्यं धर्मत्ववदधर्मत्वमपि शास्त्रादेव गम्यते, किं तु भिन्नविषयत्वान्न विरोध इत्याह—बाढमिति ॥ "न हिंस्यात्" इति निषेधस्य प्राप्तिसापेक्षत्वान्माना-

भाष्यम्

दयोश्च व्यवस्थितविषयत्वम्; तस्माद्विशुद्धं कर्म वैदिकम्, शिष्टैरनुष्ठीयमानत्वात् अनिन्द्यमानत्वाच्च; तेन न तस्य प्रतिरूपं फलं जातिस्थावरत्वम्। न च श्वादिजन्मवदपि व्रीह्यादिजन्म भवितुमर्हति; तद्धि कपूयचरणानधिकृत्योच्यते; नैवमिह वैशेषिकः कश्चिदधिकारोऽस्ति; 5
अतश्चन्द्रमण्डलस्खलितानामनुशयिनां व्रीह्यादिसंश्लेषमात्रं तद्भाव इत्युपचर्यते ॥

## रेतस्सिग्योगोऽथ ॥ ३-१-२६ ॥

इतश्च व्रीह्यादिसंश्लेषमात्रं तद्भावः, यत्कारणं व्रीह्यादिभावस्यानन्तरमनुशयिनां रेतःसिग्भाव आम्नायते—"यो यो ह्यन्नमत्ति यो रेतः 10
सिञ्चति तद्भूय एव भवति" इति; न चात्र मुख्यो रेतःसिग्भावः संभवति; चिरजातो हि प्राप्तयौवनो रेतःसिग्भवति; कथमिवानुप-

प्रकटार्थविवरणम्

न्तरप्राप्तस्य च मानान्तरेण निषेद्धुमशक्यत्वात्प्रागतः पुरुषार्थत्वेन प्राप्ताया हिंसायाः निषेधकत्वम्, न क्रत्वर्थायाः; अतः क्रत्वर्थहिंसायाः प्रतिषेधाभावान्ना- 15
धर्मत्वम्; पुरुषार्थहिंसायाश्च प्रतिषिद्धत्वेनाधर्मत्वमपि[मिति] विभिन्नविषयत्वमित्यर्थः। उक्तमेव सङ्क्षेपेणाह—तस्मादिति ॥ यच्चोक्तं श्वादिजन्मवदिति, तत्राह—न चेति ॥

रेतस्सिग्योगोऽथ ॥

किं च वाक्यशेषे संयोगस्यैव तद्भावशब्दार्थस्यावगमात् उपक्रमेऽपि स 20
एवार्थ इत्याह—रेतस्सिग्योगोऽथेति ॥ नन्वन्नानुगतोऽनुशयी यस्तरुणः पुरुषोऽन्नं भक्षयति स तद्भूय एव भवति, तद्भावमेवापद्यत इति श्रुतिराह, न संयोगमात्रमित्याशङ्क्याह —न चात्रेति ॥

१. A. मतत्वात्

भाष्यम्

चरितं तद्भावम् अप्रमानाभानुगतोऽनुशयी प्रतिपद्यते? तत्र ताव-
दवश्यं रेतःसिग्योग एव रेतःसिग्भावोऽभ्युपगन्तव्यः। तद्वद्व्रीह्यादि-
भावोऽपि व्रीह्यादियोग एवेत्यविरोधः ॥

5 # योनेः शरीरम् ॥ ३-१-२७ ॥

अथ रेतःसिग्भावस्यानन्तरं योनौ निषिक्ते रेतसि, योनेरधि
शरीरम् अनुशयिनाम् अनुशयफलोपभोगाय जायत इत्याह शास्त्रम्—
"तद्य इह रमणीयचरणाः" इत्यादि; तस्मादप्यवगम्यते नावरोहे
व्रीह्यादिभावावसरे तच्छरीरमेव सुखदुःखान्वितं भवतीति। तस्मात्
10 व्रीह्यादिसंश्लेषमात्रमनुशयिनां तज्जन्मेति सिद्धम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपाद-
शिष्यस्य श्रीमच्छंकरभगवतः कृतौ शारीरकमीमांसासूत्रभाष्ये
तृतीयाध्यायस्य प्रथमः पादः ॥

प्रकटार्थविवरणम्

15 योनेः शरीरम् ॥

किं च भोगायतनस्य शरीरस्योत्तरत्रैवाभिधानाच्च पूर्वं व्रीह्यादिशरीरं
तस्य भोग [भोगाय] इत्याह—योनेः शरीरमिति ॥

इति श्रीमच्छारीरकमीमांसाभाष्यविवरणे प्रकटार्थे
तृतीयस्याध्यायस्य प्रथमः पादः समाप्तः ॥

---

१. A omits शरीरस्य

# अथ द्वितीयः पादः

—:o:—

### भाष्यम्

[ संध्याधिकरणम् ]

अतिक्रान्ते पादे पञ्चाग्निविद्यामुदाहृत्य जीवस्य संसारगतिप्रभेदः प्रपञ्चितः ; इदानीं तु तस्यैवावस्थाभेदः प्रपञ्च्यते । इदमामनन्ति— "स यत्र प्रस्वपिति" इत्युपक्रम्य "न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान्रथयोगान्पथः सृजते" इत्यादि । तत्र संशयः—किं प्रबोध इव स्वप्नेऽपि पारमार्थिकी सृष्टिः, आहोस्विन्मायामयीति । तत्र तावत्प्रतिपद्यते ॥

## संध्ये सृष्टिराह हि ॥ ३-२-१ ॥

संध्ये सृष्टिरिति ; संध्यमिति स्वप्नस्थानमाचष्टे, वेदे प्रयोगदर्श-

### प्रकटार्थविवरणम्

सन्ध्ये सृष्टिराह हि ॥

वृत्तानुश्रवणपूर्वकं पादसङ्गतिमाह—अतिक्रान्त इति ॥ पुनः पुनः आरोहावरोहरूपत्वात् स्वास्थ्यवर्जिते संसारे विरक्तस्य तत्त्वंपदार्थपरिशोधनाय द्वितीयपादारम्भः । तत्रापि त्वमर्थस्योद्देश्यत्वात् प्रथमं तस्यावस्थावत्त्वविनिर्मुक्तत्वप्रतिपादनाय प्रयत्यत इत्यर्थः । आरम्भणाधिकरणे च स्वप्नस्य मायामात्रत्वं सिद्धवत्कृत्य तदवष्टम्भेन जाग्रदवस्थायाः मायामयत्वं न्यरूरूपत् । इदानीं तु तदेव स्वप्नस्य मायामात्रत्वं निरूपयितुं तद्विषयवाक्यं पठति—इदमामनन्तीति ॥ सृष्टिश्रुतेस्तदुचितसामग्र्यभावाच्च संशयमाह—तत्रेति ॥ पूर्वपक्षे सूत्रं योजयति—तत्र तावदिति ॥ इहलोकपरलोकापेक्षया

१. T, T[1] and TM. रम्भसूत्रार्थमर्थः

भाष्यम्

नात्—"संध्यं तृतीयं स्वप्नस्थानम्" इति; द्वयोर्लोकस्थानयोः प्रबोधसंप्रसादस्थानयोर्वा संधौ भवतीति संध्यम्; तस्मिन्संध्ये स्थाने तथ्यरूपैव सृष्टिर्भवितुमर्हति; कुतः? यतः प्रमाणभूता श्रुतिरेवमाह—
5 "अथ रथान् रथयोगान्पथः सृजते" इत्यादि; "स हि कर्ता" इति चोपसंहारात् एवमेवावगम्यते ॥

## निर्मातारं चैके पुत्रादयश्च ॥ ३-२-२ ॥

अपि च एके शाखिनोऽस्मिन्नेव संध्ये स्थाने कामानां निर्मातारमात्मानमामनन्ति—"य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः"
10 इति; पुत्रादयश्च तत्र कामा अभिप्रेयन्ते—काम्यन्त इति । ननु कामशब्देनेच्छाविशेषा एवोच्येरन्; न, "शतायुषः पुत्रपौत्रान्वृणीष्व"

प्रकटार्थविवरणम्

जाग्रत्सुषुप्तापेक्षया[१] वा तृतीयं स्वप्नस्थानं सन्ध्यमित्यर्थः । न केवलं सृष्टिश्रुत्यवष्टम्भत एव सत्यत्वं स्वकर्तृकत्वाच्च जाग्रद्वदर्थक्रियासामर्थ्यलक्षणं
15 सत्यत्वमित्याह—स हि कर्तेति ॥

निर्मातारं चैके पुत्रादयश्च ॥

किं च स्वप्ने द्रष्टृव्यतिरिक्ताः सर्वे पदार्थाः अर्थक्रियासामर्थ्यसत्त्वोपेताः, निर्मीयमाणत्वात्, जाग्रद्वदित्याह — अपि चेति ॥ न च साध्यविकलो दृष्टान्तः, प्रागेतत्सिद्धेः[२] तस्य तावत्त्वस्य्यात् । कामशब्दस्य यौगिकार्थमाह—
20 पुत्रादयश्चेति ॥ रूढिबलेन चोदयति—नन्विति ॥ रूढिरत्र ग्रहीतुं न शक्यते[३], प्रकरणविरोधादित्याह—न शतायुष इति ॥ किं च[४] परमात्मकर्तृकत्वादपि[५]

१. A omits वा

२. T and T[1]. प्रागेव तत्सिद्धेः
A. प्रागेवेतः सिद्धेः

३. T. न शक्यं हितप्रकरण

४. A omits किं च

५. A. परमार्थ

भाष्यम्

इति प्रकृत्य अन्ते "कामानां त्वा कामभाजं करोमि" इति प्रकृतेषु तत्र तत्र पुत्रादिषु कामशब्दस्य प्रयुक्तत्वात् । प्राज्ञं चैनं निर्मातारं प्रकरणवाक्यशेषाभ्यां प्रतीमः—प्राज्ञस्य हीदं प्रकरणम्—"अन्यत्र धर्मादन्यत्राधर्मात्" इत्यादि; तद्विषय एव च वाक्यशेषोऽपि— 5

"तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ।
तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन ॥" इति ।

प्राज्ञकर्तृका च सृष्टिस्तथ्यरूपा समधिगता जागरिताश्रया; तथा स्वप्नाश्रयापि सृष्टिर्भवितुमर्हति; तथा च श्रुतिः—"अथो खल्वाहुर्जागरितदेश एवास्यैष इति यानि ह्येव जाग्रत्पश्यति तानि सुप्तः" इति स्वप्नजागरितयोः समानन्यायतां श्रावयति । तस्मात्तथ्यरूपैव संध्ये सृष्टिरिति ॥ 10

एवं प्राप्ते, प्रत्याह—

## मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥ ३-२-३ ॥

तुशब्दः पक्षं व्यावर्तयति । नैतदस्ति—यदुक्तम्, संध्ये सृष्टिः पारमार्थिकीति; मायैव संध्ये सृष्टिः, न परमार्थगन्धोऽप्यस्ति; कुतः? 15

प्रकटार्थविवरणम्

महाभूतसृष्टिवत् सत्यैव स्वप्नसृष्टिरित्याह—प्राज्ञं चैनमित्यादिना । किं च जाग्रत्समानदेशत्वाभिधानादपि सत्यत्वमित्याह — अथो खल्वाहुरिति ॥

सिद्धान्तसूत्रमवतारयति—एवं प्राप्त इति ॥ 20

मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् [1] ॥

जीवोपाधिरयमविद्या मायावयवत्वान्मायेत्युच्यते । मात्रशब्देन च सति प्रमातरि । बाध्यत्वं नाम [2] भ्रमसिद्धत्वं जाग्रद्वैलक्षण्यमुच्यते । तस्मिन्निह देश-

१. T[1] and TM. मायामयत्वात्      २. T omits भ्रम

भाष्यम्

कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्—न हि कार्त्स्न्येन परमार्थवस्तुधर्मेण अभिव्यक्तस्वरूपः स्वप्नः; किं पुनरत्र कार्त्स्न्यमभिप्रेतम्? देशकालनिमित्तसंपत्तिः अबाधश्च । न हि परमार्थवस्तुविषयाणि देशकाल-
5 निमित्तानि अबाधश्च स्वप्ने संभाव्यन्ते—

न तावत्स्वप्ने रथादीनामुचितो देशः संभवति; न हि संवृते देहदेशे रथादयोऽवकाशं लभेरन्; स्यादेतत्—बहिर्देहात् स्वप्नं द्रक्ष्यति, देशान्तरितद्रव्यग्रहणात्, दर्शयति च श्रुतिः बहिर्देहात्स्वप्नम्—"बहिष्कुलायादमृतश्चरित्वा स ईयतेऽमृतो यत्र कामम्" इति; स्थिति-
10 गतिप्रत्ययभेदश्च न अनिष्क्रान्ते जन्तौ सामञ्जस्यमश्नुवीत—इति । नेत्युच्यते—न हि सुप्तस्य जन्तोः क्षणमात्रेण योजनशतान्तरितं देशं पर्येतुं विपर्येतुं च ततः सामर्थ्यं संभाव्यते; क्वचिच्च प्रत्यागमनवर्जितं स्वप्नं श्रावयति—कुरुष्वहमद्य शयानो निद्रयाभिप्लुतः, स्वप्ने पञ्चा-

प्रकटार्थविवरणम्

15 कालविशिष्टार्थक्रिया[1]समर्थप्रमात्रादिविषयबाधकप्रत्यक्षेणार्थक्रियासमर्थरूपस्यैव बाधानुपपत्त्या । यत्पुनरत्र भास्करो रुरोद "मायाशब्दस्य प्रज्ञानामसु पाठानिरालम्बनः प्रत्ययो माया" इति, अत्रोच्यते—कथंकारं प्रज्ञानामसु पाठमात्रेण प्रत्ययविशेषपरिग्रहः[2]? सम्यग्दर्शनमेव माया किं न भवेत्? अथ नास्ति सम्यग्दर्शने मायाप्रयोगः, तर्हि परिदृश्यमानदृष्टनष्टस्वभावकरितुर-
20 तुरगादौ वृद्धानां मायाशब्दप्रयोगादाप्तवाक्यस्य वृद्धव्यवहारमूलत्वाच्च न प्रज्ञानामसु मायाशब्दस्य रूढ्या प्रयोगो भोगी, किं तु मीयतेऽर्थोऽनयेति बुद्धौ यौगिको मायाशब्दप्रयोगः । तस्मात् वृद्धव्यवहारानुसारेण मिथ्याहस्त्यादावनुगतमिथ्यावस्तुनि मायाशब्दो रूढ इति श्रुतिसूत्रयोरऽपि स एव मायाशब्दार्थ[3] इति ॥

25 वस्तुसङ्ग्रहवाक्ये देशासंभवं तावद्विवृणोति—न तावत्स्वप्न इत्यादिना ॥

१. T omits क्रियासमर्थ
२. A adds इति
३. T and T¹. माति
४. A. शब्द इति

भाष्यम्

स्थानभिगतश्च अस्मिन्प्रतिबुद्धश्च इति । देहाच्चेदपेयात् पश्चात्तेषु प्रति-
बुध्येत, तानसावभिगत इति; कुलायेव तु प्रतिबुध्यते; येन च अयं
देहेन देशान्तरमश्नुवानो मन्यते, तमन्ये पार्श्वस्थाः शयनदेश एव
पश्यन्ति; यथाभूतानि चायं देशान्तराणि स्वप्ने पश्यति, न तानि 5
तथाभूतान्येव भवन्ति; परिधावंश्चेत्पश्येत् जाग्रद्वत् वस्तुभूतमर्थमा-
कलयेत् । दर्शयति च श्रुतिरन्तरेव देहे स्वप्नम्—"स यत्रैतत्स्वप्न्यया
चरति" इत्युपक्रम्य "स्वे शरीरे यथाकामं परिवर्तते" इति । अतश्च
श्रुत्युपपत्तिविरोधाद्बहिष्कुलायश्रुतिः गौणी व्याख्यातव्या—बहिरिव
कुलायात् अमृतश्चरित्वेति—यो हि वसन्नपि शरीरे न तेन प्रयोजनं 10
करोति, स बहिरिव शरीराद्भवति—इति । स्थितिगतिप्रत्ययभेदोऽप्येवं
सति विप्रलम्भ एवाभ्युपगन्तव्यः ॥

कालविसंवादोऽपि च स्वप्ने भवति—रजन्यां सुप्तो वासरं
भारते वर्षे मन्यते; तथा मुहूर्तमात्रवर्तिनि स्वप्ने कदाचित् बहून् वर्ष-
पूगान् अतिवाहयति । निमित्तान्यपि च स्वप्ने न बुद्धये कर्मणे वा उचि- 15
तानि विद्यन्ते; करणोपसंहाराद्धि नास्य अश्वरथादिग्रहणाय चक्षुरा-
दीनि सन्ति; रथादिनिर्वर्तनेऽपि कुतोऽस्य निमेषमात्रेण सामर्थ्यं
दारूणि वा । बाध्यन्ते चैते रथादयः स्वप्नदृष्टाः प्रबोधे; स्वप्न एव
च एते सुलभबाधा भवन्ति, आद्यन्तयोर्व्यभिचारदर्शनात्—रथोऽय-
मिति हि कदाचित्स्वप्ने निर्धारितः क्षणेन मनुष्यः संपद्यते, मनुष्योऽ- 20

प्रकटार्थविवरणम्

कालासंभवं स्पष्टयति—कालविसंवादोऽपि चेति ॥ रजन्यां रात्रौ;
वासरं दिवसम्; भारते वर्षे सेतुहिमवन्मध्ये; वर्षपूगान् वर्षसमूहान् क्षप-
तीत्यर्थः । निमित्तासंभवं प्रपञ्चयति—निमित्तान्यपि चेति ॥ अबाधा-
भवं[1] विभजते—बाध्यन्ते चैत इत्यादिना ॥ 25

१. T and T¹. अभावासंभवं

भाष्यम्

यमिति निर्धारितः क्षणेन वृक्षः । स्पष्टं चाभावं रथादीनां स्वप्ने श्राव-
यति शास्त्रम्—“न तत्र रथा न रथयोगा न पन्थानो भवन्ति”
इत्यादि । तस्मान्मायामात्रं स्वप्नदर्शनम् ॥

5 **सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ३-२-४ ॥**

मायामात्रत्वात्तर्हि न कश्चित्स्वप्ने परमार्थगन्धोऽस्तीति—नेत्यु-
च्यते—सूचकश्च हि स्वप्नो भवति भविष्यतोः साध्वसाधुनोः ; तथा
हि श्रूयते—

“यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति ।
10 समृद्धिं तत्र जानीयात्तस्मिन्स्वप्ननिदर्शने ॥”

तथा “पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति” इत्येवमादिभिः
स्वप्नैरचिरजीवित्वमावेद्यत इति श्रावयति ; आचक्षते च स्वप्नाध्याय-
विदः—“कुञ्जरारोहणादीनि स्वप्ने धन्यानि खरयानादीन्यधन्यानि”
इति ; मन्त्रदेवताद्रव्यविशेषनिमित्ताश्च केचित्स्वप्नाः सत्यार्थगन्धिनो
15 भवन्तीति मन्यन्ते । तत्रापि भवतु नाम सूच्यमानस्य वस्तुनः सत्यत्वम् ;
सूचकस्य तु स्त्रीदर्शनादेर्भवत्येव वैतथ्यम् ; बाध्यमानत्वादित्यभिप्रायः ।
तस्मादुपपन्नं स्वप्नस्य मायामात्रत्वम् ॥

यदुक्तम्—“आह हि” इति तदेवं सति भाक्तं व्याख्यातव्यम्—
यथा ‘लाङ्गलं गवादीनुद्वहति’ इति निमित्तमात्रत्वादेवमुच्यते, न तु

20 प्रकटार्थविवरणम्

सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥

शङ्कासूत्रं व्याचष्टे—मायामात्रत्वात्तर्हीत्यादिना ॥ ननु तर्हि सत्यशुभा-
शुभसूचकत्वान्यथानुपपत्त्या स्वरूपेणापि स्वप्नस्य सत्यत्वं प्रसक्तमित्या-
शङ्क्याह—तत्रापि भवतु नामेति ॥

25 परोक्तमनूद्य दूषयति—यदुक्तमित्यादिना ॥ ननु सस्यादिद्वारेण लाङ्ग-
लं गवादीनुद्वहति पुष्णातीति साक्षात् कारणत्वाभावेऽपि विद्यत एव निमि

भाष्यम्

प्रत्यक्षमेव लाङ्गलं गवादीनुद्वहति; एवं निमित्तमात्रत्वात्—सुप्तो रथादीन्सृजते, "स हि कर्ता" इति च उच्यते; न तु प्रत्यक्षमेव सुप्तो रथादीन् सृजति। निमित्तत्वं तु अस्य रथादिप्रतिभाननिमित्तमोदत्रासादिदर्शनात्तन्निमित्तभूतयोः सुकृतदुष्कृतयोः कर्तृत्वेनेति वक्तव्यम्। अपि च जागरिते विषयेन्द्रियसंयोगात् आदित्यादिज्योतिर्व्यतिकराच्च आत्मनः स्वयंज्योतिष्ट्वं दुर्विवेचनमिति तद्विवेचनाय स्वप्न उपन्यस्तः; तत्र यदि रथादिसृष्टिवचनं श्रुत्या नीयेत, तदा स्वयंज्योतिष्ट्वं न निर्णीतं स्यात्; तस्माद्रथाद्यभाववचनं श्रुत्या, रथादिसृष्टिवचनं तु भक्त्येति व्याख्येयम्। एतेन निर्माणश्रवणं व्याख्यातम्। यदप्युक्तम्—"प्राज्ञमेनं निर्मातारमामनन्ति" इति, तदप्यसत्, श्रुत्यन्तरे "स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिति" इति जीवव्यापारश्रवणात्; इहापि "य एष सुप्तेषु जागर्ति" इति प्रसिद्धानुवादाज्जीव एवायं कामानां निर्माता संकीर्त्यते; तस्य तु वाक्यशेषेण "तदेव शुक्रं तद्ब्रह्म" इति जीवभावं व्यावर्त्य ब्रह्मभाव उपदिश्यते—"तत्त्वमसि" इत्यादिवत्—इति न ब्रह्मप्रकरणं विरुध्यते।

प्रकटार्थविवरणम्

त्त्वम्; जीवस्य तु कथं निमित्तत्वमित्याशङ्क्याह—निमित्त त्वं त्वस्येति॥ पूर्वं सृष्टौ वाक्यस्य तात्पर्यमङ्गीकृत्य अदृष्टद्वारेण जीवस्य निमित्तत्वमित्युक्तम्; इदानीं तत्र तात्पर्यमपि नास्तीत्याह—अपि चेति॥ द्वितीयसूत्रोक्तं निराकरोति—यदप्युक्तमित्यादिना॥ स्वयं विहत्य उपसंहृत्य। न केवलं बृहदारण्यके जीवस्य स्व[स्वयं]कर्तृत्वं श्रुतम्, काठकेऽपीत्याह—इहापि य एष इति॥ ननूक्तं प्रकरणवाक्यशेषाभ्यां परमात्मेति तत्राह—तस्य तु वाक्यशेषेणेति॥ किं च यथा कुम्भकारस्य कुम्भकर्तृत्वेऽपि न परमेश्वरस्य सर्वस्रष्टृत्वं व्याहन्यते, तथा जीवाविद्याया निद्रादृष्टादिसहकारिवशेन स्वप्नप्रपञ्चाकारपरिणामित्वात् जीवकर्तृकत्वेऽपि स्वप्नस्य परमेश्वरकर्तृकत्वमपि न विरुध्यत इत्याह—

१. T, T¹ and TM omit जीवस्य... निमित्तत्वं
२. A omits वाक्यस्य
३. T and T¹. नापि य एष इति

भाष्यम्

न चास्माभिः स्वप्नेऽपि प्राज्ञव्यवहारः प्रतिषिध्यते, तस्य सर्वेश्वरत्वात् सर्वास्ववस्थास्वधिष्ठातृत्वोपपत्तेः; पारमार्थिकस्तु नायं संध्याश्रयः सर्गः वियदादिसर्गवत्—इत्येतावत्प्रतिपाद्यते; न च वियदादिसर्ग-
5 स्याप्यात्यन्तिकं सत्यत्वमस्ति; प्रतिपादितं हि "तदनन्यत्वमारम्भण-शब्दादिभ्यः" इत्यत्र समस्तस्य प्रपञ्चस्य मायामात्रत्वम् । प्राक् तु ब्रह्मात्मत्वदर्शनात् वियदादिप्रपञ्चो व्यवस्थितरूपो भवति; संध्याश्र-यस्तु प्रपञ्चः प्रतिदिनं बाध्यते—इत्यतो वैशेषिकमिदं संध्यस्य माया-मात्रत्वमुदितम् ॥

10 **पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ ३-२-५ ॥**

अथापि स्यात्—परस्यैव तावदात्मनोंऽशः जीवः—अग्नेरिव विस्फुलिङ्गः; तत्रैवं सति यथा अग्निविस्फुलिङ्गयोः समाने दहनप्रकाश-नशक्ती भवतः, एवं जीवेश्वरयोरपि ज्ञानैश्वर्यशक्ती; ततश्च जीवस्य
15 ज्ञानैश्वर्यवशात् सांकल्पिकी स्वप्ने रथादिसृष्टिर्भविष्यतीति । अत्रो-

प्रकटार्थविवरणम्

न चास्माभिरिति ॥ यच्चानुमानमुक्तं तत्र दोषमाह—पारमार्थिकस्त्विति ॥ श्रौतनिषेधानुपपत्त्यनुगृहीतया बाधान्यथानुपपत्त्यार्थक्रियासमर्थाधिष्ठान-वैपरीत्यस्यावगमादनुमानबाध इति भावः । दृष्टान्तोऽपि साध्यविकल
20 इत्याह—न च वियदादीति ॥ दृष्टान्तसिद्धेः प्रागप्यागमादेव मिथ्यात्वं वियदादेः सेद्धुं शक्नोतीति भावः । कस्तर्हि जाग्रत्प्रपञ्चाद्विशेषो येन पृथगा-रम्भ इत्याशङ्कयाह—प्राक्त्विति ॥

पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥

अविद्यामयत्वं किमिति साङ्कल्पिकी? सत्यैव स्वप्नसृष्टिरस्त्वित्याह—
52 अथापि स्यादिति ॥ उत्सूत्रमेव परिहरति—अत्रोच्यत इति ॥ असर्वज्ञत्वा-

१. A. अत्तीत्याह

### भाष्यम्

च्यते—सत्यपि जीवेश्वरयोरंशांशिभावे प्रत्यक्षमेव जीवस्येश्वरविपरीतधर्मत्वम् । किं पुनर्जीवस्येश्वरसमानधर्मत्वं नास्त्येव? न नास्त्येव; विद्यमानमपि तत्तिरोहितमविद्यादिव्यवधानात् । तत्पुनस्तिरोहितं सत् परमेश्वरमभिध्यायतो यतमानस्य जन्तोर्विधूतध्वान्तस्य तिमिरतिरस्कृतेव दृक्शक्तिः औषधवीर्यात्—ईश्वरप्रसादात् संसिद्धस्य कस्यचिदेवाविर्भवति, न स्वभावत एव, सर्वेषां जन्तूनाम्; कुतः? ततो हि ईश्वराद्धेतोः अस्य जीवस्य, बन्धमोक्षौ भवतः—ईश्वरस्वरूपापरिज्ञानात् बन्धः, तत्स्वरूपपरिज्ञानात्तु मोक्षः । तथा च श्रुतिः— 5

> "ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः । 10
> तस्याभिध्यानात्तृतीयं देहभेदे विश्वैश्वर्यं केवल आप्तकामः ॥"

इत्येवमाद्या ॥

### प्रकटार्थविवरणम्

नीश्वरत्वयोः प्रत्यक्षसिद्धत्वाज्जीवस्य न सङ्कल्पमात्रेण रथादिसृष्टिः सङ्घटीतीत्यर्थः । इदानीं सूत्रमवतारयति–किं पुनर्जीवस्येति ॥ ज्ञात्वा देवमिति ॥ 15 परमात्मैवाहमस्मीति साक्षादनुभूय सर्वपाशानामविद्यारागादिसंबन्धानामपहानिः परिक्षयो भवति । परिक्षीणेषु च तेष्वविद्यादिक्लेशेषु तत्कार्यजन्ममृत्युप्रबन्धध्वंस इति निर्गुणविद्याफलम् । सगुणोपासनफलमाह—तस्यैव परमेश्वरस्य अभिध्यानात् विराट्सूत्रापेक्षया तृतीयं विश्वैश्वर्यं देहपाते जगत्कारणसायुज्यापत्त्या भवतीत्यर्थः । भोगांश्च भुक्त्वा निर्गुणविद्योदये केवलाद्वितीय 20 आप्तकामः परमानन्दात्मनैवावतिष्ठत इति क्रममुक्तिफलमित्यर्थः ॥

१. T and T[1]. विशीर्ये

भाष्यम्

# देहयोगाद्वा सोऽपि ॥ ३-२-६ ॥

कस्मात्पुनर्जीवः परमात्मांश एव सन् तिरस्कृतज्ञानैश्वर्यो भवति? युक्तं तु ज्ञानैश्वर्ययोरतिरस्कृतत्वम्, विस्फुलिङ्गस्येव दहन-
5 प्रकाशनयोः—इति। उच्यते—सत्यमेवैतत्; सोऽपि तु जीवस्य ज्ञानैश्वर्यतिरोभावः, देहयोगात् देहेन्द्रियमनोबुद्धिविषयवेदनादियोगात् भवति। अस्ति च अत्रोपमा—यथा अग्नेर्दहनप्रकाशनसंपन्नस्याप्यरणिगतस्य दहनप्रकाशने तिरोहिते भवतः, यथा वा भस्मच्छन्नस्य—एवमविद्याप्रत्युपस्थापितनामरूपकृतदेहाद्युपाधियोगात् तदविवेकभ्रमकृतो
10 जीवस्य ज्ञानैश्वर्यतिरोभावः। वाशब्दो जीवेश्वरयोरन्यत्वाशङ्काव्यावृत्त्यर्थः। नन्वन्य एव जीव ईश्वरादस्तु, तिरस्कृतज्ञानैश्वर्यत्वात्, किं देहयोगकल्पनया? नेत्युच्यते—न हि अन्यत्वं जीवस्येश्वरादुपपद्यते—"सेयं देवतैक्षत" इत्युपक्रम्य "अनेन जीवेनात्मनानुप्रविश्य" इत्यात्मशब्देन जीवस्य परामर्शात्; "तत्सत्यं स आत्मा तत्त्वमसि

15 प्रकटार्थविवरणम्

देहयोगाद्वा सोऽपि ॥

जीवस्य स्वत एवानाविर्भूतज्ञानैश्वर्यात् सङ्कल्पमात्रेण स्रष्टृत्वं न संभवतीत्युक्तम्: तत्रांशत्वानभिज्ञो हेत्वसिद्धिमाशङ्कते—कस्मात्पुनरिति ॥ यो यस्यांशः स तद्गुणशालीति दृष्ट इत्येतत्सत्यम्; इह तु जीवस्येश्वरांशत्वमेव न साक्षा-
20 दस्तीत्यभिप्रेत्याह — सत्यमेवमेतदिति ॥ ननु माभूदंशांशिभावः; तथापि चित्स्वरूपाविशेषे कथं क्वचिदैश्वर्याद्यभिव्यक्तिः, क्वचिच्च नास्तीत्याशङ्क्योपाधिगतमेव विशेषमाह—सोऽपि तु जीवस्येति ॥ उपाधिकृतविशेषसद्भावे दृष्टान्तमाह—अस्ति चात्रोपमेति ॥ वाशब्देन निरस्याशङ्कामुद्भाव्य निरस्यति—नन्वन्य एवेत्यादिना ॥ साङ्कल्पिकत्वे दोषान्तरमाह — यदि

१. TM. इत्यर्थः
२. A. अंशत्वानभिज्ञः
३. A. तद्गुणानुसारीति
४. A omits सत्यं.....दृष्टान्तमाह

भाष्यम्

श्वेतकेतो" इति च जीवाय उपदिशति ईश्वरात्मत्वम्; अतः अनन्य एव ईश्वराज्जीवः सन् देहयोगात्तिरोहितज्ञानैश्वर्यो भवति। अतश्च न सांकल्पिकी जीवस्य स्वप्ने रथादिसृष्टिर्घटते; यदि च सांकल्पिकी स्वप्ने रथादिसृष्टिः स्यात्, नैवानिष्टं कश्चित्स्वप्नं पश्येत्, न हि कश्चि- 5 दनिष्टं संकल्पयते। यत्पुनरुक्तम्—जागरितदेशश्रुतिः स्वप्नस्य सत्यत्वं ख्यापयतीति, न तत्साम्यवचनं सत्यत्वाभिप्रायम्, स्वयंज्योतिष्ट्व- विरोधात्, श्रुत्यैव च स्वप्ने रथाद्यभावस्य दर्शितत्वात्; जागरित- प्रभववासनानिर्मितत्वाच्च स्वप्नस्य तत्तुल्यनिर्भासत्वाभिप्रायं तत्। तस्मादुपपन्नं स्वप्नस्य मायामात्रत्वम्॥ 10

[तदभावाधिकरणम्]

## तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ३-२-७ ॥

स्वप्नावस्था परीक्षिता; सुषुप्तावस्थेदानीं परीक्ष्यते। तत्रैताः सुषुप्तिविषयाः श्रुतयो भवन्ति; क्वचिच्छ्रूयते—"तद्यत्रैतत्सुप्तः समस्तः

प्रकटार्थविवरणम् 15

चेति॥ पुनः परोक्तमुत्थाप्य गतिमाह—यत्पुनरुक्तमित्यादिना॥ सत्यत्वं चेद्विवक्षितं तदा स्वयंप्रकाशमानत्वे तात्पर्याभावात् न तत्सिध्येत्[१]; जाग्रद्वत्[२] आदित्यादिज्योतिस्सद्भावात् पराधीनप्रकाशत्वप्रसङ्गे मनआदिद्रष्टृत्वं स्वत इत्येतद्विरुध्यते; अतो जाग्रत्सदृशभ्रमोदयात् साम्यवचनमित्यर्थः॥

तदभावो नाडीषु तच्छ्रुतेरात्मनि च॥ 20

अधिकरणसङ्गतिमाह—स्वप्नावस्थेति॥ विषयवाक्यानि पठति— तत्रैता इति॥ समस्तः संहृतसकलकरण इत्यर्थः॥

१. T. शक्तिं
२. T. तत्सिद्ध्ये जाग्रद्वादि
३. A. जाग्रद्वदादित्यादि

भाष्यम्

संप्रसन्नः स्वप्नं न विजानात्यासु तदा नाडीषु सृप्तो भवति" इति ; अन्यत्र तु नाडीरेवानुक्रम्य श्रूयते—"ताभिः प्रत्यवसृप्य पुरीतति शेते" इति ; तथान्यत्र नाडीरेवानुक्रम्य "तासु तदा भवति यदा
5 सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन्प्राण एवैकधा भवति" इति ; तथान्यत्र—"य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते" इति ; तथान्यत्र—"सता सोम्य तदा संपन्नो भवति स्वमपीतो भवति" इति ; तथा—"प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम्" इति च ॥

10 तत्र संशयः—किमेतानि नाड्यदीनि परस्परनिरपेक्षाणि भिन्नानि सुषुप्तिस्थानानि, आहोस्वित्परस्परापेक्षयैकं सुषुप्तिस्थानमिति । किं तावत्प्राप्तम्? भिन्नानीति ; कुतः? एकार्थत्वात्—न ह्येकार्थानां क्वचित्परस्परापेक्षत्वं दृश्यते, व्रीहियवादीनाम् ; नाड्यादीनां च एकार्थता सुषुप्तौ दृश्यते, "नाडीषु सृप्तो भवति" "पुरीतति शेते" इति च
15 तत्र तत्र सप्तमीनिर्देशस्य तुल्यत्वात् । ननु नैवं सति सप्तमीनिर्देशो दृश्यते—"सता सोम्य तदा संपन्नो भवति" इति ; नैष दोषः,

प्रकटार्थविवरणम्

सप्तमीनिर्देशात् समुच्चयवचनाच्च संशयमाह — तत्र संशय इति ॥

पूर्वपक्षं विरचयति—किं तावदिति ॥ यथा व्रीहिभिः पुरोडाशे निष्पादिते न
20 यवाकाङ्क्षा तथा नाडीपुरीतद्ब्रह्मणां जीवस्वोपाधिकरणानामेकस्वापार्थत्वात् विकल्प एव युक्त इत्यर्थः । नाड्यादीनां निरपेक्षस्वोपाधिकरणत्वमेव कुतः सिद्धमित्याशङ्क्याह—नाड्यादीनां चेति ॥ सच्छब्दस्य तृतीयान्तत्वात् सप्तमीनिर्देशोऽसिद्ध इत्याह—नन्विति ॥ यद्यपि सप्तमी न श्रूयते, तथापि सप्तम्यर्थो गम्यत एवास्मात्, मृदि घटः, मृदात्मनावस्थित इत्युभयथा प्रयोगदर्श-
25 नादित्याह—नैष दोष इति ॥ किं च वाक्यशेषे प्रकृतस्य सत आयतनत्व-

१. TM. Space is left out for writing विरचयति...निष्पादि

भाष्यम्

तत्रापि सप्तम्यर्थस्य गम्यमानत्वात्—वाक्यशेषो हि तत्र आयतनैषी जीवः सत् उपसर्पतीत्याह—"अन्यत्रायतनमलब्ध्वा प्राणमेवोपश्रयते" इति; प्राणशब्देन तत्र प्रकृतस्य सत उपादानात्; आयतनं च सप्तम्यर्थः। सप्तमीनिर्देशोऽपि तत्र वाक्यशेषे दृश्यते—"सति संपद्य न विदुः सति संपद्यामहे" इति। सर्वत्र च विशेषविज्ञानोपरमलक्षणं सुषुप्तं न विशिष्यते। तस्मादेकार्थत्वात् नाड्यादीनां विकल्पेन कदाचित् किंचित्स्थानं स्वापायोपसर्पति—इति॥ 5

एवं प्राप्ते, प्रतिपाद्यते—तदभावो नाडीष्वात्मनि चेति। तदभाव इति, तस्य प्रकृतस्य स्वप्नदर्शनस्य अभावः सुषुप्तमित्यर्थः; नाडीष्वात्मनि चेति समुच्चयेन एतानि नाड्यादीनि स्वापायोपसर्पति, न विकल्पेन—इत्यर्थः; कुतः? तच्छ्रुतेः; तथा हि—सर्वेषामेव नाड्यादीनां तत्र तत्र सुषुप्तिस्थानत्वं श्रूयते, तच्च समुच्चये संगृहीतं भवति; विकल्पे 10

प्रकटार्थविवरणम्

श्रवणात्पूर्वमप्यायतनत्वं विवक्षितमित्याह—वाक्यशेषेऽपीति॥ स्थानत्रयोत्थश्रमापनयायायतनैषी शरणप्रेप्सुरित्यर्थः[1]। प्राणादन्यत्रान्यदायतनं श्रमापनयनस्थानमलब्ध्वा प्राणमेवोपश्रयत इत्येतावद्गम्यते, न तु सदुपगच्छतीति; तत्राह—प्राणशब्देनेति॥ ततः किमित्यत आह—आयतनं चेति॥ पूर्वं सतिसप्तमीनिर्देशमङ्गीकृत्य तदर्थो गम्यत इत्युक्तम्। इदानीं सप्तम्यपि श्रूयत इत्याह—सप्तमीनिर्देशोऽपि चेति॥ ननु तथापि नाड्यादिषु सुषुप्तेरेवासंभवात् न विकल्प इत्याशङ्क्याह—सर्वत्र चेति॥ 15 20

समुच्चयपक्षं सिद्धान्तमाह—एवं प्राप्त इत्यादिना॥ यदा नाड्यः सुषुप्तिस्थानं तदा पुरीतन्न भवतीति पक्षे बाधः स्यात्; स च न युक्तः; बाधस्यागतिकगतित्वात् इत्याह—विकल्पे तेषामिति॥ विकल्पहेतुं परोक्तमनुवदति-

१. A. शरणं　　　　२. T[1] and A. निर्देशाभावे

भाष्यम्

तेषाम्, पक्षे बाधः स्यात् । ननु एकार्थत्वाद्विकल्पो नाड्यादीनां व्रीहिय-
वादिवत् इत्युक्तम्; नेत्युच्यते—न हि एकविभक्तिनिर्देशमात्रेणैकार्थत्वं
विकल्पश्च आपतति, नानार्थत्वसमुच्चययोरप्येकविभक्तिनिर्देशदर्श-
5 नात्—प्रासादे शेते पर्यङ्के शेत इत्येवमादिषु; तथा इहापि नाडीषु पुरी-
तति ब्रह्मणि च स्वपितीति उपपद्यते समुच्चयः; तथा च श्रुतिः—
"तासु तदा भवति यदा सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन्प्राण
एवैकधा भवति" इति समुच्चयं नाडीनां प्राणस्य च सुषुप्तौ श्रावयति, एक-
वाक्योपादानात्; प्राणस्य च ब्रह्मत्वं समधिगतम्—"प्राणस्तथानुग-
10 मात्" इत्यत्र । यत्रापि निरपेक्षा इव नाडीः सुषुप्तिस्थानत्वेन श्राव-
यति—"आसु तदा नाडीषु सृप्तो भवति" इति, तत्रापि प्रदेशान्त-
रप्रसिद्धस्य ब्रह्मणोऽप्रतिषेधात् नाडीद्वारेणैव ब्रह्मण्येवावतिष्ठत इति
प्रतीयते; न चैवमपि नाडीषु सप्तमी विरुध्यते, नाडीभिरपि ब्रह्मोप-

प्रकटार्थविवरणम्

15 नन्वेकार्थत्वादिति ॥ दृष्टान्तदार्ष्टान्तिकयोर्वैलक्षण्येन दूषयति—नेत्युच्यत
इति ॥ प्रकृतक्रतुसाधनीभूतपुरोडाशद्रव्यप्रकृतितया व्रीहियवौ श्रुतौ समर्थौ
च निरपेक्षतया तत्साधयितुम्; तयोः परस्परापेक्षायां निरपेक्षतया
साधनत्वसमर्पकश्रुतिद्वयबाधः स्यादित्यनन्यगतित्वेन विकल्पाश्रयणम्;
नाड्यादीनां तु न प्रत्येकं सुषुप्तिसाधने सामर्थ्यमिति वक्ष्यति; नापि प्रमाण-
20 मिति भावः । यश्च हेतुः सप्तमीनिर्देशस्य तुल्यत्वादिति, सोऽनैकान्तिक
इत्याह—न ह्येकविभक्तीति ॥ प्रासादस्य पर्यङ्कधारणार्थत्वम्, पर्यङ्कस्य च शय-
नार्थत्वमिति नानार्थत्वेऽप्येकविभक्तिनिर्देशः; व्यवधानाव्यवधानाभ्यां च शयन-
साधनत्वात्समुच्चय इत्यर्थः । पूर्वमनेकश्रुतिसामर्थ्यपर्यालोचनया समु-
च्चयमूचे; अधुना श्रुतिमाह—तथा च श्रुतिरिति ॥ ननु समुच्चये श्रुत्य-
25 न्तरं नैरपेक्ष्यद्योतकं निरुध्येतेत्याशङ्क्याह— यत्रापि निरपेक्षा इति ॥ ननु
नाडीनां द्वारत्वे अधिकरणश्रुतिविरोध इत्याशङ्क्याह—न चैवमपीति ॥

१. T and T[1]. अधुना श्रुतिरिति.

भाष्यम्

पसर्पन् सुप्त एव नाडीषु भवति—यो हि गङ्गया सागरं गच्छति, गत
एव स गङ्गायां भवति । अपि चात्र रश्मिनाडीद्वारात्मकस्य ब्रह्मलोक-
मार्गस्य विवक्षितत्वात् नाडीस्तुत्यर्थं सुप्तिसंकीर्तनम्—"नाडीषु सुप्तो
भवति" इत्युक्त्वा "तं न कश्चन पाप्मा स्पृशति" इति ब्रुवन्नाडीः　5
प्रशंसति; ब्रवीति च पाप्मस्पर्शाभावे हेतुम्—"तेजसा हि तदा
संपन्नो भवति" इति—तेजसा नाडीगतेन पित्ताख्येन अभिव्याप्त-
करणो न बाह्यान् विषयानीक्षत इत्यर्थः; अथवा तेजसेति ब्रह्मण
एवायं निर्देशः, श्रुत्यन्तरे "ब्रह्मैव तेज एव" इति तेजःशब्दस्य
ब्रह्मणि प्रयुक्तत्वात्; ब्रह्मणा हि तदा संपन्नो भवति नाडीद्वारेण,　10
अतस्तं न कश्चन पाप्मा स्पृशतीत्यर्थः—ब्रह्मसंपत्तिश्च पाप्मस्पर्शाभावे
हेतुः समधिगतः "सर्वे पाप्मानोऽतो निवर्तन्तेऽपहतपाप्मा ह्येष ब्रह्म-
लोकः" इत्यादिश्रुतिभ्यः; एवं च सति प्रदेशान्तरप्रसिद्धेन ब्रह्मणा
सुषुप्तिस्थानेनानुगतो नाडीनां समुच्चयः समधिगतो भवति । तथा
पुरीततोऽपि ब्रह्मप्रक्रियायां संकीर्तनात् तदनुगुणमेव सुषुप्तिस्थानत्वं　15
ज्ञायते—"य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते" इति हृदयकाशे
सुषुप्तिस्थाने प्रकृते इदमुच्यते "पुरीतति शेते" इति; पुरीतदिति

प्रकटार्थविवरणम्

इतश्च निरपेक्षतया नाडीनां सुषुप्तिस्थानत्वमिह न विवक्षितमित्याह—
अपि चात्रेति ॥ विषयदर्शनासंभवात् तज्जनितसुखदुःखाभावात्तद्धेतुधर्मा-　20
धर्माभावात् पापासंस्पर्शो दर्शितः; इदानीं प्रकारान्तरमाह—अथ वेति ॥
ननु ब्रह्मसंपत्तिमात्रेण पापासंस्पर्शः कुतः सिद्ध इत्याशङ्क्याह— ब्रह्मसंपत्ति-
श्चेति ॥ किंच द्वारत्वे श्रुत्यन्तराविरोधोऽपि भवतीत्याह—एवं च सतीति ॥
एवं तावत् नाडीब्रह्मणोः गुणप्रधानभावेन समुच्चयमुक्त्वा अधुना पुरीतद्ब्रह्मणो-
र्गुणप्रधानभावेन समुच्चयमाह — तथा पुरीततोऽपीत्यादिना ॥ इदानीं　25

१. T¹. तत्र

भाष्यम्

हृदयपरिवेष्टनमुच्यते; तदन्तर्वर्तिन्यपि हृदयाकाशे शयानः शक्यते "पुरीतति शेते" इति वक्तुम्—प्राकारपरिक्षिप्तेऽपि पुरे वर्तमानः प्राकारे वर्तत इत्युच्यते; हृदयाकाशस्य च ब्रह्मत्वं समधिगतम्—"दहर उत्त-
5 रेभ्यः" इत्यत्र। तथा नाडीपुरीतत्समुच्चयोऽपि "ताभिः प्रत्यवसृप्य पुरीतति शेते" इत्येकवाक्योपादानादवगम्यते। सत्प्राज्ञयोश्च प्रसिद्धमेव ब्रह्मत्वम्। एवमेतासु श्रुतिषु त्रीण्येव सुषुप्तिस्थानानि संकी-र्तितानि—नाड्यः पुरितद्ब्रह्म चेति; तत्रापि द्वारमात्रं नाड्यः पुरी-तच्च, ब्रह्मैव तु एकं अनपायि सुषुप्तिस्थानम्। अपि च नाड्यः पुरी-
10 तद्वा जीवस्योपाध्याधार एव भवति—तत्रास्य करणानि वर्तन्त इति; न हि उपाधिसंबन्धमन्तरेण स्वत एव जीवस्याधारः कश्चित्संभवति, ब्रह्मा-व्यतिरेकेण स्वमहिमप्रतिष्ठितत्वात्। ब्रह्माधारत्वमप्यस्य सुषुप्ते नैव आधाराधेयभेदाभिप्रायेण उच्यते, कथं तर्हि? तादात्म्याभिप्रायेण; यत आह—"सता सोम्य तदा संपन्नो भवति स्वमपीतो भवति"
15 इति। स्वशब्देन आत्मा अभिलप्यते; स्वरूपमापन्नः सुप्तो भवतीत्यर्थः। अपि च न कदाचित् जीवस्य ब्रह्मणा संपत्तिर्नास्ति, स्वरूपस्यानपायि-

प्रकटार्थविवरणम्

नाडीपुरीततोरपि परस्परसमुच्चयमाह — तथा नाडीपुरीतदिति ॥ ननु सत्प्राज्ञयोरपि सुषुप्तिस्थानत्वसङ्कीर्तनात् कथं त्रयाणामेव समुच्चयवर्णनमित्या-
20 शङ्क्याह—सत्प्राज्ञयोश्चेति ॥ नाडीपुरीततोः द्वारत्वे हेत्वन्तरमाह—अपि च नाड्य इति ॥ ननु नाडीपुरीततोः जीवाधारत्वासंभवान्न मुख्यं सुषुप्ति-स्थानत्वं चेत्तर्हि ब्रह्मणोऽप्याधाराधेयभावायोगात् न मुख्यं सुषुप्तिस्थानत्वं इत्याशङ्क्याह—ब्रह्माधारत्वमिति ॥ विकल्पपक्षे जीवस्य ब्रह्मसंपत्तेः कादा-चित्कत्वप्रसङ्गादपि विकल्पोऽनुपपन्न इत्याह—अपि च न कदाचिदिति ॥

१. A. पुरीतदिति
२. TM. स च नाड्यः
३. A. स्थानं
४. T[1]. मपीति
५. A. प्रसङ्गादभेदावस्थस्यापि

भाष्यम्

स्यात्; स्वप्नजागरितयोस्तूपाधिसंपर्कवशात् पररूपापत्तिमिवापेक्ष्य तदु-
पशमात्सुषुप्तेः स्वरूपापत्तिर्विवक्ष्यते "स्वमपीतो भवति" इति; अतश्च
सुप्तावस्थायां कदाचित्सता संपद्यते, कदाचिन्न संपद्यते—इत्ययुक्तम्।
अपि च स्थानविकल्पाभ्युपगमेऽपि विशेषविज्ञानोपशमलक्षणं ताव- 5
त्सुषुप्तं न कचिद्विशिष्यते; तत्र सति संपन्नस्तावत् एकत्वात् न विजा-
नातीति युक्तम्, "तत्केन कं विजानीयात्" इति श्रुतेः; नाडीषु
पुरीतति च शयानस्य न किंचित् अविज्ञाने कारणं शक्यं विज्ञातुम्,
भेदविषयत्वात्, "यत्र वा अन्यदिव स्यात्तत्रान्योऽन्यत्पश्येत्" इति
श्रुतेः। ननु भेदविषयस्याप्यतिदूरादि कारणमविज्ञाने स्यात्, बाढमेवं 10
स्यात्, यदि जीवः स्वतः परिच्छिन्नोऽभ्युपगम्येत—यथा विष्णुमित्रः
प्रवासी स्वगृहान् न पश्यति; न तु जीवस्योपाधिव्यतिरेकेण परिच्छेदो
विद्यते; उपाधिगतमेवातिदूरादि कारणमविज्ञान इति यद्युच्यते, तथा-
प्युपाधेरुपशान्तत्वात् सत्येव संपन्नो न विजानातीति युक्तम्। न च
वयमिह तुल्यवत् नाड्यादिसमुच्चयं प्रतिपादयामः; न हि नाड्यः सुप्ति- 15

प्रकटार्थविवरणम्

स्थानान्तरे सुषुप्तिरपि न संभवतीत्याह — अपि च स्थानेति॥ विकल्प-
वादिनापि सुषुप्तं न कचिद्विशिष्यत इति वक्तव्यम्; तत्र वक्तुं न पार्यत
इत्यर्थः। यथा नभस्युत्पतितः पक्षी नोपलभ्यतेऽतिदूरत्वात्, यथा चान्धेन
रूपमिन्द्रियप्रतिबन्धादेवं भेदावस्थस्यापि जीवस्य अतिदूरत्वाद्यविज्ञाने कारणं 20
विद्यत इति स्थानान्तरेऽपि सुषुप्तिर्घटत इत्याह—ननु भेदविषयस्यापीति॥
तत्किं जीवस्यातिदूरत्वं स्वाभाविकं किं वौपाधिकम्? प्रथमं दूषयति—
बाढमेवं स्यादिति॥ द्वितीयं दूषयति उपाधिगतमेवेति॥ तस्मात् स्थाना-
न्तरे[1] सुषुप्त्यसंभवात् नाडीपुरीततोः द्वारत्वमेव; ब्रह्मैवैकं[2] सुषुप्तिस्थानमिति
सिद्धम्। इदानीं संक्षेपतोऽधिकरणरहस्यमाह—न च वयमिहेति॥ 25

१. A. स्थानान्तरेषु　　　२. A. ब्रह्मैकमेव

भाष्यम्

स्थानं पुरीतच्च इत्यनेन विज्ञानेन किंचित्प्रयोजनमस्ति ; न ह्येतद्विज्ञानप्रतिबद्धं किंचित्फलं श्रूयते ; नाप्येतद्विज्ञानं फलवतः कस्यचिदङ्गमुपदिश्यते । ब्रह्म तु अनपायि सुप्तिस्थानम्—इत्येतत्प्रतिपादयामः ; तेन
5 तु विज्ञानेन प्रयोजनमस्ति जीवस्य ब्रह्मात्मत्वावधारणं स्वप्नजागरितव्यवहारविमुक्तत्वावधारणं च । तस्मादात्मैव सुप्तिस्थानम् ॥

## अतः प्रबोधोऽस्मात् ॥ ३-२-८ ॥

यस्माच्च आत्मैव सुप्तिस्थानम्, अत एव च कारणात् नित्यवदेव अस्मादात्मनः प्रबोधः स्वापाधिकारे शिष्यते, "कुत एतदागात्"
10 इत्यस्य प्रश्नस्य प्रतिवचनावसरे—"यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः" इत्यादिना, "सत आगम्य न विदुः सत आगच्छमहे" इति च । विकल्प्यमानेषु तु सुषुप्तिस्थानेषु, कदाचिन्नाडीभ्यः प्रतिबुध्यते कदाचित्पुरीततः कदाचिदात्मनः—इत्यशासिष्यत् । तस्मादप्यात्मैव सुप्तिस्थानमिति ॥

15 [ कर्मानुस्मृतिशब्दविध्यधिकरणम् ]

## स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ३-२-९ ॥

तस्याः पुनः सत्संपत्तेः प्रतिबुध्यमानः किं य एव सत्संपन्नः स एव प्रतिबुध्यते, उत स वान्यो वेति चिन्त्यते । तत्र प्राप्तं तावत्—

प्रकटार्थविवरणम्

20 अतः प्रबोधोऽस्मात् ॥

किंच सर्वत्र परमात्मन एव प्रबोधश्रवणादपि परमात्मैव सुषुप्तिस्थानमित्याह—अतः प्रबोध इति ॥

स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥

पूर्वाधिकरणान्ते सतः प्रबोधो दर्शितः । तत्रैव विचारमारभते—
25 तस्याः पुनरिति ॥ उपाधिविनाशात् कर्मानुस्मृत्यादिदर्शनाच्च संशय इत्यर्थः । नियामकानुपलम्भादनियम इति पूर्वः पक्षः ॥

भाष्यम्

अनियम इति; कुतः? यदा हि जलराशौ कश्चिज्जलबिन्दुः प्रक्षिप्यते, जलराशिरेव स तदा भवति, पुनरुद्धरणे च स एव जलबिन्दुर्भवति इति दुःसंपादम्—तद्वत् सुप्तः परेणैकत्वमापन्नः संप्रसीदतीति न स एव पुनरुत्थातुमर्हति; तस्मात् स एव ईश्वरो वा अन्यो वा जीवः प्रतिबुध्यत इति ॥

एवं प्राप्त इदमाह—स एव तु जीवः सुप्तः स्वास्थ्यं गतः पुनरुत्तिष्ठति, नान्यः; कस्मात्? कर्मानुस्मृतिशब्दविधिभ्यः; विभज्य हेतुं दर्शयिष्यामि—कर्मशेषानुष्ठानदर्शनाच्च स एवोत्थातुमर्हति, नान्यः; तथा हि—पूर्वेद्युरनुष्ठितस्य कर्मणः अपरेद्युः शेषमनुतिष्ठन्दृश्यते, न चान्येन सामिकृतस्य कर्मणः अन्यः शेषक्रियायां प्रवर्तितुमुत्सहते, अतिप्रसङ्गात्; तस्मादेक एव पूर्वेद्युरपरेद्युश्चैकस्य कर्मणः कर्तेति गम्यते। इतश्च स एवोत्तिष्ठति, यत्कारणम् अतीतेऽहन्यहमदोऽद्राक्षमिति पूर्वानुभूतस्य पश्चात्स्मरणम् अन्यस्योत्थाने नोपपद्यते; न ह्यन्यदृष्टम् अन्योऽनुस्मर्तुमर्हति; सोऽहमस्मीति च आत्मानुस्मरणमात्मान्तरोत्थाने नावकल्पते । शब्देभ्यश्च तस्यैवोत्थानमवगम्यते; तथा हि—"पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव" "इमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति" "त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति तदाभवन्ति" इत्येवमादयः शब्दाः स्वापप्रबोधाधिकारपठिता

प्रकटार्थविवरणम्

सिद्धान्तसूत्रं योजयति—स एव तु जीव इति ॥ सामिकृतस्य अर्धकृतस्य; कर्मपदं व्याख्यायानुस्मृतिपदं व्याचष्टे—इतश्चेति ॥ शब्दशब्दार्थमाह—शब्देभ्यश्चेति ॥ अयमाशयः—प्रतिनियतं गमनं प्रतिन्यायः; स यथा भवति तथा योनिं प्रति प्रत्यागच्छति जागरणायेत्यर्थः । विधिपदं व्याचष्टे—

### भाष्यम्

न आत्मान्तरोत्थाने सामञ्जस्यमीक्षुः। कर्मविद्याविधिभ्यश्चैवमेवावगम्यते; अन्यथा हि कर्मविद्याविधयोऽनर्थकाः स्युः; अन्योत्थानपक्षे हि सुप्तमात्रो मुच्यत इत्यापद्येत; एवं चेत्स्यात्, वद किं कालान्तरफलेन कर्मणा विद्यया वा कृतं स्यात्। अपि च अन्योत्थानपक्षे यदि तावच्छरीरान्तरे व्यवहरमाणो जीव उत्तिष्ठेत्, तत्रत्यव्यवहारलोपप्रसङ्गः स्यात्; अथ तत्र सुप्त उत्तिष्ठेत्, कल्पनानर्थक्यं स्यात्—यो हि यस्मिञ्शरीरे सुप्तः स तस्मिन्नोत्तिष्ठति, अन्यस्मिञ्शरीरे सुप्तः अन्यस्मिन्नुत्तिष्ठतीति कोऽस्यां कल्पनायां लाभः स्यात्? अथ मुक्त उत्तिष्ठेत्, अन्तवान्मोक्ष आपद्येत; निवृत्ताविद्यस्य च पुनरुत्थानमनुपपन्नम्; एतेनेश्वरस्योत्थानं प्रत्युक्तम्, नित्यनिवृत्ताविद्यत्वात् अकृताभ्यागमकृतविप्रणाशौ च दुर्निवारावन्योत्थानपक्षे स्याताम्। तस्मात्स एवोत्तिष्ठति, नान्य इति। यत्पुनरुक्तम्, यथा जलराशौ प्रक्षिप्तो जलबिन्दुर्नोद्धर्तुं शक्यते एवं सति संपन्नो जीवो नोत्पतितुमर्हतीति, तत्परिह्रियते—युक्तं तत्र विवेककारणाभावात् जलबिन्दोरनुद्धरणम्, इह तु विद्यते विवेककारणम्—कर्म च अविद्या चेति वैषम्यम्; दृश्यते च दुर्विवेचयोरप्यस्मज्जातीयैः क्षीरोदकयोः संसृष्टयोः हंसेन विवेचनम्। अपि च न जीवो नाम कश्चित्परस्मादन्यो विद्यते, यो जलबिन्दुरिव जलराशेः सतो विविच्येत; सदेव तु उपाधिसंपर्काज्जीव इत्युपचर्यते

### प्रकटार्थविवरणम्

कर्मविद्येति ॥ उत्सूत्रमुपपत्त्यन्तरमाह — अपि चान्येत्यादिना ॥ पूर्ववाद्युक्तं दृष्टान्तं वैधर्म्येण परिहरति—यत्पुनरुक्तमित्यादिना ॥ नन्वस्मदादिभिः यद्दुर्विवेचनं तदविद्यादिना वा कथं विविच्यत इत्याशङ्क्याह — दृश्यते चेति ॥ प्रकारान्तरेण दृष्टान्तवैषम्यमाह —अपि चेति ॥ ननु सह-

१. T and T[1]. न दृश्यते

भाष्यम्

इत्यसकृत्प्रपञ्चितम्; एवं सति यावदेकोपाधिगता बन्धानुवृत्तिः; तावदेकजीवव्यवहारः; उपाध्यन्तरगतायां तु बन्धानुवृत्तौ जीवान्तरव्यवहारः; स एवायमुपाधिः स्वापप्रबोधयोः बीजाङ्कुरन्यायेन— इत्यतः स एव जीवः प्रतिबुध्यत इति युक्तम् ॥ 5

[ मुग्धाधिकरणम् ]

## मुग्धेऽर्धसंपत्तिः परिशेषात् ॥ ३-२-१० ॥

अस्ति मुग्धो नाम, यं मूर्च्छित इति लौकिकाः कथयन्ति; स तु किमवस्थ इति परीक्षायाम्, उच्यते—तिस्रस्तावदवस्थाः शरीरस्थस्य जीवस्य प्रसिद्धाः—जागरितं स्वप्नः सुषुप्तमिति; चतुर्थी शरीरादपसृप्तिः; न तु पञ्चमी काचिदवस्था जीवस्य श्रुतौ स्मृतौ वा प्रसिद्धा अस्ति; तस्माच्चतसृणामेवावस्थानामन्यतमावस्था मूर्च्छा—इति ॥ 10

प्रकटार्थविवरणम्

स्त्वेव यदि जीवः, तर्ह्येक एव जीवः स्यादित्याशङ्क्याह—एवं सतीति ॥ ननूपाधिभेदाज्जीवस्य भेदव्यवहारः, तर्हि पूर्वोत्तरवासरयोरुपाधिभेदात् जीवभेदप्रसङ्ग इत्याशङ्क्याह — स एव चायमिति ॥ यद्यप्यन्तःकरणादेः व्यक्ताकारो नश्यति सुषुप्ते तथाप्यव्यक्ताकारेण वर्तमानत्वाद्यस्य य उपाधिः स एव बीजाङ्कुरवद्व्यक्ताव्यक्तरूपेण वर्तत इति न जीवभेदो युक्त इत्यर्थः ॥ 15

मुग्धेऽर्धसंपत्तिः परिशेषात् ॥

पूर्वं स्वप्नसुषुप्तिव्यतिरेको दर्शितः; इदानीं मूर्च्छावस्थाव्यतिरेकं दर्शयितुमुपक्रमते — अस्ति मुग्धो नामेति ॥ मुग्धावस्था किं जाग्रदादिव्यतिरिक्ता, उताव्यतिरिक्तेत्यवस्थाचतुष्टयप्रसिद्धिनियमवैलक्षण्याभ्यां संशये पूर्वपक्षमाह—तिस्रस्तावदिति ॥ 20

१. A. नेकजीवः

२. T. स्वप्नावस्था.

३. T¹, TM. and A. मूर्च्छावस्था

भाष्यम्

एवं प्राप्ते ब्रूमः—न तावन्मुग्धो जागरितावस्थो भवितुमर्हति ; न ह्ययमिन्द्रियैर्विषयानीक्षते । स्यादेतत्—इषुकारन्यायेन मुग्धो भविष्यति—यथा इषुकारो जाग्रदपि इष्वासक्तमनस्तया नान्यान्विषया-
5 नीक्षते, एवं मुग्धो मुसलसंपातादिजनितदुःखानुभवव्यग्रमनस्तया जाग्रदपि नान्यान्विषयानीक्षत इति ; न, अचेतयमानत्वात् ; इषुकारो हि व्यापृतमना ब्रवीति—इषुमेवाहमेतावन्तं कालमुपलभमानोऽभूवमिति, मुग्धस्तु लब्धसंज्ञो ब्रवीति—अन्धे तमस्यहमेतावन्तं कालं प्रक्षिप्तोऽभूवम्, न किंचिन्मया चेतितमिति । जाग्रतश्चैकविषयविषक्तचेतसोऽपि
10 देहो विध्रियते ; मुग्धस्य तु देहो धरण्यां पतति । तस्मान्न जागर्ति । नापि स्वप्नान्पश्यति, निःसंज्ञकत्वात् । नापि मृतः, प्राणोष्मणोर्भावात्—मुग्धे हि जन्तौ मृतोऽयं स्यान्न वा मृत इति संशयानाः, ऊष्मास्ति नास्तीति हृदयदेशमालभन्ते निश्चयार्थम्, प्राणोऽस्ति नास्तीति च नासिकादेशम् ; यदि प्राणोष्मणोरस्तित्वं नावगच्छन्ति, ततो मृतोऽ-
15 यमित्यध्यवसाय दहनायारण्यं नयन्ति ; अथ तु प्राणमूष्माणं वा प्रतिपद्यन्ते, ततो नायं मृत इत्यध्यवसाय संज्ञालाभाय भिषज्यन्ति ; पुनरुत्थानाच्च न दिष्टं गतः ; न हि यमं गतः यमराष्ट्रात्प्रत्यागच्छति । अस्तु तर्हि सुषुप्तः, निःसंज्ञत्वात्, अमृतत्वाच्च ; न, वैलक्षण्यात्—मुग्धः कदाचिच्चिरमपि नोच्छ्वसिति, सवेपथुरस्य देहो भवति, भयानकं च वदनम्,
20 विस्फारिते नेत्रे ; सुषुप्तस्तु प्रसन्नवदनस्तुल्यकालं पुनः पुनरुच्छ्वसिति, निमीलिते अस्य नेत्रे भवतः, न चास्य देहो वेपते ; पाणिपेषणमात्रेण च सुषुप्तमुत्थापयन्ति, न तु मुग्धं मुद्गरघातेनापि । निमित्तभेदश्च भवति मोहस्वापयोः—मुसलसंपातादिनिमित्तत्वान्मोहस्य, श्रमादिनिमित्तत्वाच्च स्वापस्य । न च लोकेऽस्ति प्रसिद्धिः—मुग्धः सुप्त इति ।

25 प्रकटार्थविवरणम्

परिशेषादवस्थाचतुष्टयातिरिक्तां मुग्धावस्थां दर्शयितुं प्रसक्तप्रतिषेधमारभते—न तावन्मुग्ध इत्यादिना ॥

भाष्यम्

परिशेषादर्धसंपत्तिर्मुग्धतेत्यवगच्छामः—निःसंज्ञत्वात्संपन्नः, इतरस्मा-द्वैलक्षण्यादसंपन्न इति ॥

कथं पुनरर्धसंपत्तिर्मुग्धतेति शक्यते वक्तुम्?—यावता सुप्तं प्रति तावदुक्तं श्रुत्या—"सता सोम्य तदा संपन्नो भवति" इति, "अत्र स्तेनोऽस्तेनो भवति" "नैतं सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतम्" इत्यादि। जीवे हि सुकृतदुष्कृतयोः प्राप्तिः सुखित्वदुःखित्वप्रत्ययोत्पादनेन भवति; न च सुखित्वप्रत्ययो दुःखित्वप्रत्ययो वा सुषुप्ते विद्येते; मुग्धेऽपि तौ प्रत्ययौ नैव विद्येते; तस्मात् उपाध्युपशमात् सुषुप्तवन्मुग्धेऽपि कृत्स्नसंपत्तिरेव भवितुमर्हति, नार्धसंपत्तिरिति। अत्रोच्यते—न ब्रूमः—मुग्धेऽर्धसंपत्तिर्जीवस्य ब्रह्मणा भवतीति; किं तर्हि? अर्धेन सुषुप्तपक्षस्य भवति मुग्धत्वम्, अर्धेनावस्थान्तरपक्षस्य इति ब्रूमः। दर्शिते च मोहस्य स्वापेन साम्य-वैषम्ये। द्वारं चैतन्मरणस्य; यदास्य सावशेषं कर्म भवति, तदा वाङ्मनसे प्रत्यागच्छतः; यदा तु निरवशेषं कर्म भवति, तदा प्राणो- 15

प्रकटार्थविवरणम्

आक्षिपति — कथं पुनरर्धसंपत्तिरिति ॥ कानुपपत्तिरित्यत आह—यावतेति ॥ यत्सुप्तं प्रति सत्संपन्नत्वं श्रुत्योक्तं तदुपाध्युपरमाभिप्राये-णैव; स चोपाध्युपरमो मुग्धस्यापि समान इति कृत्स्नसंपत्तिरेव वक्त-व्येति भावः। ननु सुकृतदुष्कृतसंबन्धस्य यावत्संसारभावित्वात् सुकृत-दुष्कृते न तरतो न संस्पृशत इत्यसङ्गतमित्याशङ्क्याह — जीवे हीति ॥ सुकृतदुष्कृतकार्याभावादभावोपचार इति भावः। अर्धशब्दो नार्धब्रह्म-संपत्त्यभिप्रायेण, किं तु सुषुप्तिवैलक्षण्याभिप्रायेणेत्याह — न ब्रूम इत्या-दिना ॥ इतोऽपि सुषुप्तिवैलक्षण्यमित्याह —द्वारं चैतदिति ॥ यथाप्रसिद्ध-

१. TM. सत्संपन्नत्वं

भाष्यम्

प्राणावपगच्छतः। तस्मादर्धसंपत्तिं ब्रह्मविद इच्छन्ति । य[१]दुक्तम्—न पञ्चमी काचिदवस्था प्रसिद्धास्तीति, नैष दोषः; कादाचित्कीयमवस्थेति न प्रसिद्धा स्यात् । प्रसिद्धा चैषा लोकायुर्वेदयोः। अर्धसंप-
5 त्त्यभ्युपगमाच्च न पञ्चमी गण्यत इत्यनवद्यम् ॥

[ उभयलिङ्गाधिकरणम् ]

## न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ ३-२-११ ॥

येन ब्रह्मणा सुषुप्त्यादिषु जीव उपाध्युपशमात्संपद्यते, तस्येदानीं
10 स्वरूपं श्रुतिवशेन निर्धार्यते । सन्त्युभयलिङ्गाः श्रुतयो ब्रह्मविषयाः—"सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः" इत्येवमाद्याः सविशेषलिङ्गाः;

प्रकटार्थविवरणम्

त्वम्, तत्र, भेदाभावात्, किं तु सदातनत्वाभावादित्याह—यदुक्तमित्यादिना ॥ इदानीमप्रसिद्धिरपि नास्तीत्याह — प्रसिद्धा चैषेति ॥ आयुर्वेदः
15 वैद्यशास्त्रम् । ननु तत्रापि चतस्रोऽवस्था मर्त्यानां गणिता इत्याशङ्क्याह—अर्धेति ॥ अर्धसुषुप्तिसाल्लक्षण्याभ्युपगमात् तत्रान्तर्भावाभिप्रायेण पृथक् [न पृथक्] गणनमित्यर्थः ॥

न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥

एवं तावत्त्वम्प्राद्यवस्थोपन्यासेन तद्व्यतिरिक्तं स्वप्रकाशं ब्रह्मात्मकं सदैक-
20 रूपं त्वमर्थमुद्देश्यं परिशोध्येदानीं विधेयं तत्पदार्थं परिशोधयितुमुपक्रमते भगवान् सूत्रकार इति तात्पर्यमाह—येन ब्रह्मणेति ॥ संशयबीजमाह—सन्त्युभयलिङ्गा इति ॥ उभयलिङ्गाः उभयरूपाः; उभयोरपि प्रामाण्यात्तुभय-

१. T¹ add च

### भाष्यम्

"अस्थूलमनण्वह्रस्वमदीर्घम्" इत्येवमाद्याश्च निर्विशेषलिङ्गाः । किमासु श्रुतिषूभयलिङ्गं ब्रह्म प्रतिपत्तव्यम् उतान्यतरलिङ्गम्; यदाप्यन्यतरलिङ्गम्, तदापि सविशेषम्, उत निर्विशेषम्—इति मीमांस्यते । तत्र उभयलिङ्गश्रुत्यनुग्रहादुभयलिङ्गमेव ब्रह्मेत्येवं प्राप्ते, ब्रूमः—न तावत्स्वत एव परस्य ब्रह्मण उभयलिङ्गत्वमुपपद्यते; न हि एकं वस्तु स्वत एव रूपादिविशेषोपेतं तद्विपरीतं च इत्यवधारयितुं शक्यम्, विरोधात् । अस्तु तर्हि स्थानतः, पृथिव्याद्युपाधियोगादिति; तदपि नोपपद्यते—न हि उपाधियोगादप्यन्यादृशस्य वस्तुनोऽन्यादृशः स्वभावः संभवति; न हि स्वच्छः सन् स्फटिकः अलक्तकाद्युपाधियोगादस्वच्छो भवति, भ्रममात्रत्वादस्वच्छताभिनिवेशस्य; उपाधीनां च अविद्याप्रत्युपस्थापितत्वात् । अतश्च अन्यतरलिङ्गपरिग्रहेऽपि समस्तविशेषरहितं निर्विकल्पकमेव ब्रह्म प्रतिपत्तव्यम्, न तद्विपरीतम्; सर्वत्र हि ब्रह्मस्वरूपप्रतिपादनपरेषु वाक्येषु "अशब्दमस्पर्शमरूपमव्ययम्" इत्येवमादिषु अपास्तसमस्तविशेषमेव ब्रह्म उपदिश्यते ॥

### प्रकटार्थविवरणम्

रूपं ब्रह्मेति [1]पूर्वपक्षयति—तत्रेति ॥ किं स्वाभाविकमुभयरूपमुच्यते, किं वा परोपाधिकमिति विकल्प्य आद्यं दूषयति—न तावदिति ॥ रूपाभेदो ह्येकत्वव्यवस्थापकः; अत एकमनेकरूपं चेति विप्रतिषिद्धमिति भावः । द्वितीयमनूद्य दूषयति—अस्तु तर्हीति ॥ ननु उभयरूपता तत्त्वतो न घटते चेन्माघटिष्ट तर्हि; सविशेषत्वमेवास्त्वित्याशङ्क्याह — [2]अतश्चान्यतरेति ॥ यतः सर्वो विशेषोऽविद्याप्रत्युपस्थापित एव अतश्चेति योजना । इतोऽपि निर्विशेषमेव ब्रह्म तत्पदलक्ष्यमित्याह—सर्वत्र हीति ॥

1. TM. पूर्वे क्षयति          2. T and T[1]. अन्यतरेति

भाष्यम्

# न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ ३·२-१२ ॥

अथापि स्यात्—यदुक्तम्, निर्विकल्पमेकलिङ्गमेव ब्रह्म, नास्य स्वतः स्थानतो वोभयलिङ्गत्वमस्तीति, तन्नोपपद्यते ; कस्मात् ? भेदात् ;
5 भिन्ना हि प्रतिविद्यं ब्रह्मण आकारा उपदिश्यन्ते, चतुष्पात् ब्रह्म, षोडशकलं ब्रह्म, वामनीत्वादिलक्षणं ब्रह्म, त्रैलोक्यशरीरवैश्वानरशब्दोदितं ब्रह्म, इत्येवंजातीयकाः ; तस्मात् सविशेषत्वमपि ब्रह्मणोऽभ्युपगन्तव्यम् । ननु उक्तं नोभयलिङ्गत्वं ब्रह्मणः संभवतीति ; अयमप्यविरोधः ; उपाधिकृतत्वादाकारभेदस्य ; अन्यथा हि निर्विषयमेव भेदशास्त्रं प्रस-
10 ज्येत—इति चेत्, नेति ब्रूमः ; कस्मात् ? प्रत्येकमतद्वचनात् ; प्रत्युपाधिभेदं ह्यभेदमेव ब्रह्मणः श्रावयति शास्त्रम्—" यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मा " इत्यादि । अतश्च न भिन्नाकारयोगो ब्रह्मणः शास्त्रीय इति शक्यते वक्तुम्, भेदस्य उपासनार्थत्वात्, अभेदे
15 तात्पर्यात् ॥

प्रकटार्थविवरणम्

## न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥

सूत्रस्य पूर्वपक्षभागं व्याचष्टे—अथापि स्यादिति ॥ यथोक्तं विरोधादिति तदनूद्य दूषयति —ननूक्तमित्यादिना ॥ रूपभेदप्रतिपादकशास्त्रस्या-
20 प्रामाण्यपरिहाराय औपाधिको रूपभेदो वक्तव्य इत्यर्थः । किमुपाधिगत एव रूपभेदो ब्रह्मण्युपचर्यते, किंवोपाधिसन्निधानात् तत्त्वत एव ब्रह्मणोऽपि भेदो जायत इति ? प्रथमे नोभयरूपतासिद्धिः ; द्वितीये श्रुत्यन्तरविरोध इत्याह—नेति ब्रूम इत्यादिना ॥

१. TM. तत आयं
२. T and T¹. प्रामाण्य
३. T and T¹. मुग्धादिको
४. A add अपि

भाष्यम्

## अपि चैवमेके ॥ ३-२-१३ ॥

अपि चैवं भेददर्शननिन्दापूर्वकम् अभेददर्शनमेव एके शाखिनः समामनन्ति—

"मनसैवेदमाप्तव्यं नेह नानास्ति किंचन । 5
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥" इति ;

तथान्येऽपि "भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्म एतत्" इति समस्तस्य भोग्यभोक्तृनियन्तृलक्षणस्य प्रपञ्चस्य ब्रह्मैकस्वभावतामधीयते ॥

कथं पुनः आकारवदुपदेशिनीषु अनाकारोपदेशिनीषु च ब्रह्म- 10 विषयासु श्रुतिषु सतीषु, अनाकारमेव ब्रह्म अवधार्यते न पुनर्विपरीतम् इति अत उत्तरं पठति—

## अरूपवदेव हि तत्प्रधानत्वात् ॥ ३-२-१४ ॥

रूपाद्याकाररहितमेव हि ब्रह्म अवधारयितव्यम्, न रूपादिमत् ; कस्मात्? तत्प्रधानत्वात् ; "अस्थूलमनण्वह्रस्वमदीर्घम्" "अशब्दम- 15 स्पर्शमरूपमव्ययम्" "आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा

प्रकटार्थविवरणम्

अपि चैवमेके ॥

भेददर्शननिन्दापूर्वकमभेदोपदेशादपि न तत्त्वभेदः शास्त्रीय इत्याह— अपि चैवमिति ॥ भोक्ता जीवो भोग्यं रूपादिविषयजातं प्रेरितारं ईश्वरं च 20 मत्वा विचार्य तत्सर्वं त्रिविधं मे मम प्रोक्तं ब्रह्मैवेति जानीयादित्यर्थः ॥

उत्तरसूत्रशङ्कामाह — कथं पुनरिति ॥ तत्परातत्परयोः विरोधे तत्परं बलवदिति न्यायः ॥

अरूपवदेव हि तत्प्रधानत्वात् ॥

विनिगमनकारणमाह — अरूपवदेव हीति ॥ 25

भाष्यम्

तद्ब्रह्म" "दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः" "तदेतद्ब्रह्मा-
पूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूः" इत्येवमादीनि
वाक्यानि निष्प्रपञ्चब्रह्मात्मतत्त्वप्रधानानि, न अर्थान्तरप्रधानानि—
5 इत्येतत्प्रतिष्ठापितम् "तत्तु समन्वयात्" इत्यत्र; तस्मादेवंजातीयकेषु
वाक्येषु यथाश्रुतं निराकारमेव ब्रह्म अवधारयितव्यम्। इतराणि तु
आकारवद्ब्रह्मविषयाणि वाक्यानि न तत्प्रधानानि; उपासनाविधिप्रधा-
नानि हि तानि; तेष्वसति विरोधे यथाश्रुतमाश्रयितव्यम्; सति तु
विरोधे तत्प्रधानानि अतत्प्रधानेभ्यो बलीयांसि भवन्ति—इत्येष विनि-
10 गमनायां हेतुः, येन उभयीष्वपि श्रुतिषु सतीषु अनाकारमेव ब्रह्म अव-
धार्यते, न पुनर्विपरीतमिति ॥

का तर्ह्याकारवद्विषयाणां श्रुतीनां गतिः इत्यत आह—

## प्रकाशवच्चावैयर्थ्यात् ॥ ३-२-१५ ॥

यथा प्रकाशः सौरश्चान्द्रमसो वा वियद्व्याप्य अवतिष्ठमानोऽङ्गुल्या-
15 द्युपाधिसंबन्धात् तेषु ऋजुवक्रादिभावं प्रतिपद्यमानेषु तद्भावमिव प्रति-
पद्यते, एवं ब्रह्मापि पृथिव्याद्युपाधिसंबन्धात् तदाकारतामिव प्रति-
पद्यते; तदालम्बनो ब्रह्मण आकारविशेषोपदेश उपासनार्थो न विरु-
ध्यते; एवम् अवैयर्थ्यमाकारवद्ब्रह्मविषयाणामपि वाक्यानां भवि-
ष्यति; न हि वेदवाक्यानां कस्यचिदर्थवत्त्वं कस्यचिदनर्थवत्त्वमिति
20 युक्तं प्रतिपत्तुम्, प्रमाणत्वाविशेषात्। नन्वेवमपि यत्पुरस्तात्प्रतिज्ञातम्—
नोपाधियोगादप्युभयलिङ्गत्वं ब्रह्मणोऽस्तीति, तद्विरुध्यते; नेति ब्रूमः—
उपाधिनिमित्तस्य वस्तुधर्मत्वानुपपत्तेः; उपाधीनां च अविद्याप्रत्युपस्था-

प्रकटार्थविवरणम्

प्रकाशवच्चावैयर्थ्यात् ॥

25 अनिर्वाच्यप्रपञ्चाकारालम्बना भेदश्रुतय इति गतिमाह — प्रकाशव-
च्चेति ॥

भाष्यम्

पितत्वात् । सत्यामेव च नैसर्गिक्यामविद्यायां लोकवेदव्यवहारावतार इति तत्र तत्र अवोचाम ॥

## आह च तन्मात्रम् ॥ ३-२-१६ ॥

आह च श्रुतिश्चैतन्यमात्रं विलक्षणरूपान्तररहितं निर्विशेषं ब्रह्म— 5
"स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव" इति । एतदुक्तं भवति—नास्यात्मनोऽन्तर्बहिर्वा चैतन्यादन्यद्रूपमस्ति, चैतन्यमेव तु निरन्तरमस्य स्वरूपम्—यथा सैन्धवघनस्यान्तर्बहिश्च लवणरस एव निरन्तरो भवति न रसान्तरम्, तथैवेति ॥ 10

## दर्शयति चाथो अपि स्मर्यते ॥ ३-२-१७ ॥

दर्शयति च श्रुतिः पररूपप्रतिषेधेनैव ब्रह्म—निर्विशेषत्वात्—
"अथात आदेशो नेति नेति" इति, "अन्यदेव तद्विदितादथो अविदितादधि" "यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह ।" इत्येवमाद्या । बाष्कलिना च बाध्वः पृष्टः सन् अवचनेनैव ब्रह्म प्रोवाच इति श्रूयते— 15
"स होवाचाधीहि भो इति स तूष्णीं बभूव तं ह द्वितीये वा तृतीये वा वचन उवाच ब्रूमः खलु त्वं तु न विजानासि । उपशान्तोऽयमात्मा" इति । तथा स्मृतिष्वपि परप्रतिषेधेनैवोपदिश्यते—

प्रकटार्थविवरणम्

आह च तन्मात्रम् ॥ 20

इतश्च मिथ्याभेदालम्बना एव भेदश्रुतयः; स्वतस्तु निर्विशेषं ब्रह्मेत्याह—आह च तन्मात्रमिति ॥

दर्शयति चाथो अपि स्मर्यते ॥

किञ्च श्रुतिस्मृत्योः परप्रतिषेधेन ब्रह्मोपदेशादपि निर्विशेषं ब्रह्मेत्याह—दर्शयति चेति ॥ आदिमत् [न आदिमत्] अनादिमत् । भूतत्रयवत्प्रत्यक्ष- 25
सद्बुद्धिगोचरत्वाभावान्न सत्, नापि तदसदुच्यते नास्ति बुद्धिगोचरत्वाभावादित्यर्थः ॥

भाष्यम्

"ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते ।
अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ॥"

इत्येवमाद्यासु । तथा विश्वरूपधरो नारायणो नारदमुवाचेति स्मर्यते—

5 "माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद ।
सर्वभूतगुणैर्युक्तं नैवं मां ज्ञातुमर्हसि ॥" इति ॥

## अत एव चोपमा सूर्यकादिवत् ॥ ३-२-१८ ॥

यत एव च अयमात्मा चैतन्यरूपो निर्विशेषो वाङ्मनसातीतः परप्रतिषेधोपदेश्यः, अत एव च अस्योपाधिनिमित्तामपारमार्थिकीं विशेष-
10 वत्तामभिप्रेत्य जलसूर्यकादिवदित्युपमोपादीयते मोक्षशास्त्रेषु—

"यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् ।
उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा ॥" इति ।

"एक एव हि भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥"

15 इत्येवमादिषु ॥

अत्र प्रत्यवस्थीयते—

## अम्बुवदग्रहणात्तु न तथात्वम् ॥ ३-२-१९ ॥

न जलसूर्यकादितुल्यत्वमिहोपपद्यते, तद्वदग्रहणात्; सूर्यादिभ्यो हि मूर्तेभ्यः पृथग्भूतं विप्रकृष्टदेशं मूर्तं जलं गृह्यते; तत्र युक्तः सूर्यादि-

20 प्रकटार्थविवरणम्

अत एव चोपमा सूर्यकादिवत् ॥

किंच जलसूर्यकोपमोपादानादपि निर्विशेषतैव स्वाभाविकी; ईश्वरत्वादिविशेषवत्ता तु उपाधिसम्बन्धेनेत्याह—अत एव चोपमेति ॥

१. A. निबन्धने

भाष्यम्

प्रतिबिम्बोदयः, न तु आत्मा मूर्तः ; न चास्मात्पृथग्भूता विप्रकृष्टदेशाश्चोपाधयः, सर्वगतत्वात् सर्वानन्यत्वाच्च । तस्मादयुक्तोऽयं दृष्टान्त इति ॥

अत्र प्रतिविधीयते[1]—

## वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॥ ३-२-२० ॥

युक्त एव त्वयं दृष्टान्तः, विवक्षितांशसंभवात् ; न हि दृष्टान्तदार्ष्टान्तिकयोः क्वचित् किंचित् विवक्षितमंशं मुक्त्वा सर्वसारूप्यं केनचिद्दर्शयितुं शक्यते ; सर्वसारूप्ये हि दृष्टान्तदार्ष्टान्तिकभावोच्छेद एव स्यात् ; न चेदं स्वमनीषया जलसूर्यकादिदृष्टान्तप्रणयनम् ; शास्त्रप्रणीतस्य तु अस्य प्रयोजनमात्रमुपन्यस्यते । किं पुनरत्र विवक्षितं सारूप्यमिति, तदुच्यते—वृद्धिह्रासभाक्त्वमिति । जलगतं हि सूर्यप्रतिबिम्बं जलवृद्धौ वर्धते, जलह्रासे ह्रसति, जलचलने चलति, जलभेदे

प्रकटार्थविवरणम्

अम्बुवदग्रहणात्तु न तथात्वम् ॥

वैषम्याभिधानेन पूर्ववादिना प्रत्यवस्थानं क्रियत इत्याह—अत्र प्रत्यवस्थीयत इति ॥

उपाध्यन्तर्भूतत्वेन तदनुप्रविष्टतया तद्गतधर्मभागित्वस्य विवक्षितांशस्य संभवान्न वैषम्यमात्रेण प्रतिषेधो युक्त इत्याशङ्क्याह[इत्याह] — अत्र प्रतिविधीयत इति ॥

वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॥

ब्रह्म न प्रतिबिम्बभावं गन्तुमर्हति, अमूर्तत्वात्, गन्धवदिति प्रयोगे तावदप्रयोजकत्वमेकं दूषणम् ; रूपे चानेकान्तः, रूपवतः सूर्यादेः प्रतिबिम्बभावे रूपस्यापि प्रतिबिम्बभावस्यावर्जनीयत्वात् । विच्छिन्नदेशस्थोपाधिविधुरत्वात् इत्यस्याकाशे व्यभिचारः स्फुट एवेति नोद्भावितः ॥

१. T. प्रविविधीयते

भाष्यम्

भिद्यते—इत्येवं जलधर्मानुयायि भवति, न तु परमार्थतः सूर्यस्य तथात्वमस्ति ; एवं परमार्थतोऽविकृतमेकरूपमपि सत् ब्रह्म देहाद्युपाध्यन्तर्भावात् भजत इवोपाधिधर्मान्वृद्धिह्रासदीन् । एवमुभयोर्दृष्टान्त-
5 दार्ष्टान्तिकयोः सामञ्जस्यादविरोधः ॥

# दर्शनाच्च ॥ ३-२-२१ ॥

दर्शयति च श्रुतिः परस्यैव ब्रह्मणो देहादिषूपाधिष्वन्तरनुप्रवेशम्—
"पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः ।
पुरः स पक्षी भूत्वा पुरः पुरुष आविशत् ॥" इति ;
10 "अनेन जीवेनात्मनानुप्रविश्य" इति च । तस्माद्युक्तमेतत्—"अत एव चोपमा सूर्यकादिवत्" इति । तस्मात् निर्विकल्पकैकलिङ्गमेव ब्रह्म, न उभयलिङ्गं विपरीतलिङ्गं वा इति सिद्धम् ॥

अत्र केचित् द्वे अधिकरणे कल्पयन्ति—प्रथमं तावत् किं प्रत्यस्तमिताशेषप्रपञ्चमेकाकारं ब्रह्म, उत प्रपञ्चवदनेकाकारोपेतमिति ; द्वितीयं

15 प्रकटार्थविवरणम्

दर्शनाच्च ॥

इदानीमागमविरोधमाह—दर्शनाच्चेति ॥ द्विपदः मनुष्याः । पुरः पुराणि चक्रे । पुरः पूर्वं स ईश्वरः पक्षी भूत्वा जीवरूपेण पुरः प्रविष्ट इत्यर्थः । येस्मा त्प्रतिबिम्बपक्षोऽयं श्रुतिमूलः तस्मादित्युपसंहारः । मूलविचारं निगम-
20 यति तस्मादिति ॥

एवं तावत्स्वाभिप्रायेणाधिकरणं व्याख्याय एकदेशिव्याख्यानमुद्भावयति—अत्र केचिदिति ॥ "न स्थानतोऽपि" इत्येतद्गतं विचारमाह—प्रथमं तावदिति ॥ द्वितीयं त्वधिकरणम् "प्रकाशवच्च" इति । न केवलं सरूपं ब्रह्म, किं त्व[किं तु] चैतन्यप्रकाशवच्च उभयश्रुत्यर्थवैलक्षण्यादिति पूर्वः पक्षः [illegible]

१. T and T¹. तस्मात्

भाष्यम्

तु प्रत्यस्तमितप्रपञ्चत्वे किं सल्लक्षणं ब्रह्म, उत बोधलक्षणम्, उत उभयलक्षणमिति । अत्र वयं वदामः—सर्वथाप्यानर्थक्यमधिकरणान्तरारम्भस्येति; यदि तावदनेकलिङ्गत्वं परस्य ब्रह्मणो निराकर्तव्यमित्ययं प्रयासः, तत्पूर्वेणैव "न स्थानतोऽपि" इत्यनेनाधिकरणेन निराकृतमिति उत्तरमधिकरणम् "प्रकाशवच्च" इत्येतद्व्यर्थमेव भवेत् । न च सल्लक्षणमेव ब्रह्म न बोधलक्षणम्—इति शक्यं वक्तुम्, "विज्ञानघन एव" इत्यादिश्रुतिवैयर्थ्यप्रसङ्गात्; कथं वा निरस्तचैतन्यं ब्रह्म चेतनस्य जीवस्यात्मत्वेनोपदिश्येत? नापि बोधलक्षणमेव ब्रह्म न सल्लक्षणम्—इति शक्यं वक्तुम्, "अस्तीत्येवोपलब्धव्यः" इत्यादिश्रुतिवैयर्थ्यप्रसङ्गात्; कथं वा निरस्तसत्ताको बोधोऽभ्युपगम्येत? नाप्युभयलक्षणमेव ब्रह्म—इति शक्यं वक्तुम्, पूर्वाभ्युपगमविरोधप्रसङ्गात्; सत्ताव्यावृत्तेन च बोधेन बोधव्यावृत्तया च सत्तया उपेतं ब्रह्म प्रतिजानानस्य तदेव पूर्वाधिकरणप्रतिषिद्धं सप्रपञ्चत्वं प्रसज्येत । श्रुतत्वाददोष इति चेत्, न, एकस्यानेकस्वभावत्वानुपपत्तेः ।

प्रकटार्थविवरणम्

च तन्मात्रम्" इति सिद्धान्तः । सन्दिग्धं सप्रयोजनं च विचार्यं भवति । तत्राधिकरणान्तरारम्भे किंप्रयोजनम्? न किंचिदस्ति । सन्देहो वा विद्यत इति वक्तव्यम् । सर्वथापि नारम्भः संभवतीत्युक्तम् । तत्र प्रथमं प्रयोजनाभावमाह—यदि तावदिति ॥ एकैकपक्षस्य सर्वथा युक्तिशून्यत्वात्सन्देहोऽपि नास्तीत्याह—न च सल्लक्षणमेवेत्यादिना ॥ सत्ताविशिष्टो बोधो बोधविशिष्टा वा सत्ता ब्रह्मलक्षणमिति पूर्वपक्षोऽपि न युक्त इत्याह—सत्ताव्यावृत्तेनेति ॥ उभयश्रुत्यनुरोधात्पूर्वपक्षो घटत इत्याह— श्रुतत्वादिति[1] ॥ विरुद्धमर्थं श्रुतिरपि न प्रतिपादयति; अतो न श्रुत्यवष्टम्भेनोभयात्मता शङ्कितुं शक्यत इत्याह—नैकस्येति ॥ विरोधपरिहारायाखण्डवाक्यार्थं शङ्कते —

१. A. श्रुतत्वाचेति

भाष्यम्

अथ सत्तैव बोधः, बोध एव च सत्ता, नानयोः परस्परव्यावृत्तिरस्तीति यद्युच्येत, तथापि किं सल्लक्षणं ब्रह्म, उत बोधलक्षणम्, उतोभयलक्षणम्—इत्ययं विकल्पो निरालम्बन एव स्यात् । सूत्राणि त्वेकाधिकरणत्वेनैवास्माभिर्नीतानि । अपि च ब्रह्मविषयासु श्रुतिषु आकारवदनाकारप्रतिपादनेन विप्रतिपन्नासु अनाकारे ब्रह्मणि परीगृहीते, अवश्यं वक्तव्या इतरासां श्रुतीनां गतिः; तादर्थ्येन "प्रकाशवच्च" इत्यादीनि सूत्राण्यर्थवन्तराणि संपद्यन्ते ॥

प्रकटार्थविवरणम्

अथ सत्तैवेति ॥ सद्बोधशब्दौ शून्यत्वजडत्वव्युदासेनैकामेव व्यक्तिं लक्षयत इति नानयोर्विशेषणविशेष्यभावोऽस्ति, भेदाधिष्ठानत्वात् तस्येति भावः । न चैवं पर्यायतापत्तिः, निमित्तभेदात्; प्रवृत्तिनिमित्तभेदमन्तरेणैकार्थवृत्तिता हि पर्यायता; न च वैयर्थ्यं पदान्तरस्य, व्यावर्त्यभेदात्; यथा केवल[लं] भूतलमिति पदद्वयं घटादिसंसर्गव्युदासेनैकस्यां व्यक्तौ पर्यवस्यति । तथा च प्रयोगः — सदादिपदमखण्डार्थनिष्ठम्, निषिद्धभेदवस्तुनि वर्तमानत्वात्, केवलादिशब्दवत् । विमतं वाक्यं नाखण्डनिष्ठम्, वाक्यत्वात्, संप्रतिपन्नवदिति न बाधकम्, 'प्रकृष्टप्रकाशश्चन्द्रः' इत्यादौ व्यभिचारात्; न चास्य संज्ञासंज्ञिपरत्वम्, प्रश्नानु[श्नानु]रूपत्वप्रसङ्गात् । गुणगुणिभावेन भिन्नं वस्त्विति हेत्वसिद्धम् [हेतुरसिद्धः], "विज्ञानघन एव" इत्यादिश्रुतिविरोधात् । यच्च न निर्गुणं वस्त्विति तत् गुणेष्वेव व्यभिचरति; तस्मात्सदादिशब्दैः तत्तद्‌व्यनिष्टव्यपोहेनैकस्या एव व्यक्तेर्लक्ष्यमाणत्वान्नास्ति विशेषणविशेष्यभावो लक्ष्ये वस्तुनीति । एवंभूतं चेद्वस्त्वभिप्रेतम्, तर्हि व्यर्थो विकल्पप्रयासस्तवेत्याह— तथापि किं सल्लक्षणमिति ॥ अथैकाधिकरणपक्षे सूत्राणि न सङ्गच्छन्त इति, तत्राह—सूत्राणि त्विति ॥ इदानीं स्वपक्ष एव सूत्रसामञ्जस्यमाह—अपि चेति ॥

१. T. न चैवं पर्यायता प्रवृत्तिनिमित्त  T¹. न चैवमपर्यायता प्रवृत्तिनिर्मित्त

२. T and T¹. तथा

३. A omits सूत्राणि.....तत्राह

## भाष्यम्

यदप्याहुः—आकारवादिन्योऽपि श्रुतयः प्रपञ्चप्रविलयमुखेन अनाकारप्रतिपत्त्यर्था एव, न पृथगर्था इति, तदपि न समीचीनमिव लक्ष्यते; कथम्? ये हि परविद्याधिकारे केचित्प्रपञ्चा उच्यन्ते यथा—"युक्ता ह्यस्य हरयः शता दशेति, अयं वै हरयोऽयं वै दश च सहस्राणि बहूनि चानन्तानि च" इत्येवमादयः—ते भवन्तु प्रविलयार्थाः, "तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्" इत्युपसंहारात्। ये पुनरुपासनाधिकारे प्रपञ्चा उच्यन्ते, यथा—"मनोमयः प्राणशरीरो भारूपः" इत्येवमादयः—न तेषां प्रविलयार्थत्वं न्याय्यम्; "स क्रतुं कुर्वीत" इत्येवंजातीयकेन प्रकृतेनैवोपासनविधिना तेषां संबन्धात्। 10

## प्रकटार्थविवरणम्

इदानीं भेदप्रपञ्चविलयपक्षमुद्भावयति—यदप्याहुरिति ॥ "सत्यकामः सत्यसङ्कल्पः" इत्याद्याः श्रुतयोऽपि असत्यकामत्वादिप्रविलयद्वारेण निषेध्यसमर्पणेन वा निषेधकवाक्येनैकवाक्यतया निराकारब्रह्मपरा एव, नासां पृथगर्थो वक्तव्य इत्यर्थः। दूषणं संभावयन्नाह—तदपि नेति ॥ सत्यकामत्वादीनां प्रविलयार्थत्वानुपलम्भादित्यर्थः। ननु त्वयापि केचित् प्रपञ्चाः प्रविलयार्था इष्यन्ते; तथा सत्यकामादयोऽपि भविष्यन्ति; कथं समीचीनं न दृश्यत इत्याह—कथमिति ॥ निर्गुणविद्याप्रकरणस्थानां प्रविलयार्थत्वेऽप्युपासनाप्रकरणपठितानां नास्ति विलापार्थत्वमुपासनार्थत्वादेवेत्याह—ये हीत्यादिना ॥ युक्ताः संयुक्ताः[2] रथ इव वाजिनः विषयप्रकाशनायात्मनो हरयः 20 हरणादिन्द्रियाणि दशप्राणिभेदापेक्षया च शता शतानि। तस्मादिन्द्रियाणां विषयप्रकाशनार्थमेव नियुक्तत्वादात्मा स्वतः प्रज्ञानघनरूपेण न प्रकाशते, किं तु बहुरूप एव गृह्यत इत्यर्थः। तर्ह्ययमन्यः; अन्ये च हरय इत्याशङ्क्याह—"अयं वै हरयः" एतद्व्यतिरेकेण पृथग्वस्तुभूता न भवन्तीत्यर्थः। प्रतिप्राणि दशप्राणिभेदापेक्षया च बहून्यनन्तानि सहस्राणि अयमेवेत्यर्थः। किंच "मनो- 25

१. T and T¹. तथा

२. T omits संयुक्ताः

३. T omits हरयः

भाष्यम्

श्रुत्या च एवंजातीयकानां गुणानामुपासनार्थत्वेऽवकल्पमाने न लक्षणया प्रविलयार्थत्वमवकल्पते । सर्वेषां च साधारणे प्रविलयार्थत्वे सति "अरूपवदेव हि तत्प्रधानत्वात्" इति विनिगमनकारणवचनमनवकाशं स्यात् । फलमप्येषां यथोपदेशं क्वचिद्दुरितक्षयः, क्वचिदैश्वर्यप्राप्तिः, क्वचित्क्रममुक्तिरित्यवगम्यत एव—इत्यतः पार्थगर्थ्यमेव उपासनावाक्यानां ब्रह्मवाक्यानां च न्याय्यम्, न एकवाक्यत्वम् ॥

कथं च एषामेकवाक्यतोत्प्रेक्ष्यत इति वक्तव्यम्—एकनियोगप्रतीतेः प्रयाजदर्शपूर्णमासवाक्यवदिति चेत्, न; ब्रह्मवाक्येषु नियोगाभावात्—वस्तुमात्रपर्यवसायीनि हि ब्रह्मवाक्यानि, न नियो-

प्रकटार्थविवरणम्

मयः" इत्यादिवाक्यात् न साक्षात्प्रलयः [प्रविलयः] प्रतीयते, किं तु लक्षयितव्योऽसौ; न च श्रुतित्यागेन लक्षणाश्रयणं युक्तमित्याह—श्रुत्या चैवमिति ॥ किं च सर्वेषां प्रलयार्थत्वं [प्रविलयार्थत्वं] सूत्रविरुद्धं चेत्याह—सर्वेषां चेति ॥ नन्वध्ययनविध्युपात्तानामवश्यं पुरुषार्थपर्यवसायित्वं वक्तव्यम्; तत्सिद्धिश्च न प्रपञ्चविलयमन्तरेणेति सर्वस्य प्रविलयार्थत्वमेव आश्रीयत इत्याशङ्क्याह—फलमप्येषामिति ॥

एकवाक्यतायां कारणानुपलम्भादपि नैकवाक्यतेत्याह—कथं चैषामिति ॥ एकवाक्यतायां कारणं शङ्कते—एकनियोगेति ॥ यथैकस्वर्गकामिनियोगविषयत्वात् प्रयाजदर्शपूर्णमासवाक्ययोरेकवाक्यता, तथैकमुमुक्षु[1]नियोगविषयत्वात्सविशेषनिर्विशेषवाक्यानामेकवाक्यतेत्यर्थः । भवेदेवं यदि तत्त्वमस्यादिवाक्ये नियोगः स्यात्; न त्वस्ति; उपक्रमोपसंहारपर्यालोचनया सिद्धपरतायाः प्रतिपादितत्वादित्याशङ्क्याह[दित्याह]—न ब्रह्मवाक्येष्विति ॥ किं च नियोगस्य विषयनियोज्यावच्छिन्नत्वादिह च विषयानिरूपणाच्च

१. TM. एकं मुमुक्षुविनियोग A. एकं मुमुक्षुः नियोग

## भाष्यम्

गोपदेशीनि इत्येतद्विस्तरेण प्रतिष्ठापितम् "तत्तु समन्वयात्" इत्यत्र ।
किंविषयश्चात्र नियोगोऽभिप्रेयत इति वक्तव्यम्; पुरुषो हि नियुज्य-
मानः 'कुरु' इति स्वव्यापारे कस्मिंश्चिन्नियुज्यते । ननु द्वैतप्रपञ्चविलयो
नियोगविषयो भविष्यति—अप्रविलापिते हि द्वैतप्रपञ्चे ब्रह्मतत्त्वावबोधो 5
न भवति; अतो ब्रह्मतत्त्वावबोधप्रत्यनीकभूतो द्वैतप्रपञ्चः प्रविलाप्यः—
यथा स्वर्गकामस्य यागोऽनुष्ठातव्य उपदिश्यते, एवमपवर्गकामस्य प्रपञ्च-
प्रविलयः; यथा च तमसि व्यवस्थितं घटादि तत्त्वमवबुभुत्समानेन तत्प्र-
त्यनीकभूतं तमः प्रविलाप्यते, एवं ब्रह्मतत्त्वमवबुभुत्समानेन तत्प्रत्य-
नीकभूतः प्रपञ्चः प्रविलापयितव्यः—ब्रह्मस्वभावो हि प्रपञ्चः, न 10
प्रपञ्चस्वभावं ब्रह्म; तेन नामरूपप्रपञ्चप्रविलापनेन ब्रह्मतत्त्वावबोधो
भवति—इति । अत्र वयं पृच्छामः—कोऽयं प्रपञ्चप्रविलयो नाम?
किमग्नितापसंपर्कात् घृतकाठिन्यप्रविलय इव प्रपञ्चप्रविलयः कर्तव्यः,
आहोस्विदेकस्मिंश्चन्द्रे तिमिरकृतानेकचन्द्रप्रपञ्चवत् अविद्याकृतो ब्रह्मणि
नामरूपप्रपञ्चो विद्यया प्रविलापयितव्यः—इति । तत्र यदि तावद्विद्य- 15
मानोऽयं प्रपञ्चो देहादिलक्षण आध्यात्मिकः बाह्यश्च पृथिव्यादि-
लक्षणः प्रविलापयितव्य इत्युच्येत, स पुरुषमात्रेणाशक्यः प्रविलाप-

## प्रकटार्थविवरणम्

नियोगः संभवतीत्याह—किंविषयश्चात्रेति ॥ विषयं शङ्कते—ननु द्वैतेति ॥
नन्वपवर्गकामः प्रपञ्चं प्रविलापयेदिति नियोगो नोपपद्यते[1], ब्रह्मणः 20
प्रपञ्चात्मकतया तद्विलये विलयप्रसङ्गादित्याशङ्क्याह — ब्रह्मस्वभावो हि
प्रपञ्च इति ॥ यथा घटो मृदात्मकः, न मृद्घटात्मिकेति न घटलये लीयते, तथा
प्रपञ्चो ब्रह्मोपादानकत्वात् ब्रह्मात्मको न प्रपञ्चात्मकं ब्रह्मेति न प्रपञ्चलये
लीयत इत्यर्थः । विलयो नाम सत्यस्य स्वरूपोपमर्दः, किं वा मायामयस्य
तत्त्वांशप्रतिषेधेनाविद्यामयस्य विद्यया विनिवृत्तिरिति विकल्पयति — 25
अत्र वयं पृच्छाम इत्यादिना ॥ प्रथमं प्रत्याचष्टे—तत्र यदि तावदिति ॥

१. T and T¹. प्रपञ्चप्रविलापयोगो        २. TM. नोपलभ्यते

भाष्यम्

यितुमिति तत्प्रविलयोपदेशोऽशक्यविषय एव स्यात्; एकेन चादि-
मुक्तेन पृथिव्यादिप्रविलयः कृत इति इदानीं पृथिव्यादिशून्यं जगद्-
भविष्यत्। अथ अविद्याध्यस्तो ब्रह्मण्येकस्मिन् अयं प्रपञ्चो विद्यया
5 प्रविलाप्यत इति ब्रूयात्, ततो ब्रह्मैव अविद्याध्यस्तप्रपञ्चप्रत्याख्या-
नेन आवेदयितव्यम्—"एकमेवाद्वितीयं ब्रह्म" "तत्सत्यं स आत्मा
तत्त्वमसि" इति तस्मिन्नावेदिते, विद्या स्वयमेवोत्पद्यते; तया
चाविद्या बाध्यते, ततश्च अविद्याध्यस्तः सकलोऽयं नामरूपप्रपञ्चः स्वप्न-
प्रपञ्चवत् प्रविलीयते। अनावेदिते तु ब्रह्मणि 'ब्रह्मविज्ञानं कुरु प्रपञ्च-
10 प्रविलयं च' इति शतकृत्वोऽप्युक्ते, न ब्रह्मविज्ञानं प्रपञ्चप्राविलयो
वा जायेत। नन्वावेदिते ब्रह्मणि तद्विज्ञानविषयः प्रपञ्चविलयविषयो
वा नियोगः स्यात्; न, निष्प्रपञ्चब्रह्मात्मत्वावेदनेनैव उभयसिद्धेः—
रज्जुस्वरूपप्रकाशनेनैव हि तत्स्वरूपविज्ञानम् अविद्याध्यस्तसर्पादि-
प्रपञ्चप्रविलयश्च भवति; न च कृतमेव पुनः क्रियते॥

15 प्रकटार्थविवरणम्

आकाश[1]प्रसननियोगवदयं नियोगः प्रसज्येतेत्यर्थः। किंचैकमुक्तौ जगन्मु-
क्तिरप्यापद्यत इत्याह—एकेनादिमुक्तेनेति॥ द्वितीयमुन्नाययति—अथेति॥
तर्हि प्रपञ्चलये नियोगो व्यर्थ इत्याह—ततो ब्रह्मैवेति॥ जीवस्य स्वाभाविक-
निष्प्रपञ्चब्रह्मात्मत्वोपदेशेनैव मायामयस्यावस्तुत्वप्रतिपत्त्या तत्त्वांशप्रतिषेध-
20 लक्षणेऽपि लयः प्रमातृत्वप्रमुखस्य सर्वस्य[2] अविद्यामयस्याविद्यानिवृत्त्या
स्वरूपप्रध्वंस एव भविष्यतीति व्यर्थो नियोग इत्यर्थः। विपक्षे दोषमाह—
अनावेदिते त्विति॥ [3]ब्रह्मप्रतिपादनमन्तरेण ज्ञानकारणाभावात् ज्ञानं विलयो
वा न घटते चेत्तर्हि परोक्षतया प्रतिपन्ने ब्रह्मणि अपरोक्षज्ञाने प्रपञ्चविलये
वा नियोगोऽस्त्वित्याह—नन्वावेदित इति॥ निष्प्रपञ्चे ब्रह्मण्यात्मतया लक्ष्य-

१. A. आकाशग्राम
२. T. सर्वस्याविद्यानिवृत्त्या
३. A omits ब्रह्म

भाष्यम्

नियोज्योऽपि च प्रपञ्चावस्थायां योऽवगम्यते जीवो नाम, स प्रपञ्चपक्षस्यैव वा स्यात्, ब्रह्मपक्षस्यैव वा—प्रथमे विकल्पे निष्प्रपञ्च-ब्रह्मतत्त्वप्रतिपादनेन पृथिव्यादिवत् जीवस्यापि प्रविलापितत्वात् कस्य प्रपञ्चविलये नियोग उच्येत? कस्य वा नियोगनिष्ठतया मोक्षोऽ- 5 वाप्तव्य उच्येत? द्वितीयेऽपि ब्रह्मैवानियोज्यस्वभावं जीवस्य स्वरूपम्, जीवत्वं तु अविद्याकृतमेव—इति प्रतिपादिते ब्रह्मणि नियोज्याभावात् नियोगाभाव एव। द्रष्टव्यादिशब्दा अपि परविद्याधिकारपठिताः तत्त्वाभिमुखीकरणप्रधानाः, न तत्त्वावबोधविधिप्रधाना भवन्ति; लोकेऽपि—'इदं पश्य' 'इदमाकर्णय' इति चैवंजातीयकेषु निर्देशेषु 10 प्रणिधानमात्रं कुर्वित्युच्यते, न साक्षाज्ज्ञानमेव कुर्विति; ज्ञेयाभि-मुखस्यापि ज्ञानं कदाचिज्जायते, कदाचिन्न जायते; तस्मात् तं प्रति

प्रकटार्थविवरणम्

पदार्थाभिज्ञस्य शब्देनावेदिते सत्यपरोक्षज्ञानं सकार्याविद्याध्वंसश्च सिध्यति। न च सिद्धविषयो नियोगो भागी; यदापि दोषवशात् परोक्षज्ञानं तस्य 15 परमपुरुषार्थतया पारोक्ष्ये स्वयं प्रवृत्त इति व्यर्थो नियोग इति परिहारार्थः॥

एवं तावत् विषयाभावान्नियोगाभावमुक्त्वा अधुना नियोज्याभावात्तद-भावमाह—नियोज्योऽपि चेति॥ का तर्हि द्रष्टव्यादिशब्दानां गतिरित्या-शङ्क्याह—द्रष्टव्यादिशब्दा अपीति॥ ननु यस्माद्धातोः प्रत्ययोऽपि विधीयते, तस्यैव धात्वर्थस्य कर्तव्यता प्रत्ययात्[1] प्रतीयते लोके; कथं द्रष्टव्य इत्यस्य 20 दर्शनतात्पर्यकारणार्थता [दर्शनकारणार्थतात्पर्यकता] कल्प्यत इत्याशङ्क्याह—लोकेऽपीदं पश्येति॥ ननु तर्हि[2] आत्मदर्शनाभिमुख्यमेव प्राधान्येन विधीय-ताम्, किं ब्रह्मप्रदर्शनेनेत्याशङ्क्याह—ज्ञेयाभिमुखस्यापीति[3]॥ किं च नियोग-वादिनापि प्रमाणानुसारेणैव[4] ज्ञानं वक्तव्यम्, अन्यस्य सम्यग्ज्ञानत्वायोगात्।

१. A omits प्रत्ययात्...सारेणवै
२. TM. तन्थात्म
३. TM. मुख्यस्यापीति
४. A. प्रत्यय इति वक्तव्यम्

भाष्यम्

ज्ञानविषय एव दर्शयितव्यो ज्ञापयितुकामेन; तस्मिन्दर्शिते स्वयमेव यथाविषयं यथाप्रमाणं च ज्ञानमुत्पद्यते; न च प्रमाणान्तरेण अन्यथा प्रसिद्धेऽर्थे अन्यथाज्ञानं नियुक्तस्याप्युपपद्यते; यदि पुनर्नियुक्तोऽहमिति अन्यथा ज्ञानं कुर्यात्, न तु तज्ज्ञानम्, किं तर्हि? मानसी सा
5 क्रिया। स्वयमेव चेदन्यथोत्पद्येत, भ्रान्तिरेव स्यात्। ज्ञानं तु प्रमाणजन्यं यथाभूतविषयं च; न तन्नियोगशतेनापि कारयितुं शक्यते; न च प्रतिषेधशतेनापि वारयितुं शक्यते; न हि तत्पुरुषतन्त्रम्, वस्तुतन्त्रमेव हि तत्; अतोऽपि नियोगाभावः; किंचान्यत्—नियोगनिष्ठतयैव
10 पर्यवस्यत्याम्नाये, यदभ्युपगतमनियोज्यब्रह्मात्मत्वं जीवस्य, तत् अप्रमाणकमेव स्यात्; अथ शास्त्रमेव अनियोज्यब्रह्मात्मत्वमप्याचक्षीत, तदवबोधे च पुरुषं नियुञ्जीत, ततो ब्रह्मशास्त्रस्यैकस्य द्व्यर्थपरता विरूपार्थपरता च प्रसज्येयाताम्। नियोगपरतायां च, श्रुतहानिः अश्रुतकल्पना, कर्मफलवन्मोक्षस्यादृष्टफलत्वमनित्यत्वं च, इत्येवमादयो
15 दोषा न केनचित्परिहर्तुं शक्याः। तस्मादवगतिनिष्ठान्येव ब्रह्मवाक्यानि, न नियोगनिष्ठानि। अतश्च एकनियोगप्रतीतेरेकवाक्यतेत्ययुक्तम्॥

प्रकटार्थविवरणम्

एवं चेद्वेदाद्येव प्रमाणं शरणं जरीगृह्यतामित्याह—न च प्रमाणान्तरेणेति॥
20 प्रमाणहीनतया ब्रह्मासिद्धिप्रसङ्गादपि न नियोगनिष्ठतेत्याह—किंचान्यदिति॥ उक्तदोषपरिजिहीर्षया शङ्कते—अथ शास्त्रमेवेति॥ तर्ह्युभयतात्पर्याद्वाक्यभेद इत्याह—तत इति॥ शाब्दज्ञानविषयतया प्रधान[त्वगुण]त्वोपादेयत्वविधेयत्वानि ब्रह्मणः; तदुद्देशेन ज्ञानविधानाच्च गुण[त्वप्रधान]त्वोद्देश्यत्वानुवाद्यत्वानि तद्विरुद्धानि प्रसज्यन्त इति वाजपेयाधिकरणपूर्वपक्षोक्तन्यायेन
25 विरुद्धत्रिकद्वयापत्तिरापद्यत इत्याह—विरूपार्थपरता चेति॥ दूषणान्तरमाह—नियोगपरतायां चेति॥ उपसंहरति—तस्मादिति॥

१. T. अभावे    २. T, T[1] and TM. प्रमाणमन्तरेणेति

भाष्यम्

अभ्युपगम्यमानेऽपि च ब्रह्मवाक्येषु नियोगसद्भावे, तदेकत्वं निष्प्रपञ्चोपदेशेषु सप्रपञ्चोपदेशेषु च असिद्धम्; न हि शब्दान्तरादिभिः प्रमाणैर्नियोगभेदेऽवगम्यमाने, सर्वत्र एको नियोग इति शक्यमाश्रयितुम्; प्रयाजदर्शपूर्णमासवाक्येषु तु अधिकारांशेनाभेदात् युक्तमेकत्वम्; न त्विह सगुणनिर्गुणचोदनासु कश्चिदेकत्वकरोंऽशोऽस्ति; न हि भारूपत्वादयो गुणाः प्रपञ्चप्रविलयोपकारिणः; नापि प्रपञ्चप्रविलयो भारूपत्वादिगुणोपकारी, परस्परविरोधित्वात्; न हि कृत्स्नप्रपञ्चप्रविलापनं प्रपञ्चैकदेशापेक्षणं चैकस्मिन्धर्मिणि युक्तं समावेशयितुम् । तस्मादस्मदुक्त एव विभाग आकारवदनाकारोपदेशानां युक्ततर इति ॥

प्रकटार्थविवरणम्

इदानीं प्रौढवादेन नियोगमङ्गीकृत्यैकत्वं निषेधति—अभ्युपगम्यमानेऽपि[1] चेति ॥ तत्र हेतुमाह—न हीति ॥ भिन्नभावार्थविषयः शब्दः[2] शब्दान्तरम्, यथा यजतिजुहोतिर्ददातयः; तथेहापि वेद उपासीत इति[3] शब्दभेदः; तथा सगुणनिर्गुणभावेन रूपभेदः; तथा प्रकरणभेदः; तथा फलभेद इत्यादिभेदकप्रमाणैर्भेदे गम्यमाने कथमैक्यमित्यर्थः । प्रयाजदर्शपूर्णमासवाक्येषु तर्हि कथं नियोगैक्यमित्याशङ्क्याह—प्रयाजेति ॥ एकस्यैव स्वर्गकामिनः साङ्गप्रयोगाधिकार इत्येकत्वं युक्तमित्यर्थः । इहापि तर्हि मुमुक्षोः प्रपञ्चप्रविलयाधिकारात् सप्रपञ्चनिष्प्रपञ्चवाक्येषु नियोगैक्यं भविष्यतीत्याशङ्क्याह—न त्विहेति ॥ यस्मात्सप्रपञ्चनिष्प्रपञ्चश्रुत्योः विभिन्नार्थत्वान्न सर्वप्रपञ्चविलयार्थत्वं तस्मादनिर्वाच्यप्रपञ्चालम्बनाः सविशेषश्रुतयः स्वाभाविकनिष्प्रपञ्चतालम्बनाश्च निर्विशेषश्रुतय इति निगमयति—तस्मादिति ॥

१. T and T¹ omit अपि

२. T and T¹ omit शब्दः

३. A. ददाति च तथेहापि

भाष्यम्

[प्रकृतैतावत्त्वाधिकरणम्]

## प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ ३-२-२२ ॥

"द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च" इत्युपक्रम्य पञ्च महा-
5 भूतानि द्वैराश्येन प्रविभज्य, अमूर्तरसस्य च पुरुषशब्दोदितस्य माहा-
रजनादीनि रूपाणि दर्शयित्वा, पुनः पठ्यते—"अथात आदेशो
नेति नेति न ह्येतस्मादिति नेत्यन्यत्परमस्ति" इति । तत्र कोऽस्य
प्रतिषेधस्य विषय इति जिज्ञासामहे ; न ह्यत्र इदं तदिति विशेषितं
किंचित्प्रतिषेध्यमुपलभ्यते ; इतिशब्देन तु अत्र प्रतिषेध्यं किमपि
10 समर्प्यते, "नेति नेति" इति इतिपरत्वान्नञ्प्रयोगस्य ; इतिशब्दश्चायं
संनिहितालम्बनः एवंशब्दसमानवृत्तिः प्रयुज्यमानो दृश्यते—'इति ह

प्रकटार्थविवरणम्

प्रकृतैवावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥

पूर्वं निषेधश्रुत्यवष्टम्भेन निर्विशेषं ब्रह्म निरूपितम् । इदानीं तदेव निषेध-
15 वाक्यं विचारयितुं सोपक्रमं तावत्पठति—द्वे वावेति ॥ पृथिव्यप्तेजोलक्षणं
भूतत्रयं मूर्तं रूपं वाय्वाकाशाख्यं चामूर्तं रूपमिति विभज्येत्यर्थः । अमूर्तस्य भूतद्व-
यस्य रसः सारो हिरण्यगर्भः करणात्मा "य एष एतस्मिन्मण्डले पुरुषो य-
श्चायं दक्षिणेऽक्षन् पुरुषः" इति पुरुषशब्दोदितः । तस्य वासनामयानि रूपाणि
विचित्राणि "तद्यथा माहारजनं वासः" इत्यादिना दर्शितानि । महारजनं
20 हरिद्रा ; तया रक्तं वस्त्रं माहारजनम् ; "यथा पाण्डाविकं यथेन्द्रगोपः" इत्यादि-
निदर्शनैर्वासनानां वैचित्र्याद्विचित्राणि रूपाणि दर्शयित्वा पठ्यत इत्यर्थः ।
विशेषानुपलब्धेः संशयमाह—तत्र कोऽस्येत्यादिना ॥

१. T, T¹ and TM. कार्यं खं चामूर्तं
२. A. स्वरूपं
३. T, T¹ and TM. तद्द्वयस्य
४. A. शब्दोदितस्य
५. T and T¹ वास्त्वादिकं
६. A omits तत्र

भाष्यम्

स्मोपाध्यायः कथयति' इत्येवमादिषु; संनिहितं चात्र प्रकरणसामर्थ्याद्रूपद्वयं सप्रपञ्चं ब्रह्मणः, तच्च ब्रह्म, यस्य ते द्वे रूपे। तत्र नः संशय उपजायते—किमयं प्रतिषेधो रूपे रूपवच्च उभयमपि प्रतिषेधति, आहोस्विदेकतरम्; यदाप्येकतरम्, तदापि किं ब्रह्म प्रतिषेधति, रूपे परिशिनष्टि, आहोस्वित् रूपे प्रतिषेधति, ब्रह्म परिशिनष्टि, इति ॥ 5

तत्र प्रकृतत्वाविशेषादुभयमपि प्रतिषेधतीत्याशङ्कामहे—द्वौ चैतौ प्रतिषेधौ, द्विः नेतिशब्दप्रयोगात्; तयोरेकेन सप्रपञ्चं ब्रह्मणो रूपं प्रतिषिध्यते, अपरेण रूपवद्ब्रह्म—इति भवति मतिः। अथ वा ब्रह्मैव रूपवत् प्रतिषिध्यते; तद्धि वाङ्मनसातीतत्वादसंभाव्यमानसद्भावं प्रतिषेधार्हम्; न तु रूपप्रपञ्चः प्रत्यक्षादिगोचरत्वात् प्रतिषेधार्हः; अभ्यासस्त्वादरार्थः इत्येवं प्राप्ते ब्रूमः— 10

न तावदुभयप्रतिषेध उपपद्यते, शून्यवादप्रसङ्गात्—किंचिद्धि परमार्थमालम्ब्य अपरमार्थः प्रतिषिध्यते, यथा रज्ज्वादिषु सर्पादयः;

प्रकटार्थविवरणम् 15

पूर्वपक्षमाह—तत्र प्रकृतत्वेति ॥ प्रतिषेधस्तावत्प्रतिषेध्यमाकाङ्क्षते। प्रकृतपरामर्शकेन[1] चेतिशब्देन रूपे रूपवच्चोभयमपि परामृष्टं प्रतिषेध्यं समर्प्यत इति भावः। किंचैवं सति प्रतिषेधद्वयस्यापौनरुक्त्यमपि लभ्यत इत्याह—द्वौ चैताविति ॥ सप्रपञ्चमित्यध्यात्माधिदैवप्रपञ्चसहितम्। अरूपस्यापि[2] ब्रह्मणोऽविद्याध्यस्तं रूपद्वयं प्रतिषिध्यत इत्यर्थः। पूर्वपक्षान्तरमाह—अथ वेति ॥ 20

उत्सूत्रमेवाद्यपक्षे दोषमाह—न तावदुभयप्रतिषेध इत्यादिना॥ विशेषनिषेधे यदि शून्यवादः प्रसज्येत, अस्तु तर्हि; को दोष इत्याशङ्क्याह—किंचिद्धि परमार्थमिति ॥ लोकसिद्धपदार्थान्वययोग्यतानुसारेण हि वाक्यार्थो ग्राह्यः;

१. T, T¹ and A. केनेति　　२. A. सरूपस्य

## भाष्यम्

तत्र परिशिष्यमाणे कस्मिंश्चिद्भावे अवकल्पते; कृत्स्नप्रतिषेधे तु कोऽन्यो भावः परिशिष्येत? अपरिशिष्यमाणे चान्यस्मिन्, य इतरः प्रतिषेद्धुमारभ्यते प्रतिषेद्धुमशक्यत्वात् तस्यैव परमार्थत्वापत्तेः
5 प्रतिषेधानुपपत्तिः। नापि ब्रह्मप्रतिषेध उपपद्यते—"ब्रह्म ते ब्रवाणि" इत्याद्युपक्रमविरोधात्। "असन्नेव स भवति। असद्ब्रह्मेति वेद चेत्।" इत्यादिनिन्दाविरोधात्, "अस्तीत्येवोपलब्धव्यः" इत्यवधारणविरोधात्, सर्ववेदान्तव्याकोपप्रसङ्गाच्च। वाङ्मनसातीतत्वमपि ब्रह्मणो नाभावाभिप्रायेणाभिधीयते; न हि महता परिकरबन्धेन "ब्रह्मविदा-
10 प्नोति परम्। सत्यं ज्ञानमनन्तं ब्रह्म।" इत्येवमादिना वेदान्तेषु ब्रह्म प्रतिपाद्य तस्यैव पुनरभावोऽभिलप्येत। "प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्" इति हि न्यायः। प्रतिपादनप्रक्रिया त्वेषा— "यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह।" इति। एतदुक्तं भवति—वाङ्मनसातीतमविषयान्तःपाति प्रत्यगात्मभूतं नित्यशुद्धबुद्ध-
15 मुक्तस्वभावं ब्रह्मेति। तस्माद्ब्रह्मणो रूपप्रपञ्चं प्रतिषेधति, परिशिनष्टि ब्रह्म, इत्यवगन्तव्यम्॥

## प्रकटार्थविवरणम्

प्रतिषेधश्च लोके नेत्येवं[1] न दृष्टः; किंतु अयमयं न भवति, इदमिह नास्ति इति धर्मिप्रतियोग्यवच्छिन्नः, ततोऽविशेषनिषेधायोगात् निष्प्रमाणः शून्यवादः
20 प्रसज्यत इत्यर्थः। किंच साधिष्ठानो हि लोके भ्रमो दृष्टः; परमार्थस्य चैकस्य अधिष्ठानस्याभावे प्रत्यक्षादिदृष्टस्य परमार्थत्वापत्तेः प्रतिषेध एव व्यासेधिष्यत इत्यर्थः। द्वितीयपूर्वपक्षं दूषयति—नापीति[2]॥ यच्चोक्तं वाङ्मनसातीतत्वादिति, तत्राह—वाङ्मनसातीतत्वमपीति॥

१. A. नेत्येवं     २. T and T¹ omit नापीति

## भाष्यम्

तदेतदुच्यते—प्रकृतैतावत्त्वं हि प्रतिषेधतीति । प्रकृतं यदेतावत् इयत्तापरिच्छिन्नं मूर्तामूर्तलक्षणं ब्रह्मणो रूपं तदेष शब्दः प्रतिषेधति । तद्धि प्रकृतं प्रपञ्चितं च पूर्वस्मिन्ग्रन्थे अधिदैवतमध्यात्मं च । तज्जनितमेव च वासनालक्षणमपरं रूपम् अमूर्तरसभूतं पुरुषशब्दोदितं लिङ्गात्मव्यपाश्रयं माहारजनाद्युपमाभिर्दर्शितम्—अमूर्तरसस्य पुरुषस्य चक्षुर्ग्राह्यरूपयोगित्वानुपपत्तेः । तदेतत् सप्रपञ्चं ब्रह्मणो रूपं संनिहितालम्बनेन इतिकरणेन प्रतिषेधकं नञं प्रत्युपनीयत इति गम्यते । ब्रह्म तु रूपविशेषणत्वेन षष्ठ्या निर्दिष्टं पूर्वस्मिन्ग्रन्थे, न स्वप्रधानत्वेन । प्रपञ्चिते च तदीये रूपद्वये रूपवतः स्वरूपजिज्ञासायाम् इदमुपक्रान्तम्—"अथात आदेशो नेति नेति" इति । तत्र कल्पितरूपप्रत्याख्यानेन ब्रह्मणः स्वरूपावेदनमिति निर्णीयते । तदास्पदं हि इदं समस्तं कार्यम् "नेति नेति" इति प्रतिषिद्धम् । युक्तं च कार्यस्य,

## प्रकटार्थविवरणम्

उक्तेऽर्थे सूत्रं योजयति—तदेतदुच्यत इत्यादिना ॥ वासनालक्षणमूर्तामूर्तविषयजनितमेव रूपं महारजनाद्युपमाभिर्दर्शितमित्येतत्कुत इत्याशङ्क्याह—मूर्तरसस्येति ॥ भवत्वेवं रूपद्वयस्य प्रकृतत्वं प्रपञ्चितत्वं च; ततः किमित्याशङ्क्याह—तदेतत्सप्रपञ्चमिति ॥ तर्हि ब्रह्मणोऽपि प्रकृतत्वाविशेषात् निषेधः स्यादित्याशङ्क्याह—ब्रह्म त्विति ॥ राजवदर्थतः प्राधान्येऽपि शब्दतः प्राधान्येन प्रकृतत्वाभावात् नेतिशब्देन परामर्शो इत्यर्थः । इतश्च न रूपवतः प्रतिषेध इत्याह—प्रपञ्चिते चेति ॥ ननु यथा निर्घटं भूतलमिति निषेधेऽन्यत्र घटः परिशिष्यते, तथा ब्रह्मणि रूपद्वयनिषेधेऽपि अन्यत्र परिशिष्यते रूपद्वयमित्याशङ्क्याह[१]—तदास्पदं हीति ॥ उपादानादन्यत्र कार्यप्रसङ्गाभावात्तत्र निषिद्धस्य कथंकारमन्यत्र स्वरूपधारणं भवेदिति भावः । यत्तोक्तं प्रत्यक्षादिप्रमाणसिद्धस्य निषेधोऽशक्य इति, तत्राह—युक्तं च कार्यस्येति ॥ प्रत्यक्षादिना

१. A omits तदेतत्...शङ्क्याह

भाष्यम्

वाचारम्भणशब्दादिभ्योऽसत्त्वमिति, "नेति नेति" इति प्रतिषेधनम्; न तु ब्रह्मणः, सर्वकल्पनामूलत्वात्। न च अत्र इयमाशङ्का कर्तव्या— कथं हि शास्त्रं स्वयमेव ब्रह्मणो रूपद्वयं दर्शयित्वा, स्वयमेव पुनः प्रति-
5 षेधति—"प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्" इति—यतः नेदं शास्त्रं प्रतिपाद्यत्वेन ब्रह्मणो रूपद्वयं निर्दिशति, लोकप्रसिद्धं तु इदं रूपद्वयं ब्रह्मणि कल्पितं परामृशति प्रतिषेध्यत्वाय शुद्धब्रह्मस्वरूपप्रति-पादनाय च इति निरवद्यम्। द्वौ च एतौ प्रतिषेधौ यथासंख्यन्यायेन द्वे अपि मूर्तामूर्ते प्रतिषेधतः; यद्वा पूर्वः प्रतिषेधो भूतराशिं प्रतिषेधति,
10 उत्तरो वासनाराशिम्। अथ वा "नेति नेति" इति वीप्सा इयम्— "इति" इति यावत्किंचिदुत्प्रेक्ष्यते तत्सर्वं न भवतीत्यर्थः—परिग-णितप्रतिषेधे हि क्रियमाणे, यदि नैतद्ब्रह्म, किमन्यद्ब्रह्म भवेदिति जिज्ञासा स्यात्; वीप्सायां तु सत्यां समस्तस्य विषयजातस्य प्रति-

प्रकटार्थविवरणम्

15 पारमार्थिकसत्त्वासिद्धेः[1] वाचारम्भणशब्दादिभ्यश्च पारमार्थिकसत्त्ववैधुर्यं सिद्धमिति युक्तं वस्तुत्वप्रतिषेधनमित्यर्थः। ननु सत्त्वेन प्रतिपन्नोऽपि चेत् प्रपञ्चो निषिध्यते, तदा ब्रह्मणोऽपि निषेधः स्यात्, सत्त्वेन[2] प्रतिपत्त्यविशेषात् इत्याशङ्क्याह—न तु ब्रह्मण इति॥ प्रतिषेधादिसाक्षितया परिशेषादिति भावः। ननु "द्वे वाव ब्रह्मणो रूपे" इत्यादिनोपन्यस्तं रूपद्वयं निषिध्यते
20 चेत् तदा प्रसज्यप्रतिषेधव्यापारगौरवं स्यादित्याशङ्क्याह—न चात्रेयमित्या-दिना॥ यच्चोक्तं प्रतिषेधद्वयस्यार्थवत्त्वाय रूपे रूपवच्च प्रतिषिध्यत इति, तत्राह— द्वौ चैताविति॥ यावत्किंचिद्भावरूपमभावरूपं वा तस्य सर्वस्य वस्तुत्व-प्रतिषेधो वीप्सापक्षे घटत इत्युक्तम्; इदानीं वीप्सायां लाभाभ्रमाह—परिगणि-तेति॥

1. TM. पारमार्थिकत्वासिद्धे  2. A. न त्वेवं

भाष्यम्

षेधात् अविषयः प्रत्यगात्मा ब्रह्मेति, जिज्ञासा निवर्तते । तस्मात् प्रप-ञ्चमेव ब्रह्मणि कल्पितं प्रतिषेधति, परिशिनष्टि ब्रह्म—इति निर्णयः ॥

इतश्च एष एव निर्णयः, यतः—ततः प्रपञ्चप्रतिषेधात्, भूयो ब्रह्म ब्रवीति—"अन्यत्परमस्ति" इति । अभावावसाने हि प्रतिषेधे क्रियमाणे किमन्यत्परमस्तीति ब्रूयात् । तत्रैषा अक्षरयोजना—"नेति नेति" इति ब्रह्मादिश्य तमेवादेशं पुनर्निर्वक्ति—"नेति नेति" इत्यस्य कोऽर्थः? न हि एतस्माद्ब्रह्मणो व्यतिरिक्तमस्तीत्यतः "नेति नेति" इत्युच्यते, न पुनः स्वयमेव नास्ति—इत्यर्थः; तच्च दर्शयति—अन्यत्परम् अप्रति-षिद्धं ब्रह्म अस्तीति । यदा पुनरेवमक्षराणि योज्यन्ते—न हि, एत-स्मात् "इति न" "इति न" इति प्रपञ्चप्रतिषेधरूपात् आदेशनात् अन्य-त्परमादेशनं ब्रह्मणोऽस्तीति—तदा, "ततो ब्रवीति च भूयः" इत्येतन्नाम-धेयविषयं योजयितव्यम्—"अथ नामधेयँ सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम्" इति हि ब्रवीति—इति । तच्च ब्रह्मावसाने प्रतिषेधे समञ्जसं भवति; अभावावसाने तु प्रतिषेधे, किम् "सत्यस्य सत्यम्" इत्युच्येत? तस्माद्ब्रह्मावसानोऽयं प्रतिषेधः, नाभावाव-सानः—इत्यध्यवस्यामः ॥

# तदव्यक्तमाह हि ॥ ३-२-२३ ॥

यत्तत् प्रतिषिद्धात्प्रपञ्चजातादन्यत् परं ब्रह्म, तदस्ति चेत्, कस्मान्न गृह्यत इति, उच्यते—तत् अव्यक्तमनिन्द्रियग्राह्यम्, सर्वदृश्यसाक्षि-

प्रकटार्थविवरणम्

"ततो ब्रवीति च भूयः" इति सूत्रभागं व्याचष्टे—इतश्चैष इत्यादिना ॥

तदव्यक्तमाह हि ॥

एवं तावत्प्रतिषेधाविषयत्वेन परमार्थसत्यं ब्रह्मोपपाद्य इदानीं तस्यातीन्द्रियत्वं शङ्कानिरासेनाह—यत्तत्प्रतिषिद्धादिति ॥

भाष्यम्

त्वात् । आह हि एवं श्रुतिः—“न चक्षुषा गृह्यते नापि वाचा नान्यै-
र्देवैस्तपसा कर्मणा वा” “स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यते”
“यत्तदद्रेश्यमग्राह्यम्” “यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽ-
5 निलयने” इत्याद्या; स्मृतिरपि—“अव्यक्तोऽयमचिन्त्योऽयमविका-
र्योऽयमुच्यते” इत्याद्या ॥

## अपि च संराधने प्रत्यक्षानुमानाभ्याम् ॥ ३-२-२४ ॥

अपि च एनमात्मानं निरस्तसमस्तप्रपञ्चमव्यक्तं संराधनकाले
10 पश्यन्ति योगिनः; संराधनं च भक्तिध्यानप्रणिधानाद्यनुष्ठानम् । कथं
पुनरवगम्यते—संराधनकाले पश्यन्तीति? प्रत्यक्षानुमानाभ्याम्, श्रुति-
स्मृतिभ्यामित्यर्थः । तथा हि श्रुतिः—

“पराञ्चि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ् पश्यति नान्तरात्मन् ।
कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन् ॥” इति,

15 “ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः”
इति चैवमाद्या । स्मृतिरपि—

“यं विनिद्रा जितश्वासाः संतुष्टाः संयतेन्द्रियाः ।
ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः ॥
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥”

20 इति चैवमाद्या ॥

प्रकटार्थविवरणम्

अपि च संराधने प्रत्यक्षानुमानाभ्याम् ॥

अतीन्द्रियत्वेऽपि न सुप्तायमानत्वम्[1], किं तु विगलिताखिलमलकलङ्केऽ-
न्तःकरणे व्यज्यत इत्याह—अपि चैनमिति ॥

१. T, T¹ and TM. सुषुप्तायामानत्वं

भाष्यम्

ननु संराध्यसंराधकभावाभ्युपगमात्परेतरात्मनोरन्यत्वं स्यादिति; नेत्युच्यते—

## प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥ ३-२-२५ ॥  5

यथा प्रकाशाकाशसवितृप्रभृतयः अङ्गुलिकरकोदकप्रभृतिषु कर्मसु उपाधिभूतेषु सविशेषा इवावभासन्ते, न च स्वाभाविकीमविशेषात्मतां जहति; एवमुपाधिनिमित्त एवायमात्मभेदः, स्वतस्त्वैकात्म्यमेव। तथा हि वेदान्तेषु अभ्यासेनासकृत् जीवप्राज्ञयोरभेदः प्रतिपाद्यते ॥

## अतोऽनन्तेन तथा हि लिङ्गम् ॥ ३-२ २६ ॥  10

अतः स्वाभाविकत्वादभेदस्य अविद्याकृतत्वाच्च भेदस्य, विद्यया अविद्यां विधूय जीवः परेण अनन्तेन प्राज्ञेन आत्मना एकतां गच्छति। तथा हि लिङ्गम्—"स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति" "ब्रह्मैव सन्ब्रह्माप्येति" इत्यादि ॥

प्रकटार्थविवरणम्  15

प्रत्युक्तमप्यसकृत्तात्त्विकं भेदं पुनः प्रसङ्गादुन्नाव्य पराकरोति—ननु संराध्येत्यादिना ॥

प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥

यथा प्रकाशादीनां स्वरूपेणावैशेष्यमेकरूपता तथा चितोऽपि स्वरूपेणैक्यं विशेषप्रकाशश्च कर्मण्युपाधौ न स्वतः ऐक्यस्याभ्यासादिति योजना ॥  20

अतोऽनन्तेन तथा हि लिङ्गम् ॥

अस्मिन्नेव पक्षे मोक्षलाभो घटत इत्याह—अतः स्वाभाविकत्वादिति ॥

१. A. प्रसङ्गश्च  २. T. एकस्य

भाष्यम्

## उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ ३-२-२७ ॥

तस्मिन्नेव संराध्यसंराधकभावे मतान्तरमुपन्यस्यति, स्वमतविशुद्धये । क्वचित् जीवप्राज्ञयोर्भेदो व्यपदिश्यते—"ततस्तु तं पश्यते
5 निष्कलं ध्यायमानः" इति ध्यातृध्यातव्यत्वेन द्रष्टृद्रष्टव्यत्वेन च ; "परात्परं पुरुषमुपैति दिव्यम्" इति गन्तृगन्तव्यत्वेन ; "यः सर्वाणि भूतान्यन्तरो यमयति" इति नियन्तृनियन्तव्यत्वेन च । क्वचित्तु तयोरेवाभेदो व्यपदिश्यते—"तत्त्वमसि" "अहं ब्रह्मास्मि" "एष त आत्मा सर्वान्तरः" "एष त आत्मान्तर्याम्यमृतः" इति । तत्रैव-
10 मुभयव्यपदेशे सति, यद्यभेद एव एकान्ततो गृह्यते, भेदव्यपदेशो निरालम्बन एव स्यात् । अत उभयव्यपदेशदर्शनात् अहिकुण्डलवदत्र तत्त्वं भवितुमर्हति—यथा अहिरित्यभेदः, कुण्डलाभोगप्रांशुत्वादीनीति तु भेदः, एवमिहापीति ॥

## प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ ३-२-२८ ॥

15 अथवा प्रकाशाश्रयवदेतत्प्रतिपत्तव्यम्—यथा प्रकाशः सावित्रः तदाश्रयश्च सविता नात्यन्तभिन्नौ, उभयोरपि तेजस्त्वाविशेषात् ; अथ च भेदव्यपदेशभाजौ भवतः—एवमिहापीति ॥

प्रकटार्थविवरणम्

उभयव्यपदेशात्त्वहिकुण्डलवत् ॥

20 प्रकाशाश्रयवद्वा तेजस्त्वात् ॥

सूत्रद्वयसङ्गतिमाह—तस्मिन्नेवेति ॥

१. T, T[1] and A. यस्मिन्नेवेति

भाष्यम्

## पूर्ववद्वा ॥ ३-२-२९ ॥

यथा वा पूर्वमुपन्यस्तम् "प्रकाशादिवच्चावैशेष्यम्" इति, तथैवैतद्भवितुमर्हति; तथा हि अविद्याकृतत्वाद्बन्धस्य विद्यया मोक्ष उपपद्यते। यदि पुनः परमार्थत एव बद्धः कश्चिदात्मा अहिकुण्डलन्यायेन परस्यात्मनः संस्थानभूतः प्रकाशाश्रयन्यायेन च एकदेशभूतोऽभ्युपगम्येत, ततः पारमार्थिकस्य बन्धस्य तिरस्कर्तुमशक्यत्वात् मोक्षशास्त्रवैयर्थ्यं प्रसज्येत। न चात्र उभावपि भेदाभेदौ श्रुतिः तुल्यवत् व्यपदिशति; अभेदमेव हि प्रतिपाद्यत्वेन निर्दिशति, भेदं तु पूर्वप्रसिद्धमेवानुवदति अर्थान्तरविवक्षया। तस्मात्प्रकाशादिवच्चावैशेष्यमित्येष एव सिद्धान्तः ॥

## प्रतिषेधाच्च ॥ ३-२-३० ॥

इतश्च एष एव सिद्धान्तः, यत्कारणं परस्मादात्मनोऽन्यं चेतनं प्रतिषेधति शास्त्रम्—"नान्योऽतोऽस्ति द्रष्टा" इत्येवमादि। "अथात आदेशो नेति नेति" "तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्" इति च ब्रह्मव्यतिरिक्तप्रपञ्चनिराकरणाद्ब्रह्ममात्रपरिशेषाच्चैष एव सिद्धान्त इति गम्यते ॥

[पराधिकरणम्]

यदेतत् निरस्तसमस्तप्रपञ्चं ब्रह्म निर्धारितम्, अस्मात्परमन्यत्तत्त्व-

प्रकटार्थविवरणम्

पूर्ववद्वा ॥

प्रतिषेधाच्च ॥

सिद्धान्तमाह—पूर्ववद्वेति ॥

सबीजं संशयमाह—यदेतदिति ॥ ननु पूर्वं सकलश्रुतिविप्रतिषेधनिरासेनाद्वयं ब्रह्मैव वस्तु नान्यदिति साधितम्। किमर्थः पुनरारम्भः इत्या-

भाष्यम्

मस्ति नास्तीति श्रुतिविप्रतिपत्तेः संशयः। कानिचिद्धि वाक्यान्यापाते-
नैव प्रतिभासमानानि ब्रह्मणोऽपि परमन्यत्तत्त्वं प्रतिपादयन्तीव; तेषां
हि परिहारमभिधातुमयमुपक्रमः क्रियते—

5 **परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः॥३-२-३१॥**

परम् अतो ब्रह्मणः अन्यत्तत्त्वं भवितुमर्हति; कुतः? सेतुव्यपदेशात्
उन्मानव्यपदेशात् संबन्धव्यपदेशात् भेदव्यपदेशाच्च। सेतुव्यपदेशस्ता-
वत्—"अथ य आत्मा स सेतुर्विधृतिः" इत्यात्मशब्दाभिहितस्य
ब्रह्मणः सेतुत्वं संकीर्तयति; सेतुशब्दश्च हि लोके जलसंतानविच्छेदकरे
10 मृद्दार्वादिप्रचये प्रसिद्धः; इह तु सेतुशब्द आत्मनि प्रयुक्त इति लौकि-
कसेतोरिव आत्मसेतोरन्यस्य वस्तुनोऽस्तित्वं गमयति; "सेतुं तीर्त्वा"
इति च तरतिशब्दप्रयोगात्—यथा लौकिकं सेतुं तीर्त्वा जाङ्गलमसेतुं
प्राप्नोति, एवमात्मानं सेतुं तीर्त्वा अनात्मानमसेतुं प्राप्नोतीति गम्यते।
उन्मानव्यपदेशश्च भवति—तदेतद्ब्रह्म चतुष्पादष्टाशफं षोडशकलमिति;

15 प्रकटार्थविवरणम्

शङ्कयाह—कानिचिद्धीति॥ मन्दाशङ्कापाकरणेन तत्पदलक्ष्यस्य अद्वितीयत्व-
प्रपञ्चार्थं पवायमारम्भ इत्यर्थः॥

परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः॥

पूर्वपक्षसूत्रं योजयति—परमत इत्यादिना॥ ब्रह्म सद्वितीयम्, सेतु-
20 त्वात्, लौकिकसेतुवदित्युक्तम्। इदानीं प्रकारान्तरमाह—सेतुं तीर्त्वेति चेति॥
आकूलं तटम्। सेतुव्यपदेशं व्याख्यायोन्मानव्यपदेशमाह—उन्मानेति॥ प्राची
प्रतीची दक्षिणोदीचीति चतस्रः कलाः; प्रकाशवान् पादः; पृथिव्यन्तरिक्षं
द्यौः समुद्र इत्यनन्तवान्; अग्निः सूर्यश्चन्द्रमा विद्युदिति ज्योतिष्मान्; चक्षुः

भाष्यम्

यच्च लोक उन्मितम् एतावदिदमिति परिच्छिन्नं कार्षापणादि, ततोऽन्य-द्वस्त्वस्तीति प्रसिद्धम्; तथा ब्रह्मणोऽप्युन्मानात् ततोऽन्येन वस्तुना भवितव्यमिति गम्यते। तथा संबन्धव्यपदेशोऽपि भवति—"सता सोम्य तदा संपन्नो भवति" इति, "शारीर आत्मा" "प्राज्ञेनात्मना संपरिष्वक्तः" इति च; मितानां च मितेन संबन्धो दृष्टः, यथा नराणां नगरेण; जीवानां च ब्रह्मणा संबन्धं व्यपदिशति सुषुप्तौ; अतः ततः परमन्यदमितमस्तीति गम्यते। भेदव्यपदेशश्च एनमर्थं गमयति; तथा हि—"अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते" इत्या-दित्याधारमीश्वरं व्यपदिश्य, ततो भेदेन अक्ष्याधारमीश्वरं व्यपदि-शति—"अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते" इति; अतिदेशं च अस्यामुना रूपादिषु करोति—"तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम" इति; सावधिकं चेश्वरत्व-मुभयोर्व्यपदिशति—"ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानां च" इत्येकस्य, "ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां च" इत्येकस्य, यथा इदं मागधस्य राज्यम्, इदं वैदेहस्येति। एवमे-तेभ्यः सेत्वादिव्यपदेशेभ्यो ब्रह्मणः परमस्तीति॥

प्रकटार्थविवरणम्

श्रोत्रं वाङ्मन इत्यायतनवान्; एते चत्वारः पादा अस्येति चतुष्पात्; पादाना-मर्धानि अष्टौ शफा अस्येत्यष्टाशफम्; चतस्रश्चतस्रः कला एकैकस्य पाद-स्येति षोडशकलमित्यर्थः। ततः किमित्यत आह—यच्च लोक इति॥ कार्षा-पण इति षोडशपणानां संज्ञा। ब्रह्म सद्वितीयम्, संबन्धव्यपदेशवत्त्वात्, नगरव-दित्याह—तथा सम्बन्धेति॥ तथा ब्रह्म सद्वितीयम्, भेदव्यपदेशवत्त्वात्, घटवदित्याह—भेदव्यपदेशश्चैनमित्यादिना॥

भाष्यम्

एवं प्राप्ते, प्रतिपाद्यते—

## सामान्यात्तु ॥ ३-२-३२ ॥

तुशब्देन प्रदर्शितां प्राप्तिं निरुणद्धि । न ब्रह्मणोऽन्यत्किंचि-
5 द्भवितुमर्हति, प्रमाणाभावात्—न हि अन्यस्यास्तित्वे किंचित्प्रमाण-
मुपलभामहे ; सर्वस्य हि जनिमतो वस्तुजातस्य जन्मादि ब्रह्मणो भव-
तीति निर्धारितम्, अनन्यत्वं च कारणात् कार्यस्य ; न च ब्रह्मव्य-
तिरिक्तं किंचित् अजं संभवति, "सदेव सोम्येदमग्र आसीदेकमेवा-
द्वितीयम्" इत्यवधारणात् ; एकविज्ञानेन च सर्वविज्ञानप्रतिज्ञानात् न
10 ब्रह्मव्यतिरिक्तवस्त्वस्तित्वमवकल्पते । ननु सेत्वादिव्यपदेशाः ब्रह्मव्य-
तिरिक्तं तत्त्वं सूचयन्तीत्युक्तम् ; नेत्युच्यते—सेतुव्यपदेशस्तावत् न
ब्रह्मणो बाह्यस्य सद्भावं प्रतिपादयितुं क्षमते ; सेतुरात्मेति हि आह
न अतः परमस्तीति ; तत्र परस्मिन् असति सेतुत्वं नावकल्पत इति
परं किमपि कल्प्येत ; न चैतत् न्याय्यम् ; हठो हि अप्रसिद्धकल्पना ;
15 अपि च सेतुव्यपदेशादात्मनो लौकिकसेतुनिदर्शनेन सेतुबाह्यवस्तुतां
प्रसञ्जयता मृद्दारुमयतापि प्रासज्यत ; न चैतन्याय्यम्, अजत्वादि-
श्रुतिविरोधात् ; सेतुसामान्यात्तु सेतुशब्द आत्मनि प्रयुक्त इति
श्लिष्यते ; जगतस्तन्मर्यादानां च विधारकत्वं सेतुसामान्यमात्मनः ;
अतः सेतुरिव सेतुः—इति प्रकृत आत्मा स्तूयते । "सेतुं तीर्त्वा"

20 प्रकटार्थविवरणम्

सामान्यात्तु ॥

आधारभेदो रूपभेद ऐश्वर्यभेदश्चेति त्रिविधो भेदव्यपदेशो दर्शित इति
सिद्धान्तसूत्रं व्याचष्टे— तुशब्देनेत्यादिना ॥ यदन्यत् तत्किसदसदादि-
वासादेः वस्त्वन्तरत्वेन प्रमाणमित्याह — प्रमाणाभावादिति ॥ द्वितीयं
25 दूषयति—न च ब्रह्मव्यतिरिक्तमिति ॥ आगमविरुद्धकालात्ययापदिष्टत्वा-
दानुमानाद्यङ्गं धारयतीत्यर्थः । इदानीं सेत्वादिव्यपदेशानामुपचरितार्थत्वेन
हेतूनां स्वरूपासिद्धिप्रदर्शनायोपक्रमते—ननु सेत्वादिव्यपदेशा इत्यादिना ॥

भाष्यम्

इत्यपि तरतिः अतिक्रमासंभवात्प्राप्नोत्यर्थे एव वर्तते—यथा व्याकरणं तीर्ण इति प्राप्त उच्यते, न अतिक्रान्तः तद्वत् ॥

## बुद्ध्यर्थः पादवत् ॥ ३-२-३३ ॥

यदप्युक्तम्—उन्मानव्यपदेशादस्ति परमिति, तत्राभिधीयते— 5
उन्मानव्यपदेशोऽपि न ब्रह्मव्यतिरिक्तवस्त्वस्तित्वप्रतिपत्त्यर्थः; किमर्थस्तर्हि? बुद्ध्यर्थः, उपासनार्थ इति यावत्; चतुष्पादष्टाशफं षोडशकलमित्येवंरूपा—बुद्धिः कथं नु नाम ब्रह्मणि स्थिरा स्यादिति—विकारद्वारेण ब्रह्मण उन्मानकल्पनैव क्रियते; न हि अविकारेऽनन्ते ब्रह्मणि सर्वैः पुंभिः शक्या बुद्धिः स्थापयितुम्, मन्दमध्यमोत्तमबुद्धि- 10
त्वात् पुंसामिति। पादवत्—यथा मनआकाशयोरध्यात्ममधिदैवतं च ब्रह्मप्रतीकयोराम्नातयोः, चत्वारो वागादयो मनःसंबन्धिनः पादाः कल्प्यन्ते, चत्वारश्च अग्न्यादय आकाशसंबन्धिनः—आध्यानाय—तद्वत्। अथवा पादवदिति—यथा कार्षापणे पादविभागो व्यवहारप्राचुर्याय कल्प्यते—न हि सकलेनैव कार्षापणेन सर्वदा सर्वे जना 15
व्यवहर्तुमीशते, क्रयविक्रये परिमाणानियमात्—तद्वदित्यर्थः ॥

## स्थानविशेषात्प्रकाशादिवत् ॥ ३-२-३४ ॥

इह सूत्रे द्वयोरपि संबन्धभेदव्यपदेशयोः परिहारोऽभिधीयते। यदप्युक्तम्—संबन्धव्यपदेशात् भेदव्यपदेशाच्च परमतः स्यादिति, तदप्यसत्; यत एकस्यापि स्थानविशेषापेक्षया एतौ व्यपदेशावुपपद्येते। 20
संबन्धव्यपदेशे तावदयमर्थः—बुद्ध्याद्युपाधिस्थानविशेषयोगादुद्भूतस्य

प्रकटार्थविवरणम्

बुद्ध्यर्थः पादवत् ॥

स्थानविशेषात् प्रकाशादिवत् ॥

भाष्यम्

विशेषविज्ञानस्य उपाध्युपशमे य उपशमः, स परमात्मना संबन्धः— इत्युपाध्यपेक्षया उपचर्यते, न परिमितत्वापेक्षया । तथा भेदव्यपदेशोऽपि ब्रह्मण उपाधिभेदापेक्षयैव उपचर्यते, न स्वरूपभेदापेक्षया ।
5 प्रकाशादिवदिति उपमोपादानम्—यथा एकस्य प्रकाशस्य सौर्यस्य चान्द्रमसस्य वा उपाधियोगादुपजातविशेषस्योपाध्युपशमात्संबन्धव्यपदेशो भवति, उपाधिभेदाच्च भेदव्यपदेशः ; यथा वा सूचीपाशाकाशादिषूपाध्यपेक्षयैवैतौ संबन्धभेदव्यपदेशौ भवतः—तद्वत् ॥

## उपपत्तेश्च ॥ ३-२-३५ ॥

10 उपपद्यते च अत्र ईदृश एव संबन्धः, नान्यादृशः—"स्वमपीतो भवति" इति हि स्वरूपसंबन्धमेनमामनन्ति ; स्वरूपस्य च अनपायित्वात् न नरनगरन्यायेन संबन्धो घटते ; उपाधिकृतस्वरूपतिरोभावात्तु "स्वमपीतो भवति" इत्युपपद्यते । तथा भेदोऽपि नान्यादृशः संभवति, बहुतरश्रुतिप्रसिद्धैकेश्वरत्वविरोधात् ; तथा च श्रुति-
15 रेकस्याप्याकाशस्य स्थानकृतं भेदव्यपदेशमुपपादयति—"योऽयं बहिर्धा पुरुषादाकाशः" "योऽयमन्तः पुरुष आकाशः" "योऽयमन्तर्हृदय आकाशः" इति ॥

## तथान्यप्रतिषेधात् ॥ ३-२-३६ ॥

एवं सेत्वादिव्यपदेशान् परपक्षहेतूनुन्मथ्य संप्रति स्वपक्षं हेत्वन्तरे-
20 णोपसंहरति । तथान्यप्रतिषेधादपि न ब्रह्मणः परं वस्त्वन्तरमस्तीति

प्रकटार्थविवरणम्

उपपत्तेश्च ॥

तथान्यप्रतिषेधात् ॥

वागादय इति वाक्प्राणचक्षुःश्रोत्राणि । अग्न्यादय इति अग्निर्वायुरा-
25 दित्यो दिश इत्येवम् ॥

भाष्यम्

गम्यते; तथा हि—"स एवाधस्तात्" "अहमेवाधस्तात्" "आत्मैवाधस्तात्" "सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद" "ब्रह्मैवेदं सर्वम्" "आत्मैवेदं सर्वम्" "नेह नानास्ति किंचन" "यस्मात्परं नापरमस्ति किंचित्" "तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्" इत्येवमादीनि वाक्यानि स्वप्रकरणस्थानि अन्यार्थत्वेन परिणेतुमशक्यानि ब्रह्मव्यतिरिक्तं वस्त्वन्तरं वारयन्ति। सर्वान्तरश्रुतेश्च न परमात्मनोऽन्यः अन्तरात्मा अस्तीत्यवधार्यते ॥ 5

## अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३-२-३७ ॥

अनेन सेत्वादिव्यपदेशनिराकरणेन अन्यप्रतिषेधसमाश्रयणेन च सर्वगतत्वमप्यात्मनः सिद्धं भवति; अन्यथा हि तन्न सिद्ध्येत् । सेत्वादिव्यपदेशेषु हि मुख्येष्वङ्गीक्रियमाणेषु परिच्छेद आत्मनः प्रसज्येत, सेत्वादीनामेवमात्मकत्वात्; तथा अन्यप्रतिषेधेऽप्यसति, वस्तु वस्त्वन्तराद्व्यावर्तत इति परिच्छेद एवात्मनः प्रसज्येत । सर्वगतत्वं च अस्य आयामशब्दादिभ्यो विज्ञायते । आयामशब्दो व्याप्तिवचनः शब्दः "यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः" "आकाशवत्सर्वगतश्च नित्यः" "ज्यायान्दिवः" "ज्यायानाकाशात्" "नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः" इत्येवमादयो हि श्रुतिस्मृतिन्यायाः सर्वगतत्वमात्मनोऽवबोधयन्ति ॥ 10 15

प्रकटार्थविवरणम् 20

अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥

अद्वितीयत्वं प्रपञ्च्य सर्वगतत्वं दर्शयति—अनेन सर्वगतत्वमिति ॥

अन्यथा हीति ॥ सेत्वादिव्यपदेशस्य मुख्यत्वे सति तत्सर्वगतत्वं न सिध्येदित्यर्थः ॥

भाष्यम्

[ फलाधिकरणम् ]

# फलमत उपपत्तेः ॥ ३-२-३८ ॥

तस्यैव ब्रह्मणो व्यावहारिक्याम् ईशित्रीशितव्यविभागावस्थायाम्,
5 अयमन्यः स्वभावो वर्ण्यते । यदेतदिष्टानिष्टव्यामिश्रलक्षणं कर्मफलं संसारगोचरं त्रिविधं प्रसिद्धं जन्तूनाम्, किमेतत् कर्मणो भवति, आहोस्विदीश्वरादिति भवति विचारणा । तत्र तावत्प्रतिपाद्यते—फलमत ईश्वराद्भवितुमर्हति; कुतः? उपपत्तेः; स हि सर्वाध्यक्षः सृष्टिस्थितिसंहारान्विचित्रान्विदधत् देशकालविशेषाभिज्ञत्वात् कर्मिणां कर्मानुरूपं
10 फलं संपादयतीत्युपपद्यते; कर्मणस्तु अनुक्षणविनाशिनः कालान्तरभावि फलं भवतीत्यनुपपन्नम्, अभावाद्भावानुत्पत्तेः । स्यादेतत्—कर्म विनश्यत् स्वकालमेव स्वानुरूपं फलं जनयित्वा विनश्यति, तत्फलं कालान्तरितं कर्त्रा भोक्ष्यत इति; तदपि न परिशुध्यति, प्राग्भोक्तृसंबन्धा-

प्रकटार्थविवरणम्

15 फलमत उपपत्तेः ॥

"न स्थानतोऽपि" इत्यारभ्य निर्विशेषं सत्यमद्वितीयं सर्वगतं च ब्रह्म तत्पदलक्ष्यं निरूप्य तत्पदवाच्यमीश्वरमिदानीं निरूपयतीत्याह—तस्यैवेति ॥ उभयोरपि फलहेतुत्वश्रवणात् संशयमाह—यदेतदित्यादिना ॥ सिद्धान्तेनैवोपक्रमते—तत्र तावदिति ॥ केवलात्कर्मणः फलमिति परपक्षं दूषयति—
20 कर्मणस्त्विति ॥ अनुक्षणविनाशिन इति ॥ क्षणिकात्कर्मणः फलं भवतीति ब्रुवतो हठात् विनष्टात्कर्मणः फलमिति प्रसज्यते; तदसङ्गतमित्यर्थः । उक्तदोषपरिहाराय कर्मवादिनो मतं शङ्कते—स्यादेतदिति ॥ स्वनिवृत्तिसमकालमेव कर्म स्वफलमुत्पाद्य नश्यतीत्येतदपि तर्कपरिशुद्धं न भवतीत्याह—तदपि नेति ॥ कर्मणः स्वनुष्ठितान्नियोगो निष्पद्यते । नियोगाच्च स्थायिनः

भाष्यम्

त्फलत्वानुपपत्तेः—यत्कालं हि यत्सुखं दुःखं वात्मना भुज्यते, तस्यैव लोके फलत्वं प्रसिद्धम्; न हि असंबद्धस्यात्मना सुखस्य दुःखस्य वा फलत्वं प्रतियन्ति लौकिकाः। अथोच्येत—मा भूत्कर्मानन्तरं फलोत्पादः, कर्मकार्यादपूर्वात्फलमुत्पत्स्यत इति, तदपि नोपपद्यते, अपूर्वस्याचेतनस्य काष्ठलोष्टसमस्य चेतनेनाप्रवर्तितस्य प्रवृत्त्यनुपपत्तेः, तदस्तित्वे एव प्रमाणाभावात्; अर्थापत्तिः प्रमाणमिति चेत्, न, ईश्वरसिद्धेरर्थापत्तिक्षयात् ॥ 5

## श्रुतत्वाच्च ॥ ३-२-३९ ॥

न केवलमुपपत्तेरेव ईश्वरं फलहेतुं कल्पयामः, किं तर्हि श्रुतत्वादपीश्वरमेव फलहेतुं मन्यामहे, तथा च श्रुतिर्भवति—"स वा एष महा आत्मान्नादो वसुदानः" इत्येवंजातीयका ॥ 10

प्रकटार्थविवरणम्

कालान्तरे फलसिद्धिरित्याह— अथोच्येतेति ॥ नियोगस्यापि स्वतन्त्रस्य फलदातृत्वं नोपपद्यत इत्याह—तदपि नेति ॥ किं च नियोगस्य शब्दैकगम्यताङ्गीक्रियते; सा च न संभवति, व्युत्पत्तिविरहादित्याह—तदस्तित्वे चेति ॥ क्षणिकस्य कालान्तरवर्तिस्वर्गसाधनत्वानुपपत्तेः कर्मातिरिक्तमपूर्वं परिकल्प्यते । यत्र स्वर्गकामो नियोज्यतयान्वेति तदेव च नियोक्तृत्वान्नियोग उच्यत इत्याह—अर्थापत्तिरिति ॥ क्षणिकस्यापि कर्मण ईश्वरात् फलं भविष्यति सेवाफलवत्; अतो नास्त्यर्थापत्तेरुदय इत्याह—नेश्वरसिद्धेरिति ॥ 15 20

श्रुतत्वाच्च ॥

किं च नियोगात्फलकल्पना श्रुतिविरुद्धापीत्याह—श्रुतत्वाच्चेति ॥

१. TM. फलमात्मत्वं २. T and T[1]. यस्य

भाष्यम्

## धर्मं जैमिनिरत एव ॥ ३-२-४० ॥

जैमिनिस्त्वाचार्यो धर्मं फलस्य दातारं मन्यते, अत एव हेतोः—
श्रुतेरुपपत्तेश्च । श्रूयते तावदयमर्थः "स्वर्गकामो यजेत" इत्येवमा-
5 दिषु वाक्येषु; तत्र च विधिश्रुतेर्विषयभावोपगमात् यागः स्वर्गस्यो-
त्पादक इति गम्यते; अन्यथा हि अननुष्ठातृको याग आपद्येत; तत्र
अस्य उपदेशवैयर्थ्यं स्यात्; ननु अनुक्षणविनाशिनः कर्मणः फलं
नोपपद्यत इति परित्यक्तोऽयं पक्षः; नैष दोषः, श्रुतिप्रामाण्यात्—
श्रुतिश्चेत् प्रमाणम्, यथायं कर्मफलसंबन्धः श्रुत उपपद्यते, तथा कल्प-
10 यितव्यः; न च अनुत्पाद्य किमप्यपूर्वं कर्म विनश्यत् कालान्तरितं
फलं दातुं शक्नोति; अतः कर्मणो वा सूक्ष्मा काचिदुत्तरावस्था फलस्य
वा पूर्वा[illegible] अपूर्वं नाम अस्तीति तर्क्यते । उपपद्यते च अयमर्थ

प्रकटार्थविवरणम्

### धर्मं जैमिनिरत एव ॥

15 इदानीं पूर्वपक्षं सूत्रयति—धर्ममिति[1] ॥ यजेतेति यागः समीहितसाधन-
मिति । लिङादिश्रुतेर्धात्वर्थ एव समीहितसाधनताकारेण[2] विषयोऽभ्युपगम्यते ।
तत्र कस्य समीहितस्य साधनमिति वीक्षायां स्वर्गकामपदेनाधिकारिविशेष-
णीभूतः स्वर्गः समर्प्यते । तदा च यागः स्वर्गसाधनमिति वाक्यार्थः संपद्यते ।
अर्थात्तत्कामोऽधिकारीति भावः । उपपत्तिमाह—अन्यथा हीति ॥ यागस्य
20 स्वाभिमतसाधनत्वाभावे तस्य स्वयंक्लेशात्मकत्वादननुष्ठानमेव प्रसज्येतेत्यर्थः ।
विमतं कर्म न कालान्तरीयफलसाधकम्, क्षणिकत्वात्, संप्रतिपन्नवत्
इत्यनुमानमागमबाधितमित्याह—नन्वित्यादिना ॥ अपूर्वमपि स्वतन्त्रं नियो-
गाख्यं यद्यपि निरूपणं न सहते तथापि श्रुतस्वर्गसाधनत्वनिर्वाहाय द्वारभूतं
किमप्यतिशयरूपं कल्प्यत इति कौमारिलकटाक्षमाह—न चानुत्पाद्य किम-
25 पीति ॥

१. T, T¹ and TM omit धर्ममिति   २. TM and A. त्वाकारेण

भाष्यम्

उक्तेन प्रकारेण । ईश्वरस्तु फलं ददातीत्यनुपपन्नम् । अविचित्रस्य कारणस्य विचित्रकार्यानुपपत्तेः वैषम्यनैर्घृण्यप्रसङ्गात्, तदनुष्ठानवैयर्थ्यापत्तेश्च । तस्मात् धर्मादेव फलमिति ॥

## पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ३-२-४१ ॥ 5

बादरायणस्त्वाचार्यः पूर्वोक्तमेवेश्वरं फलहेतुं मन्यते । केवलात्कर्मणः अपूर्वाद्वा केवलात् फलमित्ययं[1] पक्षः तुशब्देन व्यावर्त्यते । कर्मापेक्षात् अपूर्वापेक्षाद्वा यथा तथास्तु ईश्वरात्फलमिति सिद्धान्तः; कुतः? हेतुव्यपदेशात् । धर्माधर्मयोरपि हि कारयितृत्वेन ईश्वरो हेतुर्व्यपदिश्यते, फलस्य च दातृत्वेन—"एष ह्येव साधु कर्म कारयति तं 10 यमेभ्यो लोकेभ्य उन्निनीषते । एष उ एवासाधु कर्म कारयति तं यमधो निनीषते" इति; स्मर्यते च अयमर्थो भगवद्गीतासु—

"यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति ।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥

स तया श्रद्धया युक्तस्तस्याराधनमीहते । 15
लभते च ततः कामान्मयैव विहितान्हितान् ॥" इति ।

प्रकटार्थविवरणम्

एवं स्वपक्षं सोपपत्तिकमुक्त्वा परपक्षं प्रतिक्षिपति—ईश्वरस्त्विति ॥

पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥

अत्र सिद्धान्तमाह–पूर्वं त्विति ॥ विमतं कर्मफलं कर्मादिज्ञानवता प्रदीयमानं व्यवहितकर्मफलत्वात्, सेवादिकर्मफलवदित्यनुमानानुगृहीतश्रुत्युपस्थापितेश्वरपदार्थबाधकल्पनाद्वरं कर्मणो नैरपेक्ष्यधर्मबाधकल्पनम्, श्रुतकल्प्य- 20

१. T and TM. कर्मफलमित्य

भाष्यम्

सर्ववेदान्तेषु च ईश्वरहेतुका एव सृष्टयो व्यपदिश्यन्ते; तदेव च ईश्वरस्य फलहेतुत्वं यत्स्वकर्मानुरूपाः प्रजाः सृजति । विचित्रकार्यानुपपत्त्याद-योऽपि दोषाः कृतप्रयत्नापेक्षत्वादीश्वरस्य न प्रसज्यन्ते ॥

5 इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपाद-
शिष्यस्य श्रीमच्छंकरभगवतः कृतौ शारीरकमीमांसासूत्रभाष्ये
तृतीयाध्यायस्य द्वितीयः पादः ॥

प्रकटार्थविवरणम्

योऽत्र श्रुतं बलवदिति न्यायेन अतिवृत्तकर्मानुसारेणेश्वरे फलदातरि श्रुते
10 नापूर्वकल्पनावकाश इति भावः ॥

इति श्रीमच्छारीरकमीमांसाभाष्यविवरणे प्रकटार्थे
तृतीयस्याध्यायस्य द्वितीयः पादः समाप्तः ॥

---

# अथ तृतीयः पादः

भाष्यम्

[ सर्ववेदान्तप्रत्ययाधिकरणम् ]

व्याख्यातं विज्ञेयस्य ब्रह्मणस्तत्त्वम्; इदानीं तु प्रतिवेदान्तं विज्ञानानि भिद्यन्ते, न वेति विचार्यते। ननु विज्ञेयं ब्रह्म पूर्वापरादिभेदरहितम् एकरसं सैन्धवघनवत् अवधारितम्; तत्र कुतो विज्ञानभेदाभेदचिन्तावसरः? न हि कर्मबहुत्ववत् ब्रह्मबहुत्वमपि वेदान्तेषु प्रतिपिपादयिषितमिति शक्यं वक्तुम्, ब्रह्मण एकत्वात् एकरूपत्वाच्च; न च एकरूपे ब्रह्मणि अनेकरूपाणि विज्ञानानि संभवन्ति; न हि—अन्यथार्थः अन्यथा ज्ञानम्—इत्यभ्रान्तं भवति; यदि पुनः एकस्मिन्ब्रह्मणि बहूनि विज्ञानानि वेदान्तेषु प्रतिपिपादयिषितानि, तेषाम् एकमभ्रान्तम्, भ्रान्तानीतराणीत्यनाश्वासप्रसङ्गो वेदान्तेषु; तस्मान्न तावत्प्रतिवेदान्तं ब्रह्मविज्ञानभेद आशङ्कितुं शक्यते। नाप्यस्य चोदनाद्यविशेषादभेद उच्येत, ब्रह्मविज्ञानस्य अचोदनालक्षणत्वात्; अविधिप्रधानैर्हि वस्तुपर्यवसायिभिः ब्रह्मवाक्यैः ब्रह्मविज्ञानं जन्यत इत्यवोचदाचार्यः "तत्तु समन्वयात्" इत्यत्र। तत्कथमिमां भेदाभेदचिन्तामारभत इति॥

प्रकटार्थविवरणम्

पादसङ्गतिमाह—व्याख्यातमिति॥ पादार्थमाक्षिपति—ननु विज्ञेयमिति॥ ननु पूर्वतन्त्रे यथा सर्वशाखाविहितम् अग्निहोत्रमेकमेव किं वा नेति विचारितम्, तथात्रापि विचारो युक्त इत्याशङ्कयाह— न हि कर्मबहुत्ववदिति॥ एकत्वेऽपि धर्मिणो रूपभेदात् भवेद्विज्ञानभेदः; सोऽपि नास्तीत्याह—एकरूपत्वाच्चेति॥ भवत्वेकरूपत्वम्; ततः किमित्यत आह—न चैकरूप इति॥ पूर्वपक्षे तावद्विज्ञानभेद आशङ्कितुं न शक्यत इत्युक्तम्; सिद्धान्ते चाभेदोऽपि चोदनाद्यभेदेन वक्तुं न शक्यत इत्याह — नाप्यस्येति॥ एवं

भाष्यम्

तदुच्यते—सगुणब्रह्मविषया प्राणादिविषया च इयं विज्ञानभेदाभेद-
चिन्तेत्यदोषः । अत्र हि कर्मवत् उपासनानां भेदाभेदौ संभवतः ; कर्म-
वदेव च उपासनानि दृष्टफलानि अदृष्टफलानि च उच्यन्ते, क्रममुक्ति-
5 फलानि च कानिचित् सम्यग्दर्शनोत्पत्तिद्वारेण । तेष्वेषा चिन्ता संभ-
वति—किं प्रतिवेदान्तं विज्ञानभेदः, आहोस्वित् नेति ॥

तत्र पूर्वपक्षहेतवस्तावदुपन्यस्यन्ते—नाम्नस्तावत् भेदप्रतिपत्तिहेतुत्वं
प्रसिद्धं ज्योतिरादिषु ; अस्ति च अत्र वेदान्तान्तरविहितेषु विज्ञानेषु
अन्यदन्यत् नाम—तैत्तिरीयकं वाजसनेयकं कौथुमकं कौषीतकं
10 शाट्यायनकमित्येवमादि । तथा रूपभेदोऽपि कर्मभेदस्य प्रतिपादकः
प्रसिद्धः—"वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्" इत्येवमादिषु ;
अस्ति च अत्र रूपभेदः ; तद्यथा—केचिच्छाखिनः पञ्चाग्निविद्यायां
षष्ठमपरमग्निमामनन्ति, अपरे पुनः पञ्चैव पठन्ति ; तथा प्राणसंवादा-

प्रकटार्थविवरणम्

15 पादारम्भमाक्षिप्य समाधत्ते—तदुच्यत इति ॥ यद्यपि शुद्धब्रह्मज्ञानमेकरूपम्,
तथापि प्रतिशाखं तद्वाक्यानां भेदादपुनरुक्तपदोपसंहारसिद्धये ज्ञानसाधन-
वाक्यभेदाभेदचिन्ता युक्तेत्यर्थः । तथा मन्दाधिकारिणां उपासनैकरूप्य-
सिद्धये च युक्ता भेदाभेदचिन्तेत्याह—सगुणब्रह्मविषयेति ॥

विज्ञानभेद इति पूर्वः पक्षः ; तत्र हेतूनाह—तत्रेत्यादिना ॥ शब्दान्तरं
20 अभ्यासः सङ्ख्या गुणः प्रक्रिया नामधेयमिति द्वितीयेऽध्याये धर्मभेदे षट् प्रमा-
णानि निरूपितानि । तत्र नाम्नो भेदकत्वमुदाहरति—नाम्नस्तावदिति ॥
"अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिरेतेन सहस्रदक्षिणेन यजेत"
इत्यत्र प्रकृतविच्छेदेन संज्ञान्तरं श्रूयमाणं संज्ञिनं भिनत्तीति स्थितम् ; तथेहापी-
त्यर्थः । गुणस्य भेदकत्वमाह—तथा रूपभेदोऽपीति ॥ [1]अप्रकृतदेवतासंबन्धवा-
25 जिनद्रव्यं गुणशब्दवाच्यं कर्मणो भेदकं सिद्धम् । तप्तपयो दधिसंसृष्टं आमिक्षा,

1. A. अतः प्रकृत

भाष्यम्

दिषु केचित् ऊनान्वागादीनामनन्ति, केचिदधिकान्। तथा धर्मविशे-
षोऽपि कर्मभेदस्य प्रतिपादक आशङ्कितः कारीर्यादिषु; अस्ति च अत्र
धर्मविशेषः; यथा आथर्वणिकानां शिरोव्रतमिति। एवं पुनरुक्त्याद-
योऽपि भेदहेतवो यथासंभवं वेदान्तान्तरेषु योजयितव्याः। तस्मात् 5
प्रतिवेदान्तं विज्ञानभेद इत्येवं प्राप्ते, ब्रूमः—

प्रकटार्थविवरणम्

वियुक्तं वाजिनमिति विभागः। इदानीं सर्वशाखाधिकरणपूर्वपक्षे हेतुमुदाह-
रति—तथा धर्मविशेषोऽपीति॥ कारीरिवाक्यान्यधीयानास्तैत्तिरीया भूमौ
भोजनमाचरन्ति, नाचरन्त्यन्य इत्यादि धर्मभेदः। भेदकान्तराण्यतिदिशति— 10
एवं पुनरुक्त्यादयोऽपीति॥ "समिधो यजति" इत्यादिः पञ्चकृत्वो यजतिपदा-
भ्यासः पौनरुक्त्यभयाद्भेदकोऽङ्गीकृतः; तथेहापि "ब्रह्म वेद ब्रह्मैव भवति"
"ब्रह्मविदाप्नोति परम्" इति विज्ञानमभ्यस्यमानं भिन्नम्। यथा च यागदानहो-
मानुबन्धभावनाप्रतिपादकशब्दान्तरात्कर्मभेदः समर्थितः; तथा "ब्रह्म-
विदाप्नोति परम्" "तरति शोकमात्मवित्" इति शब्दान्तराद्विज्ञानभेदः। 15
यथा च "सप्तदश प्राजापत्यान् पशून्" इति तद्धितश्रुतिप्रापितद्रव्यदेवतारूपे
सङ्ख्यानिवेशात् सङ्ख्यया कर्मभेदः; तथा "तौ वा एतौ द्वौ संवर्गौ" इति
सङ्ख्यातो विज्ञानभेदः। यथा वा कुण्डपायिनामयने "उपदशभिरुपसन्निभ्य-
रित्वा मासमग्निहोत्रं जुहोति" इत्यत्र प्रसिद्धाग्निहोत्रधर्मविपरीतोपसदादि-
प्रक्रियाभेदात् कर्मान्यत्वम्; तथा वैश्वानराश्वमेधविज्ञानयोरपि प्रकरणभेदादेव 20
भेद इत्यर्थः। विद्यैकत्वं सिद्धान्तमाह—एवं प्राप्ते ब्रूम इति॥

सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्॥

सर्वेषु वेदान्तेषु प्रतीयन्त इति सर्ववेदान्तप्रत्ययानि सर्वशाखाविहितानी-
त्यर्थः। "एकं वा संयोगरूपचोदनाख्याविशेषात्" इति शाखान्तराधिकरणे

१. TM. Space is left out for writing धर्मभेदः भेद.

२. TM omits याग...यथा च.

३. T and T[1]. पि ज्ञान

४. T[1]. यथाह

भाष्यम्

## सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ ३-३-१ ॥

सर्ववेदान्तप्रत्ययानि विज्ञानानि तस्मिन् तस्मिन् वेदान्ते तानि तान्येव भवितुमर्हन्ति ; कुतः ? चोदनाद्यविशेषात् ; आदिग्रहणेन शाखान्त-
5 राधिकरणसिद्धान्तसूत्रोदिता अभेदहेतव इहाकृष्यन्ते—संयोगरूपचो-दनाख्याविशेषादित्यर्थः । यथा एकस्मिन्नग्निहोत्रे शाखाभेदेऽपि पुरुष-प्रयत्नस्तादृश एव चोद्यते—जुहुयादिति, एवम् "यो ह वै ज्येष्ठं च श्रेष्ठं च वेद" इति वाजसनेयिनां छन्दोगानां च तादृश्येव चोदना । प्रयोजनसंयोगोऽप्यविशिष्ट एव—"ज्येष्ठश्च श्रेष्ठश्च स्वानां भवति"
10 इति । रूपमप्युभयत्र तदेव विज्ञानस्य, यदुत ज्येष्ठश्रेष्ठादिगुणविशेषा-न्वितं प्राणतत्त्वम्—यथा च द्रव्यदेवते यागस्य रूपम्, एवं विज्ञेयं रूपं विज्ञानस्य, तेन हि तत् रूप्यते । समाख्यापि सैव—प्राणविद्येति । तस्मात्सर्ववेदान्तप्रत्ययत्वं विज्ञानानाम् । एवं पञ्चाग्निविद्या वैश्वानर-विद्या शाण्डिल्यविद्येत्येवमादिष्वपि योजयितव्यम् । ये तु नामरूपादयो
15 भेदहेत्वाभासाः, ते प्रथम एव काण्डे "न नाम्ना स्यादचोदनाभिधान-त्वात्" इत्यारभ्य परिहृताः ॥

प्रकटार्थविवरणम्

सिद्धान्तसूत्रम् । तत्र चोदनाया विधायकपदस्याविशेषं तावदाह—यथैक-स्मिन्निति ॥ संयोगाविशेषं दर्शयति—प्रयोजनसंयोगोऽपीति ॥ रूपभेदं
20 व्याचष्टे—रूपमिति ॥ आख्याविशेषं व्याख्याति—समाख्यापि सैवेति ॥ एवं सर्वशाखागतस्य प्राणविज्ञानस्य ऐक्यमुक्त्वा सर्वशाखागतपञ्चाग्निविद्या-दीनामपि चोदनाद्यविशेषादेकत्वं द्रष्टव्यमित्याह — एवं पञ्चाग्निविद्येति ॥ परोक्तमनूद्य दूषयति—ये त्विति ॥ काठकमित्यादिनाम्ना न कर्मभेदः स्यात् ; कुतः ? अचोदनाभिधानत्वात् वैदिककर्मनामत्वाभावात् पाठकसंज्ञामात्रत्वा-
25 दित्यर्थः ॥

भाष्यम्

इहापि कंचिद्विशेषमाशङ्क्य परिहरति—

## भेदान्नेति चेन्नैकस्यापि ॥ ३-३-२ ॥

स्यादेतत्—सर्ववेदान्तप्रत्ययत्वं विज्ञानानां गुणभेदात् नोपपद्यते; तथा हि—वाजसनेयिनः पञ्चाग्निविद्यां प्रस्तुत्य षष्ठमपरमग्निमामनन्ति—"तस्याग्निरेवाग्निर्भवति" इत्यादिना; छन्दोगास्तु तं न आमनन्ति, पञ्चसंख्ययैव च ते उपसंहरन्ति—"अथ ह य एतानेवं पञ्चाग्नीन् वेद" इति; येषां च स गुणोऽस्ति, येषां च नास्ति, कथमुभयेषामेका विद्योपपद्येत? न च अत्र गुणोपसंहारः शक्यते प्रत्येतुम्, पञ्चसंख्याविरोधात् । तथा प्राणसंवादे श्रेष्ठादन्यान् चतुरः प्राणान् वाक्चक्षुःश्रोत्रमनांसि छन्दोगा आमनन्ति; वाजसनेयिनस्तु पञ्चममप्यामनन्ति—"रेतो वै प्रजापतिः प्रजायते ह प्रजया पशुभिः य एवं वेद" इति; आवापोद्वापभेदाच्च वेद्यभेदो भवति, वेद्यभेदाच्च विद्याभेदः, द्रव्यदेवताभेदादिव यागस्य इति चेत्—नैष दोषः; यत एकस्यामपि विद्यायामेवंजातीयको गुणभेद उपपद्यते; यद्यपि षष्ठ-

प्रकटार्थविवरणम्

इहापीति ॥ यद्यपि पूर्वतन्त्रे परिहृताः तथापि भिन्नशास्त्रत्वात् क्रियायां ये न्यायास्ते ज्ञाने न संभवन्तीति मनसि निधाय सूत्रकारः परिहरति इत्यर्थः ॥

भेदान्नेति चेन्नैकस्यापि ॥

रूपभेदादुक्तं विज्ञानभेदमुद्भावयति—स्यादेतदित्यादिना ॥ ननु वाजसनेयकगतो योऽग्नि[१]ः षष्ठोऽन्त्येष्टिगतः प्रसिद्धवदुपन्यस्तः, तं छान्दोग्येऽप्युपसंहृत्य रूपैक्यं गृह्यतामित्याशङ्क्याह—न चात्रेति ॥ भवतु प्रजननगुणविशिष्टस्य रेतसो वाजसनेयिनामावापः, छन्दोगानां चोद्धारः[चोद्वापः]; ततः किमित्याशङ्क्याह—आवोपोद्वापभेदाच्चेति ॥ एकस्यामपीति सिद्धान्तभागं व्याचष्टे—नैष दोष इत्यादिना ॥ छन्दोगानां षष्ठाग्न्यभावमङ्गीकृत्य नैतावता विद्याभेद

१. TM and A. योऽग्निश्चान्त्योऽन्त्ये

## भाष्यम्

स्याग्नेरुपसंहारो न संभवति, तथापि द्युप्रभृतीनां पञ्चानामग्नीनाम् उभ-
यत्र प्रत्यभिज्ञायमानत्वात् न विद्याभेदो भवितुमर्हति ; न हि षोडशि-
ग्रहणाग्रहणयोः अतिरात्रो भिद्यते । पठ्यतेऽपि च षष्ठोऽग्निः छन्दोगैः—
5 "तं प्रेतं दिष्टमितोऽग्नय एव हरन्ति" इति ; वाजसनेयिनस्तु सांपा-
दिकेषु पञ्चस्वग्निषु अनुवृत्तायाः समिद्धूमादिकल्पनाया निवृत्तये
"तस्याग्निरेवाग्निर्भवति समित्समित्" इत्यादि समामनन्ति ; स
नित्यानुवादः ; अथाप्युपासनार्थ एष वादः, तथापि स गुणः शक्यते
छन्दोगैरप्युपसंहर्तुम् । न च अत्र पञ्चसंख्याविरोध आशङ्क्यः ; सांपा-
10 दिकाग्न्यभिप्राया हि एषा पञ्चसंख्या नित्यानुवादभूता, न विधि-
समवायिनी—इत्यदोषः । एवं प्राणसंवादादिष्वपि अधिकस्य गुणस्य
इतरत्रोपसंहारो न विरुध्यते । न च आवापोद्वापभेदात् वेद्यभेदो
विद्याभेदश्च आशङ्क्यः, कस्यचिद्वेद्यांशस्य आवापोद्वापयोरपि भूयसो
वेद्यराशेरभेदावगमात् । तस्मादैकविद्यमेव ॥

15 ## प्रकटार्थविवरणम्

इत्युक्तम् । इदानीं तैरपि षष्ठः पठ्यत इत्याह—पठ्यतेऽपि चेति ॥ इतोऽस्मा-
ल्लोकात् ; तदिष्टं परलोकं प्रेतं ज्ञातयोऽग्नये हरन्तीत्यर्थः । तथापि विद्यते विशेषो
वाजसनेयिनाम्, अग्न्यादिसंपादनप्रतीतेः इत्याशङ्क्याह—वाजसनेयिनस्त्विति ॥
तस्योपासकस्य मृतस्य दाहायाग्निरेवाग्निर्भवतीति प्रसिद्धानुवादोऽयं न तु
20 उपासनविधानम् । उपास्यास्तु पञ्चैवाग्नय उभयत्रापीति अविशेष इत्यर्थः ।
इदानीं उपासनार्थत्वं प्रौढवादेनाङ्गीकृत्याह—अथापीति ॥ यदुक्तं पञ्चसंख्या-
विरोध इति तत्राह— न चेति ॥ द्युप्रभृतिषु पञ्चसु अग्नित्वासंपाद्य
[अग्नित्वं संपाद्य] सिद्धमर्थमनुवदति "य एतानेवं पञ्चाग्नीन्वेद" इति ; न तु
ध्येयत्वेन पञ्चसङ्ख्यासङ्कीर्तनमिति भावः । यच्चोक्तं प्राणसंवादे वाजसनेयिनां
25 छन्दोगानां च वैरूप्यमिति, तत्राह—एवं प्राणसंवादादिष्वपीति ॥

भाष्यम्

## स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥ ३-३-३ ॥

यदप्युक्तम्—आथर्वणिकानां विद्यां प्रति शिरोव्रताद्यपेक्षणात् अन्येषां च तदनपेक्षणात् विद्याभेद इति, तत्प्रत्युच्यते। स्वाध्यायस्य 5 एष धर्मः, न विद्यायाः; कथमिदमवगम्यते? यतः तथात्वेन स्वाध्यायधर्मत्वेन, समाचारे वेदव्रतोपदेशपरे ग्रन्थे, आथर्वणिकाः "इदमपि वेदव्रतत्वेन व्याख्यातम्" इति समामनन्ति; "नैतदचीर्णव्रतोऽधीते" इति च अधिकृतविषयादेतच्छब्दात् अध्ययनशब्दाच्च स्वोपनिषदध्ययनधर्म एव एष इति निर्धार्यते। ननु च "तेषामेवैतां ब्रह्मविद्यां 10 वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्" इति ब्रह्मविद्यासंयोगश्रवणात्, एकैव सर्वत्र ब्रह्मविद्येति, संकीर्येत एष धर्मः—न, तत्रापि एतामिति

प्रकटार्थविवरणम्

स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥

एवं तावद्रूपभेदो न भेदक इत्युपपाद्य धर्मविशेषं पराकरोति— 15 यदप्युक्तमित्यादिना ॥ इदमपि शिरोव्रतं वेदव्रतेन गोदानादिना व्याख्यातम्; तद्यथाध्ययनाङ्गं तथेदमपीत्यर्थः। एतत् ग्रन्थरूपम्; अचीर्णव्रतो नाचरितशिरोव्रतः पुमान् नाधीत इति प्रकृतमुण्डकपरामर्शात् एतच्छब्दान्मुण्डकाध्ययनधर्म[1] एवायं न विद्याधर्म इत्यर्थः। "अधिकाराच्च" इति अधिकृतविषयादेतच्छब्दात्। चकारोऽध्ययनशब्दश्चेति व्याख्यातम्। इदानीं शङ्कोत्तरत्वेन 20 व्याचष्टे—ननु चेत्यादिना ॥ एतां ब्रह्मविद्यामिति ॥ ब्रह्मविद्याप्रकाशकमिमं ग्रन्थमिति योजनीयम्। इतरथा विद्यायाः साक्षात्प्रकृतत्वाभावात् प्रकृतविषयैतच्छब्दानुपपत्तेरित्याह—न तत्रापीति ॥ तस्य शिरोव्रतस्य नियमो मुण्ड-

१. A. ध्ययनविद्याधर्मः

भाष्यम्

प्रकृतप्रत्यवमर्शात्; प्रकृतत्वं च ब्रह्मविद्यायाः ग्रन्थविशेषापेक्षम्—इति ग्रन्थविशेषसंयोग्येव एष धर्मः। सववच्च तन्नियम इति निदर्शन-निर्देशः—यथा सवाः सप्त सौर्यादयः शतौदनपर्यन्ताः वेदान्तरो-
5 दितत्रेताग्न्यनभिसंबन्धात् आथर्वणोदितैकाग्न्यभिसंबन्धाच्च आथर्व-णिकानामेव नियम्यन्ते, तथैव अयमपि धर्मः स्वाध्यायविशेषसंबन्धात् तत्रैव नियम्यते। तस्मादप्यनवद्यं विद्यैकत्वम्॥

## दर्शयति च॥ ३-३-४॥

दर्शयति च वेदोऽपि विद्यैकत्वं सर्ववेदान्तेषु वेद्यैकत्वोपदेशात्—
10 "सर्वे वेदा यत्पदमामनन्ति" इति, "तथैतं ह्येव बह्वृचा महत्युक्थे मीमांसन्त एतमग्नावध्वर्यव एतं महाव्रते छन्दोगाः" इति च। तथा "महद्भयं वज्रमुद्यतम्" इति काठके उक्तस्य ईश्वरगुणस्य भयहेतु-त्वस्य तैत्तिरीयके भेददर्शननिन्दायै परामर्शो दृश्यते—"यदा ह्येवैष

प्रकटार्थविवरणम्

15 काध्ययने। "सववच्च" इत्येतद्विवृणोति—यथा सवा इति॥ सवा होमा आथर्वणग्रन्थोक्ताः यथा आथर्वणोदितो य एकर्षिसंज्ञकोऽग्निस्तत्रैव क्रियते तद्वदित्यर्थः॥

दर्शयति च॥

किंच वेद्यैकत्वोपदेशेन ब्रह्मविद्यायास्तावत्सर्वत्रैक्यं दर्शयति। तथाऽपि वेद्यभेदे [वेद्याभेदे] विद्यैक्यं भविष्यतीत्याह—दर्शयति चेति॥ किं च शाखान्त-
20 रोक्तस्य पदार्थस्य शाखान्तरे सिद्धवत्परामर्शदर्शनादप्येकत्वं गम्यत इत्याह—तथा महद्भयमित्यादिना॥ तत्त्वेव तदेव ब्रह्म भयंकरं भवति भेदं विदुषः तत्त्व-ममन्वानस्येत्यर्थः। किंच सर्वेषु वेदान्तेषूक्थादीनां प्रतीयमानत्वेन कारणैनै-तदवगम्यते, अन्यत्र विहितानामन्यत्रोपासनायोपादानमस्तीति; ततस्तदु-पासनानामपि सर्ववेदान्तप्रमाणत्वं सिध्यति बाहुल्येनेत्यर्थः॥

१. A. एकस्मिन्

भाष्यम्

एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति । तत्त्वेव भयं विदुषोऽमन्वानस्य" इति । तथा वाजसनेयके प्रादेशमात्रसंपादितस्य वैश्वानरस्य छान्दोग्ये सिद्धवदुपादानम्—"यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते" इति । तथा सर्ववेदान्तप्रत्ययत्वेन अन्यत्र विहितानामुक्थादीनामन्यत्रोपासनविधानाय उपादानात् प्रायदर्शनन्यायेन उपासनानामपि सर्ववेदान्तप्रत्ययत्वसिद्धिः ॥ 5

[ उपसंहाराधिकरणम् ]

## उपसंहारोऽर्थाभेदाद्विधिशेषवत् समाने च ॥ ३-३-५ ॥ 10

इदं प्रयोजनसूत्रम् । स्थिते चैवं सर्ववेदान्तप्रत्ययत्वे सर्वविज्ञानानाम् अन्यत्रोदितानां विज्ञानगुणानाम्, अन्यत्रापि समाने विज्ञाने उपसंहारो भवति; अर्थाभेदात्—य एव हि तेषां गुणानामेकत्र अर्थो विशिष्टविज्ञानोपकारः, स एवान्यत्रापि; उभयत्रापि हि तदेवैकं विज्ञानम्; तस्मादुपसंहारः । विधिशेषवत्—यथा विधिशेषाणामग्निहोत्रादिधर्माणाम्, तदेव एकमग्निहोत्रादि कर्म सर्वत्रेति, अर्थाभेदादुपसंहरणम्; एवमिहापि । यदि हि विज्ञानभेदो भवेत्, ततो विज्ञानान्तरनिबद्धत्वा- 15

प्रकटार्थविवरणम्

उपसंहारोऽर्थाभेदाद्विधिशेषवत् समाने च ॥

संक्षेपतस्तात्पर्यमाह—इदमिति ॥ पूर्वाधिकरणविचारस्य प्रयोजनमनेन सूत्रेणोच्यत इत्यर्थः । तद्विवृणोति—स्थिते चैवमिति ॥ उक्तमेव व्यतिरेकमुखेनाह — यदि हीति ॥ यथा चाग्नेयसौर्यनिर्वापयोः कर्मणोः भेदेऽपि प्रकृतिविकृतिभावादाग्नेयगतस्येतिकर्तव्यताकलापस्य सौर्यचरुनिर्वापे प्राप्तिः, तथा- 20

१. A adds एवमिति  २. T¹. चाग्नेय॰
T. चाग्नेयः

भाष्यम्

गुणानाम्, प्रकृतिविकृतिभावाभावाच्च न स्यादुपसंहारः; विज्ञानैकत्वे तु नैवमिति। अस्यैव च प्रयोजनसूत्रस्य प्रपञ्चः "सर्वाभेदात्" इत्यारभ्य भविष्यति॥

5 [अन्यथात्वाधिकरणम्]

## अन्यथात्वं शब्दादिति चेन्नाविशेषात्॥ ३-३-६॥

वाजसनेयके "ते ह देवा ऊचुर्हन्तासुरान् यज्ञ उद्गीथेनात्ययामेति ते ह वाचमूचुस्त्वं न उद्गाय" इति प्रक्रम्य वागादीन् प्राणान् असुरपाप्मविद्धत्वेन निन्दित्वा, मुख्यप्राणपरिग्रहः पठ्यते—
10 "अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगायत्" इति। तथा छान्दोग्येऽपि "तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिभविष्यामः" इति प्रक्रम्य इतरान् प्राणान् असुरपाप्मविद्धत्वेन निन्दित्वा, तथैव मुख्यप्राणपरिग्रहः पठ्यते—"अथ

प्रकटार्थविवरणम्

15 भावोऽप्युपासनानां नास्तीत्याह—प्रकृतीति॥ समग्राङ्गसंयुक्तो विधिः प्रकृतिः दर्शपूर्णमासादिः। कतिपयाङ्गसंयुक्तो विकृतिः सौर्यादिः। द्वादशलक्षण्यां हि प्रथमषट्केन प्रकृतिसंबन्धो[बद्धः] विचारः कृतः; चरमेण विकृतिसंबन्धः [बद्धः]; सप्तमे च प्रकृतिगतानां विकृतौ सामान्यातिदेशो निरूपितः; तथेह नास्तीति भावः। उत्तरसूत्रसन्दर्भस्य पौनरुक्त्यं परिहरति—अस्यैव चेति॥

20 अन्यथात्वं शब्दादिति चेन्नाविशेषात्॥

विषयमाह—वाजसनेयक इति॥ तत् तत्रान्योन्याभिभवरूपे सङ्ग्रामे सति; ह किल; देवाः शास्त्रीयेन्द्रियवृत्तयः उद्गीथभक्त्युपलक्षितमौद्गात्रं कर्माजह्रुः आहृतवन्तः प्रारब्धवन्त इत्यर्थः। अनेन कर्मणैनानसुरान् स्वाभाविकेन्द्रियवृत्तिलक्षणानभिभविष्यामः इत्यभिप्रेत्येत्यर्थः। वाक्यद्वयस्य विवक्षितमर्थमाह—

१. TM. प्युपसंहारात्    २. T and T[1] omit च

भाष्यम्

ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासांचक्रिरे” इति । उभयत्रापि च प्राणप्रशंसया प्राणविद्याविधिरध्यवसीयते । तत्र संशयः—किमत्र विद्याभेदः स्यात्, आहोस्वित् विद्यैकत्वमिति । किं तावत् प्राप्तम्? पूर्वेण न्यायेन विद्यैकत्वमिति । ननु न युक्तं विद्यैकत्वम्, प्रक्रमभेदात्; अन्यथा हि प्रक्रमन्ते वाजसनेयिनः, अन्यथा छन्दोगाः—“त्वं न उद्गाय” इति वाजसनेयिनः उद्गीथस्य कर्तृत्वेन प्राणमामनन्ति, छन्दोगास्तु उद्गीथत्वेन “तमुद्गीथमुपासांचक्रिरे” इति, तत्कथं विद्यैकत्वं स्यात् इति चेत्—नैष दोषः; न हि एतावता विशेषेण विद्यैकत्वमपगच्छति, अविशेषस्यापि बहुतरस्य प्रतीयमानत्वात्; तथा हि—देवासुरसंग्रामोपक्रमत्वम्, असुरात्ययाभिप्रायः, उद्गीथोपन्यासः, वागादिसंकीर्तनम्, तन्निन्दया मुख्यप्राणव्यपाश्रयः, तद्वीर्याच्च असुरविध्वंसनम् अश्मलोष्टनिदर्शनेन इत्येवं बहवोऽर्था उभयत्राप्यविशिष्टाः प्रतीयन्ते । वाजसनेयकेऽपि च उद्गीथसामानाधिकरण्यं

प्रकटार्थविवरणम्

उभयत्रापि चेति ॥ भेदाभेदप्रमाणाभ्यां संशयमाह—तत्रेति ॥ पूर्वपक्षमाह—विद्यैकत्वमिति ॥ पूर्वत्राख्याविशेषात् विद्यैक्यमुक्तम्; तथेहापि उद्गीथविद्येत्याख्याविशेषादैक्यमित्यर्थः । “अन्यथात्वं शब्दादिति चेत्” इति सिद्धान्तशङ्काभागं व्याचष्टे—ननु न युक्तमित्यादिना ॥ सकलोद्गीथभक्तेः कर्ता प्राण उपास्यो वाजसनेयके; छान्दोग्ये तूद्गीथभक्त्यवयव ओंकारः प्राणदृष्ट्योपास्य इति; अन्यथात्वं भिन्नत्वम्; शब्दादवगम्यत इत्यर्थः । “नाविशेषात्”[1] इति पूर्वपक्षभागं विभजते—नैष दोष इत्यादिना ॥ यथाश्मभेदाभिप्रायेणाश्मनि क्षिप्तो लोष्टो विध्वंसते, तथा मुख्यप्राणस्याभिभवाभिप्रायमात्रेणासुराणां विध्वंसनमित्याह—अश्मलोष्टनिदर्शनेनेति ॥ पूर्वमल्पं वैलक्षण्यमङ्गीकृत्य बहुतरार्थवादसारूप्यात् विद्यैक्यमुक्तम्; इदानीमल्पमपि वैलक्षण्यं नास्तीत्याह—वाजसनेयकेऽपि चेति ॥ यथा

१. T[1] adds पूर्वपक्षमार्गं विभजते.

भाष्यम्

प्राणस्य श्रुतम्—"एष उ वा उद्गीथः" इति। तस्माच्छान्दोग्येऽपि कर्तृत्वं लक्षयितव्यम्। तस्माच्च विद्यैकत्वमिति ॥

# न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॥ ३-३-७ ॥

5 न वा विद्यैकत्वमत्र न्याय्यम्; विद्याभेद एव अत्र न्याय्यः; कस्मात्? प्रक्रमभेदात्, प्रकरणभेदादित्यर्थः; तथा हि इह प्रक्रमभेदो दृश्यते—छान्दोग्ये तावत् "ओमित्येतदक्षरमुद्गीथमुपासीत" इत्येवमुद्गीथावयवस्य ओंकारस्य उपास्यत्वं प्रस्तुत्य, रसतमत्वादिगुणोपव्याख्यानं तत्र कृत्वा "अथ खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवति"

10 इति पुनरपि तमेव उद्गीथावयवमोङ्कारमनुवर्त्य, देवासुराख्यायिकाद्वारेण "तं प्राणमुद्गीथमुपासांचक्रिरे" इत्याह; तत्र यदि उद्गीथशब्देन सकला भक्तिरभिप्रेयेत, तस्याश्च कर्ता उद्गाता ऋत्विक्, तत्र

प्रकटार्थविवरणम्

छान्दोग्ये "तमुद्गीथम्" इति प्राणसामानाधिकरण्यमुद्गीथस्य तथा वाजसने-

15 यकेऽपीति नास्ति वैषम्यमित्यर्थः। यच्च वाजसनेयके प्राणस्योद्गीथभक्तिकर्तृत्वं तच्छान्दोग्येऽपि द्रष्टव्यमित्याह—तस्मादिति ॥

न वा प्रकरणभेदात् परोवरीयस्त्वादिवत् ॥

सिद्धान्तसूत्रं योजयति—न वेत्यादिना ॥ ओमित्येतदक्षरम्; कथंभूतम्? उद्गीथं उद्गीथभक्त्यवयवम्; उद्गाता हि उद्गीथभक्तिं कुर्वन्नोमित्येवमुपक्रमते। उद्गी-

20 थशब्दलक्ष्यमुपासीतेत्युपक्रम्य कथमुपासीतेत्याकाङ्क्षायाम् "स एष रसानां रसतमः परार्ध्यः" इत्यादिना तत्रैव गुणविधानं कृतमित्यर्थः। ननु यद्यपि छान्दोग्येऽन्यथोपक्रमोऽस्ति, तथापि साममक्तेः सामावयवस्य कर्ता कल्प्यतामित्याशङ्क्याह—तत्र यद्युद्गीथशब्देनेति ॥ अविरोधे हि कल्पना कल्पते। अत्र च ओङ्कारोपक्रमो विरुध्यते। वृथैव मुख्यार्थत्यागश्च प्रसज्यत इत्यर्थः। ननु

१. T¹ adds परमः

भाष्यम्

उपक्रमश्चोपरुध्येत, लक्षणा च प्रसज्येत, उपक्रमतन्त्रेण च एकस्मिन्वाक्ये उपसंहारेण भवितव्यम्; तस्मात् अत्र तावत् उद्गीथावयवे ओंकारे प्राणदृष्टिरुपदिश्यते; वाजसनेयके तु—उद्गीथशब्देन अवयवग्रहणे कारणाभावात् सकलैव भक्तिरावेद्यते; "त्वं न उद्गाय" इत्यपि तस्याः कर्ता उद्गाता ऋत्विक् प्राणत्वेन निरूप्यत इति—प्रस्थानान्तरम्। यदपि तत्र उद्गीथसामानाधिकरण्यं प्राणस्य, तदपि उद्गातृत्वेनैव दिदर्शयिषितस्य प्राणस्य सर्वात्मत्वप्रतिपादनार्थमिति न विद्यैकत्वमावहति। सकलभक्तिविषय एव च तत्रापि उद्गीथशब्द इति वैषम्यम्। न च प्राणस्य उद्गातृत्वम् असंभवेन हेतुना परित्यज्यते, उद्गीथभाववत् उद्गातृभावस्यापि उपासनार्थत्वेन उपदिश्यमानत्वात्; प्राणवीर्येणैव च उद्गाता औद्गात्रं करोतीति नास्त्यसंभवः। तथा च तत्रैव श्रावितम्—"वाचा च ह्येव स प्राणेन चोदगायत्" इति। न च विवक्षितार्थभेदेऽवगम्यमाने वाक्यछायानुकारमात्रेण समानार्थत्व-

प्रकटार्थविवरणम्

उपक्रमोऽकिंचित्करः; उपसंहारवाक्ये अन्यथैवार्थो गृह्यतां वाक्यान्तरानुसारेणेत्याशङ्क्याह —उपक्रमतन्त्रेणेति ॥ इदानीं छन्दोगविलक्षणमेव वाजसनेयकोपक्रममाह —वाजसनेयके त्विति ॥ यच्च प्राणस्योद्गीथसामानाधिकरण्यसाम्यमुक्तं तद्दूषयति — यदपीति ॥ किं च तत्सामानाधिकरण्यं छान्दोग्य इव नोद्गीथावयवेनोङ्कारेणेत्याह— सकलभक्तीति ॥ ननु प्राणस्योद्गातृत्वासंभवात् तत्परित्यज्य छान्दोग्यसाम्यं वाजसनेयकेऽपि गृह्यतामित्याशङ्क्याह—न च प्राणस्येति ॥ यच्चोक्तं बह्वर्थवादसारूप्यं दृश्यत इति तत्राह—न च विवक्षितार्थभेद इति ॥ एकत्रोद्गाता प्राण उपास्यः; परत्र

१. A adds उक्तं
२. TM. न तु
३. TM. प्राणश्चेति

भाष्यम्

मध्यवसातुं युक्तम्; तथा हि—अभ्युदयवाक्ये पशुकामवाक्ये च "त्रेधा तण्डुलान् विभजेद्ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्यात्" इत्यादिनिर्देशसाम्येऽपि उपक्रमभेदात् अभ्युदयवाक्ये देवताप-
5 नयोऽध्यवसितः, पशुकामवाक्ये तु यागविधिः—तथा इहापि उपक्रम-भेदात् विद्याभेदः। परोवरीयस्त्वादिवत्—यथा परमात्मदृष्टयध्यास-साम्येऽपि, "आकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम्" "स एष परोवरीयानुद्गीथः स एषोऽनन्तः" इति परोवरीयस्त्वादिगुणविशिष्टं

प्रकटार्थविवरणम्

10 ओंकारे प्राणदृष्ट्या उपासनमित्यन्तरङ्गोपास्यरूपभेदस्य बहिरङ्गादर्थवादा-विशेषात् बलवत्तरत्वाद्रूपभेदाद्विद्याभेदो युज्यत इति भावः। वाक्यसादृश्य-मात्रेणैकार्थत्वं नास्तीत्यत्रोदाहरणमाह—तथा हीति॥ चतुर्दश्यामेवामास्या-भ्रान्त्या दर्शकर्मार्थं प्रवृत्तस्य यस्य चन्द्रमा अभ्युदेति तद्विषयं वाक्यं अभ्युदय-वाक्यम्। तस्मिन्नभ्युदयवाक्ये पशुकामस्य इष्टिविधायकवाक्ये च यद्यपि
15 "त्रेधा तण्डुलान् विभजेद्ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्याद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे" इत्यादिनिर्देशः तुल्यः, तथापि "वि वा एनं प्रजया पशुभिरर्धयति वर्धयत्यस्य भ्रातृव्यं यस्य हविर्निरुप्तं पुर-स्ताच्चन्द्रमा अभ्युदेति" इति कालातिक्रमादभ्युदयवाक्ये नित्यदर्शकर्मण्येव पूर्वदेवतापनयनेन दातृत्वादिगुणविशिष्टदेवताङ्गीकारः; पशुकामवाक्ये च
20 "यः पशुकामः स्यात् सोऽमावास्यामिष्ट्वा वत्सानपाकुर्यात्" इति नित्यं दर्श-कर्म परिसमाप्य पुनर्दोहार्थं वत्सापाकरणविधानोपक्रमात् पशुकामस्येष्टयन्तर-विधानमङ्गीकृतमित्यर्थः। पूर्वतन्त्रसिद्धदृष्टान्तं बहिरेवोक्त्वा सौत्रं व्याचष्टे—परोवरीयस्त्वादिवदिति॥

१. A. वाक्यतो दर्श
२. T. विरोधेनोप
३. TM and T. पूर्वतन्त्रदृष्टान्तं
A. पूर्वतन्त्रोदाहृतं दृष्टान्तं

भाष्यम्

उद्गीथोपासनं अक्ष्यादित्यादिगतहिरण्यश्मश्रुत्वादिगुणविशिष्टोद्गीथोपासनात् भिन्नम्; न च इतरेतरगुणोपसंहारः एकस्यामपि शाखायाम्—तद्वत् शाखान्तरस्थेष्वपि एवंजातीयकेषु उपासनेष्विति ॥

## संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥ ३-३-८ ॥ 5

अथोच्येत—संज्ञैकत्वात् विद्यैकत्वमत्र न्याय्यम्, उद्गीथविद्येत्युभयत्रापि एका संज्ञेति, तदपि नोपपद्यते; उक्तं ह्येतत्—"न वा प्रकरणभेदात् परोवरीयस्त्वादिवत्" इति। तदेव च अत्र न्याय्यतरम्, श्रुत्यक्षरानुगतं हि तत्; संज्ञैकत्वं तु श्रुत्यक्षरबाह्यम् उद्गीथशब्दमात्रयोगात् लौकिकैर्व्यवहर्तृभिरुपचर्यते। अस्ति च एतत्संज्ञैकत्वं प्रसिद्ध- 10 भेदेष्वपि परोवरीयस्त्वाद्युपासनेषु—उद्गीथविद्येति; तथा प्रसिद्धभेदानामपि अग्निहोत्रदर्शपूर्णमासादीनां काठकैकग्रन्थपरिपठितानां काठकसंज्ञैकत्वं दृश्यते, तथेहापि भविष्यति। यत्र तु नास्ति कश्चित् एवंजातीयको भेदहेतुः, तत्र भवतु संज्ञैकत्वात् विद्यैकत्वम्—यथा संवर्गविद्यादिषु ॥

प्रकटार्थविवरणम् 15

संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥

पूर्वपक्षबीजमुद्भाव्य दूषयति—संज्ञातश्चेदिति ॥ श्रुत्यक्षरानुगतं हि तदिति ॥ प्रक्रमभेदेन यद्वेद्यरूपवैलक्षण्यमुक्तं तच्छ्रुत्यक्षरानुसारित्वेन बलवदित्यर्थः। "अस्ति तु तदपि"इत्यस्यार्थमाह—अस्ति चैतदिति ॥ ननु संज्ञैकत्वं चेदव्यभिचारि कथं तर्ह्याद्ये सूत्रे दर्शितमित्याशङ्क्याह—यत्र तु नास्तीति ॥ 20 असति बलवदपवादकसन्निपाते तदपि मानमित्यर्थः ॥

१. A. अङ्गीकृत्यादपि

भाष्यम्

[ व्याप्त्यधिकरणम् ]

## व्याप्तेश्च समञ्जसम् ॥ ३-३-९ ॥

"ओमित्येतदक्षरमुद्गीथमुपासीत" इत्यत्र अक्षरोद्गीथशब्दयोः सामा-
5 नाधिकरण्ये श्रूयमाणे अध्यासापवादैकत्वविशेषणपक्षाणां प्रतिभासनात्
कतमोऽत्र पक्षः न्याय्यः स्यादिति विचारः । तत्र अध्यासो नाम—द्वयोर्व-
स्तुनोः अनिवर्तितायामेव अन्यतरबुद्धौ अन्यतरबुद्धिरध्यस्यते ; यस्मिन्
इतरबुद्धिरध्यस्यते, अनुवर्तेत एव तस्मिन् तद्बुद्धिः, अध्यस्तेतरबुद्धावपि—
यथा नाम्नि ब्रह्मबुद्धावध्यस्यमानायामपि अनुवर्तेत एव नामबुद्धिः,
10 न ब्रह्मबुद्ध्या निवर्तते—यथा वा प्रतिमादिषु विष्ण्वादिबुद्ध्यध्यासः,
एवमिहापि अक्षरे उद्गीथबुद्धिरध्यस्यते, उद्गीथे वा अक्षरबुद्धिरिति ।
अपवादो नाम—यत्र कस्मिंश्चिद्वस्तुनि पूर्वनिविष्टायां मिथ्याबुद्धौ
निश्चितायाम्, पश्चादुपजायमाना यथार्था बुद्धिः पूर्वनिविष्टाया मिथ्या-
बुद्धेः निवर्तिका भवति—यथा देहेन्द्रियसंघाते आत्मबुद्धिः, आत्मन्येव
15 आत्मबुद्ध्या पश्चाद्भाविन्या "तत्त्वमसि" इत्यनया यथार्थबुद्ध्या निव-
र्त्यते—यथा वा दिग्भ्रान्तिबुद्धिः दिग्याथात्म्यबुद्ध्या निवर्त्यते—एव-
मिहापि अक्षरबुद्ध्या उद्गीथबुद्धिः निवर्त्येत, उद्गीथबुद्ध्या वा अक्षरबुद्धि-
रिति । एकत्वं तु अक्षरोद्गीथशब्दयोः अनतिरिक्तार्थवृत्तित्वम्—यथा
द्विजोत्तमो ब्राह्मणो भूमिदेव इति । विशेषणं पुनः सर्ववेदव्यापिन
20 ओमित्येतस्याक्षरस्य ग्रहणप्रसक्तौ औद्गात्रविशेषस्य समर्पणम्—यथा
नीलं यदुत्पलं तदानयेति, एवमिहापि उद्गीथो य ओङ्कारः तमुपासी-

प्रकटार्थविवरणम्

व्याप्तेश्च समञ्जसम् ॥

पूर्वस्मिन्नधिकरणे सिद्धवदुद्गीथप्रकरणवय ओंकार उपास्य इति वाक्यार्थ-
25 मुपादाय प्रक्रमभेदो दर्शितः । इदानीं स एव वाक्यार्थो विचार्यत इत्याह—
ओमित्येतदक्षरमिति ॥ अध्यासादिपदार्थापरिज्ञाने हानमुपादानं वा
न शक्यमिति पदार्थान् कथयति—तत्राध्यास इत्यादिना ॥ इदानीं पूर्वपक्ष-

भाष्यम्

तेति । एवमेतस्मिन् सामानाधिकरण्यवाक्ये विमृश्यमाने एते पक्षाः प्रतिभान्ति ; तत्रान्यतमानिर्धारणकारणाभावात् अनिर्धारणप्राप्तौ—

इदमुच्यते—व्याप्तेश्च समञ्जसमिति । चशब्दोऽयं तुशब्दस्थाननिवेशी पक्षत्रयव्यावर्तनप्रयोजनः । तदिह त्रयः पक्षाः सावद्या इति 5 पर्युदस्यन्ते ; विशेषणपक्ष एवैको निरवद्य इत्युपादीयते । तत्राध्यासे तावत्—या बुद्धिरितरत्र अध्यस्यते, तच्छब्दस्य लक्षणावृत्तित्वं प्रसज्येत, तत्फलं च कल्प्येत ; श्रूयत एव फलम्, "आपयिता ह वै कामानां भवति" इत्यादि इति चेत्—न तस्य अन्यफलत्वात् ; आप्त्यादिदृष्टिफलं हि तत्, नोद्गीथाध्यासफलम् । अपवादेऽपि समानः 10 फलाभावः ; मिथ्याज्ञाननिवृत्तिः फलमिति चेत्, न ; पुरुषार्थोपयोगानवगमात् ; न च कदाचिदपि ओङ्कारादोङ्कारबुद्धिः निवर्तेत, उद्गीथाद्वा

प्रकटार्थविवरणम्

मुपन्यस्य सिद्धान्तमाह—तत्रान्यतमेत्यादिना ॥

कथं पक्षत्रयस्य दुष्टत्वमित्याकाङ्क्षायां प्रथममध्यासे दोषमाह—तत्रा- 15 ध्यासे तावदिति ॥ या उद्गीथबुद्धिरितरत्र ओङ्कारेऽध्यस्यते, तस्योद्गीथशब्दस्य सामभागे रूढस्योङ्कारे मुख्यवृत्त्यसंभवात् लक्षणाश्रयणीया; निष्फलोपासनविधानासंभवात् फलमपि कल्पनीयमिति गौरवं स्यादित्यर्थः । वाक्यशेषे फलस्य श्रूयमाणत्वान्न कल्पना कार्येत्याह —श्रूयत एवेति ॥ परिहरति — न तस्येति ॥ आप्तिगुणविशिष्टं ओङ्कारं य उद्गातोपास्ते[1] स यजमानस्य कामानां 20 प्रापयिता भवति उद्गानेनेत्यर्थः । अपवादपक्षे दोषमाह—अपवादेऽपीति ॥ किंच यथोद्गीथबुद्धिरपवादिका भवति ओङ्कारबुद्धेः, तदा ओङ्कारबुद्धिः मिथ्याज्ञानमिति निवर्तेतोङ्कारात्; न च निवर्तेत इत्याह—न च कदाचिदपीति ॥ किंच वस्तुयाथात्म्यप्रकाशकात् वाक्यात्तत्त्वज्ञानोदयेन भ्रमनिवृत्तिर्भ-

१. A. उद्गीथत्वेनोपास्ते

भाष्यम्

उद्गीथबुद्धिः ; न चेदं वाक्यं वस्तुतत्त्वप्रतिपादनपरम्, उपासना-
विधिपरत्वात् । नापि एकत्वपक्षः संगच्छते ; निष्प्रयोजनं हि तदा
शब्दद्वयोच्चारणं स्यात्, एकेनैव विवक्षितार्थसमर्पणात् । न च हौत्र-
5 विषये आध्वर्यवविषये वा अक्षरे ओंकारशब्दवाच्ये उद्गीथशब्दप्रसि-
द्धिरस्ति, नापि सकलायां साम्नो द्वितीयायां भक्तौ उद्गीथशब्दवाच्या-
यां ओंकारशब्दप्रसिद्धिः, येनानतिरिक्तार्थता स्यात् । परिशेषाद्विशेषण-
पक्षः परिगृह्यते, व्याप्तेः सर्ववेदसाधारण्यात् ; सर्वव्याप्यक्षरमिह मा
प्रसाङ्क्षि— इत्यत उद्गीथशब्देन अक्षरं विशेष्यते— कथं नाम उद्गीथाव-
10 यवभूत ओंकारो गृह्येतेति । नन्वस्मिन्नपि पक्षे समाना लक्षणा उद्गीथ-
शब्दस्य अवयवलक्षणार्थत्वात् ; सत्यमेवमेतत् ; लक्षणायामपि तु
संनिकर्षविप्रकर्षौ भवत एव ; अध्यासपक्षे हि अर्थान्तरबुद्धिरर्थान्तरे
निक्षिप्यते इति विप्रकृष्टा लक्षणा, विशेषणपक्षे तु अवयविवचनेन शब्देन
अवयवः समर्प्यत इति संनिकृष्टा ; समुदायेषु हि प्रवृत्ताः शब्दाः अवयवे-
15 ष्वपि वर्तमाना दृष्टाः पटग्रामादिषु । अतश्च व्याप्तेर्हेतोः "ओमित्येतदक्ष-
रम्" इत्येतस्य "उद्गीथम्" इत्येतद्विशेषणमिति समञ्जसमेतत् निर-
वद्यमित्यर्थः ॥

प्रकटार्थविवरणम्

यति, नेदं तथेत्याह—न चेदं वाक्यमिति ॥ एकत्वपक्षे दोषमाह—नापीति ॥
20 ओङ्कारोद्गीथशब्दयोः अपर्यायशब्दत्वाच्च नैकार्थत्वमित्याह — न च हौत्र-
विषय इति ॥ परिशेषेति ॥ परिशेषसिद्धे सिद्धान्ते सूत्रं योजयति—
व्याप्तेरिति ॥ पूर्वं लक्षणाप्रसङ्गेनाध्यासपक्षो दूषितः । इदानीं तद्दूषणं
तवापि समानमित्याह — नन्विति ॥ अर्धाङ्गीकारेण विप्रकृष्टलक्षणैव तव
दूषणमित्याह—सत्यमेवमिति ॥

भाष्यम्

[ सर्वाभेदाधिकरणम् ]

## सर्वाभेदादन्यत्रेमे ॥ ३-३-१० ॥

वाजिनां छन्दोगानां च प्राणसंवादे श्रैष्ठ्यगुणान्वितस्य प्राणस्यो-
पास्यत्वमुक्तम्; वागादयोऽपि हि तत्र वसिष्ठत्वादिगुणान्विता उक्ताः;
ते च गुणाः प्राणे पुनः प्रत्यर्पिताः—"यद्वा अहं वसिष्ठास्मि त्वं तद्व- 5
सिष्ठोऽसि" इत्यादिना। अन्येषामपि तु शाखिनां कौषीतकिप्रभृतीनां
प्राणसंवादेषु "अथातो निःश्रेयसादानम्" "एता ह वै देवता
अहंश्रेयसे विवदमानाः" इत्येवंजातीयकेषु प्राणस्य श्रैष्ठ्यमुक्तम्, न
त्विमे वसिष्ठत्वादयोऽपि गुणा उक्ताः। तत्र संशयः—किमिमे वसिष्ठ-
त्वादयो गुणाः क्वचिदुक्ता अन्यत्रापि अस्येरन् उत नास्येरन्निति। 10
तत्र प्राप्तं तावत् नास्येरन्निति; कुतः? एवंशब्दसंयोगात्; "अथो
य एवं विद्वान्प्राणे निःश्रेयसं विदित्वा" इति हि तत्र तत्र एवं-
शब्देन वेद्यं वस्तु निवेद्यते; एवंशब्दश्च संनिहितावलम्बनः न शाखा-

10　　प्रकटार्थविवरणम्

सर्वाभेदादन्यत्रेमे ॥ 15

विचारविषयं दर्शयितुमपि[मवि]प्रतिपन्नमर्थमाह—वाजिनामिति॥ वाग्व-
सिष्ठत्वगुणः, वाग्मी हि सुखं लोके वसति। तथा चक्षुः प्रतिष्ठागुणम्,
चक्षुष्मतः पादप्रतिष्ठादर्शनात्; श्रोत्रं सम्पद्गुणम्, श्रोत्रवत एव श्रवणार्थाव-
धारणधर्मसंपत्तिसंभवात्; मन आयतनगुणम्, भोग्यानां तत्र विधानात्—
इत्येवं वागादय उक्ता इत्यर्थः। अनन्तरं चान्वयव्यतिरेकाभ्यां वागाद्यवसानस्य 20
प्राणाद्यधीनत्वात् स्वगुणा वागादिभिः प्राणे समर्पिता इत्यर्थः। निःश्रेयसम्
श्रैष्ठ्यं तस्यादानम् निर्धारणं प्रस्तुतमित्यर्थः। एवंशब्दात् श्रेष्ठत्वादिधर्मि-
प्रत्यभिज्ञानाच्च संशयमाह—तत्रेति॥ पूर्वपक्षं गृह्णाति—तत्र प्राप्तं तावदिति॥
पूर्वमोद्गीथविशेषणेन व्यापकोङ्कारव्यवच्छेदो यथोक्तः, तथेहापि विधेयत्व-

१. T¹ यितुं विप्रतिपन्नं　　३. A. कर्म
२. A. वसिष्ठगुणः

भाष्यम्

न्तरपरिपठितमेवंजातीयकं गुणजातं शक्नोति निवेदयितुम्; तस्मात् स्वप्रकरणस्थैरेव गुणैर्निराकाङ्क्षत्वमित्येवं प्राप्ते—प्रत्याह—अस्येरन् इमे गुणाः क्वचिदुक्ता वसिष्ठत्वादयोऽन्यत्रापि । कुतः? सर्वाभेदात्—
5 सर्वत्रैव हि तदेव एकं प्राणविज्ञानमभिन्नं प्रत्यभिज्ञायते, प्राणसंवादादिसारूप्यात्; अभेदे च विज्ञानस्य कथमिमे गुणाः क्वचिदुक्ता अन्यत्र न अस्येरन् । ननु एवंशब्दः तत्र तत्र भेदेन एवंजातीयकं गुणजातं वेद्यत्वाय समर्पयतीत्युक्तम्; अत्रोच्यते—यद्यपि कौषीतकिब्राह्मणगतेन एवंशब्देन वाजसनेयिब्राह्मणगतं गुणजातम् असंशब्दि-
10 तम् असंनिहितत्वात्, तथापि तस्मिन्नेव विज्ञाने वाजसनेयिब्राह्मणगतेन एवंशब्देन तत्संशब्दितमिति—न परशाखागतमपि अभिन्नविज्ञानावरुद्धं गुणजातं स्वशाखागताद्विशिष्यते; न चैवं सति श्रुतहानिः अश्रुतकल्पना वा भवति; एकस्यामपि हि शाखायां श्रुता

प्रकटार्थविवरणम्

15 विधिप्रसक्तव्याप्तेः प्राणगुणगणस्य "एवं विद्वान्" इति विशेषणात् शाखान्तरे व्यवच्छेद इत्यर्थः । सिद्धान्ते सूत्रं योजयति—अस्येरन्निति ॥ पूर्वपक्षबीजमनूद्य दूषयति—नन्वेवमित्यादिना ॥ वाजसनेयब्राह्मणगतेन तावदेवंशब्देन वसिष्ठत्वादिगुणजातस्य प्राणविज्ञानसंबन्धः सिद्धः[1]; तदेव च प्राणविज्ञानं कौषीतकिब्राह्मणेऽपि प्रत्यभिज्ञायते । अतः तद्गतेनाप्येवंशब्देनार्थाद्वसिष्ठत्वा-
20 दिगुणजातं परामृष्टमित्यविशेष इत्यर्थः । किंचार्थाच्छाखान्तरीयगुणपरामर्शकल्पने श्रुताल्पगुणहानिरश्रुतबहुगुणकल्पनेत्ययमपि दोषो नास्तीत्याह—न चैवं सतीति ॥ कौषीतकिगतश्रेष्ठप्राणो वसिष्ठत्वादिगुणवान्, श्रेष्ठत्वात्, वाजसनेयिब्राह्मणश्रेष्ठप्राणवत्—इत्यनुमानानुगृहीतेनैवंशब्देन परामर्शात् वासि-

१. T and A omit सिद्धः    २. T and T¹. कल्पगुणहानिः

भाष्यम्

गुणाः श्रुता एव सर्वत्र भवन्ति, गुणवतो भेदाभावात् । न हि देवदत्तः शौर्यादिगुणत्वेन स्वदेशे प्रसिद्धो देशान्तरं गतः तद्देश्यैरविभावित-शौर्यादिगुणोऽपि अतद्गुणो भवति; तथा च तत्र परिचयविशेषात् देशान्तरेऽपि देवदत्तगुणा विभाव्यन्ते, एवम् अभियोगविशेषात् शाखान्तरेऽप्युपास्या गुणाः शाखान्तरेऽप्यस्येरन् । तस्मादेकप्रधान-संबद्धा धर्मा एकत्राप्युच्यमानाः सर्वत्रैव उपसंहर्तव्या इति ॥ 5

[ आनन्दाद्यधिकरणम् ]

## आनन्दादयः प्रधानस्य ॥ ३-३-११ ॥

ब्रह्मस्वरूपप्रतिपादनपरासु श्रुतिषु आनन्दरूपत्वं विज्ञानघनत्वं सर्व-गतत्वं सर्वात्मत्वम् इत्येवंजातीयका ब्रह्मणो धर्माः क्वचित् केचित् श्रूयन्ते। 10 तेषु संशयः—किमानन्दादयो ब्रह्मधर्मा यत्र यावन्तः श्रूयन्ते तावन्त एव तत्र प्रतिपत्तव्याः, किं वा सर्वे सर्वत्रेति । तत्र यथाश्रुतिविभागं धर्मप्रतिपत्तौ प्राप्तायाम्, इदमुच्यते—आनन्दादयः प्रधानस्य ब्रह्मणो धर्माः सर्वे सर्वत्र प्रतिपत्तव्याः; कस्मात्? सर्वाभेदादेव—सर्वत्र हि

प्रकटार्थविवरणम् 15

छत्वादयः श्रुता एवेत्यर्थः । उक्तमर्थं दृष्टान्तेन द्रढयति—न हीति ॥ अधि-करणसिद्धान्तमुपसंहरति — तस्मादिति ॥

आनन्दादयः प्रधानस्य ॥

विषयं दर्शयति —ब्रह्मस्वरूपेति ॥ ब्रह्मैकत्वनिर्विशेषत्वाभ्यां संशय-माह—तेषु संशय इति ॥ सविशेषे प्राणादौ गुणोपसंहारो युज्यते; निर्वि- 20 शेषं तु ब्रह्म; तदेकस्मादपि पदात्प्रतिपन्नं चेत्तर्हि प्रतिपन्नमेवेति तत्र पदान्त-रोपसंहारो व्यर्थ इत्यभिप्रेत्याह —तत्र यथाश्रुतीति ॥ सिद्धान्तमाह — आनन्दादय इति ॥ यद्यपि निर्विशेषं सर्वशाखास्वाख्यायते ब्रह्म, तथाप्य-

१. T and T¹. प्राणोपसंहारः

भाष्यम्

तदेव एकं प्रधानं विशेष्यं ब्रह्म न भिद्यते; तस्मात्सार्वत्रिकत्वं ब्रह्म-धर्माणाम्—तेनैव पूर्वाधिकरणोदितेन देवदत्तशौर्यादिनिदर्शनेन ॥

ननु एवं सति प्रियशिरस्त्वादयोऽपि धर्माः सर्वे सर्वत्र संकीर्ये-
5 रन्; तथा हि तैत्तिरीयक आनन्दमयमात्मानं प्रक्रम्य आम्नायते—"तस्य प्रियमेव शिरः। मोदो दक्षिणः पक्षः। प्रमोद उत्तरः पक्षः। आनन्द आत्मा। ब्रह्म पुच्छं प्रतिष्ठा" इति। अत उत्तरं पठति—

## प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ ३-३-१२ ॥

10 प्रियशिरस्त्वादीनां धर्माणां तैत्तिरीयके आम्नातानां नास्ति अन्यत्र प्राप्तिः; यत्कारणम्—प्रियं मोदः प्रमोद आनन्द इत्येते—परस्परापेक्षया भोक्त्रन्तरापेक्षया च उपचितापचितरूपा उपलभ्यन्ते; उपचयाप-चयौ च सति भेदे संभवतः; निर्भेदं तु ब्रह्म "एकमेवाद्वितीयम्" इत्यादिश्रुतिभ्यः। न च एते प्रियशिरस्त्वादयो ब्रह्मधर्माः, कोशधर्मास्तु
15 एते इत्युपदिष्टमस्माभिः "आनन्दमयोऽभ्यासात्" इत्यत्र। अपि च

प्रकटार्थविवरणम्

नृतजडपरिच्छेदानात्मत्वादिव्यावृत्तिमन्तरेण सर्वविरोधिविनिर्मुक्तब्रह्मस्वरूप-प्रतिपत्त्ययोगात् सकलानिष्टव्यवच्छेदेन ब्रह्मस्वरूपोपलक्षकाः[1] आनन्दत्वादि-सामान्यरूपाः पदार्थाः ब्रह्मण्यध्यस्तत्वेन तद्धर्माः सर्वत्रोपसंहर्तव्याः इति
20 अपुनरुक्तपदोपसंहारासिद्धिरिति भावः ॥

शङ्कापूर्वकं सूत्रान्तरमवतारयति—नन्वेवं सतीत्यादिना ॥

प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥

किं च एतेषां ब्रह्मधर्मत्वाभावादेव नास्ति ब्रह्मवाक्ये प्राप्तिरित्याह—न चैते प्रियशिरस्त्वादय इति ॥ किमर्थं तर्हि[2]इदं सूत्रमित्याशङ्क्याह —ब्रह्म-

१. TM. लक्षणाः　　२. T and T[1] omit तर्हि

भाष्यम्

परस्मिन् ब्रह्मणि चित्तावतारोपायमात्रत्वेन एते परिकल्प्यन्ते, न द्रष्टव्यत्वेन ; एवमपि सुतरामन्यत्राप्राप्तिः प्रियशिरस्त्वादीनाम् । ब्रह्म-धर्मास्तु एतान्कृत्वा न्यायमात्रमिदम् आचार्येण प्रदर्शितम्—प्रियशिर-स्त्वाद्यप्राप्तिरिति ; स च न्यायः अन्येषु निश्चितेषु ब्रह्मधर्मेषु उपासना- 5
योपदिश्यमानेषु नेतव्यः—संयद्वामादिषु सत्यकामादिषु च ; तेषु हि सत्यपि उपास्यस्य ब्रह्मण एकत्वे, प्रकमभेदादुपासनाभेदे सति, नान्यो-न्यधर्माणाम् अन्योन्यत्र प्राप्तिः ; यथा च द्वे नार्यौ एकं नृपतिमुपासाते, छत्रेण अन्या चामरेण अन्या, तत्रोपास्यैकत्वेऽपि उपासनाभेदो धर्म-व्यवस्था च भवति—एवमिहापीति । उपचितापचितगुणत्वं हि सति 10
भेदव्यवहारे सगुणे ब्रह्मण्युपपद्यते, न निर्गुणे परस्मिन् ब्रह्मणि । अतो न सत्यकामत्वादीनां धर्माणां क्वचिच्छ्रुतानां सर्वत्र प्राप्तिरित्यर्थः ॥

## इतरे त्वर्थसामान्यात् ॥ ३-३-१३ ॥

इतरे तु आनन्दादयो धर्मा ब्रह्मस्वरूपप्रतिपादनायैव उच्यमानाः, अर्थसामान्यात्प्रतिपाद्यस्य ब्रह्मणो धर्मिण एकत्वात्, सर्वे सर्वत्र प्रतीये- 15
रन्निति वैषम्यम्—प्रतिपत्तिमात्रप्रयोजना हि ते इति ॥

प्रकटार्थविवरणम्

धर्मास्त्वेतानिति ॥ प्रियशिरस्त्वादिग्रहणं संयद्वामत्वादीनामुपलक्षणार्थम् ; तेषां नास्ति सर्वत्र प्राप्तिरिति न्यायो योजनीय इत्यर्थः । ननु सर्वत्रोपास्यस्य धर्मिण एकत्वात् भवत्येव तद्धर्मप्राप्तिरिति नायं न्यायोऽवतरतीत्याश- 20
ङ्क्याह—तेषु हि सत्यपीति ॥ उपचयापचयौ हि भेद इत्येतद्योजयति—उपचितापचितगुणत्वं[1] हीति ॥

इतरे त्वर्थसामान्यात् ॥

संयद्वामत्वादिगुणेभ्य आनन्दादिपदार्थानां वैषम्यमाह—इतरे त्विति ॥

[1]. T and T[1] चितग्रहणत्वं

भाष्यम्

[आध्यानाधिकरणम्]

## आध्यानाय प्रयोजनाभावात् ॥ ३-३-१४ ॥

काठके हि पठ्यते—"इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
5 मनसस्तु परा बुद्धिः" इत्यारभ्य "पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः" इति । तत्र संशयः—किमिमे सर्व एव अर्थादयः ततस्ततः परत्वेन प्रतिपाद्यन्ते उत पुरुष एव एभ्यः सर्वेभ्यः परः प्रतिपाद्यत इति । तत्र तावत् सर्वेषामेवैषां परत्वेन प्रतिपादनमिति भवति मतिः ; तथा हि श्रूयते—'इदमस्मात्परम्, इदमस्मात्परम्' इति । ननु बहुष्व-
10 र्थेषु परत्वेन प्रतिपिपादयिषितेषु वाक्यभेदः स्यात् ; नैष दोषः, वाक्य-बहुत्वोपपत्तेः ; बहून्येव हि एतानि वाक्यानि प्रभवन्ति बहुविषयान् परत्वोपेतान् प्रतिपादयितुम् । तस्मात्प्रत्येकमेषां परत्वप्रतिपादनमित्येवं प्राप्ते ब्रूमः—

पुरुष एव एभ्यः सर्वेभ्यः परः प्रतिपाद्यत इति युक्तम्,
15 न प्रत्येकमेषां परत्वप्रतिपादनम् ; कस्मात्? प्रयोजनाभावात् ; न हि

प्रकटार्थविवरणम्

आध्यानाय प्रयोजनाभावात् ॥

विषयवाक्यं पठति—काठके इति ॥ वाक्यभेदाभेदनिर्धारणात् संशय-माह—तत्रेति ॥ पूर्वत्र यथा प्रधानस्यानन्दादयः सर्वत्रोपसंहार्या उक्ताः,
20 तथार्थादीनां प्राधान्येन प्रतिपाद्यानां परत्वान्यन्यत्रोपसंहर्तव्यानीति पूर्वपक्ष-माह—तत्र तावदिति ॥ अर्थादीनां प्राधान्यमेव नास्ति, तत्प्रतिपादने वाक्य-भेदप्रसङ्गादित्याह— ननु बहुष्विति ॥ विभक्तिनिराकाङ्क्षेभ्यो वाक्येभ्योऽर्थ-मनोबुद्धिमहदव्यक्तपुरुषाः स्वप्रधानाः प्रतीयन्ते; अतोऽत्र वाक्यभेदो न दोषः, सदनकरणपुरोडाशप्रतिष्ठापनमन्त्रवदित्याह—नैष दोष इति ॥
25 उत्सूत्रमेव सिद्धान्तं प्रतिजानीते—पुरुष एवैभ्य इति ॥ सौत्रं हेतु-माह—कस्मादिति ॥ "तद्विष्णोः परमं पदम्" "पुरुषान्न परं किंचित्"

भाष्यम्

इतरेषु परत्वेन प्रतिपन्नेषु किंचित्प्रयोजनं दृश्यते, श्रूयते वा ; पुरुषे तु इन्द्रियादिभ्यः परस्मिन्सर्वानर्थव्राताततीते प्रतिपन्ने दृश्यते प्रयोजनं मोक्षसिद्धिः ; तथा च श्रुतिः— "निचाय्य तं मृत्युमुखात्प्रमुच्यते" इति । अपि च परप्रतिषेधेन काष्ठाशब्देन च पुरुषविषयमादरं दर्श- 5
यन्पुरुषप्रतिपत्त्यर्थैव पूर्वापरप्रवाहोक्तिरिति दर्शयति । आध्यानायेति— आध्यानपूर्वकाय सम्यग्दर्शनायेत्यर्थः ; सम्यग्दर्शनार्थमेव हि इह आध्यानमुपदिश्यते, न तु आध्यानमेव स्वप्रधानम् ॥

## आत्मशब्दाच्च ॥ ३-३-१५ ॥

इतश्च पुरुषप्रतिपत्त्यर्थैव इयमिन्द्रियादिप्रवाहोक्तिः, यत्कारणम् 10
"एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते ।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥"

इति प्रकृतं पुरुषम् आत्मेत्याह ; अतश्च अनात्मत्वमितरेषां विवक्षितमिति गम्यते ; तस्यैव च दुर्विज्ञानतां संस्कृतमतिगम्यतां च दर्शयति ; तद्वि- ज्ञानायैव "यच्छेद्वाङ्मनसी प्राज्ञः" इत्याध्यानं विदधाति । तत् 15

प्रकटार्थविवरणम्

इति चोपक्रमोपसंहारैक्यरूप्यात् पुरुषे सर्वस्मात् परत्वेन प्रयोजनवति च प्रतिपादयितव्ये अवान्तरवाक्यानां प्रयोजनवदेकवाक्यतायां संभवन्त्यां न वाक्य- भेदप्रयोजनकल्पने युक्ते कल्पनागौरवादित्यर्थः । पुरुषस्यैव परत्वप्रतिपादने अभ्यासं तात्पर्यलिङ्गमाह—अपि चेति ॥ पूर्वेति ॥ पूर्वतना परप्रवाहस्यो- 20
त्तरोत्तरपरत्वस्य उक्तिः । उक्तेऽर्थे सूत्रभागं व्याख्याति—आध्यानायेति ॥

आत्मशब्दाच्च ॥

पुरुषस्य प्रतिपाद्यत्वेऽर्थादीनां च हेयत्वे हेत्वन्तराण्याह —इतश्चेत्या- दिना ॥

१. T, T[1] and TM. नापरः प्रवाहस्य

भाष्यम्

व्याख्यातम् "आनुमानिकमप्येकेषाम्" इत्यत्र । एवम् अनेकप्रकार आशयातिशयः श्रुतेः पुरुषे लक्ष्यते, नेतरेषु । अपि च "सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" इत्युक्ते, किं तत् अध्वनः पारं
5 विष्णोः परमं पदमित्यस्यामाकाङ्क्षायाम् इन्द्रियाद्यनुक्रमणात् परमपद-प्रतिपत्त्यर्थ एवायम् आयास इत्यवसीयते ॥

[ आत्मगृहीत्यधिकरणम् ]

## आत्मगृहीतिरितरवदुत्तरात् ॥ ३-३-१६ ॥

ऐतरेयके श्रूयते—"आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किं-
10 चन मिषत्स ईक्षत लोकान्नु सृजा इति स इमाँल्लोकानसृजताम्भो मरीचीर्मरमापः" इत्यादि । तत्र संशयः—किं पर एवात्मा इहात्म-शब्देनाभिलप्यते, उत अन्यः कश्चिदिति । किं तावत्प्राप्तम्? न पर-मात्मा इह आत्मशब्दाभिलप्यो भवितुमर्हतीति; कस्मात्? वाक्यान्वयदर्श-नात् । ननु वाक्यान्वयः सुतरां परमात्मविषयो दृश्यते, प्रागुत्पत्तेः
15 आत्मैकत्वावधारणात्, ईक्षणपूर्वकस्रष्टृत्ववचनाच्च; नेत्युच्यते, लोक-सृष्टिवचनात्—परमात्मनि हि स्रष्टरि परिगृह्यमाणे, महाभूतसृष्टिः

प्रकटार्थविवरणम्

आत्मगृहीतिरितरवदुत्तरात् ॥

विषयवाक्यं पठति—ऐतरेयक इति ॥ आत्मशब्दस्य परमात्मनि सूत्रा-
20 त्मनि च "आत्मैवेदमग्र आसीत् पुरुषविधः" इति प्रयोगदर्शनात् संशय-माह—तत्रेति ॥ पूर्वत्रात्मशब्दात् परमपुरुषस्य प्रतिपाद्यत्वाभिधानादिहापि तद्वदेव आत्मशब्दात् परमात्मग्रहणं प्राप्तं पूर्ववादी प्रतिषेधति—न परमात्मे-हेति ॥ वाक्यस्य सूत्रात्मनि तात्पर्यदर्शनात् सूत्रात्मविद्यात्र विवक्षिता; अतो गुणोपसंहार इत्यर्थः । पूर्वपक्षमाक्षिप्य समाधत्ते—नन्वित्यादिना ॥ न केव-

भाष्यम्

आदौ वक्तव्या ; लोकसृष्टिस्तु इह आदावुच्यते ; लोकाश्च महाभूतसंनिवेशविशेषाः ; तथा च अम्भःप्रभृतीन् लोकत्वेनैव निर्ब्रवीति—"अदोऽम्भः परेण दिवम्" इत्यादिना । लोकसृष्टिश्च परमेश्वराधिष्ठितेन अपरेण केनचिदीश्वरेण क्रियते इति श्रुतिस्मृत्योरुपलभ्यते ; तथा हि 5 श्रुतिर्भवति—"आत्मैवेदमग्र आसीत्पुरुषविधः" इत्याद्या ; स्मृतिरपि

"स वै शरीरी प्रथमः स वै पुरुष उच्यते ।
आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत ॥" इति ;

ऐतरेयिणोऽपि "अथातो रेतसः सृष्टिः प्रजापते रेतो देवाः" इत्यत्र पूर्वस्मिन्प्रकरणे प्रजापतिकर्तृकां विचित्रां सृष्टिमामनन्ति ; आत्मशब्दोऽपि 10 तस्मिन्प्रयुज्यमानो दृश्यते—"आत्मैवेदमग्र आसीत्पुरुषविधः" इत्यत्र । एकत्वावधारणमपि प्रागुत्पत्तेः स्वविकारापेक्षमुपपद्यते ; ईक्षणमपि तस्य चेतनत्वाभ्युपगमादुपपन्नम् । अपि च 'ताभ्यो गामानयत्' 'ता अब्रुवन्' इत्येवंजातीयको भूयान् व्यापारविशेषो लौकिकेषु विशेषवत्सु

प्रकटार्थविवरणम् 15

लम् "लोकानसृजत" इति प्रक्रमाल्लोकसृष्टिः विवक्षिता ; निर्वचनाच्चेत्याह—तथा चाम्भःप्रभृतीनिति ॥ "अम्भो मरीचीर्मरमापः" इति सूत्रयित्वा स्वयमेव विवृणोति श्रुतिः अदस्तदम्भः परेण दिवं दिवः परस्तात् द्यौः सुप्रतिष्ठो लोकः इत्यर्थः । भवतु लोकसृष्टिर्विवक्षिता; ततः किमित्यत आह—लोकसृष्टिश्चेति ॥ इतश्च सूत्रात्मात्र विवक्षित इत्याह—ऐतरेयिणोऽपीति ॥ रेतो वीर्यं देवाः 20 तत्कार्यत्वादित्यर्थः । यच्च परमात्मलिङ्गमुक्तम्, तदन्यथासिद्धमित्याह—आत्मशब्दोऽपीत्यादिना ॥ किंच प्रजाः सृष्ट्वा ताः प्रति गवानयनादिव्यापारोऽपि प्रजापतेरेव घटत इत्याह—अपि च ताभ्य इति ॥

१. T and T[1]. लौकिकसृष्टिः

भाष्यम्

आत्मसु प्रसिद्ध इहानुगम्यते । तस्मात् विशेषवानेव कश्चिदिह आत्मा स्यादिति ॥

एवं प्राप्ते ब्रूमः—पर एव आत्मा इह आत्मशब्देन गृह्यते ; इतर-
5 वत्—यथा इतरेषु सृष्टिश्रवणेषु "तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इत्येवमादिषु परस्यात्मनो ग्रहणम्, यथा च इतरस्मिन् लौकिकात्मशब्दप्रयोगे प्रत्यगात्मैव मुख्य आत्मशब्देन गृह्यते—तथा इहापि भवितुमर्हति । यत्र तु "आत्मैवेदमग्र आसीत्" इत्येवमादौ "पुरुषविधः" इत्येवमादि विशेषणान्तरं श्रूयते, भवेत् तत्र विशेषवत
10 आत्मनो ग्रहणम् ; अत्र पुनः परमात्मग्रहणानुगुणमेव विशेषणमपि उत्तरम् उपलभ्यते "स ईक्षत लोकान्नु सृजा इति स इमाँल्लोकानसृजत" इत्येवमादि ; तस्मात् तस्यैव ग्रहणमिति न्याय्यम् ॥

## अन्वयादिति चेत्स्यादवधारणात् ॥ ३-३-१७ ॥

वाक्यान्वयदर्शनात् न परमात्मग्रहणमिति पुनः यदुक्तम्, तत्परिहर्त-
15 व्यमिति—अत्रोच्यते—स्यादवधारणादिति । भवेदुपपन्नं परमात्मनो ग्रहणम् ; कस्मात् ? अवधारणात् ; परमात्मग्रहणे हि प्रागुत्पत्तेरात्मैकत्वावधारणमाञ्जसमवकल्पते ; अन्यथा हि अनाञ्जसं तत्परिकल्प्यते ।

प्रकटार्थविवरणम्

नेदं सूत्रात्मविद्याविषयं वाक्यम्, किंतु परमात्मप्रतिपादनपरम्; अतो
20 नास्ति गुणोपसंहार इति । सिद्धान्तमाह—एवं प्राप्ते ब्रूम इति ॥ आत्मशब्दस्य परमात्मनि मुख्यत्वात्, उत्तरत्र च श्रूयमाणस्येक्षणादेः परमात्मन्येव मुख्यत्वात् परमात्मपरमेवेदं वाक्यमित्यर्थः ॥

अन्वयादिति चेत् स्यादवधारणात् ॥

पूर्वपक्षबीजमनूद्य दूषयति — अन्वयादिति चेदित्यादिना ॥ "एक
25 एवाग्र आसीत्" "एतया द्वारा प्रापद्यत" इति चावधारणप्रवेशादिलिङ्गैः

भाष्यम्

लोकसृष्टिवचनं तु श्रुत्यन्तरप्रसिद्धमहाभूतसृष्ट्यनन्तरमिति योजयिष्यामि ; यथा "तत्तेजोऽसृजत" इत्येतत् श्रुत्यन्तरप्रसिद्धवियद्वायुसृष्ट्यनन्तरमिति अयूयुजम्, एवमिहापि ; श्रुत्यन्तरप्रसिद्धो हि समानविषयो विशेषः श्रुत्यन्तरेषु उपसंहर्तव्यो भवति । योऽपि अयं व्यापारविशेषानुगमः 'ताभ्यो गामानयत्' इत्येवमादिः, सोऽपि विवक्षितार्थावधारणानुगुण्येनैव ग्रहीतव्यः ; न ह्ययं सकलः कथाप्रबन्धो विवक्षित इति शक्यते वक्तुम्, तत्प्रतिपत्तौ पुरुषार्थाभावात्, ब्रह्मात्मत्वं तु इह विवक्षितम् ; तथा हि—अम्भःप्रभृतीनां लोकानां लोकपालानां चाग्न्यादीनां सृष्टिं शिष्ट्वा, करणानि करणायतनं च शरीरमुपदिश्य, स एव स्रष्टा "कथं न्विदं मदृते स्यात्" इति वीक्ष्य, इदं शरीरं प्रविवेशेति दर्शयति—"स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत" इति ; पुनश्च "यदि वाचाभिव्याहृतं यदि प्राणेनाभिप्राणितम्" इत्येवमादिना करणव्यापारविवेचनपूर्वकम् "अथ कोऽहम्" इति वीक्ष्य, "स एतमेव पुरुषं ब्रह्म ततममपश्यत्" इति ब्रह्मात्मत्वदर्शनमवधारयति ; तथोपरिष्टात्—"एष ब्रह्मैष इन्द्रः" इत्यादिना समस्तं भेदजातं सह महाभूतैरनुक्रम्य "सर्वं तत्प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितं प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म" इति ब्रह्मात्मत्वदर्शनमेव अवधारयति । तस्मात् इह आत्मगृहीतिरित्यनपवादम् ॥

अपरा योजना—आत्मगृहीतिरितरवदुत्तरात् । वाजसनेयके "कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः" इत्यात्म-

प्रकटार्थविवरणम्

"प्रज्ञानं ब्रह्म" इति सामानाधिकरण्यश्रुतेश्च सूत्रात्मविषयलोकसृष्ट्यादिलिङ्गानां बाध इत्यर्थः ॥

प्रकारान्तरेणाधिकरणं व्याख्यातुमुपक्रमते — अपरा योजनेति ॥ इदं तदा विषयवाक्यमित्याह—वाजसनेयक इति ॥ उपक्रमोपसंहारलिंगा-

१. TM. विधानात्

भाष्यम्

शब्देनोपक्रम्य, तस्यैव सर्वसङ्गविनिर्मुक्तत्वप्रतिपादनेन ब्रह्मात्मतामव-
धारयति; तथा हि उपसंहरति—"स वा एष महानज आत्माजरो-
ऽमरोऽमृतोऽभयो ब्रह्म" इति । छान्दोग्ये तु "सदेव सोम्येदमग्र आसी-
5 देकमेवाद्वितीयम्" इत्यन्तरेणैवात्मशब्दमुपक्रम्य उदर्के "स आत्मा
तत्त्वमसि" इति तादात्म्यमुपदिशति । तत्र संशयः—तुल्यार्थत्वं कि-
मनयोराम्नानयोः स्यात्, अतुल्यार्थत्वं वेति । अतुल्यार्थत्वमिति ताव-
त्प्राप्तम्, अतुल्यत्वादाम्नानयोः; न हि आम्नानवैषम्ये सति अर्थसाम्यं
युक्तं प्रतिपत्तुम्, आम्नानतन्त्रत्वादर्थपरिग्रहस्य । वाजसनेयके च आत्म-
10 शब्दोपक्रमात् आत्मतत्त्वोपदेश इति गम्यते; छान्दोग्ये तु उपक्रम-
विपर्ययात् उपदेशविपर्ययः । ननु छन्दोगानामपि अस्ति उदर्के
तादात्म्योपदेश इत्युक्तम्; सत्यमुक्तम्, उपक्रमतन्त्रत्वादुपसंहारस्य,
तादात्म्यसंपत्तिः सा—इति मन्यते । तथा प्राप्ते अभिधीयते—आत्म-
गृहीतिः "सदेव सोम्येदमग्र आसीत्" इत्यत्र छन्दोगानामपि भवि-
15 तुमर्हति, इतरवत्—यथा "कतम आत्मा" इत्यत्र वाजसनेयिनाम्
आत्मगृहीतिः, तथैव; कस्मात्? उत्तरात् तादात्म्योपदेशात् । अन्व-
यादिति चेत्स्यादवधारणात् । यदुक्तम्, उपक्रमान्वयात् उपक्रमे च
आत्मशब्दश्रवणाभावान्नात्मगृहीतिरिति, तस्य कः परिहार इति चेत्,

प्रकटार्थविवरणम्

20 नात्, अर्थैक्यप्रतिभानाच्च किं भिन्ना विद्या, किं वैकैवेति संशयमाह—तत्रेति ॥
वाजसनेयके स्यादात्मविद्या उपक्रमात्, न छान्दोग्ये; तत्र तु तत्संपत्तिमात्रमिति
पूर्वपक्षमाह — अतुल्यार्थत्वमिति ॥ आम्नानवैषम्येऽपि विद्यैक्यप्रपञ्चार्थं
पूर्वपक्षोपक्रममात्रम् । सिद्धान्तस्तु—वाक्यशेषे स्पष्टात्मोपदेशादुपक्रमेऽपि
सद्वस्त्वात्मभूतमेवोक्तमिति लक्ष्यमाणत्वंपदार्थप्रतिपादकेन वाजसनेयक-
25 वाक्येन लक्ष्यमाणतत्पदार्थप्रतिपादकम् "सदेव" इति वाक्यमभिन्नार्थं
लक्ष्यस्वरूपस्यैकरसत्वात्; अतं एकैव विद्येति ॥

१. A adds आह.

भाष्यम्

सोऽभिधीयते—स्यादवधारणादिति । भवेदुपपन्नेहात्मगृहीतिः, अवधारणात्; तथा हि—"येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्" इत्येकविज्ञानेन सर्वविज्ञानमवधार्य, तत्संपिपादयिषया "सदेव" इत्याह; तच्च आत्मगृहीतौ सत्यां संपद्यते; अन्यथा हि, योऽयं मुख्य आत्मा स न विज्ञात इति, नैव सर्वविज्ञानं संपद्येत । तथा प्रागुत्पत्तेः एकत्वावधारणम्, जीवस्य च आत्मशब्देन परामर्शः, स्वापावस्थायां च तत्स्वभावसंपत्तिकथनम्, परिचोदनापूर्वकं च पुनः पुनः "तत्त्वमसि" इत्यवधारणम्—इति च सर्वमेतत्तादात्म्यप्रतिपादनायामेव अवकल्पते, न तादात्म्यसंपादनायाम् । न च अत्र उपक्रमतन्त्रत्वोपन्यासो न्याय्यः, न हि उपक्रमे आत्मत्वसंकीर्तनम् अनात्मत्वसंकीर्तनं वा अस्ति; सामान्योपक्रमश्च न वाक्यशेषगतेन विशेषेण विरुध्यते, विशेषाकाङ्क्षित्वात्सामान्यस्य । सच्छब्दार्थोऽपि च पर्यालोच्यमानः न मुख्यादात्मनोऽन्यः संभवति, अतोऽन्यस्य वस्तुजातस्यारम्भणशब्दादिभ्योऽनृतत्वोपपत्तेः । आम्नानवैषम्यमपि नावश्यमर्थवैषम्यमावहति 'आहर पात्रम्' 'पात्रमाहर' इत्येवमादिषु अर्थसाम्येऽपि तद्दर्शनात् । तस्मात् एवंजातीयकेषु वाक्येषु प्रतिपादनप्रकारभेदेऽपि प्रतिपाद्यार्थाभेद इति सिद्धम् ॥

[ कार्याख्यानाधिकरणम् ]

## कार्याख्यानादपूर्वम् ॥ ३-३-१८ ॥

छन्दोगा वाजसनेयिनश्च प्राणसंवादे श्वादिमर्यादं प्राणस्य अन्नमाम्नाय, तस्यैवापो वास आमनन्ति; अनन्तरं च छन्दोगा आम-

प्रकटार्थविवरणम्

कार्याख्यानादपूर्वम् ॥

विषयं निर्दिशति—छन्दोगा इति ॥ "यदिदं किंचा श्वभ्य आ कृमिभ्य आ शकुनिभ्य आ कीटपतङ्गेभ्यस्तत्तेऽन्नम्" इत्याम्नाय तस्यैव प्राणस्य अपो वस्त्रं समामनन्ति । विशेषाम्नानं विभागेनाह—अनन्तरं चेति ॥ अशिष्यन्तः

भाष्यम्

नन्ति—"तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिद-
धति" इति । वाजसनेयिनस्त्वामनन्ति—"तद्विद्वांसः श्रोत्रिया अशि-
ष्यन्त आचामन्त्यशित्वा चाचामन्त्येतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते
5 तस्मादेवंविदशिष्यन्नाचामेदशित्वा चाचामेदेतमेव तदनमनग्नं कुरुते"
इति । तत्र च आचमनम् अनग्नताचिन्तनं च प्राणस्य प्रतीयते । तत्कि-
मुभयमपि विधीयते, उत आचमनमेव, उतानग्नताचिन्तनमेवेति विचा-
र्यते । किं तावत्प्राप्तम्? उभयमपि विधीयत इति; कुतः? उभयस्या-
प्यवगम्यमानत्वात्; उभयमपि च एतत् अपूर्वत्वात् विध्यर्हम् । अथवा
10 आचमनमेव विधीयते; विस्पष्टा हि तस्मिन्विधिविभक्तिः "तस्मादेवंविद-
शिष्यन्नाचामेदशित्वा चाचामेत्" इति; तस्यैव स्तुत्यर्थम् अनग्नतासंकी-
र्तनमिति ॥

प्रकटार्थविवरणम्

अशनं करिष्यन्तः एतत् कुर्वन्ति विद्वांसः । किम्? भोजनात्पूर्वमूर्ध्वं चाद्भिः प्राणं
15 परिदधति परिधापयन्तीत्यर्थः[१] । एतमेव अनं प्राणम्; तदनग्नं कुर्वन्तो मन्यन्ते
विद्वांसो यस्मात् तस्मादिदानीन्तनोऽपि कुर्यादित्यर्थः । आपादप्रतिपन्नार्थ-
माह—तत्र चेति ॥ उभयोरप्यपूर्वत्वात् संशयमाह—तत्किमिति ॥ पूर्वे
त्वमर्थस्य प्रसिद्धत्वात् तदुद्देशेन तद्र्थभावो विधेय इत्येकरूपैवोभयत्र विद्योक्ता;
अत्र तु तस्य न्यायस्याभावादुभयोरपि[२] अपूर्वत्वादुभयमपि विधेयमित्येकः पक्षः ।
20 पक्षान्तरमाह—अथवेति ॥ पूर्वाधिकरणे यथा सदुपक्रमे वाक्ये वाक्य-
शेषादात्मगृहीतिः, तथा "तस्मादेवंविदशिष्यन्नाचामेत्" इति वाक्यशेषा-
त्प्राणविदं[३] आचमनान्तरं विधीयत इत्यर्थः । "अनग्नं कुरुते" इति तु वर्त-
मानापदेशत्वात् अपूर्वार्थमपि प्ररोचनामात्रम् "वर्म वा एतद्यज्ञस्य क्रियते"
इतिवदित्याह—तस्यैव त्विति ॥ एवंविधं[४] महार्हमिदमाचमनान्तरं यदनेन

१. T, T¹ and TM. परिसाधयन्तीत्यर्थः
२. A. अभावादुभयमपि
३. T and A. विदाचमनं
४. T. एवं धर्महानिमिदं

भाष्यम्

एवं प्राप्ते ब्रूमः—न आचमनस्य विधेयत्वमुपपद्यते, कार्याख्या-
नात्—प्राप्तमेव हि इदं कार्यत्वेन आचमनं प्रायत्यार्थं स्मृतिप्रसिद्धम्
अन्वाख्यायते। ननु इयं श्रुतिस्तस्याः स्मृतेर्मूलं स्यात्; नेत्युच्यते,
विषयनानात्वात्; सामान्यविषया हि स्मृतिः पुरुषमात्रसंबद्धं प्रायत्यार्थ- 5
माचमनं प्रापयति; श्रुतिस्तु प्राणविद्याप्रकरणपठिता तद्विषयमेव आच-
मनं विदधती विदध्यात्। न च भिन्नविषययोः श्रुतिस्मृत्योः मूलमूलि-
भावोऽवकल्पते; न च इयं श्रुतिः प्राणविद्यासंयोगि अपूर्वमाचमनं विधा-
स्यतीति शक्यमाश्रयितुम्, पूर्वस्यैव पुरुषमात्रसंयोगिन आचमनस्य
इह प्रत्यभिज्ञायमानत्वात्; अत एव च नोभयविधानम्; उभयविधाने 10
च वाक्यं भिद्येत; तस्मात् प्राप्तमेव अशिशिषतामशितवतां च उभयत

प्रकटार्थविवरणम्

प्राणोऽनग्नो[1] भवतीति स्तुतिः। तस्माद्विधेयमाचमनान्तरं अन्यत्राप्युपसंहर्तव्य-
मिति पूर्वः पक्षः॥

सिद्धान्तस्तु—विदुषः सामान्यप्राप्ताचमनानुवादेन आचमनीयास्वप्सु- 15
प्राणवासश्चिन्तनमेव विधीयते, प्रसिद्धानुवादेनाप्रसिद्धं विधीयत इति
न्यायेन; तदाह—नाचमनस्येति॥ प्रयतस्य भावः प्रायत्यम् शुद्धत्वम्; तदर्थं
स्मृतिविहितमाचमनमनूद्यत इत्युक्तम्; तदाक्षिपति—नन्वियमिति॥ स्मृतेः
श्रुतिमूलत्वेन प्रामाण्यादेतच्छ्रुतिमूलैव सा स्मृतिः, न तु स्मृतिसिद्धं श्रुत्या-
नूद्यत इत्यर्थः। भिन्नविषयत्वान्मूलमूलिभावो न संभवतीत्याह—नेत्युच्यत 20
इति॥ आचमनान्तरविधानमङ्गीकृत्य मूलमूलिभावो निरस्तः। इदानीं तदपि
नास्तीत्याह—न चेयं श्रुतिरिति॥ विद्वदविद्वत्साधारण्यस्येह प्रत्यभिज्ञाय-
मानत्वादेवोभयविधानपक्षोऽपि[2] निरस्त इत्याह — अत एव चेति॥ किञ्च
स्वतन्त्रार्थद्वयविधाने वाक्यभेदोऽप्यापद्यत[3] इत्यर्थः। यस्मादुभयविधानपक्षो

१. T¹. प्राणोऽन्तो　　३. T, T¹ and TM. व्याप्यते

२. A omits अपि

भाष्यम्

आचमनम् अनूद्य, "एतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते" इति प्राणस्य अनग्नताकरणसंकल्पः अनेन वाक्येन आचमनीयास्वप्सु प्राणविद्या-संबन्धित्वेन अपूर्व उपदिश्यते। न च अयमनग्नतावादः आचमन-
5 स्तुत्यर्थ इति न्याय्यम्, आचमनस्याविधेयत्वात्; स्वयं च अनग्नतासं-कल्पस्य विधेयत्वप्रतीतेः। न च एवं सति एकस्य आचमनस्य उभयार्थता अभ्युपगता भवति—प्रायत्यार्थता परिधानार्थता चेति, क्रियान्तरत्वा-भ्युपगमात्—क्रियान्तरमेव हि आचमनं नाम प्रायत्यार्थं पुरुषस्य अभ्युपगम्यते; तदीयासु तु अप्सु वासःसंकल्पनं नाम क्रियान्तरमेव
10 परिधानार्थं प्राणस्य अभ्युपगम्यत इत्यनवद्यम्। अपि च "यदिदं किंचा श्वभ्य आ कृमिभ्य आ कीटपतङ्गेभ्यस्तत्तेऽन्नम्" इत्यत्र तावन्न सर्वान्नाभ्यवहारश्चोद्यत इति शक्यं वक्तुम्, अशब्दत्वादशक्यत्वाच्च; सर्वं तु प्राणस्यान्नमिति इयमन्नदृष्टिश्चोद्यते; तत्साहचर्याच्च "अपो वासः" इत्यत्रापि न अपामाचमनं चोद्यते; प्रसिद्धास्वेव तु आचमनी-
15 यास्वप्सु परिधानदृष्टिश्चोद्यत इति युक्तम्; न हि अर्धवैशसं संभवति। अपि च आचामन्तीति वर्तमानापदेशित्वात् नायं शब्दो विधिक्षमः। ननु मन्यन्त इत्यपि समानं वर्तमानापदेशित्वम्; सत्यमेवमेतत्; अव-

प्रकटार्थविवरणम्

गोपपद्यते, तस्मादित्युपसंहारः। यथोक्तमनग्नतासङ्कीर्तनं स्तुत्यर्थमिति तत्राह-
20 न न्याय्यमिति॥ ननु यच्छुद्ध्यर्थं[1] विनियुक्तमाचमनं तदेव चेत् प्राणपरि-धानार्थम्, तदा अन्यशेषस्यान्यशेषत्वं विरुद्धं प्रसज्येतेत्याशङ्क्याह— न चैवं सतीति॥ यथा पूर्ववाक्येऽन्नदृष्टिर्विधीयते, तथोत्तरवाक्ये वासोदृष्टिविधिरेव, अन्यथा अर्धजरतीयप्रसङ्गादित्याह—अपि च यदिदमिति॥ आचमनविधाना-भावे हेत्वन्तरमाह-अपि चेति॥ प्रतिबन्दि[बन्दी]ग्रहेणाशङ्कते—ननु मन्यन्त

१. TM. शुद्ध्यर्थे      ३. A omits विधि
२. T. प्रसज्येत

भाष्यम्

श्यविधेये त्वन्यतरस्मिन्वासःकार्याख्यानात् अपां वासःसंकल्पनमेवा-
पूर्वं विधीयते; न आचमनम्; पूर्ववद्धि तत्—इत्युपपादितम्। यद-
प्युक्तम्—विस्पष्टा च आचमने विधिविभक्तिरिति, तदपि पूर्वत्वेनैव
आचमनस्य प्रत्युक्तम्; अत एव आचमनस्य अविधित्सितत्वात् "एत-　5
मेव तदनमनग्नं कुर्वन्तो मन्यन्ते" इत्यत्रैव काण्वाः पर्यवस्यन्ति, न
आमनन्ति "तस्मादेवंवित्" इत्यादि; तस्मात् माध्यंदिनानामपि पाठे
आचमनानुवादेन एवंवित्त्वमेव प्रकृतप्राणवासोवित्त्वं विधीयत इति
प्रतिपत्तव्यम्। योऽप्ययमभ्युपगमः—क्वचिदाचमनं विधीयताम्, क्वचि-
द्वासोविज्ञानमिति—सोऽपि न साधुः, "आपो वासः" इत्यादिकाया　10
वाक्यप्रवृत्तेः सर्वत्रैकरूप्यात्। तस्माद्वासोविज्ञानमेव इह विधीयते, न
आचमनमिति न्याय्यम्॥

प्रकटार्थविवरणम्

इत्यपीति॥ मन्यन्त इत्यपि वर्तमानापदेश इत्येतत्सत्यम्; तथाप्युभयमप्यविधे-
यमिति न शक्यं वक्तुम्, अनुवादमात्रस्य वैयर्थ्यात्। अतोऽन्यतरस्य विधेयत्वं　15
वक्तव्यम्; तत्र कस्येत्याकाङ्क्षायां अनग्नत्वं नाम यद्वासःकार्यं तस्याख्यानात्
वासोदृष्टिकरणे तात्पर्यं गम्यत इत्यर्थः। द्वितीयपूर्वपक्षबीजमनूद्य दूषयति—
यद्प्युक्तमित्यादिना॥ पूर्वत्वेनेति॥ अपूर्वत्वाभावेन तत्र श्रूयमाणा विधिः
[विधि]विभक्तिर्वासःसङ्कल्पनेन नेतव्येति भावः। आचमनस्याविधेयत्वे लिङ्गा-
न्तरमाह—अत एव चेति॥ माध्यन्दिनानामाचमनं विधीयताम्; काण्वानां　20
तु वासःसङ्कल्पनम्; शाखाभेदेन उदितानुदितहोमवदित्येकदेशिमतमपाक-
रोति—योऽपीत्यादिना॥

१. A. इत्यपि किं मन्यन्ते

भाष्यम्

[ समानाधिकरणम् ]

## समान एवं चाभेदात् ॥ ३-३-१९ ॥

वाजसनेयिशाखायाम् अग्निरहस्ये शाण्डिल्यनामाङ्किता विद्या
5 विज्ञाता ; तत्र च गुणाः श्रूयन्ते—“स आत्मानमुपासीत मनोमयं प्राण-
शरीरं भारूपम्” इत्येवमादयः, तस्यामेव शाखायां बृहदारण्यके
पुनः पठ्यते—“मनोमयोऽयं पुरुषो भाः सत्यस्तस्मिन्नन्तर्हृदये यथा
व्रीहिर्वा यवो वा स एष सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति
यदिदं किंच” इति । तत्र संशयः—किमियम् एका विद्या, अग्निरहस्य-
10 बृहदारण्यकयोः गुणोपसंहारश्च, उत द्वे इमे विद्ये, गुणानुपसंहारश्चेति ।
किं तावत्प्राप्तम् ? विद्याभेदः गुणव्यवस्था चेति ; कुतः ? पौनरुक्त्य-
प्रसङ्गात्—भिन्नासु हि शाखासु अध्येतृवेदितृभेदात् पौनरुक्त्यपरिहार-
मालोच्य विद्यैकत्वमध्यवसाय एकत्रातिरिक्ता गुणा इतरत्रोपसंह्रियन्ते
प्राणसंवादादिषु—इत्युक्तम् ; एकस्यां पुनः शाखायाम् अध्येतृवेदितृ-
15 भेदाभावात् अशक्यपरिहारे पौनरुक्त्ये न विप्रकृष्टदेशस्था एका विद्या

प्रकटार्थविवरणम्

समान एवं चाभेदात् ॥

विषयं दर्शयितुमुपक्रमते—वाजसनेयीति ॥ शाण्डिल्येन दृष्टा विद्येति
तन्नाम्नाङ्किता[1] चिह्निता । एकशाखाभ्यासात् प्रत्यभिज्ञानाच्च संशयमाह—तत्रेति ॥
20 पूर्वत्र यथान्यतःप्राप्तस्याचमनस्याविधेयत्वादनग्नताचिन्तनं विधीयत इत्युक्तम्,
तथान्यत्र[तथात्र] प्रकरणान्तरप्राप्तगुणवद्विज्ञानस्य अविधेयत्वादन्यद्विज्ञानं
विधीयतामित्याह—किं तावत्प्राप्तमिति ॥ ननु प्रथमाधिकरणे पौनरुक्त्या-
द्भेदमाशङ्क्य विद्यैक्यमुक्तम् ; तथात्राप्यस्त्वित्याशङ्क्याह—भिन्नासु[2] हीति ॥

१. A. नामाङ्किता २. TM. भिन्नास्त्विति

भाष्यम्

भवितुमर्हति । न च अत्र एकमाम्नानं विद्याविधानार्थम्, अपरं गुण-
विधानार्थम्—इति विभागः संभवति ; तदा हि अतिरिक्ता एव गुणा
इतरत्रेतरत्र च आम्नायेरन्, न समानाः ; समाना अपि तु उभयत्रा-
म्नायन्ते मनोमयत्वादयः । तस्मात् नान्योन्यं गुणोपसंहार इत्येवं 5
प्राप्ते ब्रूमहे—

यथा भिन्नासु शाखासु विद्यैकत्वं गुणोपसंहारश्च भवति एवमे-
कस्यामपि शाखायां भवितुमर्हति, उपास्याभेदात् तदेव हि ब्रह्म
मनोमयत्वादिगुणकम् उभयत्रापि उपास्यम् अभिन्नं प्रत्यभिजानीमः ;
उपास्यं च रूपं विद्यायाः ; न च विद्यमाने रूपाभेदे विद्याभेदमध्यवसातुं 10
शक्नुमः ; नापि विद्याभेदे गुणव्यवस्थानम् । ननु पौनरुक्त्यप्रसङ्गात्
विद्याभेदोऽध्यवसितः ; नेत्युच्यते, अर्थविभागोपपत्तेः—एकं हि
आम्नानं विद्याविधानार्थम्, अपरं गुणविधानार्थम्—इति न किंचिन्नो-
पपद्यते । ननु एवं सति यदपठितमग्निरहस्ये, तदेव बृहदारण्यके पठित-
व्यम्—"स एष सर्वस्येशानः" इत्यादि ; यत्तु पठितमेव "मनोमयः" 15
इत्यादि तन्न पठितव्यम्—नैष दोषः, तद्बलेनैव प्रदेशान्तरपठितविद्या-
प्रत्यभिज्ञानात् ; समानगुणाम्नानेन हि विप्रकृष्टदेशां शाण्डिल्यविद्यां
प्रत्यभिज्ञाप्य तस्यां ईशानत्वादि उपदिश्यते ; अन्यथा हि कथं तस्या-

प्रकटार्थविवरणम्

नन्वेकत्र विद्याविधानं एकत्र गुणविधानमिति अपौनरुक्त्यं भविष्यति । अतो 20
न पौनरुक्त्यपरिहाराय विद्याभेदो वक्तव्य इत्याशङ्क्याह—न चात्रैकमिति ॥

सिद्धान्तसूत्रं[1] योजयति—यथा भिन्नास्विति ॥ पूर्वपक्षबीजमुत्थाप्य
दूषयति—नन्वित्यादिना ॥ गुणान्तरविधानायाग्निहोत्राभ्यासवत् गुणा-
न्तरविधानार्थे गुणविशिष्टगुण्यनुवादस्य स्पष्टप्रत्यभिज्ञार्थत्वान्न विद्याभेद
इति भावः ॥ 25

१. T and T[1]. सिद्धान्ते सूत्रं

भाष्यम्

मयं गुणविधिरभिधीयते। अपि च अप्राप्तांशोपदेशेन अर्थवति वाक्ये संजाते, प्राप्तांशपरामर्शस्य नित्यानुवादतयापि उपपद्यमानत्वात् न तद्बलेन प्रत्यभिज्ञा उपेक्षितुं शक्यते। तस्मादत्र समानायामपि शाखायां
5 विद्यैकत्वं गुणोपसंहारश्चेत्युपपन्नम् ॥

[ संबन्धाधिकरणम् ]

## संबन्धादेवमन्यत्रापि ॥ ३-३-२० ॥

बृहदारण्यके "सत्यं ब्रह्म" इत्युपक्रम्य, "तद्यत्तत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्पुरुषः" इति
10 तस्यैव सत्यस्य ब्रह्मणोऽधिदैवतमध्यात्मं च आयतनविशेषमुपदिश्य, व्याहृतिशरीरत्वं च संपाद्य, द्वे उपनिषदावुपदिश्येते—"तस्योपनिषदहः" इति—अधिदैवतम्, "तस्योपनिषदहम्" इति—अध्यात्मम्। तत्र संशयः—किमविभागेनैव उभे अपि उपनिषदावुभयत्रानुसंधातव्ये, उत विभागेन—एका अधिदैवम्, एका अध्यात्ममिति। तत्र सूत्रेणै-
15 वोपक्रमते—यथा शाण्डिल्यविद्यायां विभागेनाप्यधीतायां गुणोपसंहार

प्रकटार्थविवरणम्

सम्बन्धादेवमन्यत्रापि ॥

विषयं दर्शयितुमुपक्रमवाक्यं पठति—बृहदारण्यक इति ॥ अधिदैवे मण्डलम् अध्यात्मे चाक्षि दक्षिणमुपासनायायतनविशेषमुपदिश्य "तस्य
20 भूरिति शिरः" इत्यादिना व्याहृतिशरीरत्वं च संपाद्य द्वे उपनिषदौ रहस्ये उपदिश्येते इत्यर्थः। तच्छब्देन स्वरूपं परामृश्यते, विशिष्टं वेत्यनिश्चयात् संशयमाह — तत्रेति ॥ पूर्वाधिकरणन्यायेन पूर्वपक्ष इत्याह — यथेति ॥ तच्छब्दस्य प्रकृतपरामर्शकत्वात् सत्याख्यब्रह्मण एवोपनिषद्द्वयसम्बन्धः; तच्चाविशिष्टं स्थानभेदेऽपीत्युपनिषद्द्वयमुभयत्रोपसंहर्तव्यमिति भावः ॥

१. T, T¹ and A. दिश्यत इत्यस्य

भाष्यम्

उक्तः, एवमन्यत्रापि एवंजातीयके विषये भवितुमर्हति, एकविद्याभिसंबन्धात्—एका हि इयं सत्यविद्या अधिदैवम् अध्यात्मं च अधीता, उपक्रमाभेदात् व्यतिषक्तपाठाच्च; कथं तस्यामुदितो धर्मः तस्यामेव न स्यात्। यो ह्याचार्ये कश्चिदनुगमनादिराचारश्चोदितः, स ग्रामगतेऽरण्यगते च तुल्यवदेव भवति। तस्मादुभयोरप्युपनिषदोः उभयत्र प्राप्तिरिति ॥ 5

एवं प्राप्ते, प्रतिविधत्ते—

## न वा विशेषात् ॥ ३-३-२१ ॥

न वोभयोरुभयत्र प्राप्तिः; कस्मात्? विशेषात्, उपासनस्थानविशेषोपनिबन्धादित्यर्थः। कथं स्थानविशेषोपनिबन्ध इति, उच्यते—"य एष एतस्मिन्मण्डले पुरुषः" इति हि आधिदैविकं पुरुषं प्रकृत्य "तस्योपनिषदहः" इति श्रावयति; "योऽयं दक्षिणेऽक्षन्पुरुषः" इति च आध्यात्मिकं पुरुषं प्रकृत्य, "तस्योपनिषदहम्" इति; तस्येति च एतत् संनिहितावलम्बनं सर्वनाम; तस्मात् आयतनविशेषव्यपाश्रयेणैव एते उपनिषदावुपदिश्येते; कुत उभयोरुभयत्र प्राप्तिः। ननु एक एवायम् अधिदैवतमध्यात्मं च पुरुषः, एकस्यैव सत्यस्य ब्रह्मण आयतनद्वयप्रतिपादनात्; सत्यमेवमेतत्; एकस्यापि तु अवस्थाविशेषोपादाने- 10 15

प्रकटार्थविवरणम्

न वा विशेषात् ॥ 20

सिद्धान्तसूत्रं व्याचष्टे—न वोभयोरिति ॥ "तस्योपनिषदहः" "तस्योपनिषदहम्" इति वाक्यद्वयेन तच्छब्दाभ्यां प्रकृतविशिष्टानुवादेनोपनिषदोः स्थानद्वयविशिष्टे ब्रह्मणि व्यवस्थया संकीर्तनपरेणोपसंहारानुमानबाधादुपनिषद्द्वयं व्यवस्थयोपास्यमिति भावः ॥

१. T, T[1] and A. न चोभयोः

भाष्यम्

नैव उपनिषद्विशेषोपदेशात् तदवस्थस्यैव सा भवितुमर्हति ; अस्ति चायं दृष्टान्तः—सत्यपि आचार्यस्वरूपानपाये, यत् आचार्यस्य आसीनस्यानुवर्तनमुक्तं न तत् तिष्ठतो भवति ; यच्च तिष्ठत उक्तम्, न तदासीनस्येति।
5 ग्रामारण्ययोस्तु आचार्यस्वरूपानपायात् तत्स्वरूपानुबद्धस्य च धर्मस्य ग्रामारण्यकृतविशेषाभावात् उभयत्र तुल्यवद्भाव इत्यदृष्टान्तः सः। तस्मात् व्यवस्था अनयोरुपनिषदोः ॥

## दर्शयति च ॥ ३-३-२२ ॥

अपि च एवंजातीयकानां धर्माणां व्यवस्थेति लिङ्गदर्शनं भवति—
10 "तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम" इति। कथमस्य लिङ्गत्वमिति, तदुच्यते—अक्ष्यादित्यस्थानभेदभिन्नान् धर्मान् अन्योन्यस्मिन्ननुपसंहार्यान् पश्यन् इह अतिदेशेन आदित्यपुरुषगतान्रूपादीन् अक्षिपुरुषे उपसंहरति—"तस्यैतस्य तदेव रूपम्" इत्यादिना। तस्माद्व्यवस्थिते एव एते उपनिषदा-
15 विति निर्णयः ॥

[ संभृत्यधिकरणम् ]

## संभृतिद्युव्याप्त्यपि चातः ॥ ३-३-२३ ॥

"ब्रह्मज्येष्ठा वीर्या संभृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान" इत्येवं राणायनीयानां खिलेषु वीर्यसंभृतिद्युनिवेशप्रभृतयो ब्रह्मणो विभूतयः

20 प्रकटार्थविवरणम्

दर्शयति च ॥

अतिदेशसामर्थ्यं लिङ्गमपि बाधकमाह—अपि चैवमिति ॥

संभृतिद्युव्याप्त्यपि चातः ॥

पूर्वाधिकरणन्यायेनैव वाक्यान्तरमपि व्याख्यातुं पठति—ब्रह्मज्येष्ठेति ॥
25 ब्रह्म ज्येष्ठं येषां तानि ब्रह्मज्येष्ठा। शिलोपश्छान्दसः। ब्रह्मज्येष्ठानि वीर्याणि

भाष्यम्

पठ्यन्ते ; तेषामेव च उपनिषदि शाण्डिल्यविद्याप्रभृतयो ब्रह्मविद्याः पठ्यन्ते ; तासु ब्रह्मविद्यासु ता ब्रह्मविभूतय उपसंह्रियेरन्, न वेति विचारणायाम्, ब्रह्मसंबन्धादुपसंहारप्राप्तौ एवं पठति—संभृतिद्युव्याप्तिप्रभृतयो विभूतयः शाण्डिल्यविद्याप्रभृतिषु नोपसंहर्तव्याः, अत एव च 5
आयतनविशेषयोगात् । तथा हि शाण्डिल्यविद्यायां हृदयायतनत्वं ब्रह्मण उक्तम्—"एष म आत्मान्तर्हृदये" इति ; तद्वदेव दहरविद्यायामपि—"दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः" इति ; उपकोसलविद्यायां तु अक्ष्यायतनत्वम् "य एषोऽक्षिणि पुरुषो दृश्यते" इति ; एवं तत्र तत्र तत्तत् आध्यात्मिकमायतनम् एतासु 10
विद्यासु प्रतीयते ; आधिदैविक्यस्तु एता विभूतयः ; संभृतिद्युव्याप्तिप्रभृतयः ; तासां कुत एतासु प्राप्तिः । नन्वेतास्वपि आधिदैविक्यो विभूतयः श्रूयन्ते—"ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यः" "एष उ एव भामनीरेष हि सर्वेषु लोकेषु भाति" "यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन्द्यावापृथिवी अन्तरेव समा- 15
हिते" इत्येवमाद्याः ; सन्ति च अन्या आयतनविशेषहीना अपि इह ब्रह्मविद्याः षोडशकलाद्याः—सत्यमेवमेतत् ; तथाप्यत्र विद्यते विशेषः संभृत्याद्यनुपसंहारहेतुः — समानगुणाम्नानेन हि प्रत्युपस्थापितासु विप्रकृष्टदेशास्वपि विद्यासु विप्रकृष्टदेशगुणा उपसंह्रियेरन्निति युक्तम् ;
संभृत्यादयस्तु शाण्डिल्यादिवाक्यगोचराश्च गुणाः परस्परव्यावृत्त- 20
स्वरूपत्वात् न प्रदेशान्तरवर्तिविद्याप्रत्युपस्थापनक्षमाः । न च ब्रह्म-

प्रकटार्थविवरणम्

ब्रह्मणा संभृतानि विधृतानि, ज्येष्ठं ब्रह्माग्रे सृष्ट्यादौ दिवमाततान ऊर्ध्वदेशे निवेशितवदित्यर्थः । खिलेषु विधिनिषेधरहितेषु वेदप्रदेशेषु ब्रह्मसंबन्धात् विद्याभेदप्रतिभानाच्च संशयमाह—तास्विति ॥ ब्रह्मण एवोपास्यत्वेन विधे- 25
यत्वादुपसंहार इति पूर्वः पक्षः । सिद्धान्तसूत्रं योजयति — संभृतीति ॥
संभृत्यादिधर्मविशिष्टस्य ब्रह्मणः शाण्डिल्यविद्यादिषु उपास्यमनोमयत्वादिगुण-

भाष्यम्

संबन्धमात्रेण प्रदेशान्तरवर्तिविद्याप्रत्युपस्थापनमित्युच्यते, विद्याभेदेऽपि तदुपपत्तेः; एकमपि हि ब्रह्म विभूतिभेदैरनेकधा उपास्यत इति स्थितिः, परोवरीयस्त्वादिवद्भेददर्शनात् । तस्मात् वीर्यसंभृत्यादीनां शाण्डिल्यविद्यादिषु अनुपसंहार इति ॥

[ पुरुषविद्याधिकरणम् ]

## पुरुषविद्यायामिव चेतरेषामनाम्नानात् ॥ ३-३-२४ ॥

अस्ति ताण्डिनां पैङ्गिनां च रहस्यब्राह्मणे पुरुषविद्या; तत्र पुरुषो यज्ञः कल्पितः; तदीयमायुः त्रेधा विभज्य सवनत्रयं कल्पितम्; अशिशिषादीनि च दीक्षादिभावेन कल्पितानि; अन्ये च धर्मास्तत्र समधि-

प्रकटार्थविवरणम्

निशिष्टब्रह्मणश्च रूपभेदाद्वैयधिकरण्यायोगात् संभृत्यादिषूपासनान्तरमेव कल्प्यत इति नास्त्युपसंहार इत्यर्थः ॥

पुरुषविद्यायामिव चेतरेषामनाम्नानात् ॥

छान्दोग्यशाखाभेदे तद्वदेका पुरुषविद्यास्तीत्याह—अस्ति ताण्डिनामिति॥ "पुरुषो वाव यज्ञः तस्य यानि चतुर्विंशतिवर्षाणि तत्प्रातःसवनम् अथ यानि चतुश्चत्वारिंशद्वर्षाणि तन्माध्यन्दिनं सवनम् अथ यान्यष्टाचत्वारिंशद्वर्षाणि तत्तृतीयसवनम्" इति प्रसिद्धयज्ञसाम्यसिद्ध्ये सवनत्रयं कल्पितम् । "स यदशिशिषति यत्पिपासति यन्न रमते तास्य दीक्षा" इत्यादिना दीक्षादिकल्पनं स ब्रूयात् "प्राणा वाव वसव इदं मे प्रातःसवनं माध्यन्दिनं सवनं अनुसन्तनुत" इत्यादिराशीः; सोऽन्तवेलायां मन्त्रत्रयं जपेत् "अक्षितमस्यच्युतमसि प्राणसंशितमसि" इत्येवमादयोऽपि धर्मास्तत्रोक्ता इत्यर्थः । तथा तैत्तिरीयकाणा-

१. TM. सनपरमेव २. T and T[1]. त्यादिना

भाष्यम्

गता आशीर्मन्त्रप्रयोगादयः। तैत्तिरीयका अपि कंचित्पुरुषयज्ञं कल्पयन्ति—"तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी" इत्येतेनानुवाकेन। तत्र संशयः—किं इतरत्रोक्ताः पुरुषयज्ञस्य धर्माः तैत्तिरीयकेषु उपसंहर्तव्याः, किं वा नोपसंहर्तव्या इति। पुरुषयज्ञत्वाविशेषात् उपसंहारप्राप्तौ, आचक्ष्महे—नोपसंहर्तव्या इति; कस्मात्? तद्रूपप्रत्यभिज्ञानाभावात्; तदाहाचार्यः पुरुषविद्यायामिवेति। यथा एकेषां शाखिनां ताण्डिनां पैङ्गिनां च पुरुषविद्यायामाम्नानम्, नैवम् इतरेषां तैत्तिरीयाणामाम्नानमस्ति; तेषां हि इतरविलक्षणमेव यज्ञसंपादनं दृश्यते, पत्नीयजमानवेदवेदिबर्हिर्यूपाज्यपशृत्विगाद्यनुक्रमणात्। यदपि सवनसंपादनम्, तदपि इतरविलक्षणमेव—"यत्प्रातर्मध्यंदिनꣳसायं च तानि" इति। यदपि किंचित्, मरणावभृथत्वादि सामान्यम्,

प्रकटार्थविवरणम्

मध्यारण्यकेऽस्ति पुरुषविद्येत्याह—तैत्तिरीया अपीति॥ समाख्यैकत्वादितरधर्मवैलक्षण्येन च विद्यान्यत्वाशङ्कया संशयमाह—तत्रेति॥ पूर्वत्र रूपभेदाद्विद्याभेदे सत्यनुपसंहार उक्तः। इह तूभयत्र मरणावभृथविशिष्टसाम्पादिकपुरुषयज्ञत्वलक्षणरूपैक्यात् समाख्यैकत्वाच्च विद्यैकत्वे सिद्धे सत्याशीर्मन्त्रप्रयोगादयस्तैत्तिरीयकेऽप्युपसंहर्तव्या इति पूर्वपक्षप्राप्तौ बहिरेव प्रतिजानीते—नोपसंहर्तव्या इति॥ छान्दोग्यगतपुरुषयज्ञरूपस्य तैत्तिरीयके प्रत्यभिज्ञानाभावादित्यर्थः। उक्तेऽर्थे सूत्रमवतार्य व्याचष्टे—तदेतदाहेत्यादिना॥ "तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिः वेदः शिखा हृदयं यूपः काम आज्यं मन्युः पशुस्तपोऽग्निः" इत्याद्यनुक्रमणात्। वेदः कुशमुष्टिनिर्मितः। एकत्र पत्न्यादिसंपादनम्, अपरत्र नेति वैलक्षण्यम्। तथा आयुः प्रविभज्यैकत्र सवनत्रयसंपादनम्, अपरत्र सायंकालादाविरयर्थः। ननु मरणावभृथत्वादिसाम्यमपि दृश्यत इत्याशङ्क्याह—यदपि किंचिदिति॥ किंचैकत्र पुरुषस्य यज्ञत्वम्, अपरत्र पुरुषसंबन्धित्वं यज्ञस्येति वैलक्ष-

भाष्यम्

तदपि अल्पीयस्त्वात् भूयसा वैलक्षण्येन अभिभूयमानं न प्रत्यभिज्ञापन-
क्षमम् । न च तैत्तिरीयके पुरुषस्य यज्ञत्वं श्रूयते; "विदुषो
यज्ञस्य" इति हि न च एते समानाधिकरणे षष्ठ्यौ—विद्वानेव यो
5 यज्ञस्तस्येति; न हि पुरुषस्य मुख्यं यज्ञत्वमस्ति; व्यधिकरणे तु एते
षष्ठ्यौ—विदुषो यो यज्ञस्तस्येति; भवति हि पुरुषस्य मुख्यो यज्ञ-
संबन्धः; सत्यां च गतौ, मुख्य एवार्थ आश्रयितव्यः, न भाक्तः ।
"आत्मा यजमानः" इति च यजमानत्वं पुरुषस्य निर्ब्रुवन् वैयधि-
करण्येनैव अस्य यज्ञसंबन्धं दर्शयति । अपि च "तस्यैवंविदुषः" इति
10 सिद्धवदनुवादश्रुतौ सत्याम्, पुरुषस्य यज्ञभावम् आत्मादीनां च यजमा-
नादिभावं प्रतिपित्समानस्य वाक्यभेदः स्यात् । अपि च ससंन्यासा-
मात्मविद्यां पुरस्तादुपदिश्यानन्तरम् "तस्यैवंविदुषः" इत्याद्यनुक्रमणं
पश्यन्तः—पूर्वशेष एवैष आम्नायः न स्वतन्त्र इति प्रतीमः; तथा च एक-
मेव फलमुभयोरप्यनुवाकयोरुपलभामहे— "ब्रह्मणो महिमानमा-
15 प्नोति" इति; इतरेषां तु अनन्यशेषः पुरुषविद्याम्नायः; आयुरभि-
वृद्धिफलो ह्यसौ "प्र ह षोडशं वर्षशतं जीवति य एवं वेद" इति

प्रकटार्थविवरणम्

न्यायान्तरमाह—न च तैत्तिरीयके इति ॥ आभ्यासिकापूर्वसंबन्धकल्पनात्
प्रमाणान्तरप्रसिद्धविद्वत्संबन्धियज्ञानुवादस्यायुक्तत्वादित्यर्थः । एकस्यैव यज्ञ-
20 त्वाप्रसङ्गादपि षष्ठ्यौ समानाधिकरणे इत्याह—आत्मा यजमान इति चेति ॥
वाक्यभेदप्रसङ्गादपि न तैत्तिरीयके पुरुषस्य यज्ञत्वमित्याह—अपि चेति ॥
विशेष्यमनूद्य यदा विदुष एव यज्ञत्वं यजमानत्वं च तदा विशेषणानामन्योन्य-
मनन्वयेऽनेको वाक्यार्थ इति स्याद्वाक्यभेद इत्यर्थः । किंचान्यशेषत्वानन्यशे-
षत्वाभ्यामपि विद्याभेद इत्याह—अपि च ससंन्यासामिति ॥ षोडशाधिकं[1]

१. TM. षोडशात्मकं

भाष्यम्

समभिव्याहारात् । तस्मात् शाखान्तराधीतानां पुरुषविद्याधर्माणामाशीर्मन्त्रादीनामप्राप्तिः तैत्तिरीयके ॥

[ वेधाद्यधिकरणम् ]

## वेधाद्यर्थभेदात् ॥ ३-३-२५ ॥ 5

अस्त्याथर्वणिकानामुपनिषदारम्भे मन्त्रसमाम्नायः—"सर्वं प्रविध्य हृदयं प्रविध्य धमनीः प्रवृज्य शिरोऽभिप्रवृज्य त्रिधा विपृक्तः" इत्यादिः; ताण्डिनाम्—"देव सवितः प्रसुव यज्ञम्" इत्यादिः; शाट्यायनिनाम्—"श्वेताश्वो हरितनीलोऽसि" इत्यादिः; कठानां तैत्तिरीयाणां च—"शं नो मित्रः शं वरुणः" इत्यादिः; वाजसनेयिनां तु उपनिषदारम्भे प्रवर्ग्यब्राह्मणं पठ्यते—"देवा ह वै सत्रं निषेदुः" इत्यादि; कौषीतकिनामपि अग्निष्टोमब्राह्मणम्—"ब्रह्म वा अग्निष्टोमो ब्रह्मैव तदहर्ब्रह्मणैव ते ब्रह्मोपयन्ति तेऽमृतत्वमाप्नुवन्ति य 10

प्रकटार्थविवरणम्

वर्षशतं प्रजीवतीत्यर्थः । यस्माद्विद्याभेदतः, स्यादनुपसंहार इत्याह— तस्मादिति ॥ 15

वेधाद्यर्थभेदात् ॥

विषयं दर्शयति— अस्तीति ॥ यजमानो देवतां प्रार्थयते—भोः देवते मदीयरिपोः सर्वमङ्गं प्रविध्य भिन्धि[1]; विशेषतश्च हृदयं प्रविध्य धमनीः सिराः प्रवृज्य विभज[2]; त्रिधा आध्यात्मिकाधिभौतिकाधिदैविकोपतापैः विपृक्तो विप्रयुक्तो[3] भवतु मदीयः शत्रुरित्यर्थः । हरितनीलमणिप्रभवत्वादिन्द्रस्य हरिनीलोऽसीति विशेषणम् । शं सुखं करोतु; नोऽस्माकम्; मित्रो नाम देवतेत्यर्थः । एतदहः कर्मोपयन्त्यनुतिष्ठन्तीत्यर्थः । उपकारभावाभावप्रमाणाभ्यां संशयमाह— 20

१. TM. प्रविन्धि

२. A. विभञ्ज

३. T, TM and A. विवृत्तो विप्रिय

भाष्यम्

एतदहरुपयन्ति " इति । किमिमे सर्वे प्रविध्यादयो मन्त्राः प्रवर्ग्यादीनि च कर्माणि विद्यासु उपसंह्रियेरन् किं वा न उपसंह्रियेरन्—इति मीमांसामहे । किं तावन्नः प्रतिभाति; उपसंहार एव एषां विद्यास्विति; 5 कुतः? विद्याप्रधानानामुपनिषद्ग्रन्थानां समीपे पाठात् । ननु एषां विद्यार्थतया विधानं नोपलभामहे—बाढम्, अनुपलभमाना अपि तु अनुमास्यामहे, संनिधिसामर्थ्यात्; न हि संनिधेः अर्थवत्त्वे संभवति, अकस्मादसावनाश्रयितुं युक्तः । ननु नैषां मन्त्राणां विद्याविषयं किंचित्सामर्थ्यं पश्यामः; कथं च प्रवर्ग्यादीनि कर्माणि अन्यार्थत्वेनैव 10 विनियुक्तानि सन्ति, विद्यार्थत्वेनापि प्रतिपद्येमहीति—नैष दोषः; सामर्थ्यं तावत् मन्त्राणां विद्याविषयमपि किंचित् शक्यं कल्पयितुम्, हृदयादिसंकीर्तनात्; हृदयादीनि हि प्रायेण उपासनेषु आयतनादिभावेन उपदिष्टानि; तद्द्वारेण च "हृदयं प्रविध्य" इत्येवंजातीयकानां

प्रकटार्थविवरणम्

15 किमिम इति ॥ पूर्वाधिकरणवदनुपसंहारहेतोः रूपभेदस्याभावादुपसंहार इत्याह—किं तावदिति ॥ विद्याशेषत्वे[1] विनियोजकप्रमाणाभावादनुपसंहारं शङ्कते—नन्वेषामिति ॥ सत्यम् । यद्यपि श्रुत्यादि स्पष्टं नोपलभ्यते, तथाप्यनुपलभमाना अपि वयमनुमास्यामहे विनियोगं प्रकरणसामर्थ्यात्; न हि प्रकरणस्य सार्थकत्वं संभवत्यकस्मादसौ विनियोगाभाव आश्रयितुं शक्यत 20 इत्यर्थः । विद्याप्रकाशेन सामर्थ्याभावादनुपकारकत्वान्नास्त्युपसंहार इत्याह—ननु नैषामिति[2] ॥ किञ्च "उपसदा चरिष्यन् प्रवर्ग्येण चरति" इत्यादिप्रमाणान्तरेण कर्माङ्गत्वेन विनियोगाद्विद्याङ्गत्वं विरुद्धमित्याह—कथं चेति ॥ यद्यपि सर्वेषां मन्त्रपदानां नास्ति विद्याप्रकाशनसामर्थ्यं तथाप्येकदेशस्य विद्यत इत्याह—नैष दोष इति ॥ किंचोपनिषद्गतानां केषांचिन्मन्त्राणां उपासनशेष-

१. TM. विशेषत्वे    २. T¹. ननु तेषामिति

भाष्यम्

मन्त्राणाम् उपपन्नम् उपासनाङ्गत्वम्; दृष्टश्च उपासनेष्वपि मन्त्रविनि-
योगः—"भूः प्रपद्येऽमुनामुनामुना" इत्येवमादिः। तथा प्रवर्ग्या-
दीनां कर्मणाम् अन्यत्रापि विनियुक्तानां सताम् अविरुद्धो विद्यासु विनि-
योगः—वाजपेय इव बृहस्पतिसवस्य—इत्येवं प्राप्ते ब्रूमः— 5

नैषामुपसंहारो विद्यास्विति; कस्मात्? वेधाद्यर्थभेदात्—"हृदयं
प्रविध्य" इत्येवंजातीयकानां हि मन्त्राणां येऽर्था हृदयवेधादयः,
भिन्नाः अनभिसंबद्धाः ते उपनिषदुदिताभिर्विद्याभिः; न तेषां ताभिः
संगन्तुं सामर्थ्यमस्ति। ननु हृदयस्य उपासनेष्वप्युपयोगात् तद्द्वारक
उपासनासंबन्ध उपन्यस्तः—नेत्युच्यते; हृदयमात्रसंकीर्तनस्य हि एव- 10
मुपयोगः कथंचिदुत्प्रेक्ष्यते; न च हृदयमात्रमत्र मन्त्रार्थः; "हृदयं
प्रविध्य धमनीः प्रवृज्य" इत्येवंजातीयको हि न सकलो मन्त्रार्थो
विद्याभिरभिसंबध्यते; आभिचारिकविषयो ह्येषोऽर्थः, तस्मादाभि-

प्रकटार्थविवरणम्

त्वदर्शनादितरेषामपि अनुमीयत इत्याह दृष्टश्चेति ॥ पुत्रस्य दीर्घायुष्ट्वफलाय 15
कोशोपासने अयं प्रार्थनामन्त्रः पितुः 'भूः' इति भूमिलोकं प्रपद्ये प्रपन्नोऽस्मि।
पुरुषस्य [पुत्रस्य] दीर्घायुषोऽमुनेति नाम गृह्णाति पुत्रस्य। यदुक्तं विनियुक्तानां
विनियोगो विरुद्ध इति तत्राह—तथा प्रवर्ग्यादीनामिति ॥ "ब्राह्मणो ब्रह्म-
वर्चसकामो बृहस्पतिसवेन यजेत" इति विनियुक्तस्यापि बृहस्पतिसवस्य यथा
"वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत" इति वाजपेयाङ्गतया विनियोगः, 20
तथेहापि प्रकरणाद्विद्याङ्गतया विनियोगो भविष्यतीत्यर्थः ॥

बहिरेवानुपसंहारं प्रतिज्ञाय हेतुत्वेन सूत्रं योजयति—नैषामित्यादिना ॥
अभिचारविषयप्रकाशनसामर्थ्येन लिङ्गेन बलवताभिचारे विनियोगावगमात्
न दुर्बलेन सांनिधिना विद्यायां विनियोग इति भावः। भोः देव सवितः त्वं

१. TM. विभुः भुरिति        ३. T, T¹ and TM. षोनुमुनेत्रिः
२. A. भूरिलोकं        ४. A omits विनियुक्तानां

भाष्यम्

चारिकेण कर्मणा "सर्वं प्रविध्य" इत्येतस्य मन्त्रस्याभिसंबन्धः; तथा "देव सवितः प्रसुव यज्ञम्" इत्यस्य यज्ञप्रसवलिङ्गत्वात् यज्ञेन कर्मणा अभिसंबन्धः; तद्विशेषसंबन्धस्तु प्रमाणान्तरादनुसर्तव्यः; एवमन्येषा-
5 मपि मन्त्राणाम्—केषांचित् लिङ्गेन, केषांचिद्वचनेन, केषांचित्प्रमाणान्त-रेणेत्येवम्—अर्थान्तरेषु विनियुक्तानाम्, रहस्यपठितानामपि सताम्, न संनिधिमात्रेण विद्याशेषत्वोपपत्तिः। दुर्बलो हि संनिधिः श्रुत्यादिभ्य इत्युक्तं प्रथमे तन्त्रे—"श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां सम-वाये पारदौर्बल्यमर्थविप्रकर्षात्" इत्यत्र। तथा कर्मणामपि प्रवर्ग्या-
10 दीनामन्यत्र विनियुक्तानां न विद्याशेषत्वोपपत्तिः; न ह्येषां विद्याभिः सह ऐकार्थ्यं किंचिदस्ति; वाजपेये तु बृहस्पतिसवस्य स्पष्टं विनियो-

प्रकटार्थविवरणम्

प्रसुव अनयेति यज्ञप्रसवलिङ्गात् सामान्येन तावद्यज्ञेन कर्मणा सम्बन्धोऽव-गत इत्याह— तथा देवेति ॥ यज्ञसंबन्धिकर्मस्वपि मध्ये कुत्र संबन्ध इति
15 विशेषाकाङ्क्षायामाह—तद्विशेषेति ॥ "देव सवितः प्रसुव इति प्रदक्षिणतोऽग्निं पर्युक्षेत्" इति वाक्यादग्निपर्युक्षणे विनियोग इत्यर्थः। [उक्तमर्थं] "श्वेताश्वः" इत्यादिमन्त्रेष्वतिदिशति—एवमन्येषामपीति ॥ समवाये समानविषयत्वेन द्वयोर्विरोधे परस्य दौर्बल्यम्; कुतः? अर्थविप्रकर्षात्; अर्थेऽप्यव्यवधानेनोत्तरस्य प्रवृत्तेरित्यर्थः। यथेन्द्रपदसामर्थ्यात् "कदा चन स्तरीरसि नेन्द्र" इत्यस्या
20 ऋचः इन्द्रोपस्थाने विनियोगः। "ऐन्द्र्या गार्हपत्यमुपतिष्ठते" इति श्रुत्या गार्हपत्योपस्थाने विनियोगः प्रतिभाति। एवं विरोधे परं लिङ्गं दुर्बलं श्रुतिर्हि साक्षात् बोधयति। लिङ्गं तु सामर्थ्यानुसन्धानेऽव्यवधानेनेत्यर्थः। एवं मन्त्राणां विद्याशेषत्वं निराकृत्य कर्मणां निराचष्टे—तथा कर्मणामपीति ॥ यथा प्रयाजाद्युपकृतस्य दर्शनादेः [दर्शादेः] एकप्रयोजनसाधकत्वं तथा
25 प्रवर्ग्याद्युपकृतविद्यानामेकप्रयोजनसाधकत्वे किंचिन्मानमस्तीति भावः।

१. T. प्रतिवाक्येवं
२. A. सन्धानेन

भाष्यम्

गान्तरम्—"वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत" इति; अपि च एकोऽयं प्रवर्ग्यः सकृदुत्पन्नो बलीयसा प्रमाणेन अन्यत्र विनियुक्तः न दुर्बलेन प्रमाणेन अन्यत्रापि विनियोगमर्हति; अगृह्यमाणविशेषत्वे हि प्रमाणयोः एवं स्यात्; न तु बलवदबलवतोः प्रमाणयोरगृह्यमाणविशेषता 5 संभवति, बलवदबलवत्त्वविशेषादेव । तस्मात् एवंजातीयकानां मन्त्राणां कर्मणां वा न संनिधिपाठमात्रेण विद्याशेषत्वमाशङ्कितव्यम्; अरण्यानुवचनादिधर्मसामन्यात्तु संनिधिपाठ इति संतोष्टव्यम् ॥

[ हान्यधिकरणम् ]

## हानौ तूपायनशब्दशेषत्वात्कुशाछन्दस्तुत्युपगानवत्तदुक्तम् ॥ ३-३-२६ ॥ 10

अस्ति ताण्डिनां श्रुतिः—" अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभ-

प्रकटार्थविवरणम्

ननु उक्तं प्रकरणमित्याशङ्क्याह — अपि चेति ॥ पकस्योभयार्थतायां स्वतो विरुद्धायां तुल्यप्रमाणसंबन्धादविरोध इष्यते, अत्र तु वाक्येन सन्निधेर्बाधा- 15 दध्ययनधर्मसाम्येनापि सन्निध्युपपत्तेः न विद्यासु विनियोग इति न सर्वैस्तुष्टेवत्वमित्यर्थः ॥

हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम् ॥

विषयं दर्शयितुं वाक्यानि तावत् पठति—अस्तीत्यादिना ॥ यथाश्वो रोमाणि रजःसंपृक्तानि विधूय निर्मलो भवति, तथा पापं विधूय निर्मलोऽहं ब्रह्म- 20 लोकमभिसंभवामीति संबन्धः । यथा राहोर्मुखात्प्रमुच्य चन्द्रः स्वच्छो भवति, तथा शरीरमकृतमशुद्धं धूत्वा हित्वा कृतात्मा स्वच्छः सन्नित्यर्थः । वाक्या-

१. T. ननु
A omits न

भाष्यम्

वामि" इति; तथाथर्वणिकानाम्—"तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्" इति; तथा शाट्यायनिनः पठन्ति—"तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्"
5 इति; तथैव कौषीतकिनः—"तत्सुकृतदुष्कृते विधूनुते तस्य प्रिया ज्ञातयः सुकृतमुपयन्त्यप्रिया दुष्कृतम्" इति । तदिह क्वचित्सुकृत-दुष्कृतयोर्हानं श्रूयते; क्वचित्तयोरेव विभागेन प्रियैरप्रियैश्चोपायनम्; क्वचित्तु उभयमपि हानमुपायनं च; तद्यत्रोभयं श्रूयते तत्र तावत् न किंचिद्वक्तव्यमस्ति; यत्राप्युपायनमेव श्रूयते, न हानम्, तत्राप्यर्थादेव
10 हानं संनिपतति, अन्यैरात्मीययोः सुकृतदुष्कृतयोरुपेयमानयोः आवश्यकत्वात्तद्धानस्य; यत्र तु हानमेव श्रूयते, नोपायनम्—तत्रोपायनं संनिपतेद्वा, न वेति विचिकित्सायाम्—अश्रवणादसंनिपातः, विद्यान्तरगोचरत्वाच्च शाखान्तरीयस्य श्रवणस्य । अपि च आत्मकर्तृकं सुकृतदुष्कृतयोर्हानम्; परकर्तृकं तु उपायनम्; तयोरसत्यावश्यकभावे,
15 कथं हानेनोपायनमाक्षिप्येत? तस्मादसंनिपातो हानादुपायनस्येति ॥

प्रकटार्थविवरणम्

नामापाततोऽर्थमाह—तदिह[1] क्वचिदिति ॥ सन्देहं दर्शयितुमसन्दिग्धमंशमाह—तद्यत्रोभयमिति ॥ उपायनस्य हानसन्निधिश्रवणार्थभावाभावाभ्यां संशयमाह—यत्र तु हानमेवेति ॥ यथा तैत्तिरीयके पुरुषस्य यज्ञत्वश्रवणा-
20 दनुपसंहार उक्तः, तथात्राप्यनुपसंहारो[2] हानादुपायनस्येत्याह[3]—अश्रवणादिति ॥ यथा च पूर्वस्मिन्नधिकरणे मन्त्राणां कर्मणां चान्यशेषत्वावगमाद्विद्यायामनुपसंहारः, तथात्रापि कौषीतकिनां हानानन्तरं श्रुतस्योपायनस्य सगुणविद्याशेषत्वात् छन्दोगादिषु नास्त्युपसंहारो निर्गुणविद्यानामित्याह—विद्यान्तरेति ॥ उपायनमन्तरेणापि हानोपपत्तेः अर्थवादत्वेन प्रयोजना-
25 भावाच्च नोपसंह्रियत इत्याह—अपि चेति ॥

१. T, T[1] and TM. तमिह
२. TM and A. तथानुपसंहारो
३. T[1]. हानादुपायनस्य

भाष्यम्

अस्यां प्राप्तौ पठति—हानाविति। हानौ तु एतस्यां केवलाया-
मपि श्रूयमाणायामुपायनं संनिपतितुमर्हति; तच्छेषत्वात्—हानशब्द-
शेषो हि उपायनशब्दः समधिगतः कौषीतकिरहस्ये; तस्मादन्यत्र केव-
लहानशब्दश्रवणेऽप्युपायनानुवृत्तिः। यदुक्तम्—अश्रवणात् विद्या- 5
न्तरगोचरत्वात् अनावश्यकत्वाच्च असंनिपात इति, तदुच्यते—भवे-
देषा व्यवस्थोक्तिः, यद्यनुष्ठेयं किंचिदन्यत्र श्रुतमन्यत्र निनीष्येत;
न त्विह हानमुपायनं वानुष्ठेयत्वेन संकीर्त्यते; विद्यास्तुत्यर्थं त्वनयोः
संकीर्तनम्—इत्थं महाभागा विद्या, यत्सामर्थ्यादस्य विदुषः सुकृत-
दुष्कृते संसारकारणभूते विधूयेते, ते च अस्य सुहृद्दुर्हृत्सु निविशेते 10
इति; स्तुत्यर्थे च अस्मिन्संकीर्तने, हानानन्तरभावित्वेनोपायनस्य,
क्वचिच्छ्रुतत्वात् अन्यत्रापि हानश्रुतावुपायनानुवृत्तिं मन्यते—स्तुति-
प्रकर्षलाभाय; प्रसिद्धा च अर्थवादान्तरापेक्षा अर्थवादान्तरप्रवृत्तिः—
"एकविंशो वा इतोऽसावादित्यः" इत्येवमादिषु; कथं हि इह एक-
विंशता आदित्यस्याभिधीयेत, अनपेक्ष्यमाणेऽर्थवादान्तरे—"द्वादश 15

प्रकटार्थविवरणम्

विवादाध्यासितं हानमुपायनसंबन्धि, विदुषः सुकृतदुष्कृतहानत्वात्,
कौषीतकिगतसुकृतादिहानवदित्यनुमानेन स्तुतिप्रकर्षप्रयोजनाय उपायनमुप-
संह्रियत इत्याह—हानौ त्वित्यादिना[1] ॥ अश्रुतमपि श्रुत्यन्तरानुसारेण ग्राह्य-
मित्यत्र दृष्टान्तमाह—प्रसिद्धा चेत्यादिना ॥ यज्ञस्य पुरुषाकारककल्पनायां[2] 20
सेन्द्रियत्वाय त्रिष्टुभौ भवत इत्युक्तं बह्वृचब्राह्मणे। तत्र त्रिष्टुप्शब्देन छन्दो-
मात्रविधानात् कथं सेन्द्रियत्वमित्याकाङ्क्षायां वाजसनेयके त्रिष्टुभ इन्द्रियत्वेन
स्तुतत्वात् तद्ग्रहणमित्यर्थः। ननु श्रुत्यन्तरप्रसिद्धमप्युपायनं न हानावुपसंह-
र्तव्यम्, परकीययोः सुकृतदुष्कृतयोः परेणोपादानासंभवात् इत्याशङ्क्याह—
स्तुत्यर्थत्वाच्चेति ॥ ननु सूत्रकारेण[3] हानावुपायनानुवृत्तेः दर्शितत्वात् न 25

१. T. हानेन त्वित्यादिना

२. TM. कल्पनां

३. T. सूत्रेण

## भाष्यम्

मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः" इत्येतस्मिन्[1]
तथा "त्रिष्टुभौ भवतः सेन्द्रियत्वाय" इत्येवमादिवादेषु "इन्द्रियं वै
त्रिष्टुप्" इत्येवमाद्यर्थवादान्तरापेक्षा दृश्यते । विद्यास्तुत्यर्थत्वाच्च
अस्योपायनवादस्य, कथमन्यदीये सुकृतदुष्कृते अन्यैरुपेयेते इति नाती-
वाभिनिवेष्टव्यम् । उपायनशब्दशेषत्वादिति च शब्दशब्दं समुच्चारयन्
स्तुत्यर्थामेव हानावुपायनानुवृत्तिं सूचयति ; गुणोपसंहारविवक्षायां हि
उपायनार्थस्यैव हानावनुवृत्तिं ब्रूयात्[3] । तस्मात् गुणोपसंहारविचारप्रस-
ङ्गेन स्तुत्युपसंहारप्रदर्शनार्थमिदं सूत्रम् । कुशाच्छन्दस्तुत्युपगानवदिति उप-
मोपादानम् ; तद्यथा—भाल्लविनाम् "कुशा वानस्पत्याः स्थ ता मा
पात" इत्येतस्मिन्निगमे कुशानामविशेषेण वनस्पतियोनित्वश्रवणे
शाट्यायनिनाम् "औदुम्बराः कुशाः" इति विशेषवचनात् औदुम्बर्यः
कुशा आश्रीयन्ते ; यथा च क्वचिद्देवासुरच्छन्दसामविशेषेण पौर्वापर्य-
प्रसङ्गे, "देवच्छन्दांसि पूर्वाणि" इति पैङ्ग्याम्नानात्प्रतीयते ; यथा च

## प्रकटार्थविवरणम्

स्तुतिमात्रमित्याशङ्क्याह — उपायनशब्देति ॥ उपायनस्य शेषत्वादिति
वक्तव्ये शब्दशब्दोच्चारणात् स्तुत्यर्थत्वमेव सूत्रकारस्याभिमतमित्यर्थः ।
शाखान्तरगतोऽपि विशेषः शाखान्तरेऽप्याश्रयणीय इत्यत्र कुशादृष्टान्तं व्या-
चष्टे—तद्यथेति ॥ भोः कुशाः यूयं वानस्पत्या वनस्पतिप्रभवाः स्थ भवथ । ता मा
मां पात रक्षतेत्यर्थः ॥ औदुम्बर्यः कुशा इति ॥ समित्[समिद्वाचि]कुशाशब्दस्य
स्त्रीलिङ्गत्वापरिज्ञानात् 'छन्द एवाच्छन्दः' इति पदं[2] विच्छेद वाचस्पतिः ।
छन्दोदृष्टान्तं व्याचष्टे—यथा चेति ॥ "पञ्च दशाक्षरादीनि देवछन्दांसि; नवा-
क्षरादीनि आसुराणि;तेषां क्वचिन्नवाक्षरमसुराणामपच्छन्द आसीत् सप्ताक्षरं पर-
मम्" इत्यादौ छान्दोग्ये पौर्वापर्यविशेषाभावे पैङ्ग्याम्नानाद्विशेषनिश्चय इत्यर्थः ।
स्तुतिं विवृणोति—यथा च षोडशीति ॥ अतिरात्रे षोडशिनः पात्रविशेषस्य

१. TM and A add रशनाः
२. A. तदविच्छेदः
३. T, T¹ and TM. भायात्

भाष्यम्

षोडशिस्तोत्रे केषांचित्कालाविशेषप्राप्तौ, "समयाध्युषिते सूर्ये" इत्यार्चे-श्रुतेः कालविशेषप्रतिपत्तिः ; यथैव च अविशेषेणोपगानं केचित्समा-मनन्ति विशेषेण भाल्लविनः । यथा एतेषु कुशादिषु श्रुत्यन्तरगतविशे-षान्वयः, एवं हानावप्युपायनान्वय इत्यर्थः । श्रुत्यन्तरकृतं हि विशेषं 5 श्रुत्यन्तरेऽनभ्युपगच्छतः सर्वत्रैव विकल्पः स्यात् ; स च अन्याय्यः सत्यां गतौ ; तदुक्तं द्वादशलक्षण्याम्—"अपि तु वाक्यशेषत्वादितर-पर्युदासः स्यात्प्रतिषेधे विकल्पः स्यात्" इति ॥

प्रकटार्थविवरणम्

ग्रहणे यदङ्गभूतं स्तोत्रं तत्कस्मिन्काले गेयमिति छन्दोगानां विशेषाश्रवणात् 10 कालविशेषाप्राप्तौ सूर्ये समयाध्युषिते सूर्योदयसमीपे इति कालविशेषप्रतीतिः, ऋचोऽधीयत इत्यर्चाः, तदीयश्रुतेर्भवतीत्यर्थः । उपगानं विवृणोति—यथैव चेति ॥ "ऋत्विज उपगायन्ति" इत्यविशेषेण ; "नाध्वर्युरुपगायति" इति विशेषेणाधाने इदानीं विवक्षितांशमाह—यथैतेष्विति ॥ विपक्षे दोषमाह—श्रुत्यन्तरकृतं हीति ॥ सत्यां गतौ विकल्पो न न्याय्योऽष्टदोषदुष्टत्वात् अगतिकागतिन्यायेन व्रीहियव- 15 वाक्ययोस्तदाश्रयणम् । तथा हि—यदा "व्रीहिभिर्यजेत" इति वाक्यमाश्री-यते तदा "यवैर्यजेत" इत्यस्य दृष्टप्रामाण्यत्यागः, अनिष्टप्रामाण्योपादानम्, कदाचित्तस्यापि प्रामाण्योपादाने परित्यक्तोपादानम्, उपात्तत्यागश्चेति एक-स्मिन्वाक्ये चत्वारो दोषाः । एवमितरत्रापीति । तदुक्तम्—

"एवमेषोऽष्टदोषोऽपि यद्व्रीहियववाक्ययोः । 20
विकल्प आश्रितस्तत्र गतिरन्या न विद्यते ॥"

इति । विकल्पपरिहाराय श्रुत्यन्तरगतो विशेषः समाश्रयणीय इत्येतद्द्वादशा-ध्याय्यां मीमांसायामप्युक्तमित्याह—तदुक्तमिति ॥ "नानूयाजेषु येयजामहं

१. TM. मपि समीप
T[1]. षिते अर्धास्तमये काल
२. A. इत्याद्यास्तदीय
३. A. गाने
४. A. यथैकेष्विति
५. A. त्यागेनानिष्ट
६. T and T[1]. श्रुतिरन्या

भाष्यम्

अथ वा एतास्वेव विधूननश्रुतिषु एतेन सूत्रेण एतच्चिन्तयितव्यम्—किमनेन विधूननवचनेन सुकृतदुष्कृतयोर्हानमभिधीयते, किं वा अर्थान्तरमिति। तत्र च एवं प्रापयितव्यम्—न हानं विधूननमभिधीयते,
5 "धूञ् कम्पने" इति स्मरणात्, "दोधूयन्ते ध्वजाग्राणि" इति च वायुना चाल्यमानेषु ध्वजाग्रेषु प्रयोगदर्शनात्; तस्मात् चालनं विधूननमभिधीयते; चालनं तु सुकृतदुष्कृतयोः कंचित्कालं फलप्रतिबन्धनात्—इति; एवं प्राप्ते प्रतिवक्तव्यम्—हानावेव एष विधूननशब्दो वर्तितुमर्हति, उपायनशब्दशेषत्वात्; न हि परपरिग्रहभूतयोः सुकृत-

10 प्रकटार्थविवरणम्

करोति" इत्यत्र निषेधपर्युदासयोः संशये सिद्धान्तितम्—नायं प्रतिषेध इति। स विकल्पः स्याद्यजतिषु येयजामहकरणस्य विहितत्वात्, षोडशिग्रहणाग्रहणवत्। स च सत्यां गतौ न न्याय्यः; अपि तु येयजामहकरणविधेः वाक्यशेषत्वात् इतरेषामनूयाजानां पर्युदासः स्यात् अनूयाजवर्जितेषु यजतिषु
15 येयजामहः कर्तव्यः इति विधिः परिपूर्णो भवतीत्यर्थः॥

प्रकारान्तरेणाधिकरणमाविष्करोति—अथवेति॥ धात्वर्थस्य मुख्यत्वलाभेन पूर्वपक्षमाह—तत्र चैवमिति॥ नन्वमूर्तत्वात्सुकृतदुष्कृतयोश्चालनं नोपपद्यते, तस्य मूर्त्यनुविधायित्वात्। "असर्वगतद्रव्यपरिमाणं च मूर्तिः" इत्याशङ्क्याह—चालनं त्विति॥ किंचित्कालं फलदानायोन्मुखीभाव-
20 लक्षणात्स्वभावात् प्रच्यवनं विद्याप्रतिबन्धाच्चालनं लक्ष्यत इति भावः। मुख्यार्थासंभवेन शब्दस्य लक्षणोपादाने सन्निहितपदानुसारेण लक्षणा न्याय्येत्युपायनशब्दसन्निधानाद्धानमेव लक्ष्यत इत्याह—हानावेवैष इति॥ ननु उपायनशब्दस्याप्यत्र मुख्यार्थत्वायोगात् कथं तद्बलेन हानं लक्ष्यत

१. A. न्याय्यः
२. TM. अपि च
३. TM. परिमाणः

भाष्यम्

दुष्कृतयोः अप्रहीणयोः परैरुपायनं संभवति; यद्यपि इदं परकीययोः सुकृतदुष्कृतयोः परैरुपायनं न आञ्जसं संभाव्यते, तथापि तत्संकीर्तनात्तावत् तदानुगुण्येन हानमेव विधूननं नामेति निर्णेतुं शक्यते। कचिदपि च इदं विधूननसंनिधावुपायनं श्रूयमाणं कुशाच्छन्दस्तुत्युपगानवत् विधूननश्रुत्या सर्वत्रापेक्ष्यमाणं सार्वत्रिकं निर्णयकारणं संपद्यते। न च चालनं ध्वजाग्रवत् सुकृतदुष्कृतयोर्मुख्यं संभवति, अद्रव्यत्वात्। अश्वश्च रोमाणि विधून्वानः त्यजन् रजः सहैव तेन रोमाण्यपि जीर्णानि शातयति—"अश्व इव रोमाणि विधूय पापम्" इति च ब्राह्मणम्; अनेकार्थत्वाभ्युपगमाच्च धातूनां न स्मरणविरोधः। तदुक्तमिति व्याख्यातम्॥

प्रकटार्थविवरणम्

इत्याशङ्क्याह — यद्यपीदमिति॥ ननु उपायनं न सर्वत्र विधूननसन्निधौ श्रूयते; तत्कथं निर्णयकारणमित्याशङ्क्याह—कचिदपि चेदमिति॥ कुशाच्छन्दस्तुत्युपगानैर्यथा शाखान्तरगतो विशेषोऽपेक्ष्यते तद्वदपेक्ष्यमाणमित्यर्थः। ध्वजाग्रदृष्टान्तोऽपि न सम इत्याह—न च चालनमिति॥ ननु हानपक्षे श्रौतो दृष्टान्तो नानुकूलः स्यादित्याशङ्क्याह—अश्वश्चेति॥ नन्वश्वो जीर्णानि रोमाणि त्यजतीति यद्यपि प्रत्यक्षसिद्धम्, तथापि तद्वत्पापप्रहाणे न प्रमाणमित्याशङ्क्याह—अश्व इव रोमाणीति॥ प्रहाणपक्षे धातुस्मरणविरोधोऽपि नास्तीत्याह — अनेकार्थत्वेति॥ तस्माद्यत्र विधूननमेव केवलं श्रूयते, तत्रापि शाखान्तरीयादुपायनशब्दाद्धानं ग्राह्यम्, अन्यथा विकल्पप्रसङ्गात्; तस्य चान्याय्यत्वं पूर्वतन्त्रेऽभिहितमित्यर्थः॥

१. A. अश्वेति　　३. T, T[1] and TM. त्वेऽपीति.

२. A. साधुस्मरण

भाष्यम्

[ सांपरायाधिकरणम् ]

## सांपराये तर्तव्याभावात्तथा ह्यन्ये ॥ ३-३-२७ ॥

देवयानेन पथा पर्यङ्कस्थं ब्रह्म अभिप्रस्थितस्य व्यध्वनि सुकृत-
5 दुष्कृतयोर्वियोगं कौषीतकिनः पर्यङ्कविद्यायामामनन्ति "स एतं देव-
यानं पन्थानमासाद्याग्निलोकमागच्छति" इत्युपक्रम्य "स आगच्छति
विरजां नदीं तां मनसैवात्येति तत्सुकृतदुष्कृते विधूनुते" इति। तत्
किं यथाश्रुतं व्यध्वन्येव वियोगवचनं प्रतिपत्तव्यम्, आहोस्वित् आदा-
वेव देहादपसर्पणे—इति विचारणायाम्, श्रुतिप्रामाण्यात् यथाश्रुति प्रति-
10 पत्तिप्रसक्तौ, पठति—सांपराय इति। सांपराये गमन एव देहादप-
सर्पणे, इदं विद्यासामर्थ्यात्सुकृतदुष्कृतहानं भवति—इति प्रतिजानीते;
हेतुं च आचष्टे—तर्तव्याभावादिति; न हि विदुषः संपरेतस्य विद्यया
ब्रह्म संप्रेप्सतः अन्तराले सुकृतदुष्कृताभ्यां किंचित्प्राप्तव्यमस्ति, यदर्थं
कतिचित्क्षणानक्षीणे ते कल्प्येयाताम्। विद्याविरुद्धफलत्वात्तु विद्या-
15 सामर्थ्येन तयोः क्षयः; स च यदैव विद्या फलाभिमुखी तदैव भवितु-
मर्हति। तस्मात् प्रागेव सन् अयं सुकृतदुष्कृतक्षयः पश्चात्पठ्यते। तथा
हि अन्येऽपि शाखिनः ताण्डिनः शाट्यायनिनश्च प्रागवस्थायामेव

प्रकटार्थविवरणम्

सांपराये तर्तव्याभावत्तथा ह्यन्ये ॥

20 विधूननं हानमिति व्याख्याय तदेव हानं क्वचिद्व्यध्वनि अर्थपक्षे [अर्धपथे]
श्रूयते; तद्विचारयितुमुपक्रमते — देवयानेनेति ॥ श्रुतिद्वैविध्यात्संशयः।
पूर्वपक्षप्राप्तिमुक्त्वा सिद्धान्तसूत्रं योजयति —श्रुतिप्रामाण्यादित्यादिना ॥
संपरेतस्येति ॥ परलोकं प्रस्थितस्येत्यर्थः। सुकृतदुष्कृतयोरनुगमनप्रयोजना-
भावादनुगमनं न संभवतीत्युक्तम्। कदा तर्हि प्रहाणं युक्तमित्याशङ्क्याह—
25 विद्याविरुद्धेति ॥ पुष्कलकारणानन्तरं कार्यं भवतीति लौकिकन्यायानुग्रहात्
श्रुत्यन्तरमेव बलवदित्यभिप्रेत्योदाहरति —तथा ह्यन्येऽपीति ॥

भाष्यम्

सुकृतदुष्कृतहानमामनन्ति—“अश्व इव रोमाणि विधूय पापम्” इति, “तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्” इति च ॥

## छन्दत उभयाविरोधात् ॥ ३-३-२८ ॥ 5

यदि च देहादपसृप्तस्य देवयानेन पथा प्रस्थितस्य अर्धपथे सुकृतदुष्कृतक्षयोऽभ्युपगम्येत, ततः पतिते देहे यमनियमविद्याभ्यासात्मकस्य सुकृतदुष्कृतक्षयहेतोः पुरुषप्रयत्नस्य इच्छातोऽनुष्ठानानुपपत्तेः अनुपपत्तिरेव तद्धेतुकस्य सुकृतदुष्कृतक्षयस्य स्यात्; तस्मात् पूर्वमेव साधकावस्थायां छन्दतोऽनुष्ठानं तस्य स्यात्, तत्पूर्वकं च सुकृतदुष्कृतहानम्—इति द्रष्टव्यम्; एवं निमित्तनैमित्तिकयोरुपपत्तिः ताण्डिशाट्यायनिश्रुत्योश्च संगतिरिति ॥ 10

[ गतेरर्थवत्त्वाधिकरणम् ]

## गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः ॥ ३-३-२९ ॥

क्वचित्पुण्यपापहानसंनिधौ देवयानः पन्थाः श्रूयते, क्वचिन्न; तत्र संशयः—किं हानावविशेषेणैव देवयानः पन्थाः संनिपतेत्, उत विभागेन क्वचित्संनिपतेत् क्वचिन्नेति । यथा तावत् हानावविशेषेणैव 15

प्रकटार्थविवरणम्

छन्दत उभयाविरोधात् ॥

किं च परपक्षे स्वेच्छातो विद्यानुष्ठानाभावात् उभयोर्विद्याप्रहाणयोर्निमित्तनैमित्तिकभाव एव विरुध्यते, नास्मत्पक्ष इत्याह—छन्दत इति ॥ 20

गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः ॥

हानसंनिधौ मार्गश्रवणात् विशेषापरिज्ञानाच्च संशयः । व्यवहितसंबन्धमाह—यथा तावदिति ॥ निर्विशेषब्रह्मविद्या अर्चिरादिगतिसंबन्धि[1]नी

1. T and T[1]. बन्धीति

भाष्यम्

उपायनानुवृत्तिरुक्ता एवं देवयानानुवृत्तिरपि भवितुमर्हतीत्यस्यां प्राप्तौ, आचक्ष्महे—गतेः देवयानस्य पथः, अर्थवत्त्वम्, उभयथा विभागेन भवितुमर्हति—क्वचिदर्थवती गतिः क्वचिन्नेति ; न अविशेषेण । अन्यथा
5 हि अविशेषेणैव एतस्यां गतावङ्गीक्रियमाणायां विरोधः स्यात्—"पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" इत्यस्यां श्रुतौ देशान्तरप्रापणी गतिर्विरुध्येत ; कथं हि निरञ्जनोऽगन्ता देशान्तरं गच्छेत् ; गन्तव्यं च परमं साम्यं न देशान्तरप्राप्त्यायत्तम्—इत्यानर्थक्यमेवात्र गतेर्मन्यामहे ॥

10 **उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३-३-३० ॥**

उपपन्नश्चायम् उभयथाभावः—क्वचिदर्थवती गतिः क्वचिन्नेति ; तल्लक्षणार्थोपलब्धेः—गतिकारणभूतोऽर्थः पर्यङ्कविद्यादिषु सगुणेषु उपासनेषु उपलभ्यते ; तत्र हि पर्यङ्कारोहणम्, पर्यङ्कस्थेन ब्रह्मणा संवदनम्, विशिष्टगन्धादिप्राप्तिश्च — इत्येवमादि बहुदेशान्तरप्राप्त्यायत्तं फलं
15 श्रूयते ; तत्रार्थवती गतिः, न हि सम्यग्दर्शने तल्लक्षणार्थोपलब्धिरस्ति ;

प्रकटार्थविवरणम्

ब्रह्मविद्यात्वात्, सगुणवदित्यनुमानेनोपसंहार इत्यर्थः । निर्गुणब्रह्मवित् नार्चिरादिगतिमान्, मुक्तिफलत्वात्, प्रलये मुच्यमानहिरण्यगर्भवदिति प्रत्यनुमानेनोपसंहारानुमानस्य बाधाभाविशेषेणेत्यर्थः । विपक्षे दोषमाह—अन्यथा
20 हीति ॥ देशाद्यव्यवहितवस्तुप्राप्तौ न गत्यपेक्षेति लौकिकन्यायानुगृहीतेन वाक्येन बाधात् न प्रकरणेनापि गतिप्राप्तिरिति भावः ॥

उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥

गतिसाध्यप्रयोजनाभावादपि न निर्गुणविदुषो गतिकल्पनेत्याह — उपपन्नश्चायमिति ॥ पौनरुक्त्यपरिहारायाह—भूयश्चैतमिति ॥

१. A. ब्रह्मविद्यार्चिरादिगतिमार्गं सेपजिनीत (?) मुक्ति

भाष्यम्

न हि आत्मैकत्वदर्शिनामाप्तकामानाम् इहैव दग्धाशेषक्लेशबीजानामारब्धभोगकर्माशयक्षपणव्यतिरेकेण अपेक्षितव्यं किंचिदस्ति ; तत्र अनर्थिका गतिः । लोकवच्च एष विभागो द्रष्टव्यः—यथा लोके ग्रामप्राप्तौ देशान्तरप्रापणः पन्था अपेक्ष्यते, न आरोग्यप्राप्तौ, एवमिहापीति । भूयश्च एतं विभागं चतुर्थाध्याये निपुणतरमुपपादयिष्यामः ॥

[ अनियमाधिकरणम् ]

## अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम् ॥ ३-३-३१ ॥

सगुणासु विद्यासु गतिरर्थवती, न निर्गुणायां परमात्मविद्यायाम्—इत्युक्तम् ; सगुणास्वपि विद्यासु कासुचिद्गतिः श्रूयते—यथा पर्यङ्कविद्यायामुपकोसलविद्यायां पञ्चाग्निविद्यायां दहरविद्यायामिति ; न अन्यासु—यथा मधुविद्यायां शाण्डिल्यविद्यायां षोडशकलविद्यायां वैश्वानरविद्यायामिति । तत्र संशयः—किं यास्वेषा गतिः श्रूयते, तास्वेव नियम्येत ; उतानियमेन सर्वाभिरेव एवंजातीयकाभिरभिसंबध्यतेति । किं तावत्प्राप्तम् ? नियम इति । यत्रैव श्रूयते, तत्रैव भवितुमर्हति, प्रकरणस्य नियामकत्वात् ; यद्यन्यत्र अश्रूयमाणापि गतिः विद्यान्तरं गच्छेत् श्रुत्यादीनां प्रामाण्यं हीयेत, सर्वस्य सर्वार्थत्वप्रसङ्गात् । अपि च अर्चिरादिका एकैव गतिः उपकोसलविद्यायां पञ्चाग्नि-

प्रकटार्थविवरणम्

अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम् ॥

अधिकरणसङ्गतिमाह—सगुणास्विति ॥ विद्याविशेषप्रकरणाद्वाक्याविशेषावगमाच्च संशयः । पूर्वपक्षं रचयति—किं तावदिति ॥ पौनरुक्त्यपरिहारायापि नियमोऽभ्युपगन्तव्य इत्याह—अपि चेति ॥

भाष्यम्

विद्यायां च तुल्यवत्पठ्यंते ; तत्सर्वार्थत्वेऽनर्थकं पुनर्वचनं स्यात् । तस्मान्नियम इत्येवं प्राप्ते पठति—

अनियम इति । सर्वासामेव अभ्युदयप्राप्तिफलानां सगुणानां
5 विद्यानाम् अविशेषेण एषा देवयानाख्या गतिर्भवितुमर्हति । ननु अनियमाभ्युपगमे प्रकरणविरोध उक्तः—नैषोऽस्ति विरोधः ; शब्दानुमानाभ्यां श्रुतिस्मृतिभ्यामित्यर्थः । तथा हि श्रुतिः—"तद्य इत्थं विदुः" इति पञ्चाग्निविद्यावतां देवयानं पन्थानमवतारयन्ती "ये चेमेऽरण्ये श्रद्धातप इत्युपासते" इति विद्यान्तरशीलिनामपि पञ्चाग्नि-
10 विद्याविद्भिः समानमार्गतां गमयति । कथं पुनरवगम्यते—विद्यान्तरशीलिनामियं गतिरिति ? ननु श्रद्धातपःपरायणानामेव स्यात्, तन्मात्रश्रवणात्—नैष दोषः ; न हि केवलाभ्यां श्रद्धातपोभ्याम् अन्तरेण विद्याबलम् एष गतिर्लभ्यते—

प्रकटार्थविवरणम्

15 अनियमं विवृणोति—सर्वासामेवेति ॥ गतिमन्तरेण फलप्राप्तेरेवासंभवादित्यर्थः । उक्तदोषपरिहाराय सूत्रभागमवतारयति — नन्वित्यादिना ॥ अविशेषेण विद्यान्तरशीलिनं देवयानप्रापकवाक्येन प्रकरणबाध इत्यर्थः । 'ये चेमे अरण्ये स्थित्वा श्रद्धातप इत्युपासते अनुतिष्ठन्ति तेऽर्चिषमभिसंभवन्ति' इत्येतावदवगम्यते, न तु विद्यान्तरानुष्ठायित्वमित्याह—कथं पुन-
20 रिति ॥ कस्तर्ह्यस्यार्थ इत्याशङ्क्याह—नन्वु श्रद्धेति ॥ अविदुषां प्रतिषेधश्रवणान्नैवं कल्पयितुं शक्यत इत्याह—नैष दोष इति ॥ विद्यया तदारोहन्ति प्राप्नुवन्ति यत्र सर्वे कामाः परागताः परावृत्ताः; न तत्र दक्षिणामार्गगाः केवलकर्मिणो यान्ति ; नाविद्वांसः तपस्विनोऽपीत्यर्थः । यस्मान्मुख्ये बाधकमस्ति तस्माच्छ्रद्धातपःपरायणाः सन्तः परमेश्वरमहमित्युपासते ये संन्यासिनः, न च
25 साक्षात्कृतब्रह्माणः, तेऽप्यर्चिरादिना गच्छन्तीत्यर्थः । अत्रैव वाजसनेयकसंशय-

१. T and T[1] omit अपि

भाष्यम्

"विद्यया तदारोहन्ति यत्र कामाः परागताः ।
न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः ॥"

इति श्रुत्यन्तरात्; तस्मात् इह श्रद्धातपोभ्यां विद्यान्तरोपलक्षणम् । वाजसनेयिनस्तु पञ्चाग्निविद्याधिकारेऽधीयते—"य एवमेतद्विदुर्ये चामी 5 अरण्ये श्रद्धां सत्यमुपासते" इति; तत्र श्रद्धालवो ये सत्यं ब्रह्मोपासत इति व्याख्येयम्, सत्यशब्दस्य ब्रह्मणि असकृत्प्रयुक्तत्वात् । पञ्चाग्नि-विद्याविदां च इत्थंवित्तयैव उपात्तत्वात्, विद्यान्तरपरायणानामेव एत-दुपादानं न्याय्यम् । "अथ य एतौ पन्थानौ न विदुस्ते कीटाः पतङ्गा यदिदं दन्दशूकम्" इति च मार्गद्वयभ्रष्टानां कष्टामधोगतिं गमयन्ती 10 श्रुतिः देवयानपितृयाणयोरेव एनान् अन्तर्भावयति । तत्रापि विद्या-विशेषादेषां देवयानप्रतिपत्तिः । स्मृतिरपि—

"शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।
एकया यात्यनावृत्तिमन्ययावर्तते पुनः ॥" इति ।

यत्पुनर्देवयानस्य पथो द्विराम्नानम् उपकोसलविद्यायां पञ्चाग्निविद्यायां 15 च तदुभयत्रापि अनुचिन्तनार्थम् । तस्मादनियमः ॥

प्रकटार्थविवरणम्

माह—वाजसनेयिनस्त्विति ॥ किंच विद्याकर्मलक्षणमार्गद्वयभ्रष्टानामधोगत्य-भिधानादपि विद्यान्तरशीलिनां देवयानप्राप्तिरित्याह—अथ य एताविति ॥ दन्दशूकः सर्पः । श्रुतिमुक्त्वा स्मृतिमाह—स्मृतिरपीति ॥ शुक्लपक्षोपल- 20 क्षितो देवयानाख्या गतिः; कृष्णपक्षोपलक्षितो पितृयाणाख्या जगत एते गती शाश्वते नित्ये मते; एकया शुक्लगत्या यात्यनावृत्तिं विद्वान्; अन्यया आवर्तते पुनः कर्मीति अविशेषेणैवोक्तमित्यर्थः । नियमकारणान्तरमनूद्य गतिराह—यत्पुनरिति ॥ गत्यनुचिन्तनमुभयत्राप्युक्तमिति दर्शयितुमित्यर्थः ॥

१. T and T[1]. किमिति

भाष्यम्

[ यावदधिकाराधिकरणम् ]

## यावदधिकारमवस्थितिराधिकारिकाणाम्

## ॥ ३-३-३२ ॥

5 विदुषो वर्तमानदेहपातानन्तरं देहान्तरमुत्पद्यते, न वा—इति चिन्त्यते । ननु विद्यायाः साधनभूतायाः संपत्तौ कैवल्यनिर्वृत्तिः स्यात्, न वेति नेयं चिन्ता उपपद्यते ; न हि पाकसाधनसंपत्तौ ओदनो भवेत्, न वेति चिन्ता संभवति ; नापि भुञ्जानः तृप्येत्, न वेति चिन्त्यते— उपपन्ना तु इयं चिन्ता, ब्रह्मविदामपि केषांचित् इतिहासपुराणयोर्दे-
10 हान्तरोत्पत्तिदर्शनात् ; तथा हि—अपान्तरतमा नाम वेदाचार्यः पुराणर्षिः विष्णुनियोगात् कलिद्वापरयोः संधौ कृष्णद्वैपायनः संबभूवेति स्मरन्ति ; वसिष्ठश्च ब्रह्मणो मानसः पुत्रः सन् निमिशापादपगतपूर्वदेहः पुनर्ब्रह्मादेशान्मित्रावरुणाभ्यां संबभूवेति ; भृग्वादीनामपि ब्रह्मण एव मानसपुत्राणां वारुणे यज्ञे पुनरुत्पत्तिः स्मर्यते ; सनत्कुमारोऽपि ब्रह्मण
15 एव मानसः पुत्रः स्वयं रुद्राय वरप्रदानात् स्कन्दत्वेन प्रादुर्बभूव ; एवमेव दक्षनारदप्रभृतीनां भूयसी देहान्तरोत्पत्तिः कथ्यते तेन तेन

प्रकटार्थविवरणम्

यावदधिकारमवस्थितिराधिकारिकाणाम् ॥

एवं तावदविशेषेणोपासकानां देवयानेन पथा ब्रह्मलोकप्राप्तिमुक्त्वा अधुना
20 तेषामुपासनाफलभुजां पर[1]विद्याभाजां शरीरान्तरं प्रवृत्तफलकर्मातिरिक्तकर्मनिमित्तमुत्पद्यते, न वेति प्रासङ्गिकं विचारान्तरमारभते — विदुष इति ॥ संशयकारणाभावाद्विचारमाक्षिपति—ननु विद्याया इति ॥ संशयकारणप्रदर्शनेन विचारारम्भं समर्थयति — उपपन्ना त्वियमिति ॥ समधिगतसकलवेदार्थानां देहान्तरोत्पत्तिदर्शनं संशयकारणमुक्त्वा पूर्वपक्षमाह —

१. A omits पर

भाष्यम्

निमित्तेन स्मृतौ । श्रुतावपि मन्त्रार्थवादयोः प्रायेणोपलभ्यते । ते च केचित् पतिते पूर्वदेहे देहान्तरमाददते, केचित्तु स्थित एव तस्मिन् योगैश्वर्यवशात् अनेकदेहादानन्यायेन । सर्वे च एते समधिगतसकलवेदार्थाः स्मर्यन्ते । तत् एतेषां देहान्तरोत्पत्तिदर्शनात् प्राप्तं ब्रह्मविद्यायाः पाक्षिकं मोक्षहेतुत्वम्, अहेतुत्वं वेति ॥ 5

अत उत्तरमुच्यते—न तेषाम् अपान्तरतमःप्रभृतीनां वेदप्रवर्तनादिषु लोकस्थितिहेतुष्वधिकारेषु नियुक्तानामधिकारतन्त्रत्वात् स्थितेः । यथासौ भगवान्सविता सहस्रयुगपर्यन्तं जगतोऽधिकारं चरित्वा तदवसाने उदयास्तमयवर्जितं कैवल्यमनुभवति—"अथ तत ऊर्ध्वमुदेत्य नैवोदेता नास्तमेतैकल एव मध्ये स्थाता" इति श्रुतेः; यथा च वर्तमाना ब्रह्मविद आरब्धभोगक्षये कैवल्यमनुभवन्ति—"तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये" इति श्रुतेः—एवम् अपान्तरतमःप्रभृतयोऽपीश्वराः परमेश्वरेण तेषु तेष्वधिकारेषु नियुक्ताः सन्तः सत्यपि सम्यग्दर्शने कैवल्यहेतौ अक्षीणकर्माणो यावदधिकारमवतिष्ठन्ते, तदवसाने 10 15

प्रकटार्थविवरणम्

तदेतेषामिति ॥ वसिष्ठादीनां शरीरान्तरं पूर्वशरीरारम्भकातिरिक्तकर्मनिबन्धनम्, शरीरान्तरत्वात्, संप्रतिपन्नवत् । अतश्च ब्रह्मवित्त्वाविशेषादन्यस्याप्याविर्भूतब्रह्मणोऽनारब्धकर्मनिमित्तशरीरग्रहणे सति विद्यायाः पाक्षिकमोक्षहेतुत्वान्नास्त्येव वा हेतुत्वम्, तत्तद्भोगकालेऽपि कर्मान्तरसंभवादित्यर्थः ॥ 20

अनारब्धकर्मनिमित्तं विदुषां शरीरग्रहणं न भवतीत्याह—नेति ॥ ततो भोगकालादूर्ध्वमुदेत्य उद्गम्य हित्वा पूर्वदेहं नैवोदेत नास्तमेत उदयास्तमयवर्जित एक एवाद्वितीय एव मध्ये ब्रह्मस्वरूपेण स्थातेत्यर्थः । श्रुत्यन्तरावष्टम्भेनोदाहरणान्तरमाह—यथा चेति ॥ यच्चानुमितं शरीरान्तरं कर्मान्तराधीनमिति, तत्राह—

१. T and T[1]. कर्माधीनं

भाष्यम्

च अपवृज्यन्त इत्यविरुद्धम् । सकृत्प्रवृत्तमेव हि ते फलदानाय कर्माशयमतिवाहयन्तः, स्वातन्त्र्येणैव गृहादिव गृहान्तरम् अन्यमन्यं देहं संचरन्तः स्वाधिकारनिर्वर्तनाय, अपरिमुषितस्मृतय एव देहेन्द्रियप्रकृति-
5 वशित्वात् निर्माय देहान् युगपत् क्रमेण वा अधितिष्ठन्ति; न च एते जातिस्मरा इत्युच्यन्ते—त एवैते इति स्मृतिप्रसिद्धेः—यथा हि सुलभा नाम ब्रह्मवादिनी जनकेन विवदितुकामा व्युदस्य स्वं देहम्, जानकं देहमाविश्य, व्युद्य तेन, पश्चात् स्वमेव देहमाविवेश—इति स्मर्यते । यदि उपयुक्ते सकृत्प्रवृत्ते कर्मणि कर्मान्तरं देहान्तरारम्भकारणमाविर्भवेत्,
10 ततः अन्यदप्यदग्धबीजं कर्मान्तरं तद्वदेव प्रसज्येतेति ब्रह्मविद्यायाः पाक्षिकं मोक्षहेतुत्वम् अहेतुत्वं वा शङ्क्येत; ननु इयमाशङ्का युक्ता, ज्ञानात्कर्मबीजदाहस्य श्रुतिस्मृतिप्रसिद्धत्वात् । तथा हि श्रुतिः—

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥" इति,

15 "स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः" इति चैवमाद्या । स्मृतिरपि—

"यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥" इति

"बीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुनः ।
ज्ञानदग्धैस्तथा क्लेशैर्नात्मा संपद्यते पुनः ॥" इति

20 प्रकटार्थविवरणम्

सकृत्प्रवृत्तमेवेति ॥ यस्य जातिस्मरव्यतिरिक्तस्य कर्मान्तराधीनं शरीरान्तरम्, तस्य स्मृतिप्रमोषो दृष्टः । स च तेषु नोपलभ्यत इति व्यापकानुपलब्धिबाध इत्यर्थः । तर्हि तेऽपि जातिस्मरा एवेत्याशङ्क्याह—न चैत इति ॥ जानकं जनकस्य देहमाविश्य, व्यूह्य[व्युद्य] विवादं कृत्वा, तेन जनकेन सहेत्यर्थः । किं च
25 विदुषोऽदग्धकर्माभावादेव न तन्निमित्तं शरीरान्तरं संभाव्यते, अङ्कुर इव बीजाभाव इत्याह—यद्युपयुक्त इत्यादिना ॥ न केवलं श्रुतिस्मृतिसिद्ध एव कर्म-

१. A. ज्ञानेन

भाष्यम्

चैवमाद्या। न च अविद्यादिक्लेशदाहे सति क्लेशबीजस्य कर्माशयस्य एकदेशदाहः एकदेशप्ररोहश्च इत्युपपद्यते; न हि अग्निदग्धस्य शालिबीजस्य एकदेशप्ररोहो दृश्यते; प्रवृत्तफलस्य तु कर्माशयस्य मुक्तेषोरिव वेगक्षयात् निवृत्तिः, "तस्य तावदेव चिरम्" इति शरीर- 5
पातावधिक्षेपकरणात्। तस्मादुपपन्ना यावदधिकारम् आधिकारिकाणामवस्थितिः। न च ज्ञानफलस्य अनैकान्तिकता; तथा च श्रुतिः अविशेषेणैव सर्वेषां ज्ञानान्मोक्षं दर्शयति—"तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम्" इति। ज्ञानान्तरेषु च ऐश्वर्यादिफलेष्वासक्ताः स्युर्महर्षयः; ते पश्चादैश्वर्यक्षयदर्शनेन निर्विण्णाः 10
परमात्मज्ञाने परिनिष्ठाय कैवल्यं प्रापुरित्युपपद्यते—

"ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्॥"

प्रकटार्थविवरणम्

दाहः; किं तु युक्तिसिद्धोऽपीत्याह—न चाविद्यादिक्लेशदाहे सतीति॥ ननु 15
क्लेशदाहे सति तत्कार्यस्य कर्मणोऽवशेषो नोपपद्यते चेत्, तर्हि प्रारब्धफलस्य वा कथमवशिष्यतेत्याशङ्क्याह—प्रवृत्तफलस्य त्विति॥ यथा मुक्तेषोर्बलवत्प्रतिबन्धमन्तरेण मध्ये क्षयो न घटते, तथा प्रवृत्तफलस्यापि कर्मणो मध्ये नास्ति क्षयः, समुत्पन्नेऽपि ज्ञाने शरीरपातावधिकरणान्मोक्षस्य; प्रवृत्तफल-
कर्मोपादानाज्ञाननिवर्तने न समर्थं ज्ञानमित्यर्थः। उपसंहृतेऽर्थे प्रमाणमाह— 20
तथा च श्रुतिरिति॥ नन्वपान्तरतमःप्रभृतीनां निर्गुणब्रह्मविदां ईश्वरनियोगो वा कथं घटत इत्याशङ्क्य उपासकावस्थायां तेषां नियोगो बभूवेत्यभिप्रेत्याह—ज्ञानान्तरेषु चेति॥ प्रतिसञ्चरे महाप्रलये; परस्य हिरण्यगर्भस्य; अन्ते अधि-

१. A. समर्थनज्ञाने २. A. जन्मान्तरेषु

भाष्यम्

इति स्मरणात् । प्रत्यक्षफलत्वाच्च ज्ञानस्य फलविरहाशङ्कानुपपत्तिः ; कर्मफले हि स्वर्गादावनुभवानारूढे स्यादाशङ्का—भवेद्वा न वेति ; अनुभवारूढं तु ज्ञानफलम् "यत्साक्षादपरोक्षाद्ब्रह्म" इति श्रुतेः, "तत्त्वमसि" इति च सिद्धवदुपदेशात् ; न हि "तत्त्वमसि" इत्यस्य वाक्यस्य अर्थः—तत् त्वं मृतो भविष्यसीति—एवं परिणेतुं शक्यः । "तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्च" इति च सम्यग्दर्शनकालमेव तत्फलं सर्वात्मत्वं दर्शयति । तस्मात् ऐकान्तिकी विदुषः कैवल्यसिद्धिः ॥

[ अक्षरध्यधिकरणम् ]

## अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥ ३-३-३३ ॥

वाजसनेयके श्रूयते—"एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहम्" इत्यादि ; तथाथर्वणे श्रूयते—"अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णम्" इत्यादि ; तथैव अन्यत्रापि विशेषनिराकरणद्वारेणाक्षरं परं ब्रह्म

प्रकटार्थविवरणम्

कारावसाने; कृतात्मानः साक्षात्कृतब्रह्माण इत्यर्थः । इतश्च न ब्रह्मविद्याया मोक्षे हेतुत्वानुपपत्तिरित्याह—प्रत्यक्षेति ॥

अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥

विषयं दर्शयितुं वाक्यानि पठति-वाजसनेयक इत्यादिना ॥ निषेधमुखेन ब्रह्मप्रतिपादकाः शब्दाः विषयाः । ते किं सर्वत्रोपसंहर्तव्या न वेति न्यायसंभवोप[भवोप]कारासंभवाभ्यां संशय इत्यर्थः । पूर्वत्र विद्यैकत्वेऽपि शरीरस्यानुपसंहार उक्तः । तथेह विद्यैकत्वेऽप्यनुपसंहारः । तत्र श्रुतानां निषेधशब्दानां स्थालीपुला-

१. TM and A. तत्र तत्र

## भाष्यम्

आम्यते ; तत्र च कचित्केचिदतिरिक्ता विशेषाः प्रतिषिध्यन्ते ; तासां विशेषप्रतिषेधबुद्धीनां किं सर्वासां सर्वत्र प्राप्तिः, उत व्यवस्थेति संशये, श्रुतिविभागात् व्यवस्थाप्राप्तौ, उच्यते—अक्षरविषयास्तु विशेषप्रतिषेधबुद्धयः सर्वाः सर्वत्रावरोद्धव्याः, सामान्यतद्भावाभ्याम्—समानो हि सर्वत्र विशेषनिराकरणरूपो ब्रह्मप्रतिपादनप्रकारः ; तदेव च सर्वत्र प्रतिपाद्यं ब्रह्माभिन्नं प्रत्यभिज्ञायते ; तत्र किमिति अन्यत्र कृता बुद्धयः अन्यत्र न स्युः । तथा च "आनन्दादयः प्रधानस्य" इत्यत्र व्याख्यातम् ; तत्र विधिरूपाणि विशेषणानि चिन्तितानि, इह प्रतिषेधरूपाणीति विशेषः ; प्रपञ्चार्थश्चायं चिन्ताभेदः । औपसदवदिति निदर्शनम् ; यथा जामदग्न्येऽहीने पुरोडाशिनीषूपसत्सु चोदितासु, पुरोडाशप्रदानमन्त्राणाम् "अग्ने वेर्होत्रं वेरध्वरम्" इत्येवमादीनाम् उद्गातृवेदोत्पन्नानामपि अध्वर्युभिरभिसंबन्धो भवति, अध्वर्युकर्तृकत्वात्पुरोडाशप्रदानस्य, प्रधानतन्त्रत्वाच्चाङ्गानाम् — एवमिहापि अक्षरतन्त्रत्वात्

## प्रकटार्थविवरणम्

कन्यायेन [1]सर्वप्रपञ्चनिषेधेन ब्रह्मावगमसमर्थत्वादित्यभिप्रेत्याह—श्रुतिविभागादिति ॥ [2]अश्रुतप्रपञ्चनिषेधाय शब्दस्य लक्षणापरिग्रहः । प्रपञ्चैकदेशपरिशेषो वा स्यात् । ततो वरं ब्रह्मणि प्रपञ्चस्य निषेधकतया कृत्स्नसर्वशब्दोपसंहारेणैकवाक्यतोपादानमिति सिद्धान्ताशयः । उक्तमनुस्मार्यावान्तरविशेषं कथयति—तथा चेति ॥ शाखान्तरोक्तानामपि प्रधानसंबद्धानां उपसंहार इत्यत्रोदाहरणं व्याचष्टे—यथेति ॥ जामदग्न्योऽहीनो नाम कर्मविशेषः । तत्र पुरोडाशसाध्या उपसल्लब्धवाच्या इष्टयः आज्याहुतयः । अन्यत्र तासु पुरोडाशप्रदानमन्त्राणां सामवेदोत्पन्नानामप्यध्वर्युभिः अभिसंबन्ध इत्यर्थः । वाति गच्छति सर्वत्रेति विः सुरगणः ; तस्य वेर्देवगणस्य भो अग्ने त्वं होत्रं होतासि । ततो वेर्देवगणस्या[3]ध्वरं [4]त्वमेव । आद्यपुरोडाशस्याग्नेयत्वादग्नेरामन्त्रणमित्यर्थः । प्रधानसंबन्धे

१. T and T[1] omit सर्व
२. A omits अश्रुत
३. A. धारः
४. T, TM and A. त्वमेवेत्यत्र

भाष्यम्

तद्विशेषणानां यत्र क्वचिदप्युत्पन्नानाम् अक्षरेण सर्वत्राभिसंबन्ध इत्यर्थः। तदुक्तं प्रथमे काण्डे — "गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः" इत्यत्र ॥

5 [ इयदधिकरणम् ]

## इयदामननात् ॥ ३-३-३४ ॥

"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥"

इत्यध्यात्माधिकारे मन्त्रमाथर्वणिकाः श्वेताश्वतराश्च पठन्ति ; तथा कठाः

10 प्रकटार्थविवरणम्

पूर्वतन्त्रसंमतिमाह—तदुक्तमिति ॥ अस्ति तावदग्न्याधानम् "य एवं विद्वानग्निमाधत्ते" इति, तद्याजुर्वैदिकम् ; तत्र सामगानमामनन्ति "य एवं विद्वान् वारवन्तीयं गायते, य एवं विद्वान् यज्ञायज्ञियं गायते, य एवं विद्वान् वामदेव्यं गायते" इति । किं तदुच्चैः कार्यं किं वोपांशु इति सन्देहे निर्णयमाह—

15 गुणमुख्यव्यतिक्रम इति ॥ गुणभूतं सामगानम्, तस्योच्चैः स्वरप्रधानमाधानम्, तस्योपांशुस्वर इत्येवं गुणमुख्ययोः व्यतिक्रमे वैपरीत्ये सति मुख्याधानानुसारेण वेदसंयोगः सामगानस्य याजुर्वैदिकोपांशुस्वरसंबन्धः कृतः, तदर्थत्वात् प्रधानसिद्ध्यर्थत्वात्, गुणानुष्ठानस्येत्यर्थः ॥

इयदामननात् ॥

20 विषयवाक्यं निर्णीतार्थमपि उपसंहारप्रसक्तेन पुनः पठति—द्वा सुपर्णेति ॥ प्रतिपादनप्रकारभेदेन विद्याभेदप्रतिभानात् प्रतिपाद्यासंसार्यात्मप्रतिभानाच्च

१. A omits य एवं विद्वान् यज्ञायज्ञियं गायते

२. T, TM and A omit प्रधानसिद्ध्यर्थत्वात्

३. T[1]. उपसंहारानुपसंहार

४. TM omits this pratika

५. A. प्रतिपादनात् प्रतिपाद्यानां सार्वात्म्यप्रतिभानाच्च

भाष्यम्

"ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे ।
छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः ॥"

इति । किमत्र विद्यैकत्वम्, उत विद्यानानात्वमिति संशयः । किं ताव-त्प्राप्तम्? विद्यानानात्वमिति? कुतः? विशेषदर्शनात् । "द्वा सुपर्णा" 5
इत्यत्र हि एकस्य भोक्तृत्वं दृश्यते; एकस्य च अभोक्तृत्वं दृश्यते; "ऋतं पिबन्तौ" इत्यत्र उभयोरपि भोक्तृत्वमेव दृश्यते; तत् वेद्यरूपं भिद्यमानं विद्यां भिन्द्यादित्येवं प्राप्ते ब्रवीति—

विद्यैकत्वमिति; कुतः? यतः उभयोरप्यनयोर्मन्त्रयोः इयत्तापरिच्छिन्नं द्वित्वोपेतं वेद्यं रूपमभिन्नमामनन्ति । ननु दर्शितो 10
रूपभेदः—नेत्युच्यते; उभावप्येतौ मन्त्रौ जीवद्वितीयमीश्वरं प्रतिपादयतः, नार्थान्तरम् । "द्वा सुपर्णा" इत्यत्र तावत् "अनश्नन्नन्यो अभिचाकशीति" इत्यशनायाद्यतीतः परमात्मा प्रतिपाद्यते; वाक्यशेषेऽपि च स एव प्रतिपाद्यमानो दृश्यते "जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानम्" इति; "ऋतं पिबन्तौ" इत्यत्र तु जीवे पिबति, 15
अशनायाद्यतीतः परमात्मापि साहचर्यात् छत्रिन्यायेन पिबतीत्युपचर्यते; परमात्मप्रकरणं हि एतत् "अन्यत्र धर्मादन्यत्राधर्मात्" इत्युपक्रमात्; तद्विषय एव च अत्रापि वाक्यशेषो भवति—"यः सेतुरीजानानामक्षरं ब्रह्म यत्परम्" इति । "गुहां प्रविष्टावात्मानौ हि" इत्यत्र च एतत्प्रपञ्चितम् । तस्मान्नास्ति वेद्यभेदः; तस्माच्च विद्यैक- 20

प्रकटार्थविवरणम्

संशयमाह—किमत्रेति ॥ पूर्वत्र प्रतिपादनप्रकारसामान्येन तद्रूपप्रत्यभिज्ञानेन च विद्यैक्यमुपादाय अपुनरुक्तपदोपसंहारः कृतः । इह तदभावाद्विद्याभेदोऽनयोर्मन्त्रयोरुप[योरनुप]संहारश्चेति पूर्वपक्षाशयः ॥

बहिरेव सिद्धान्तं प्रतिज्ञाय हेतुत्वेन सूत्रं योजयति—विद्यैकत्वमित्या- 25
दिना ॥ वाक्यार्थनिरूपणाय जीवोद्देशेनासंसारी परमात्मैवोभयत्र प्रतिपाद्यत इति प्रतिपाद्यैकरूप्याद्विद्यैक्यं मन्त्रयोरिति भावः ॥

भाष्यम्

त्वम् । अपि च त्रिष्वप्येतेषु वेदान्तेषु पौर्वापर्यालोचने परमात्मविद्यैव अवगम्यते; तादात्म्यविवक्षयैव जीवोपादानम्, नार्थान्तरविवक्षया; न च परमात्मविद्यायां भेदाभेदविचारावतारोऽस्तीत्युक्तम् । तस्मात्पप-
5 श्वार्थ एवैष योगः; तस्माच्चाधिकधर्मोपसंहार इति ॥

[ अन्तराधिकरणम् ]

## अन्तरा भूतग्रामवत्स्वात्मनः ॥ ३-३-३५ ॥

"यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः" इत्येवं द्विः उषस्तकहोलप्रश्नयोः नैरन्तर्येण वाजसनेयिनः समामनन्ति । तत्र संशयः—
10 विद्यैकत्वं वा स्यात्, विद्यानानात्वं वेति । विद्यानानात्वमिति तावत्प्राप्तम्, अभ्याससामर्थ्यात्; अन्यथा हि अनूनानतिरिक्तार्थे द्विराम्नानम् अनर्थकमेव स्यात्; तस्मात् यथा अभ्यासात्कर्मभेदः एवमभ्यासाद्विद्याभेद इत्येवं प्राप्ते, प्रत्याह—अन्तराम्नानाविशेषात् स्वात्मनो विद्यैकत्वमिति; सर्वान्तरो हि स्वात्मा उभयत्राप्यविशिष्टः पृच्छ्यते,

15 प्रकटार्थविवरणम्

अन्तरा भूतग्रामवत्स्वात्मनः ॥

यथा घटादेः स्वातिरेकसंविन्निबन्धनमापरोक्ष्यं न तथेति साक्षात्स्वत एव यदपरोक्षं ब्रह्म, य आत्मा सर्वान्तरः तं मे व्याचक्ष्वेति द्विराम्नानं विषयः; तत्र सर्वान्तरत्वश्रवणादभ्यासाच्च संशयमाह—तत्रेति ॥ पूर्वत्र वेद्याभेदात् विद्यै-
20 क्यमुक्तम् । इह त्वेकत्र जीवाभिधानमपरत्राशनायाद्यतीतपरमात्माभिधानमिति वेद्यभेदात् भेद इत्याह—विद्यानानात्वमिति ॥ किं च यत्साक्षाद्यदेव साक्षादित्येकस्यां शाखायामभ्यासाद्यजत्यभ्यासवत् भेद इत्याह— अभ्याससामर्थ्यादिति ॥ द्वयोः सर्वान्तरत्वानुपपत्त्या रूपैक्यावगतेः विद्यैक्यमित्याह—अन्तराम्नानेत्यादिना ॥

१. A. अन्यत्र

भाष्यम्

प्रत्युच्यते च ; न हि द्वावात्मानौ एकस्मिन्देहे सर्वान्तरौ संभवतः ; तदा हि एकस्य आञ्जसं सर्वान्तरत्वमवकल्पेत, एकस्य तु भूतग्रामवत् नैव सर्वान्तरत्वं स्यात् ; यथा च पञ्चभूतसमूहे देहे—पृथिव्या आपोऽन्तराः, अद्भ्यस्तेजोऽन्तरमिति—सत्यप्यापेक्षिकेऽन्तरत्वे, नैव मुख्यं सर्वान्तरत्वं भवति, तथेहापीत्यर्थः । अथ वा भूतग्रामवदिति श्रुत्यन्तरं निदर्शयति ; यथा "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा" इत्यस्मिन्मन्त्रे समस्तेषु भूतग्रामेष्वेक एव सर्वान्तर आत्मा आम्नायते—एवमनयोरपि ब्राह्मणयोरित्यर्थः । तस्माद्वेद्यैक्यात् विद्यैकत्वमिति ॥

## अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशान्तरवत् ॥ ३-३-३६ ॥

अथ यदुक्तम्—अनभ्युपगम्यमाने विद्याभेदे आम्नानभेदानुपपत्तिरिति, तत्परिहर्तव्यम् ; अत्रोच्यते—नायं दोषः ; उपदेशान्तरवदुपपत्तेः ; यथा ताण्डिनामुपनिषदि षष्ठे प्रपाठके—"स आत्मा तत्त्वमसि श्वेतकेतो" इति नवकृत्वोऽप्युपदेशे न विद्याभेदो भवति, एवमिहापि भविष्यति । कथं च नवकृत्वोऽप्युपदेशे विद्याभेदो न भवति ? उपक्रमोपसंहाराभ्यामेकार्थतावगमात्—"भूय एव मा भगवान्विज्ञापयतु" इति च एकस्यैवार्थस्य पुनः पुनः प्रतिपिपादयिषितत्वेन उपक्षेपात् आशङ्कान्तरनिराकरणेन च असकृदुपदेशोपपत्तेः । एवमिहापि प्रश्नरूपाभेदात्, "अतोऽन्यदार्तम्" इति च परिसमाप्त्यविशेषात् उपक्रमोपसंहारौ तावदेकार्थविषयौ दृश्येते ; "यदेव साक्षाद्-

प्रकटार्थविवरणम्

अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशान्तरवत् ॥

पूर्वपक्षबीजमुच्छिनत्ति—अथ यदुक्तमित्यादिना ॥ अभ्यासस्य विशेषविधानार्थत्वेनोपपत्तेर्न भेदकत्वमित्यर्थः ॥

भाष्यम्

परोक्षाद्ब्रह्म" इति द्वितीये प्रश्ने एवकारं प्रयुञ्जानः पूर्वप्रश्नगतमेवार्थम् उत्तरत्रानुकृष्यमाणं दर्शयति; पूर्वस्मिंश्च ब्राह्मणे कार्यकरणव्यतिरिक्तस्य आत्मनः सद्भावः कथ्यते; उत्तरस्मिंस्तु तस्यैव अशनायादि-
5 संसारधर्मातीतत्वं विशेषः कथ्यते—इत्येकार्थतोपपत्तिः। तस्मात् एका विद्येति॥

[ व्यतिहाराधिकरणम् ]

## व्यतिहारो विशिंषन्ति हीतरवत्॥ ३-३-३७॥

यथा "तद्योऽहं सोऽसौ योऽसौ सोऽहम्" इत्यादित्यपुरुषं प्रकृत्य
10 ऐतरेयिणः समामनन्ति, तथा जाबालाः—"त्वं वा अहमस्मि भगवो देवतेऽहं वै त्वमसि" इति। तत्र संशयः—किमिह व्यतिहारेण उभयरूपा मतिः कर्तव्या, उत एकरूपैवेति। एकरूपैवेति तावदाह; न हि अत्र आत्मन ईश्वरेणैकत्वं मुक्त्वा अन्यत्किंचिच्चिन्तायितव्यमस्ति; यदि चैवं चिन्तयितव्यविशेषः परिकल्प्येत, संसारिणश्च ईश्वरात्मत्वम् ईश्वरस्य
15 संसार्यात्मत्वमिति—तत्र संसारिणस्तावदीश्वरात्मत्वे उत्कर्षो भवेत्,

प्रकटार्थविवरणम्

व्यतिहारो विशिंषन्ति हीतरवत्॥

विषयवाक्यं पठति—तद्योऽहमिति॥ व्यतिहारस्येतरेतरविशेषणविशेष्यभावस्य प्रतिभासादुत्कृष्टदृष्टिर्निकृष्टे फलवतीति लौकिकन्यायाच्च संशयमाह—
20 तत्रेति॥ उभयरूपेति॥ जीवे ब्रह्मदृष्टिः, ब्रह्मणि च जीवदृष्टिरित्यर्थः॥ एकरूपेति॥ जीवे ब्रह्मदृष्टिरेवेत्यर्थः। पूर्वत्रैकार्थेऽप्यभ्यासोपपत्तिरुक्ता; तद्वदिहापि पुनरुक्त्युपपत्तेः वाक्यस्य चैकात्म्यपरत्वावगतेः जीवोद्देशेन ब्रह्ममतिः कर्तव्येत्याह—एकरूपैवेति॥ विपक्षे लौकिकन्यायविरोध इत्याह—यदि चैवमित्यादिना॥ उभयोच्चारणार्थपरत्वानुपपत्त्योभयरूपैव मतिः कर्तव्येत्याह —

१. T[1] एकरूपैवेति   २. T and T[1] omit अपि

भाष्यम्

ईश्वरस्य तु संसार्यात्मत्वे निकर्षः कृतः स्यात् । तस्मादैकरूप्यमेव मतेः । व्यतिहाराम्नायस्तु एकत्वदृढीकारार्थ इत्येवं प्राप्ते प्रत्याह—व्यतिहारोऽयम् आध्यानाय आम्नायते ; इतरवत्—यथा इतरे गुणाः सर्वात्मत्वप्रभृतयः आध्यानाय आम्नायन्ते, तद्वत् । तथा हि विशिंषन्ति समाम्नातारः—उभयोच्चारणेन—"त्वमहमस्म्यहं च त्वमसि" इति ; तच्च उभयरूपायां मतौ कर्तव्यायाम् अर्थवद्भवति ; अन्यथा हि इदं विशेषेणोभयाम्नानम् अनर्थकं स्यात्, एकेनैव कृतत्वात् । ननु उभयाम्नानस्य अर्थविशेषे परिकल्प्यमाने देवतायाः संसार्यात्मत्वापत्तेः निकर्षः प्रसज्येतेत्युक्तम्—नैष दोषः ; ऐकात्म्यस्यैव अनेन प्रकारेणानुचिन्त्यमानत्वात् । ननु एवं सति स एव एकत्वदृढीकार आपद्येत—न वयमेकत्वदृढीकारं वारयामः ; किं तर्हि, व्यतिहारेणेह द्विरूपा मतिः कर्तव्या वचनप्रामाण्यात्, नैकरूपेत्येतावदुपपादयामः ; फलतस्तु एकत्वमपि दृढीभवति । यथा आध्यानार्थेऽपि सत्यकामादिगुणोपदेशे तद्गुण ईश्वरः प्रसिद्ध्यति, तद्वत् । तस्मादयमाध्यातव्यो व्यतिहारः समाने च विषय उपसंहर्तव्यो भवतीति ॥

[ सत्याद्यधिकरणम् ]

## सैव हि सत्यादयः ॥ ३-३-३८ ॥

"स यो हैतं महद्यक्षं प्रथमजं वेद सत्यं ब्रह्म" इत्यादिना वाजस-

प्रकटार्थविवरणम्

व्यतिहारोऽयमिति ॥ उक्तं स्मारयति—नन्विति ॥ वचनादन्यत्रैव लौकिको न्यायः सावकाशः—इति न्यायेन व्यतिहारवचनसामर्थ्यात् जीवब्रह्मणोरितरेतरात्मतादृष्टिः फलाय चोद्यते ; न तु जीवगतनिकृष्टत्वानुचिन्तनमित्याह—नैष दोष इति ॥ जीवगतनिकृष्टत्वं चेन्नानुचिन्त्यते, तर्हि मदुक्तमेवायातमित्याह—नन्वेवं सतीति ॥ अभ्युपगम्य विरोधमाह—न वयमिति ॥

सैव हि सत्यादयः ॥

स यः कश्चित् ह किल एतन्महद्व्यापकं यक्षं पूज्यमग्रजं सत्य त्यचेति सत्यं

भाष्यम्

नेयके सत्यविद्यां सनामाक्षरोपासनां विधाय, अनन्तरमाम्नायते— "तद्यत्तत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्पुरुषः" इत्यादि । तत्र संशयः—किं द्वे एते सत्यविद्ये,
5 किं वा एकैवेति । द्वे इति तावत्प्राप्तम्; भेदेन हि फलसंयोगो भवति— "जयतीमाँल्लोकान्" इति पुरस्तात्, "हन्ति पाप्मानं जहाति च" इत्युपरिष्टात् । प्रकृताकर्षणं तु उपास्यैकत्वादित्येवं प्राप्ते ब्रूमः—

एकैवेयं सत्यविद्येति; कुतः? "तद्यत्तत्सत्यम्" इति प्रकृताकर्षणात् । ननु विद्याभेदेऽपि प्रकृताकर्षणम् उपास्यैकत्वादुपपद्यत
10 इत्युक्तम्—नैतदेवम्; यत्र तु विस्पष्टात् कारणान्तरात् विद्याभेदः प्रतीयते, तत्र एतदेवं स्यात्; अत्र तु उभयथासंभवे "तद्यत्तत्सत्यम्" इति प्रकृताकर्षणात् पूर्वविद्यासंबद्धमेव सत्यम् उत्तरत्र आकृष्यत इति एकविद्यात्वनिश्चयः । यत्पुनरुक्तम्—फलान्तरश्रवणाद्विद्यान्तरमिति, अत्रोच्यते—"तस्योपनिषदहः...अहम्" इति च अङ्गान्तरोपदेशस्य

15 प्रकटार्थविवरणम्

ब्रह्म येदोपास्ते तस्य लोकजयः फलमित्यर्थः । पूर्वोत्तरब्राह्मणयोः फलभेदात् "तद्यत्सत्यम्" इति प्रकृताकर्षणाच्च संशयमाह—तत्रेति ॥ पूर्वाधिकरणोक्तस्य व्यतिहाराम्नानस्याभेदहेतोरभावात् फलभेदाच्च भेद इत्याह—द्वे इति ॥

"सैव हि" इति सूत्रभागं व्याचष्टे—एकैवेयमिति ॥ तद्यत्पूर्वं प्रकृतं ब्रह्म
20 सत्यमसौ प्रसिद्धः स आदित्य इति वाक्यप्रामाण्यात् सत्यं नामाक्षरत्रयविशिष्टस्यैव ब्रह्मण उत्तरत्र स्थानगुणसंबन्धप्रतिपादकाद्रूपैक्यप्रसिद्धेः विद्यैक्यमिति भावः । पूर्वपक्षबीजमुन्मूलयति—यत्पुनरुक्तमित्यादिना ॥ यथा प्रयाजादिषु फलश्रवणमर्थवादमात्रम्, तथेदमपीति अङ्गफलं न प्रधानभेदापा-

१. A. तानुकर्षणात्
२. T, T¹ and TM. यद्यत्
३. A omits प्रसिद्धः स

भाष्यम्

स्तावकमिदं फलान्तरश्रवणमित्यदोषः । अपि च अर्थवादादेव फले कल्पयितव्ये सति, विधेयकत्वे च अवयवेषु श्रूयमाणानि बहून्यपि फलानि अवयविन्यामेव विद्यायाम् उपसंहर्तव्यानि भवन्ति ; तस्मात् सैवेयम् एका सत्यविद्या तेन तेन विशेषेणोपेता आम्नाता—इत्यतः सर्वे एव सत्यादयो गुणा एकस्मिन् प्रयोगे उपसंहर्तव्याः ॥ 5

केचित्पुनरस्मिन्सूत्रे इदं च वाजसनेयकमक्ष्यादित्यपुरुषविषयं वाक्यम्, छान्दोग्ये च "अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते" "अथ य एषोऽक्षिणि पुरुषो दृश्यते" इति—उदाहृत्य, सैवेयम् अक्ष्यादित्यपुरुषविषया विद्या उभयत्र एकैवेति कृत्वा, सत्यादीन्गुणान् वाजसनेयिभ्यश्छन्दोगानामुपसंहार्यान् मन्यन्ते । तत्र साधु लक्ष्यते ; छान्दोग्ये हि कर्मसंबन्धिनी उद्गीथव्यपाश्रया विद्या विज्ञायते ; तत्र हि आदिमध्यावसानेषु कर्मसंबन्धिचिह्नानि भवन्ति "इयमेवर्गग्निः साम" इत्युपक्रमे, "तस्यर्क्च साम च गेष्णौ तस्मादुद्गीथः" इति मध्ये, "य एवं विद्वान् साम गायति" इत्युपसंहारे ; नैवं वाजस- 10 15

प्रकटार्थविवरणम्

वकमित्यर्थः । फलान्तरश्रवणस्य गत्यन्तरमाह—अपि चेति ॥ यत्र विध्युद्देशः फलवान्, तत्राङ्गानां प्रधानान्वयद्वारेण फलसंबन्धसिद्धेरर्थवादगतानि गुणफलान्युपेक्ष्यन्ते । यत्र तु प्रधानतदङ्गानामर्थवादात्फलं सत्रन्यायेन कल्प्यते, तत्र विहितानां फलाकाङ्क्षाविशेषादर्थवादात् फलकल्पनाविशेषाच्च यत्किंचिदर्थवादगतं फलं तत्सर्वमेकीकृत्य गुणविशिष्टस्य गुणिनः फलत्वेन कल्पनीयमिति न संयोगभेद इति भावः । सूत्रार्थमुपसंहरति—तस्मादिति ॥ 20

परेषां व्याख्यामनूद्य दूषयति—केचित्पुनरित्यादिना ॥ "अथ य एषोऽन्तरादित्ये" इत्यस्यादिमध्यावसानेष्वृक्सामयोः कर्माङ्गभूतयोः पृथिव्यादिदृष्टिविशिष्टयोः उपास्यत्वप्रतीतेरादित्याक्षिपुरुषदृष्टिविशिष्टकर्माङ्गभूतो- 25

१. A. कल्पनादपि

भाष्यम्

नेयके किंचित्कर्मसंबन्धि चिह्नमस्ति ; तत्र प्रक्रमभेदात् विद्याभेदे सति गुणव्यवस्थैव युक्तेति ॥

[कामाद्यधिकरणम्]

5 **कामादीतरत्र तत्र चायतनादिभ्यः ॥ ३-३-३९ ॥**

"अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः" इति प्रस्तुत्य, छन्दोगा अधीयते—"एष आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः" इत्यादि ; तथा वाजसनेयिनः—"स वा एष महानज
10 आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी" इत्यादि । तत्र विद्यैकत्वं परस्परगुणयोगश्च, किं वा नेति संशये—विद्यैकत्वमिति । तत्रेदमुच्यते—कामादीति, सत्यकामा-

प्रकटार्थविवरणम्

द्यर्थोपासनं छान्दोग्ये विवक्षितम् ; न तथा वाजसनेयके ; अतो विद्याभेदादनु-
15 पसंहार एव तत्र युक्त इत्यर्थः ॥

कामादीतरत्र तत्र चायतनादिभ्यः ॥

विषयं दर्शयितुं सगुणनिर्गुणविद्याविषयं वाक्यद्वयं पठति—अथ यदिदमित्यादिना ॥ परापरविद्यापठिताः सर्वे वशित्वादयः सत्यकामादयश्च गुणा विषयाः । ते किमन्यत्रोपसंहर्तव्या न वेति सन्देहः ; स च सत्यकामत्वादीनां
20 निर्गुणविद्यायां प्रयोजनानिरूपणात्, वशित्वादीनां च सगुणविद्यायां प्रयोजनसंभवात् । तत्र पूर्वाधिकरणोक्तविद्यैकत्वहेतोः वेद्यप्रत्यभिज्ञानस्याभावात् सगुणनिर्गुणविद्याभेदादनुपसंहार इति बहिरेव पूर्वपक्षमुपन्यस्य सिद्धान्तमाह—तत्रेदमुच्यत इति ॥ बहुतरसाम्यदर्शनादितरेतरगुणोपसंहार इत्यर्थः ।

१. T, T[1] and A. विद्यावतोः
२. A omits सत्यकामादयः
३. T and A omit इत्यर्थः.....गुणोपसंहारः

भाष्यम्

दीत्यर्थः—यथा देवदत्तो दत्तः, सत्यभामा भामेति। यदेतत् छान्दोग्ये हृदयाकाशस्य सत्यकामत्वादि गुणजातमुपलभ्यते, तदितरत्र वाजसनेयके "स वा एष महानज आत्मा" इत्यत्र संबध्येत; यच्च वाजसनेयके वशित्वादि उपलभ्यते, तदपीतरत्र छान्दोग्ये "एष आत्मापहतपाप्मा" इत्यत्र संबध्येत। कुतः? आयतनादिसामान्यात्; समानं हि उभयत्रापि हृदयमायतनम्, समानश्च वेद्य ईश्वरः, समानं च तस्य सेतुत्वं लोकासंभेदप्रयोजनम्—इत्येवमादि बहु सामान्यं दृश्यते। ननु विशेषोऽपि दृश्यते—छान्दोग्ये हृदयाकाशस्य गुणयोगः, वाजसनेयके तु आकाशाश्रयस्य ब्रह्मण इति—न, "दहर उत्तरेभ्यः" इत्यत्र छान्दोग्येऽपि आकाशशब्दं ब्रह्मैवेति प्रतिष्ठापितत्वात्। अयं त्वत्र विद्यते विशेषः—सगुणा हि ब्रह्मविद्या छान्दोग्ये उपदिश्यते "अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामान्" इत्यात्मवत् कामानामपि वेद्यत्वश्रवणात्; वाजसनेयके तु निर्गुणमेव ब्रह्म उपदिश्यमानं दृश्यते—"अत ऊर्ध्वं विमोक्षाय ब्रूहि" "असङ्गो ह्ययं पुरुषः" इत्यादिप्रश्नप्रतिवचनसमन्वयात्। वशित्वादि तु स्तुत्यर्थमेव गुणजातं वाजसनेयके संकीर्त्यते; तथा च उपरिष्टात् "स एष नेति नेत्यात्मा"

प्रकटार्थविवरणम्

विस्मरणशीलस्य वैलक्षण्यशङ्कामपाकरोति — ननु विशेषोऽपीत्यादिना॥ इदानीं स्वाभिप्रेतं विशेषमाह—अयं त्वत्रेति॥ कथं तर्हि वाजसनेयकेऽपि गुणसङ्कीर्तनमित्याशङ्क्याह—वशित्वादीति॥ अन्यथोपसंहारविरोधाच्चेत्याह — तथा चेति॥ यद्येवं विद्याभेदः, कथं तर्हि गुणोपसंहारः सूत्रित इत्याशङ्क्याह—गुणवतस्त्विति॥ वशित्वादेः प्रपञ्चोपाधिकस्य निर्विशेषब्रह्मणि वेद्यत्वानुपपत्तेः प्रशंसामात्रेण च कृतार्थत्वानुपपत्तेः क्वचिदुपास्यत्वाकाङ्क्षा विद्यते; स्तूयमानस्य च ब्रह्मणः स्तुतिपौष्कल्याकाङ्क्षाप्यस्ति; हृदयायतनाद्यर्थद्वारेण सन्निधानं चास्ति; दहरस्य च वशित्वादिसंबन्धयोग्यता विद्यते; ब्रह्मणश्चापहतपाप्मत्वादिस्तुतियोग्यता; तदेवमाकाङ्क्षासन्निधियोग्यतास्तैरपहत-

भाष्यम्

इत्यादिना निर्गुणमेव ब्रह्म उपसंहरति । गुणवतस्तु ब्रह्मण एकत्वात् विभूतिप्रदर्शनाय अयं गुणोपसंहारः सूत्रितः, नोपासनाय—इति द्रष्टव्यम् ॥

5 [ आदराधिकरणम् ]

## आदरादलोपः ॥ ३-३-४० ॥

छान्दोग्ये वैश्वानरविद्यां प्रकृत्य श्रूयते—"तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयं स यां प्रथमामाहुतिं जुहुयात्तां जुहुयात्प्राणाय स्वाहा" इत्यादि; तत्र पञ्च प्राणाहुतयो विहिताः; तासु च परस्तादग्निहोत्र-
10 शब्दः प्रयुक्तः "य एतदेवं विद्वानग्निहोत्रं जुहोति" इति,

"यथेह क्षुधिता बाला मातरं पर्युपासते ।
एवं सर्वाणि भूतानि अग्निहोत्रमुपासते ॥" इति च ।

तत्रेदं विचार्यते—किं भोजनलोपे लोपः प्राणाग्निहोत्रस्य, उत अलोप इति । "तद्यद्भक्तम्" इति भक्तागमनसंयोगश्रवणात्, भक्ता-
15 गमनस्य च भोजनार्थत्वात्, भोजनलोपे लोपः प्राणाग्निहोत्रस्ये-

प्रकटार्थविवरणम्

पाप्मत्वादिगुणानां निर्गुणविद्यायाः स्तावकत्वेनोपसंहारो निर्गुणविद्यागतानां चोपास्यत्वसाकाङ्क्षाणां सगुणासूपसंहार इत्याशयः ॥

आदरादलोपः ॥

20 विषयं दर्शयितुं वाक्यं पठति — छान्दोग्य इति ॥ यच्छब्दाग्निहोत्रशब्दाभ्यां संशयमाह—तत्रेदं विचार्यत इति ॥ आद्यं पूर्वपक्षसूत्रमवतारयितुं निरस्यां सिद्धान्त्याशङ्कामाह—तद्यद्भक्तमिति ॥ यद्भक्तं प्रथममागच्छति तद्धोतव्यमिति भोजनार्थभक्तागमनोद्देशेन आहुतिकर्मविधानादुद्देश्याभावे चोपादेयाप्रवृत्तेराहवनीयाभावे होमाभाववदित्यर्थः । एवं सिद्धान्ताशङ्कामुप -

१. TM adds निर्गुणानां

भाष्यम्

त्येवं प्राप्ते, न लुप्येतेति तावदाह ; कस्मात् ? आदरात् ; तथा हि वैश्वानरविद्यायामेव जाबालानां श्रुतिः—"पूर्वोऽतिथिभ्योऽश्नीयात् । यथा ह वै स्वयमहुत्वाग्निहोत्रं परस्य जुहुयादेवं तत्" इत्यतिथिभोजनस्य प्राथम्यं निन्दित्वा, स्वामिभोजनं प्रथमं प्रापयन्ती प्राणाग्निहोत्रे आदरं करोति ; या हि न प्राथम्यलोपं सहते, न तरां सा प्राथम्यवतोऽग्निहोत्रस्य लोपं सहेतेति मन्यते । ननु भोजनार्थभक्तागमनसंयोगाद्भोजनलोपे लोपः प्रापितः—न, तस्य द्रव्यविशेषविधानार्थत्वात् ; प्राकृते हि अग्निहोत्रे पयःप्रभृतीनां द्रव्याणां नियतत्वात् इहापि अग्निहोत्रशब्दात् कौण्डपायिनामयनवत् तद्धर्मप्राप्तौ सत्याम्, भक्तद्रव्यतागुणविशेषविधानार्थम् इदं वाक्यम् "तद्यद्भक्तम्" इति ; अतो गुण-

प्रकटार्थविवरणम्

न्यस्य पतन्निरासाय पूर्वपक्षसूत्रं योजयति–एवं प्राप्ते न लुप्येतेति ॥ यथा पूर्वत्र निर्गुणायामपि विद्यायां स्तुतिप्रकर्षलाभाय गुणोपसंहारोऽङ्गीकृतः, [१] तथेहापि स्तुतिप्रकर्षलाभायाभोजनेऽपि दिने प्राणाग्निहोत्रमनुष्ठेयमित्यर्थः । उक्तं स्मारयति—नन्विति ॥ नानेनान्यार्थद्रव्योद्देशेनाहुतिविधानम्, किं तु द्रव्यविशेषविधिरित्याह—न तस्येति ॥ ननु कुतो द्रव्यप्राप्तिः, येन विशेषविधानमित्याशङ्क्याह—प्रकृते हीति ॥ यथा कुण्डपायिनामयने "मासमग्निहोत्रं जुहति" [२] इत्यग्निहोत्रशब्दः प्रसिद्धादग्निहोत्रात् प्रकरणभेदात् कर्मान्तरविषयोऽपि प्रसिद्धाग्निहोत्रधर्मसाम्यात् प्रयुक्तः, तथात्राप्यग्निहोत्रशब्दः प्रसिद्धाग्निहोत्रधर्मान् पयःप्रभृतीनुपस्थापयति । तदपवादेन "तद्यद्भक्तम्" इति द्रव्यान्तरं होम्यत्वेन विधीयत इत्यर्थः । उपसंहरति—अत इति ॥ गुणभूतस्य द्रव्यस्य लोपोऽपि[लोपेऽपि] मुख्यस्य यथासंभवं संपादनमिति न्यायेनैवं प्राप्तम् । किं

१. TM. adds स्तुतिप्रकर्षलाभार्थं गुणोपसंहारोऽङ्गीकृतः

२. A omits होत्रं जुहति इत्यग्नि

भाष्यम्

लोपे न मुख्यस्येत्येवं प्राप्तम्—भोजनलोपेऽपि अद्भिर्वा अन्येन वा द्रव्येणाविरुद्धेन प्रतिनिधानन्यायेन प्राणाग्निहोत्रस्यानुष्ठानमिति ॥

अत उत्तरं पठति—

5 **उपस्थितेऽतस्तद्वचनात् ॥ ३-३-४१ ॥**

उपस्थिते भोजने अतः तस्मादेव भोजनद्रव्यात् प्रथमोपनिपतितात् प्राणाग्निहोत्रं निर्वर्तयितव्यम्; कस्मात्? तद्वचनात्; तथाहि—"तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयम्" इति सिद्धवद्भक्तोपनिपातपरामर्शेन परार्थद्रव्यसाध्यतां प्राणाहुतीनां विदधाति । ताः अप्रयोजकलक्षणापन्नाः 10 सत्यः, कथं भोजनलोपे द्रव्यान्तरं प्रतिनिधापयेयुः । न च अत्र प्राकृताग्निहोत्रधर्मप्राप्तिरस्ति; कुण्डपायिनामयने हि "मासमग्निहोत्रं जुहोति" इति विध्युद्देशगतोऽग्निहोत्रशब्दः तद्भावं विधापयेदिति युक्ता तद्धर्म-

प्रकटार्थविवरणम्

तदित्याह—भोजनलोपेऽपीति ॥ मुख्यसाधनासंभवेऽधिकारी स्वाधिकारनि- 15 ष्पत्तये यत्साधनान्तरमुपादत्ते तत्प्रतिनिधानं यथा सोमाभावे पूतीकोपादानम्; तेनैव न्यायेनेहापि संभविष्यतीत्यर्थः ॥

उपस्थितेऽतस्तद्वचनात् ॥

सिद्धान्तसूत्रं विवृणोति—उपस्थित इत्यादिना ॥ परार्थसाध्यतां वाक्यं विदधातु; ततः किमायातं प्रतिनिधौ इत्याशङ्क्याह—ता अप्रयोजकेति ॥ 20 अन्यार्थागतद्रव्योद्देशेनाहुतीनां विधानात्ता आहुतयो न द्रव्याक्षेपकाः, यथा आमिक्षार्थदध्यानयनाश्रयेण विहितं वाजिनकर्म न दध्यानयनं प्रयोजयति, तद्वत्; अतः प्रयोजकत्वसामर्थ्याभावान्न प्रतिनिधापकत्वमित्यर्थः । अग्निहोत्रशब्दस्यार्थवादगतस्य स्तुतित्वेनाप्युपपत्तेर्न प्रसिद्धाग्निहोत्रधर्मप्रापकत्वं संभवतीत्याह—न चात्रेति ॥ इतश्च न प्रसिद्धाग्निहोत्रधर्मप्राप्तिरित्याह—तद्धर्म-

१. TM. प्रयोजन

भाष्यम्

प्राप्तिः ; इह पुनः अर्थवादगतोऽग्निहोत्रशब्दः न तद्भावं विधापयितुम-
र्हति ; तद्धर्मप्राप्तौ च अभ्युपगम्यमानायाम् अग्न्युद्धरणादयोऽपि प्राप्ये-
रन् ; न च अस्ति संभवः ; अग्न्युद्धरणं तावत् होमाधिकरणभावाय ;
न च अयम् अग्नौ होमः, भोजनार्थताव्याघातप्रसङ्गात् ; भोजनोपनीत- 5
द्रव्यसंबन्धाच्च आस्य एव एष होमः ; तथा च जाबालश्रुतिः "पूर्वोऽ-
तिथिभ्योऽश्नीयात्" इति आस्याधारामेव इमां होमनिर्वृत्तिं दर्श-
यति—अत एव च इहापि सांपादिकान्येव अग्निहोत्राङ्गानि दर्शयति—
"उर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्य-
माहवनीयः" इति । वेदिश्रुतिश्चात्र स्थण्डिलमात्रोपलक्षणार्था द्रष्टव्या, 10
मुख्याग्निहोत्रे वेद्यभावात्, तदङ्गानां च इह संपिपादयिषितत्वात् ;
भोजनेनैव च कृतकालेन संयोगात् नाग्निहोत्रकालावरोधसंभवः ; एव-

प्रकटार्थविवरणम्

प्राप्तौ चेति ॥ होमाय गार्हपत्यादग्नेरुद्धरणमाहवनीये च क्षेपः उपस्थानं परि-
समूहनं पर्युक्षणमित्येवमादयोऽपि धर्माः प्रसज्येरन् अपवादाभाव उत्सर्गसिद्धे- 15
रित्यर्थः । तेऽपि भवन्त्विति न वाच्यमित्याह—न चास्तीति ॥ कथमसंभव
इत्याकाङ्क्षायां अग्न्युद्धरणासंभवं तावदाह—उद्धरणं तावदिति ॥ भक्तद्रव्यस्य
भोजनार्थताव्याघातप्रसङ्गान्नाग्नौ होमः, तर्हि कुत्रायं होम इत्याशङ्क्याह—
भोजनोपनीतेति ॥ भोजनायोपस्थितं यद्द्रव्यं तत्साध्यत्वादास्ये मुखेऽयं होम
इत्यर्थः । उक्तेऽर्थे श्रुतिसंवादमाह—तथा चेति ॥ अग्निहोत्रधर्मणां प्राप्त्यभावे 20
लिङ्गमाह—अत एव चेति ॥ प्रसिद्धानां धर्माणां प्राप्तिश्चेत्संपादनं व्यर्थमिति
भावः । अग्निहोत्राङ्गानि चेत् संपाद्यन्ते, कथं तर्हि वेदिसंपादनमित्याशङ्क्याह—
वेदिश्रुतिश्चेति ॥ संस्कृता भूः वेदिरुच्यते । तदभावात् स्थण्डिलमात्रं लक्ष्यत
इत्यर्थः । एवं तावदग्न्युद्धरणासंभवं स्फुटीकृत्याग्निहोत्रसंबन्धिनः सायंप्रातः-
कालस्याप्यत्रोपसंहारो न संभाव्यते, भोजनेनैव नियतकालेन संबन्धादित्याह— 25
भोजनेनैवेति ॥ उपस्थानपरिसमूहनादयोऽप्यङ्ग्यभावादेव न संभाव्यन्त

१. A omits अग्न्युद्धरणसंभवं तावत्

भाष्यम्

मन्येऽपि उपस्थानादयो धर्माः केचित्कथंचित् विरुध्यन्ते । तस्मा-
द्भोजनपक्ष एव एते मन्त्रद्रव्यदेवतासंयोगात्पञ्च होमा निर्वर्तयितव्याः ।
यत्तु आदरदर्शनवचनम्, तद्भोजनपक्षे प्राथम्यविधानार्थम्; न ह्यस्ति
5 वचनस्यातिभारः; न तु अनेन अस्य नित्यता शक्यते दर्शयितुम् ।
तस्मात् भोजनलोपे लोप एव प्राणाग्निहोत्रस्येति ॥

[तन्निर्धारणाधिकरणम्]

## तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ ३-३-४२ ॥

10 सन्ति कर्माङ्गव्यपाश्रयाणि विज्ञानानि "ओमित्येतदक्षरमुद्गीथमु-
पासीत" इत्येवमादीनि । किं तानि नित्यान्येव स्युः कर्मसु, पर्णम-
यीत्वादिवत्; उत अनित्यानि, गोदोहनादिवदिति विचारयामः ।

प्रकटार्थविवरणम्

इत्यर्थः । यस्मादग्निहोत्र[1]धर्माणां प्राप्त्यभावात् "तद्यद्भक्तम्" इत्यस्य द्रव्य-
15 विशेषविधायकत्वाभावाच्च प्रतिनिधानन्यायावतारः, तस्मादित्युपसंहारः ।
विशेषवचनेऽस्य[वचनस्य] सामान्यवचनावबाधने न ह्यतिभारोऽस्तीत्यर्थः ॥[2]

तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥

उद्गीथादिकर्माङ्गालम्बनान्युपासनानि विषय इत्याह — सन्तीति ॥
उभयविधोदाहरणदर्शनात् संशयमाह—किं तानीति ॥ पर्णमयीत्वं पालाश-
20 मयीत्वम्; तद्यथा जुह्वाः क्रतुषु नित्यं तद्वन्नित्यत्वं भवतु, किं वा यथा प्रकृताप्प्रणय-
नाश्रयो गोदोहनोपरागः पशुभ्यो विधीयते तद्वत्[3] नैमित्तिकत्वमित्यर्थः । पूर्वत्रा-
नित्यभोजनार्थभक्तद्रव्यप्रयुक्तस्य होमस्यानित्यत्वमुक्तम् । इह तथाविधानित्य-
त्वहेतोरभावात् नित्यक्रत्वङ्गोपजीविनां उद्गीथाद्युपासनानां साङ्गकर्मानुष्ठापकेन

१. TM. होत्रेण
A. होते

२. A. वचनापन्न
३. A adds पृथक्

भाष्यम्

किं तावत्प्राप्तम्? नित्यानीति; कुतः? प्रयोगवचनपरिग्रहात्—अनारभ्याधीतान्यपि हि एतानि उद्गीथादिद्वारेण क्रतुसंबन्धात् क्रतुप्रयोगवचनेनैव अङ्गान्तरवत् संस्पृश्यन्ते; यत्तु एषां स्ववाक्येषु फलश्रवणम्—"आपयिता ह वै कामानां भवति" इत्यादि, तद्वर्तमानापदेशरूपत्वादर्थवादमात्रमेव, अपापश्लोकश्रवणादिवत्, न फलप्रधानम्; तस्मात् यथा "यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति" इत्येवमादीनाम् अप्रकरणपठितानामपि जुह्वादिद्वारेण क्रतुप्रवेशात् प्रकरणपठितवत् नित्यता एवमुद्गीथाद्युपासनानामपीति ॥ 5

एवं प्राप्ते ब्रूमः—तन्निर्धारणानियम इति। यान्येतानि उद्गीथादिकर्म- 10

प्रकटार्थविवरणम्

प्रयोगविधिना परिगृहीतत्वान्नित्यत्वमित्याह—किं तावदिति ॥ ननु प्रयोगविधिरङ्गानुष्ठानं प्रयोजयति, उपासनानां च क्रतुसंनिधावनधीतानां क्रत्वङ्गत्वाभावात् कथं प्रयोगविधिप्रयोज्यत्वमित्याशङ्क्याह — अनारभ्याधीतान्यपीति ॥ यद्यप्यनारभ्याधीतानि क्रतुसंनिधावनधीतान्युपासनानि, तथापि 15 "य एवं विद्वान् गायति" इत्यादिवाक्यप्रमाणेन क्रतुसंबन्धसिद्धेः क्रतुप्रयोगवचनेन संस्पृश्यन्ते। यथा पर्णमयीत्वस्यानारभ्याधीतत्वेऽपि जुहूद्वारेण "यस्य पर्णमयी जुहूर्भवति" इति वाक्येन क्रत्वङ्गत्वसिद्धये प्रयोगवचनप्रयोज्यत्वं तद्वदित्यर्थः। ननूपासनानां पृथक् फलश्रवणात् स्वातन्त्र्यमेवास्तु, किं क्रत्वङ्गत्वकल्पनयेत्याशङ्क्याह—यत्त्वेषामिति ॥ साध्यरूपतया फलानिर्देशान्न[1] 20 स्वातन्त्र्यमित्यर्थः। पूर्वपक्षमुपसंहरति—तस्मादिति ॥

नैमित्तिकान्युपासनानि गोदोहनादिवत्; न तेषां नियमेन क्रतुष्वन्वय इत्याह—एवं प्राप्ते ब्रूम इति ॥ उद्गीथादयः कर्मगुणाः कर्माङ्गभूताः। तेषां यानि यथात्मरूपोपासनानि न तानि नित्यपर्णमयीत्वादिवत्कर्मसु नियम्येरन् इति

१. TM. फलनिर्देशात्

भाष्यम्

गुणयाथात्म्यनिर्धारणानि—रसतमः, आप्तिः, समृद्धिः, मुख्यप्राणः, आदित्यः—इत्येवमादीनि, नैतानि नित्यवत् कर्मसु नियम्येरन्; कुतः? तद्दृष्टेः; तथा हि अनियतत्वमेवंजातीयकानां दर्शयति श्रुतिः—"तेनोभौ
5 कुरुतो यश्चैतदेवं वेद यश्च न वेद" इत्यविदुषोऽपि क्रियाभ्यनुज्ञानात्; प्रस्तावादिदेवताविज्ञानविहीनानामपि प्रस्तोत्रादीनां याजनाध्यवसानदर्शनात्—"प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान्प्रस्तोष्यसि" "तां चेदविद्वानुद्गास्यसि" "तां चेदविद्वान्प्रतिहरिष्यसि" इति च। अपि च एवंजातीयकस्य कर्मव्यपाश्रयस्य विज्ञानस्य पृथगेव
10 कर्मणः फलम् उपलभ्यते—कर्मफलसिद्ध्यप्रतिबन्धः तत्समृद्धिः अतिशयविशेषः कश्चित्—"तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद। नाना तु विद्या चाविद्या च यदेव विद्यया करोति श्रद्धयोपनिषदा

प्रकटार्थविवरणम्

संबन्धः। तान्युदाहरति—रसतम इति॥ सारिष्ठगुण उद्गीथः; आप्तिगुणः
15 समृद्धिगुणः; तथा मुख्यप्राणदृष्टिविषयत्वान्मुख्यः प्राणः; आदित्यदृष्टिविषयत्वादादित्य उद्गीथ इत्यादीनीति। सूत्रस्य प्रतिज्ञाभागं व्याख्याय हेतुभागमवतारयति—कुत इति॥ येन कर्मणः फलं न ज्ञानात् अनभिज्ञस्यापि हरीतकीभक्षणे विरेकदर्शनात्; तेन कारणेन यो रसतमादिगुणकमुद्गीथं वेद यश्च न वेद तावुभावपि[१] ज्ञाज्ञौ कर्म कुरुत इति योजना। विद्यायाः कर्माङ्गत्वनियमाभावे
20 लिङ्गान्तरमाह—प्रस्तावादीति॥ तां चेदविद्वान् प्रस्तोष्यसि मूर्धा ते विपतिष्यतीति चाक्रायणेनाक्षेपकरणादविद्वत्ता सिद्धेत्यर्थः। पृथग्व्यप्रतिबन्धः फलमित्येतद्व्याचष्टे—अपि चेत्यादिना॥ तेनोभौ कुरुत इति पूर्वपक्षमुपन्यस्य स्वयमेव तन्निरस्यति—नाना त्विति॥ विद्याविद्ये नाना भिन्नफले; दृष्टो हि मणिविक्रयणे शबराद्वणिजो[२] ज्ञानाधिक्यात् फलातिशयः। तस्माद्यदेव कर्म विद्यया
25 प्रकृतोद्गीथादिविषयया करोति, श्रद्धया आस्तिक्यबुध्या, तथोपनिषदा देव-

१. A omits उभौ

२. A. विक्रयणे यस्माद्वणिजो

भाष्यम्

तदेव वीर्यवत्तरं भवति" इति; तत्र "नाना तु" इति विद्वदविद्व-
त्प्रयोगयोः पृथक्करणात्, "वीर्यवत्तरम्" इति च तरप्प्रत्ययप्रयोगात्
विद्याविहीनमपि कर्म वीर्यवदिति गम्यते; तच्च अनित्यत्वे विद्याया
उपपद्यते; नित्यत्वे तु कथं तद्विहीनं कर्म वीर्यवदित्यनुज्ञायेत; सर्वा- 5
ङ्गोपसंहारे हि वीर्यवत्कर्मेति स्थितिः। तथा लोकसामादिषु प्रतिनिय-
तानि प्रत्युपासनं फलानि शिष्यन्ते—"कल्पन्ते हास्मै लोका ऊर्ध्वा-
श्चावृत्ताश्च" इत्येवमादीनि। न चेदं फलश्रवणम् अर्थवादमात्रं युक्तं
प्रतिपत्तुम्; तथा हि गुणवाद आपद्येत; फलोपदेशे तु मुख्यवादोप-
पत्तिः; प्रयाजादिषु इतिकर्तव्यताकाङ्क्षस्य क्रतोः प्रकृतत्वात् तादर्थ्ये 10

प्रकटार्थविवरणम्

तान्यानेनेत्यर्थः। श्रुतेर्विवक्षितांशमाह—तत्रेति ॥ किं च लोकदृष्ट्या सामा-
द्युपासनेषु प्रतिनियतफलोपदेशादपि न कर्माङ्गत्वमित्याह — तथेति ॥
आवृत्ताः तिर्यञ्चः। कल्पन्ते भोगाय समर्था भवन्ति अस्मै विदुषे। यदुक्तं फल-
श्रवणमर्थवादमात्रमिति, तत्राह—न चेदमिति ॥ तथा हीति ॥ अर्थवादमात्रत्वे 15
सति गुणवाद एवंगुणकमुपासनमिति स्तुतिलक्षणा प्रसज्येत। फलोपदेश-
कत्वे पुनर्मुख्य एवार्थो लभ्यते। न च मुख्ये संभवति लक्षणाश्रयणं वाच्यम्।
तस्मात्सत्रन्यायेन साध्यतया फलं परिणम्यत इति भावः। नन्वेवं सति "यत्प्र-
याजानूयाजा इज्यन्ते वर्म वा एतद्यज्ञस्य क्रियते वर्म यजमानस्य भ्रातृव्याभिभूत्यै"
इत्यत्रापि वर्तमानापदिष्टस्य फलस्य कामोपबन्धकरणलक्षणपरिणामाश्रयणे- 20
नानित्यत्वमेवोपपद्येतेत्याशङ्क्याह — प्रयाजादिष्विति ॥ करणं सेतिकर्तव्यमेव
कार्यं साधयति इति लोके नियमात् करणस्य क्रतोरितिकर्तव्यताकाङ्क्षास्ति;
तस्य प्रकृतत्वात् प्रकरणप्रमाणेनाधिकारशून्यानां प्रयाजादीनां क्रतूपकारकत्वे
सति तत्फलेनैव फलवत्त्वाद्युक्तं तत्फलश्रुतेः अर्थवादत्वम्। उपासनायां पुनः न
तथा क्रतुप्रकरणे समाम्नानमिति वैषम्यमित्यर्थः। ननु क्रतुप्रकरणाम्नानाभावेऽपि 25

१. A. मात्रे सतीत्यर्थः। गुण- २. T¹. प्रयोजनादिष्विति

भाष्यम्

सति युक्तं फलश्रुतेरर्थवादत्वम् । तथा अनारभ्याधीतेष्वपि पर्णमयीत्वादिषु । न हि पर्णमयीत्वादीनामक्रियात्मकानाम् आश्रयमन्तरेण फलसंबन्धोऽवकल्पते ; गोदोहनादीनां हि प्रकृताप्प्रणयनाद्याश्रयलाभादुपपन्नः फलविधिः ; तथा बैल्वादीनामपि प्रकृतयूपाद्याश्रयलाभादुपपन्नः फलविधिः ; न तु पर्णमयीत्वादिषु एवंविधः कश्चिदाश्रयः प्रकृतोऽस्ति ;

प्रकटार्थविवरणम्

पर्णमयीत्वादिषु[1] फलश्रवणस्य अर्थवादत्वं[2] दृष्टम् ; तथोपासनेष्वपि भविष्यतीत्याशङ्क्याह—तथेति ।। क्रतुमनारभ्य अप्रक्रम्य[3] अधीतेष्वपि पर्णमयीत्वादिषु फलश्रवणस्य युक्तमर्थवादत्वम् योग्यानुपलब्धिबाधात्—वर्तमानायां जुहूसत्तायां वर्तमानमपापश्लोकश्रवणं योग्यत्वे सत्युपलभ्येत, न चोपलभ्यत इत्यर्थः । किंच क्रिया फलसाधनं भवति । पर्णमयीत्वादीनां च अक्रियात्मकत्वान्नान्याश्रयमन्तरेण स्वत एव साधकत्वं घटत इत्याह—न हि पर्णमयीत्वादीनामिति ।। नन्वक्रियात्मकत्वाच्चेत् फलसंबन्धो नोपपद्यते, तर्हि "गोदोहनेन पशुकामस्य प्रणयेत्" "कांस्येन ब्रह्मवर्चसकामस्य" "बैल्वमन्नाद्यकामस्य यूपं कुर्यात्" इत्यादिष्वपि फलसम्बन्धो न स्यादित्याशङ्क्याह—गोदोहनादीनां हीति ।। गोदोहनादिविधानं तावन्न[4] क्रत्वर्थम् "चमसेनापः प्रणयेत्" इति प्रकृतेनैव क्रतुसिद्धेः ; तस्माद्विशेषविधानात् फलार्थतैवेत्यर्थः । "यूपे पशुं बध्नाति" इति प्रकृतयूपाश्रयणेन बैल्वादिविशेषविधानमपि फलार्थमेवेत्यर्थः । तर्हि जुह्वाश्रयणेन पर्णमयीत्वविशेषविधानमपि फलाय किं नेष्यत[5] इत्याशङ्क्याह–न तु पर्णमयीत्वादिष्विति ।। "यस्य पर्णमयी जुहूः" इति वाक्यमन्तरेणान्यस्य जुह्वाः क्रत्वर्थत्वे प्रमाणस्यादर्शनात् सर्वक्रतुषु पर्णमय्येव जुहू-

१. TM and A. त्वादिफल
२. T omits अर्थवादत्वं... फलश्रवणस्य
३. T and T¹. नारभ्योपक्रमस्य TM. भ्यापक्रम्य
४. A adds न
५. TM. नोपलभ्यते

भाष्यम्

वाक्येनैव तु जुह्वाद्याश्रयतां विवक्षित्वा फलेऽपि विधिं विवक्षतो वाक्यभेदः स्यात्। उपासनानां तु क्रियात्मकत्वात् विशिष्टविधानोपपत्तेः उद्गीथाद्याश्रयाणां फले विधानं न विरुध्यते। तस्मात् यथा क्रत्वाश्रयाण्यपि गोदोहनादीनि फलसंयोगादनित्यानि एवमुद्गीथाद्युपासनान्यपि इति द्रष्टव्यम्। अत एव च कल्पसूत्रकारा नैवंजातीयकान्युपासनानि क्रतुषु कल्पयांचक्रुः॥ 5

[ प्रदानाधिकरणम् ]

## प्रदानवदेव तदुक्तम्॥ ३-३-४३॥

वाजसनेयके "वदिष्याम्येवाहमिति वाग्दध्रे" इत्यत्र अध्यात्मं वागादीनां प्राणः श्रेष्ठोऽवधारितः, अधिदैवतमग्न्यादीनां वायुः; तथा छान्दोग्ये "वायुर्वाव संवर्गः" इत्यत्र अधिदैवतमग्न्यादीनां वायुः संवर्गोऽवधारितः, "प्राणो वाव संवर्गः" इत्यत्र अध्यात्मं वागादीनां प्राणः। तत्र संशयः—किं पृथगेवेमौ वायुप्राणावुपगन्तव्यौ स्याताम् 10

प्रकटार्थविवरणम् 15

नान्या काचित् पर्णमयीत्वस्याधारभूता क्रतुशेषतया प्रकृतास्ति, यदाश्रयणेन पर्णमयीत्वं फलाय विधीयेतेत्यर्थः। एतदेव वाक्यं जुह्वाः क्रत्वर्थताम्, पर्णमय्याः फलसाधनतां च बोधयतीति न वाच्यमित्याह— वाक्येनैव त्विति॥ एवं पर्णमयीत्वादिफलश्रवणस्यार्थवादत्वमुपपाद्य तद्वैलक्षण्यमुपासनानामाह—उपासनानां त्विति॥ स्वयं क्रियात्मकत्वात् यागादिवत् विशिष्टफलोद्देशेन विधानमुपपद्यते, प्रकरणादिना च क्रत्वर्थतायाः सिद्धत्वात्तदाश्रयणेन फलायोपासनविधानमपि घटते यस्मात् तस्मादित्युपसंहारः। अत्रैव लिङ्गमाह—अत एव चेति॥ 20

प्रदानवदेव तदुक्तम्॥

वायुप्राणौ विषय इत्याह—वाजसनेयक इत्यादिना॥ तयोः भेदाभेदप्रतिपादकवाक्याभ्यां संशयमाह—तत्रेति॥ पूर्वत्रोपासनानां पृथक्फलभव- 25

भाष्यम्

उत अपृथगिति । अपृथगेवेति तावत्प्राप्तम्, तत्त्वाभेदात्; न हि अभिन्ने तत्त्वे पृथगनुचिन्तनं न्याय्यम्; दर्शयति च श्रुतिः अध्यात्ममधिदैवतं च तत्त्वाभेदम्—"अग्निर्वाग्भूत्वा मुखं प्राविशत्" इत्यारभ्य; तथा
5 "त एते सर्व एव समाः सर्वेऽनन्ताः" इत्याध्यात्मिकानां प्राणानाम् आधिदैविकीं विभूतिमात्मभूतां दर्शयति । तथा अन्यत्रापि तत्र तत्र अध्यात्ममधिदैवतं च बहुधा तत्त्वाभेददर्शनं भवति; क्वचिच्च "यः प्राणः स वायुः" इति स्पष्टमेव वायुं प्राणं च एकं करोति । तथा उदाहृतेऽपि वाजसनेयिब्राह्मणे "यतश्चोदेति सूर्यः" इत्यस्मिन् उपसंहारश्लोके,
10 "प्राणाद्वा एष उदेति प्राणेऽस्तमेति" इति प्राणेनैव उपसंहरन् एकत्वं दर्शयति; "तस्मादेकमेव व्रतं चरेत्प्राण्याच्चैवापान्याच्च" इति च प्राणव्रतेनैव एकेनोपसंहरन् एतदेव द्रढयति । तथा छान्दोग्येऽपि परस्तात्[1] "महात्मनश्चतुरो देव एकः कः स जगार भुवनस्य गोपाः" इत्येक-

प्रकटार्थविवरणम्

15 णात् कर्माङ्गेभ्यो भेदेनानुष्ठानमुक्तम् । इह वायुप्राणयोस्तत्त्वाभेदेन एकमेव फलं प्राणात्मनावस्थानमिति वायुप्राणावपृथगनुचिन्तनीयावित्याह — अपृथगिति ॥ स्वरूपाभेदं प्रमाणतः प्रकटयति—दर्शयति चेति ॥ यदि वायुप्राणयोः पृथगनुचिन्तनं विधित्सितं स्यात् तदोपासनाङ्गव्रतोपदेशोऽपि पृथगेव स्यात् । इह च प्राणापानयोर्निरोधं न कुर्यादित्येकमेव व्रतं दर्शयति ।
20 ततोऽप्यपृथगनुचिन्तनमित्याह — तस्मादेकमेवेति ॥ तथा छान्दोग्येऽपि वायुं प्राणं च संवर्गगुणविशिष्टं भेदेनोपक्रम्य परस्ताद्वाक्यशेषे संवर्गमेकमेव गमयतीत्यन्वयः । महात्मन इति द्वितीयाबहुवचनम । चतुरो वागादीन् देव एकः कः प्रजापतिः प्राणः स जगार गीर्णवानुपसंहृतवानित्यर्थः । एको वायुरेकेषां अग्न्यादित्यश्चन्द्रमा आप इति चतुर्णां संहरणात् संवर्गः अपरः प्राणोऽपरेषां वाक्[2]-
25 चक्षुःश्रोत्रमनसां संवर्ग इति न प्रतीतोऽस्त्यर्थः ॥.

१. T and T[1]. पुरस्तात्     २. T[1]. प्राणोपक्षेपात् चक्षुः

## भाष्यम्

मेव संवर्गं गमयति; न ब्रवीति—एक एव एषां चतुर्णां संवर्गः, अप-
रोऽपरेषामिति। तस्मादपृथक्त्वमुपगमनस्यैवेदं भाते ब्रूमः—

पृथगेव वायुप्राणावुपगन्तव्याविति; कस्मात्? पृथगुपदेशात्;
आध्यानार्थो हि अयम् अध्यात्माधिदैवविभागोपदेशः; स असत्या- 5
ध्यानपृथक्त्वे अनर्थक एव स्यात्। ननु उक्तं न पृथगनुचिन्तनम्,
तत्त्वाभेदादिति—नैष दोषः; तत्त्वाभेदेऽप्यवस्थाभेदात् उपदेशभेद-
वशेन अनुचिन्तनभेदोपपत्तेः, श्लोकोपन्यासस्य च तत्त्वाभेदाभिप्राये-
णापि उपपद्यमानस्य पूर्वोदितध्येयभेदनिराकरणसामर्थ्याभावात्, "स
यथैषां प्राणानां मध्यमः प्राण एवमेतासां देवतानां वायुः" इति च 10
उपमानोपमेयकरणात्। एतेन व्रतोपन्यासो व्याख्यातः; "एकमेव
व्रतम्" इति च एवकारो वागादिव्रतनिवर्तनेन प्राणव्रतप्रतिपत्त्यर्थः;

## प्रकटार्थविवरणम्

उत्सूत्रमेव सिद्धान्तमाह—पृथगेवेति ॥ "तौ वा एतौ द्वौ संवर्गौ" इति
वाक्यस्य उपास्यगुणविशिष्टभेदाभिधायकस्य भेदेनानुचिन्तने तात्पर्याद्वाक्यप्रमा- 15
णात् भेदेनानुचिन्तनमित्यर्थः। पूर्वपक्षबीजमुन्मूलयति—ननूक्तमित्यादिना ॥
उपास्यतया प्रधानभूतसंवर्गगुणविशिष्टवायुप्राणधर्मिभेदविषयेण वाक्येन
गुणभूतसमीरणस्वभावैक्यविषयं वाक्यं बाध्यत इति भावः। वाजसनेयिगत-
श्लोकस्य गतिमाह—श्लोकोपन्यासस्य चेति ॥ सूर्योदयास्तमययोः वाय्व-
धीनत्वात् तदभेदाभिप्रायेण प्राणात्सूर्यस्योदयास्तमयौ दर्शितौ। ततोऽध्या- 20
त्माधिदैवविभागोक्तस्य ध्येयभेदस्य निराकरणे नास्ति श्लोकस्य सामर्थ्य-
मित्यर्थः। इतोऽपि विशिष्टभेदो न निराचिकीर्षित इत्याह—स यथैषामिति ॥
एतेनेति ॥ श्लोकस्य स्वरूपे[1] चैक्याभिप्रायेणेत्यर्थः। व्रतोपदेशस्य प्रकारान्तरेण
गतिमाह— एकमेव व्रतमिति ॥ वेत्स्यथेममेव नाप्नोद्योऽयं मध्यमः प्राण इत्य-
ध्यात्मं मुख्यस्य प्राणस्य मृत्युनानाप्तत्वमुक्त्वा आधिदैविकं वागग्न्यादीनां ज्वलना-[2] 25

१. T omits स्वरूपे २. A omits ज्वलनादि

भाष्यम्

भग्नव्रतानि हि वागादीन्युक्तानि, "तानि मृत्युः श्रमो भूत्वोपयेमे" इति श्रुतेः; न वायुव्रतनिवृत्त्यर्थः; "अथातो व्रतमीमांसा" इति प्रस्तुत्य तुल्यवत् वायुप्राणयोरभग्नव्रतत्वस्य निर्धारितत्वात्; "एक-
5　मेव व्रतं चरेत्" इति च उक्त्वा "तेनो एतस्यै देवतायै सायुज्यं सलोकतां जयति" इति वायुप्राप्तिं फलं ब्रुवन् वायुव्रतमनिवर्तितं दर्शयति; देवतेत्यत्र वायुः स्यात्, अपरिच्छिन्नात्मकत्वस्य प्रेप्सितत्वात्, पुरस्तात्प्रयोगाच्च—"सैषानस्तमिता देवता यद्वायुः" इति। तथा "तौ वा एतौ द्वौ संवर्गौ वायुरेव देवेषु प्राणः प्राणेषु" इति भेदेन व्यपदि-
10　शति; "ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तस्तत्कृतम्" इति च भेदेनैव उपसंहरति; तस्मात्पृथगेव उपगमनम्। प्रदानवत्—यथा "इन्द्राय राज्ञे पुरोडाशमेकादशकपालमिन्द्रायाधिराजायेन्द्राय स्वराज्ञे" इत्यस्यां त्रिपुरोडाशिन्यामिष्टौ, "सर्वेषामभिगमयन्नवद्यत्यछंबट्कारम्"

प्रकटार्थविवरणम्

15　द्विव्रतभङ्गमुक्त्वा वायोरभग्नव्रतत्वं निर्धारितम्। "निम्लोचन्त्यन्या देवताः न वायुः स यथैषां प्राणानां मध्यमः प्राणः" इत्यादिनेत्यर्थः। इतश्च न वायुव्रतनिवृत्तिरित्याह—एकमेव व्रतमिति॥ तेन सव्रतेनोपासनेन; निरर्थकः उः; एतस्यै एतस्याः देवतायाः सायुज्यं समानदेहतां समानलोकतां च प्राप्नोतीत्यर्थः। नन्वत्र देवताप्राप्तिरुच्यते, न वायुप्राप्तिरित्याशङ्क्याह—देवतेत्यत्रेति॥ यदुक्तं पृथगुप-
20　देशादिति, तदिदानीं विवृणोति—तथा तौ वा इति॥

इदानीं सौत्रमुदाहरणं व्याचष्टे—प्रदानवदित्यादिना॥ त्रयः पुरोडाशा यस्यां सा त्रिपुरोडाशा; तस्यां सहैव प्रदानं किं वा भेदेनेति सन्देहे पूर्वपक्षमाह—सर्वेषामिति॥ अच्छं शुद्धं वट्कारं भागं सर्वेषामभिगमयन् प्रापयन्नवद्यति। गृह्णातीति वचनात्सहैव प्रक्षेपाशङ्का जायते।
52　अन्यथा प्रत्येकमभिगमयन्निति स्यात्। दैवतैक्याच्च सहप्रदानाशङ्कायां प्रधान-

१. T, T¹ and A omit एतस्यै

भाष्यम्

इत्यतो वचनात्, इन्द्राभेदाच्च, सहप्रदानाशङ्कायाम्—राजादिगुणभेदात् याज्यानुवाक्याव्यत्यासविधानाच्च यथान्यासमेव देवतापृथक्त्वात्प्रदान-पृथक्त्वं भवति; एवं तत्त्वभेदेऽपि अध्येयांशपृथक्त्वात् आध्यान-पृथक्त्वमित्यर्थः। तदुक्तं संकर्षे "नाना वा देवता पृथग्ज्ञानात्" 5 इति। तत्र तु द्रव्यदेवताभेदात् यागभेदो विद्यते; नैवमिह विद्या-भेदोऽस्ति, उपक्रमोपसंहाराभ्याम् अध्यात्माधिदैवोपदेशेषु एकविद्या-विधानप्रतीतेः; विद्यैक्येऽपि तु अध्यात्माधिदैवभेदात् प्रवृत्तिभेदो भवति—अग्निहोत्र इव सायंप्रातःकालभेदात्—इत्येतावदभिप्रेत्य प्रदा-नवदित्युक्तम् ॥ 10

प्रकटार्थविवरणम्

पृथक्त्वमिति सिद्धान्तः। स्वरूपेणेन्द्रस्यैक्येऽपि राजादिगुणविशिष्टदेवता-भेदादित्यर्थः। हेत्वन्तरमाह — याज्येति ॥ यजेति प्रैषे कृते या ऋचः शस्यन्ते होत्रा ता याज्याः; अनुब्रूहीति प्रैषे याः शस्यन्ते ताः अनुवाक्याः। तयोः व्यत्यासविधानाच्च "इन्द्राय राज्ञेऽनुब्रूहि" इति प्रथमम्; पश्चात् "इन्द्रा- 15 याधिराजाय अनुब्रूहि" इत्यादि; सहप्रदानं चेदेकैव याज्यानुवाक्या च स्यादि-त्यर्थः। सङ्कर्षे देवताकाण्डे। नाना भेदेनाग्नौ प्रक्षेपः; कुतः? तत्तद्गुणभेदेन देवता-पृथक्त्वज्ञानादित्यर्थः। देवतोद्देशेन द्रव्यत्यागो यागः; तस्य यथेह दृष्टान्ते भेदः, तथा विद्याभेदोऽपि स्यादित्याशङ्क्याह—तत्र त्विति ॥ यत्रोत्पत्तिवाक्यादेव नानादेवतं कर्म प्रतीयते, तत्र देवतादिभेदात्कर्मभेदः, न तथेह विद्याभेदः 20 उत्पत्तित एव प्राणविद्यैक्यावगमादित्यर्थः। कथं तर्हि विद्यैक्ये भेदेनानु-चिन्तनमित्याशङ्क्याह — विद्यैक्येऽपीति ॥ "सायं प्रातरग्निहोत्रं जुहोति" इति श्रूयते। तत्र सायमन्यथानुष्ठानं प्रातश्चान्यथा; देवता चाग्निः प्रजापतिश्च सायम्; सूर्यः प्रजापतिश्च प्रातः, तत्प्रदानभेदो यथा कर्मैक्येऽपि तथा विद्यै-क्येऽपि अनुचिन्तनभेदो न विरुध्यत इत्यर्थः ॥ 25

१. A. तत्र    २. A adds देवतोद्देशे

भाष्यम्

[ लिङ्गभूयस्त्वाधिकरणम् ]

# लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ३-३-४४ ॥

वाजसनेयिनोऽग्निरहस्ये—"नैव वा इदमग्रे सदासीत्" इत्ये-
5 तस्मिन्ब्राह्मणे मनोऽधिकृत्याधीयते—"तत्षट्त्रिंशतं सहस्राण्यपश्यदात्म-
नोऽग्नीनर्कान्मनोमयान्मनश्चितः" इत्यादि ; तथैव "वाक्चितः प्राण-
चितश्चक्षुश्चितः श्रोत्रचितः कर्मचितोऽग्निचितः" इति पृथगग्नीनामनन्ति
सांपादिकान् । तेषु संशयः—किमेते मनश्चिदादयः क्रियानुप्रवेशिनः

प्रकटार्थविवरणम्

10 लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥

विषयं दर्शयितुमुपक्रमते—वाजसनेयिन इति ॥ उत्पत्तेः प्राक् इदं
सर्वं नैव सदासीत् इत्युपक्रम्यानन्तरं मनसः प्रादुर्भावमुक्त्वा तन्मन आत्मान-
मैक्षतेति ईक्षणपूर्वकं तन्मन आत्मनोऽग्नीनपश्यदिति मनोऽधिकृत्याधीयत
इत्यर्थः । पुरुषायुष्ट्वेन कृप्तशतवर्षान्तर्गतषट्त्रिंशत्सहस्राहोरात्रावच्छिन्न -
15 तया मनोवृत्तीनां तावत्संख्याकत्वमाह— षट्त्रिंशतं सहस्राण्यग्नीनिति ॥
अर्कान् स्तोतव्यान् मनोवृत्तिभावितत्वात् मनोमयानिष्टकाभिरिव मनोवृत्तिभि-
रेव चीयन्त इति मनश्चित इत्यर्थः । तथा वागादिवृत्तिभिरिष्टकात्वेन भावि-
ताभिश्चीयन्त इति वाक्चिदादीनात्मनोऽग्नीन् वागादयोऽपश्यन्नित्यर्थः ।
क्रत्वर्थत्वपुरुषार्थत्वविनियोजकप्रमाणादर्शनात्संशयमाह— तेषु संशय इति ॥
20 केवलविद्यात्मका भावनामया इत्यर्थः । पूर्वत्राध्यात्माधिदैवतस्थान -
भेदात् अभिध्यानभेदो दर्शितः ; तद्वदिह स्थानभेदाभावात् क्रत्वङ्गभूतेष्ट -
कामयाग्निचयनप्रकरणात् क्रियास्थानत्वावगमाच्च क्रियान्तर्गता इत्याह —

१. TM and A. अर्थात्
२. TM. वदा
A. तावागादिभिः
३. TM. मावान्मनोमयाः
४. T and T¹. भूतेषु काम-

भाष्यम्

तच्छेषभूताः, उत स्वतन्त्राः केवलविद्यात्मका इति। तत्र प्रकरणा-
त्क्रियानुप्रवेशे प्राप्ते, स्वातन्त्र्यं तावत्प्रतिजानीते—लिङ्गभूयस्त्वा-
दिति। भूयांसि हि लिङ्गानि अस्मिन्ब्राह्मणे केवलविद्यात्मकत्वमेषा-
मुपोद्बलयन्ति दृश्यन्ते—"तद्यत्किंचेमानि भूतानि मनसा संकल्पयन्ति 5
तेषामेव सा कृतिः" इति, "तान्हैतानेवंविदे सर्वदा सर्वाणि भूतानि
चिन्वन्त्यपि स्वपते" इति च एवंजातीयकानि। तद्धि लिङ्गं प्रकरणा-
द्बलीयः। तदप्युक्तं पूर्वस्मिन्काण्डे—"श्रुतिलिङ्गवाक्यप्रकरणस्थानसमा-
ख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्" इति॥

## पूर्वविकल्पः प्रकरणात्स्यात्क्रिया मानसवत्॥ 10

## ३-३-४५॥

नैतद्युक्तम्—स्वतन्त्रा एतेऽग्नयोऽनन्यशेषभूता इति; पूर्वस्य क्रिया-
मयस्य अग्नेः प्रकरणात् तद्विषय एव अयं विकल्पविशेषोपदेशः स्यात्,

प्रकटार्थविवरणम्

तत्र प्रकरणादिति॥ सिद्धान्तमुपक्रमते—स्वातन्त्र्यं तावदिति॥ इदानीं 15
भूतानि यत्किंचन मनसा सङ्कल्पयन्ति, तेषामेवाग्नीनां सा कृतिः करण-
मित्येतत् स्वातन्त्र्येण भावनात्मकत्वे लिङ्गम्; न हि क्रियाङ्गम् यत्किंचित्कर-
णेन सिध्यति, चोदनैकलभ्यत्वादित्यर्थः। एवंविदे स्वपते जाग्रतेऽपि
तानेतानग्नीन् सर्वदा सर्वाणि भूतानि चिन्वन्तीति लिङ्गान्तरम्। न हि कर्माङ्गं
सर्वदा सर्वैरेवानुष्ठीयते, प्रतिनियतदेशकालनिमित्तेषु चोदितत्वादित्यर्थः। 20
यच्चोक्तं प्रकरणात्क्रियाङ्गत्वमिति, तत्राह—तद्धि लिङ्गमिति॥

पूर्वविकल्पः प्रकरणात् स्यात् क्रिया मानसवत्॥

सिद्धान्तोपक्रममिदमधिकरणम्; तत्र सूत्रेण पूर्वपक्षमाह—पूर्वविकल्प

१. TM and A. इमानि
२. T, T¹ and TM. भवना
३. A omits तत्र...मिति
४. T and T¹. सूत्रविकल्पः

भाष्यम्

न स्वतन्त्रः । ननु प्रकरणाल्लिङ्गं बलीयः—सत्यमेवमेतत्; लिङ्गमपि तु एवंजातीयकं न प्रकरणाद्बलीयो भवति; अन्यार्थदर्शनं हि एतत्, सांपादिकाग्निप्रशंसारूपत्वात्; अन्यार्थदर्शनं च असत्यामन्यस्यां प्राप्तौ
5 गुणवादेनाप्युपपद्यमानं न प्रकरणं बाधितुमुत्सहते; तस्मात्सांपादिका अप्येतेऽग्नयः प्रकरणात्क्रियानुप्रवेशिन एव स्युः । मानसवत्—यथा दशरात्रस्य दशमेऽहनि अविवाक्ये पृथिव्या पात्रेण समुद्रस्य सोमस्य प्रजापतये देवतायै गृह्यमाणस्य ग्रहणासादनहवनाहरणोपह्वानभक्षणानि मानसान्येवाम्नायन्ते, स च मानसोऽपि ग्रहकल्पः क्रियाप्रकरणात्क्रिया-
10 शेष एव भवति—एवमयमप्यग्निकल्प इत्यर्थः ॥

प्रकटार्थविवरणम्

इति ॥ पूर्वस्य क्रियामयस्येष्टकाभिरग्निश्चीयत इति विहितस्यायं विकल्पः स्यात् यथासौ क्रत्वङ्गं तथायमपीत्यर्थः । सिद्धान्तिनोक्तमनूद्य दूषयति—नन्वित्यादिना ॥ यद्यपि विध्युद्देशगतं लिङ्गं प्रकरणात् बलीयः, तथापि
15 नार्थवादगतं न्यायतः प्राप्तस्यावद्योतकत्वादर्थवादलिङ्गानामित्यर्थः । क्रियेति सूत्रपदनिगमनेन व्याचष्टे—तस्मादिति ॥ ननु क्रियाया बाह्यसाधनसाध्यतानियमात् कथं भावनात्मकानां क्रत्वङ्गतेत्याशङ्क्योदाहरणमाह—मानसवदिति ॥ दशरात्रस्य कर्मणो यद्दशममहः तदविवाक्यंनाम । न विद्यते विविधं वाक्यं ऋत्विजां यस्मिन् मानसत्वात्सङ्कल्पव्यापारस्य तस्मिन्नेवं श्रूयते
20 "अनया त्वा पात्रेण समुद्रं रसया प्राजापत्यं मनोग्रहं गृह्णाति" इति । तदर्थेत उपन्यस्यति—पृथिव्येत्यादिना ॥ ग्रहणं सोमाधारपात्रस्योपादानम् । आसादनं गृहीतस्य स्वस्थाने निक्षेपः; तदनन्तरं सोमस्य हवनम्; हुतशेषोपादानं आहरणम्; पश्चादृत्विजां तद्भक्षणाय अन्योन्यमनुज्ञाकरणमुपस्थानं [करणमाह्वानम्] पश्चाद्भक्षणं सोमस्य—इत्येतानि मानसान्येवेत्यर्थः । ग्रहकल्प इति
25 ग्रहसंबन्धिकल्पनाप्रकार इत्यर्थः । क्रत्वङ्गतालक्षणसादृश्यसापेक्षःदतिदेशाच्च क्रियाङ्गत्वमित्यर्थः ॥

१. T[1], A and TM. चिम्वत इति      २. T[1]. TM and A. वाक्यं

भाष्यम्

## अतिदेशाच्च ॥ ३-३-४६ ॥

अतिदेशश्च एषामग्नीनां क्रियानुप्रवेशमुपोद्बलयति—"षट्त्रिंशत्सहस्राण्यग्नयोऽर्कास्तेषामेकैक एव तावान्यावानसौ पूर्वः" इति; सति हि सामान्येऽतिदेशः प्रवर्तते; ततश्च पूर्वेणाष्टकाचितेन क्रियानुप्रवेशिना 5
अग्निना सांपादिकानग्नीनतिदिशन्क्रियानुप्रवेशमेव एषां द्योतयति ॥

## विद्यैव तु निर्धारणात् ॥ ३-३-४७ ॥

तुशब्दः पक्षं व्यावर्तयति। विद्यात्मका एव एते स्वतन्त्रा मनश्चिदादयोऽग्नयः स्युः, न क्रियाशेषभूताः। तथा हि निर्धारयति—"ते हैते विद्याचित एव" इति, "विद्यया हैवैत एवंविदश्चिता भवन्ति" 10
इति च ॥

## दर्शनाच्च ॥ ३-३-४८ ॥

दृश्यते च एतेषां स्वातन्त्र्ये लिङ्गम्; तत्पुरस्ताद्दर्शितम् "लिङ्गभूयस्त्वात्" इत्यत्र ॥

ननु लिङ्गमपि असत्यामन्यस्यां प्राप्तौ असाधकं कस्यचिदर्थस्येति 15
अपास्य तत् प्रकरणसामर्थ्यात् क्रियाशेषत्वमध्यवसितम् — इत्यत उत्तरं पठति—

## श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ३-३-४९ ॥

प्रकटार्थविवरणम्

अतिदेशाच्च ॥ 20

विद्यैव तु निर्धारणात् ॥

दर्शनाच्च ॥

श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥

भाष्यम्

नैवं प्रकरणसामर्थ्यात्क्रियाशेषत्वमध्यवसाय स्वातन्त्र्यपक्षो बाधितव्यः, श्रुत्यादेर्बलीयस्त्वात्; बलीयांसि हि प्रकरणात् श्रुतिलिङ्गवाक्यानीति स्थितं श्रुतिलिङ्गसूत्रे; तानि च इह स्वातन्त्र्यपक्षं साधयन्ति दृश्यन्ते; कथम्? श्रुतिस्तावत्—"ते हैते विद्याचित एव" इति; तथा लिङ्गम्—"सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते" इति; तथा वाक्यमपि "विद्यया हैवैत एवंविदश्चिता भवन्ति" इति। "विद्याचित एव" इति सावधारणा इयं श्रुतिः क्रियानुप्रवेशेऽमीषामभ्युगम्यमाने पीडिता स्यात्। ननु अबाह्यसाधनत्वाभिप्रायमिदमवधारणं भविष्यति—नेत्युच्यते; तदभिप्रायतायां हि "विद्याचितः" इति इयता स्वरूपसंकीर्तनेनैव कृतत्वात्, अनर्थकमवधारणं भवेत्—स्वरूपमेव हि एषाम् अबाह्यसाधनमिति; अबाह्यसाधनत्वेऽपि तु मानसग्रहवत् क्रियानुप्रवेशशङ्कायां तन्निवृत्तिफलम् अवधारणमर्थवद्भविष्यति। तथा "स्वपते जाग्रते चैवंविदे सर्वदा सर्वाणि भूतान्येतानग्नींश्चिन्वन्ति" इति सातत्यदर्शनम् एषां स्वातन्त्र्येऽवकल्पते—यथा सांपादिके वाक्प्राणमयेऽग्निहोत्रे "प्राणं तदा वाचि जुहोति…वाचं तदा प्राणे जुहोति" इति च उक्त्वा उच्यते—"एते अनन्ते अमृते आहुती जाग्रच्च स्वपंश्च सततं जुहोति" इति—तद्वत्; क्रियानुप्रवेशे तु क्रियाप्रयोगस्य अल्पकालत्वात् न सातत्येन एषां प्रयोगः कल्पेत। न च इदमर्थवादमात्रमिति न्याय्यम्; यत्र हि विस्पष्टो विधायको लिङादिः

प्रकटार्थविवरणम्

श्रुतिलिङ्गवाक्यैः प्रकरणमपबाध्य फलार्थतया मनश्चिदादीनां स्वातन्त्र्यमाह—"विद्यैव तु" इत्यादि सूत्रत्रयेण। श्रुतिं विवृणोति आक्षेपसमाधानाभ्याम्—विद्याचित एवेति सावधारणेयमित्यादिना ॥ इदानीं लिङ्गं व्यनक्ति—तथा स्वपत इति ॥ यथोक्तमर्थवादगतं लिङ्गं न प्रकरणबाधने समर्थमिति, तत्राह—न चेदमर्थवादमात्रमिति ॥ प्रतिविरोधयोरसतोः यथाश्रुतेऽर्थे-

भाष्यम्

उपलभ्यते, युक्तं तत्र संकीर्तनमात्रस्यार्थवादत्वम्; इह तु विस्पष्ट-
विध्यन्तरानुपलब्धेः संकीर्तनादेव एषां विज्ञानविधानं कल्पनीयम्; तच्च
यथासंकीर्तनमेव कल्पयितुं शक्यत इति, सातत्यदर्शनात्तथाभूतमेव
कल्प्यते; ततश्च सामर्थ्यादेषां स्वातन्त्र्यसिद्धिः। एतेन "तद्यत्किंचे- 5
मानि भूतानि मनसा संकल्पयन्ति तेषामेव सा कृतिः" इत्यादि
व्याख्यातम्। तथा वाक्यमपि "एवंविदे" इति पुरुषविशेषसंबन्धमेव
एषामाचक्षाणं न क्रतुसंबन्धं मृष्यते। तस्मात्स्वातन्त्र्यपक्ष एव ज्याया-
निति ॥

## अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च 10
## तदुक्तम् ॥ ३-३-५० ॥

इतश्च प्रकरणमुपमृद्य स्वातन्त्र्यं मनश्चिदादीनां प्रतिपत्तव्यम्, यत्
क्रियावयवान् मनआदिव्यापारेष्वनुबध्नाति—"ते मनसैवाधीयन्त मन-
साचीयन्त मनसैव ग्रहा अगृह्यन्त मनसास्तुवन्मनसाशंसन्यत्किंच यज्ञे
कर्म क्रियते यत्किंच यज्ञियं कर्म मनसैव तेषु तन्मनोमयेषु मनश्चित्सु 15

प्रकटार्थविवरणम्

वादानां प्रामाण्यमिति देवताधिकारन्यायेन सर्वदा सर्वाणि भूतानि मदर्थ-
मग्निं चिन्वन्तीति मन्वीतेति विधिः कल्प्यत इत्यर्थः। पूर्वोक्तेन यथाश्रुत-
ग्रहणन्यायेन यत्किंचेत्यत्रापि अग्निकरणसंकल्पनमेव विधीयत इत्याह —
एतेनेति ॥ एवं लिङ्गं विविच्य वाक्यं विवेक्ति[विविनक्ति]—तथा वाक्य- 20
मपीति ॥

अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववत् दृष्टश्च तदुक्तम् ॥

क्रियाङ्गानां मनआदिव्यापारेषु संबन्धकरणान्यथानुपपत्त्यापि न क्रिया-
शेषत्वमित्याह—इतश्चेत्यादिना ॥ मनसैवेतेऽग्नय आधीयन्ते विदुषाधीयन्ते;
छन्दसि लकारनियमाभावादित्यर्थः। आधानमग्नीनां चयनमिष्टकादीनां 25

## भाष्यम्

मनोमयमेव क्रियते" इत्यादिना; संपत्फलो हि अयमनुबन्धः; न च प्रत्यक्षाः क्रियावयवाः सन्तः संपदा लिप्सितव्याः; न च अत्र उद्गीथाद्युपासनवत् क्रियाङ्गसंबन्धात् तदनुप्रवेशित्वमाशङ्कितव्यम्, श्रुतिवैरूप्यात्; 5 न हि अत्र क्रियाङ्गं किंचिदादाय तस्मिन् अदो नामाध्यवसितव्यमिति वदति; षट्त्रिंशत्सहस्राणि तु मनोवृत्तिभेदान् आदाय तेष्वग्नित्वं ग्रहादींश्च कल्पयति, पुरुषयज्ञादिवत्; संख्या च इयं पुरुषायुषस्याहःसु दृष्टा सती तत्संबन्धिनीषु मनोवृत्तिष्वारोप्यत इति द्रष्टव्यम्। इत्येवमनुबन्धात्स्वातन्त्र्यं मनश्चिदादीनाम्। आदिशब्दात् अतिदेशाद्यपि यथा- 10 संभवं योजयितव्यम्; तथा हि—"तेषामेकैक एव तावान्यावानसौ पूर्वः" इति क्रियामयस्याग्नेर्माहात्म्यं ज्ञानमयानामेकैकस्य अतिदिशन्

## प्रकटार्थविवरणम्

ग्रहशब्दवाच्यानां पात्राणां ग्रहणं तत्प्रतिबन्धात् स्तुतिः शंसनं चान्यदपि यत्किंचित् यज्ञे पुरुषार्थे क्रियते, यच्च यज्ञाङ्गं क्रत्वर्थे तत्सर्वमेव मनसैव क्रियत 15 इत्यर्थः। अनुबन्धकरणस्य फलमाह—संपत्फलो हीति॥ क्रियाङ्गानां मनआदिव्यापारेषु संपादनार्थमिदं संबन्धकरणमित्यर्थः। ततः क्रियाङ्गत्वे किमायातमित्याशङ्क्याह — न च प्रत्यक्षा इति॥ मनश्चिदादीनां क्रियाङ्गत्वे साक्षादेव आधानादिसंभवात् संपादनं व्यर्थमापद्यत इत्यर्थः। ननु तर्हि कर्माङ्गसंबन्धादुद्गीथाद्युपासनवदाश्रित्य विधानं स्यान्न स्वातन्त्र्येणेत्याशङ्क्याह — 20 न चात्रोद्गीथादीति॥ अदो नाम तन्नाम किंचिदध्यवसितव्यमिति न हि वदति श्रुतिः। अतः स्वातन्त्र्योपलम्भादाश्रित्य विधानश्रुतिवैलक्षण्यमित्यर्थः। किं तर्हि अत्र विधीयत इत्याशङ्क्याह—षट्त्रिंशदिति॥ कथं मनोवृत्तिषु सङ्ख्योपादानमित्याशङ्क्याह — संख्या चेयमिति॥ उक्तानुवादपूर्वकं सूत्रभागं योजयति—इत्येवमनुबन्धादिति॥ प्रथममतिदेशं योजयति—तथा हीति॥

१. A. संशयः

२. A. यज्ञ-

३. T and T[1] संफलो हि

भाष्यम्

क्रियायामनादरं दर्शयति; न च सत्येव क्रियासंबन्धे विकल्पः पूर्वेणो-
त्तरेषामिति शक्यं वक्तुम्; न हि, येन व्यापारेण आहवनीयधारणा-
दिना पूर्वः क्रियायामुपकरोति, तेन उत्तरे उपकर्तुं शक्नुवन्ति । यत्तु
पूर्वपक्षेऽप्यतिदेश उपोद्बलक इत्युक्तम्—सति हि सामान्येऽतिदेशः प्रव- 5
र्तेत इति, तदस्मत्पक्षेऽग्नित्वसामान्येनातिदेशसंभवात्प्रत्युक्तम् — अस्ति
हि सांपादिकानामप्यग्नीनामग्नित्वमिति । श्रुत्यादीनि च कारणानि दर्शि-
तानि । एवमनुबन्धादिभ्यः कारणेभ्यः स्वातन्त्र्यं मनश्चिदादीनाम्;
प्रज्ञान्तरपृथक्त्ववत्—यथा प्रज्ञान्तराणि शाण्डिल्यविद्याप्रभृतीनि स्वेन
स्वेन अनुबध्यमानानि पृथगेव कर्मभ्यः प्रज्ञान्तरेभ्यश्च स्वतन्त्राणि 10
भवन्ति, एवमिति; दृष्टश्च अवेष्टेः राजसूयप्रकरणपठितायाः प्रकरणा-
दुत्कर्षः—वर्णत्रयानुबन्धात्, राजयज्ञत्वाच्च राजसूयस्य; तदुक्तं प्रथमे
काण्डे—“क्रत्वर्थायामिति चेन्न वर्णत्रयसंयोगात्” ॥

प्रकटार्थविवरणम्

ननु विकल्पार्थोऽयमतिदेशो नादरार्थ इत्याशङ्क्याह—न चेति ॥ 15
एकस्मिन् साध्ये तुल्यप्रापकाभ्यां द्वयोः सन्निपातो विकल्पो नाम नात्रैकं
साध्यमस्ति; तस्मादतिदेशोऽयं ज्ञानमयस्तुत्यर्थ इत्यर्थः ॥ क्रियाङ्गत्वेऽप्यति-
देशादिति हेतुरुक्तः; स न तत्साधक इत्याह—यत्त्वित्यादिना ॥ अतिदेशं
योजयित्वा आदिशब्दार्थमाह—श्रुत्यादीनि चेति ॥ स्वातन्त्र्ये दृष्टान्तमाह—
दृष्टश्चेति ॥ “राजा स्वाराज्यकामो राजसूयेन यजेत” इति प्रकृत्यावेष्टिं नामे- 20
ष्टिमामनन्ति “आग्नेयोऽष्टाकपालो हिरण्यं दक्षिणा” इत्यादिना । अतः प्रकरणात्[1]
राजसूयक्रत्वर्थायामिष्टौ प्रवृत्तिरिति चेन्न, वर्णत्रयसंयोगात् “यदि ब्राह्मणो
यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वाभिघारयेद्यदि वैश्यो वैश्वदेवं यदि
राजन्य ऐन्द्रम्” इति । तस्माद्यथाप्रकरणं हित्वा राजयज्ञादवेष्टेरन्यत्वं साधितं
तथेहाप्येवंवित्संयोगान्मनश्चिदादीनां स्वातन्त्र्यमित्यर्थः ॥ 25

१. A. इत्याशङ्क्याह    २. TM. तत्प्रकरणात्

भाष्यम्

## न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥ ३-३-५१ ॥

यदुक्तं मानसवदिति, तत्प्रत्युच्यते । न मानसग्रहसामान्यादपि मन-
5 श्चिदादीनां क्रियाशेषत्वं कल्प्यम्, पूर्वोक्तेभ्यः श्रुत्यादिहेतुभ्यः केवल-
पुरुषार्थत्वोपलब्धेः; न हि किंचित् कस्यचित् केनचिन् सामान्यं न
संभवति; न च तावता यथास्वं वैषम्यं निवर्तते; मृत्युवत् । यथा "स
वा एष एव मृत्युर्य एष एतस्मिन्मण्डले पुरुषः" इति "अग्निर्वै मृत्युः"
इति च अग्न्यादित्यपुरुषयोः समानेऽपि मृत्युशब्दप्रयोगे, नात्यन्तसा-
10 म्यापत्तिः; यथा च "असौ वा लोको गौतमाग्निस्तस्यादित्य एव
समित्" इत्यत्र न समिदादिसामान्यात् लोकस्य अग्निभावापत्तिः तद्वत् ॥

## परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥ ३-३-५२ ॥

परस्तादपि "अयं वाव लोक एषोऽग्निश्चितः" इत्यस्मिन् अन-
15 न्तरे ब्राह्मणे, ताद्विध्यं केवलविद्याविधित्वं शब्दस्य प्रयोजनं लक्ष्यते,
न शुद्धकर्माङ्गविधित्वम्; तत्र हि—

"विद्यया तदारोहन्ति यत्र कामाः परागताः ।
न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः ॥"

प्रकटार्थविवरणम्

20 न सामान्यादप्युपलब्धेः मृत्युवन्न हि लोकापत्तिः ॥

परोक्तदृष्टान्तं विघटयति—न सामान्यादिति ॥

परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥

किंचोपरितनेऽपि ब्राह्मणे चितेऽग्नावेतल्लोकदृष्टिविधानं स्वतन्त्रमुप-
लभ्यते । तस्मादर्वाक्पूर्वमपि स्वतन्त्रोपासनविधानमित्याह—परस्तादपीति ॥

भाष्यम्

इत्यनेन श्लोकेन केवलं कर्म निन्दन् विद्यां च प्रशंसन् इदं गमयति। तथा पुरस्तादपि "यदेतन्मण्डलं तपति" इत्यस्मिन्ब्राह्मणे विद्याप्रधानत्वमेव लक्ष्यते—"सोऽमृतो भवति मृत्युर्ह्यस्यात्मा भवति" इति विद्याफलेनैव उपसंहारात् कर्मप्रधानता तत्सामान्यात् इहापि तथात्वम्। भूयांसस्तु अग्न्यवयवाः संपादयितव्या विद्यायाम्—इत्येतस्मात्कारणात् अग्निना अनुबध्यते विद्या न कर्माङ्गत्वात्। तस्मात् मनश्चिदादीनां केवलविद्यात्मकत्वसिद्धिः॥

[शरीरे भावाधिकरणम्]

## एक आत्मनः शरीरे भावात्॥ ३-३-५३॥

इह देहव्यतिरिक्तस्य आत्मनः सद्भावः समर्थ्यते, बन्धमोक्षाधिकारसिद्धये; न हि असति देहव्यतिरिक्ते आत्मनि परलोकफलाश्चोदना उपपद्येरन्; कस्य वा ब्रह्मात्मत्वमुपदिश्येत। ननु शास्त्रप्रमुख एव प्रथमे पादे शास्त्रफलोपभोगयोग्यस्य देहव्यतिरिक्तस्य आत्मनोऽस्तित्वमुक्तम्—सत्यमुक्तं भाष्यकृता; न तु तत्रात्मास्तित्वे सूत्रमस्ति;

प्रकटार्थविवरणम्

ननु स्वतन्त्रविद्याविधानं चेद्विवक्षितं किमिति तर्ह्यग्निना संबध्यते विद्येत्याशङ्क्याह—भूयांसस्त्विति॥

एक आत्मनः शरीरे भावात्॥

संक्षेपतः तात्पर्यमाह—इह देहेति॥ ननु देहस्यैव अनुष्ठाने समर्थत्वात्तस्यैवाधिकारित्वं भविष्यति, किं व्यतिरेकविचारेणेत्याशङ्क्याह—न ह्यसतीति॥ तथापि पूर्वतन्त्र एवात्मनो विचारितत्वादयं विचारो व्यर्थ इत्याह—ननु शास्त्रेति॥ उत्सूत्रमेव शबरस्वामिना आत्मास्तित्वं विचारितम्। न तत्र जैमिनीयं सूत्रम्। अतोऽयं विचारोऽन्यतोऽप्राप्त एव क्रियत इत्याह—सत्यमुक्त-

भाष्यम्

इह तु स्वयमेव सूत्रकृता तदस्तित्वमाक्षेपपुरःसरं प्रतिष्ठापितम्; इत एव चाकृष्य आचार्येण शबरस्वामिना प्रमाणलक्षणे वर्णितम्; अत एव च भगवता उपवर्षेण प्रथमे तन्त्रे आत्मास्तित्वाभिधानप्रसक्तौ "शारीरके वक्ष्यामः" इत्युद्धारः कृतः। इह च इदं चोदनालक्षणेषु उपासनेषु विचार्यमाणेषु आत्मास्तित्वं विचार्यते, कृत्स्नशास्त्रशेषत्वप्रदर्शनाय; अपि च पूर्वस्मिन्नधिकरणे प्रकरणोत्कर्षाभ्युपगमेन मनश्चिदादीनां पुरुषार्थत्वं वर्णितम्; कोऽसौ पुरुषः, यदर्था एते मनश्चिदादयः—इत्यस्यां प्रसक्तौ इदं देहव्यतिरिक्तस्य आत्मनोऽस्तित्वमुच्यते; तदस्तित्वाक्षेपार्थं इदमादिमं सूत्रम्—आक्षेपपूर्विका हि परिहारोक्तिः विवक्षितेऽर्थे स्थूणानिखननन्यायेन दृढां बुद्धिमुत्पादयेदिति ॥

प्रकटार्थविवरणम्

मिति ॥ नन्वसूचितं चेत् कथं भाष्यकारो व्यवरत्यादित्याशङ्क्याह—इत एवाकृष्येति ॥ "स एष यज्ञायुधी यं यजमानः" इत्यस्य वाक्यस्य विचारप्रसङ्गेनाक्षादेवाधिकरणादाकृष्य प्रथमाध्याये वर्णितमित्यर्थः। इत एवाकृष्य विचारः कृत इत्यत्र वृत्तिकारवचनं लिङ्गमाह—अत एव चेति ॥ तथा चाहुः स्वागमवन्तो भट्टमिश्राः—

"इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या।
दृढत्वमेतद्विषयश्च[यस्तु] बोधः प्रयाति वेदान्तनिषेवणेन॥" इति।

नन्विहाध्याये सूत्रेऽथशब्दोपात्तोऽधिकारी विचारितः। कथमिह पुनस्तन्निरूपणमित्याशङ्क्याह—इह चेदमिति ॥ प्रथमसूत्रे लोकसिद्धात्मोपादानेन अधिकारी समर्थितः, न तद्विशेषो विचारितः। इह तु विधिप्रमाणके तस्य विशेषतोऽस्तित्वं विचार्यत इति सकलशास्त्रशेषभूतमिदमधिकरणमित्यर्थः। तथापि पूर्वाधिकरणेन कथं संबन्ध इत्याशङ्क्याह—अपि चेति ॥ इदानीं आक्षेपाख्यान्तरसङ्गतिमाह—तदस्तित्वाक्षेपार्थं चेति ॥

भाष्यम्

अत्र एके देहमात्रात्मदर्शिनो लोकायतिकाः देहव्यतिरिक्तस्य आत्मनोऽभावं मन्यमानाः, समस्तव्यस्तेषु बाह्येषु पृथिव्यादिष्वदृष्टमपि चैतन्यं शरीराकारपरिणतेषु भूतेषु स्यादिति—संभावयन्तः तेभ्यश्चैतन्यम्, मदशक्तिवत् विज्ञानम्, चैतन्यविशिष्टः कायः पुरुषः—इति च आहुः। 5
न स्वर्गगमनाय अपवर्गगमनाय वा समर्थो देहव्यतिरिक्त आत्मा अस्ति, यत्कृतं चैतन्यं देहे स्यात्; देह एव तु चेतनश्च आत्मा च इति प्रतिजानन्ते। हेतुं च आचक्षते—शरीरे भावादिति; यद्धि यस्मिन्सति भवति, असति च न भवति, तत् तद्धर्मत्वेनाध्यवसीयते—यथाग्नि-

प्रकटार्थविवरणम् 10

पुरुषो विषयः; स किं देहः, किं वा तद्व्यतिरिक्त इति संशये लोकायतिकाः प्राहुरित्याह—अत्रैक इति ॥ अहं मनुष्य इति देहस्यैव अहं-प्रत्ययालम्बनत्वदर्शनादतिरिक्तात्मसद्भावे च प्रमाणाभावाद्देह एवात्मेत्यर्थः। ननु चैतन्यं तावन्न संहतानां भूतानां तप्तायःपिण्डे वायुसमुद्धुते समवापितजले चैतन्यादर्शनात्; नापि व्यस्तानाम्, एकैकस्मिन् अदर्शनात्। अतश्चैतन्यमेव 15
स्वाधारमात्मानं गमयतीत्याशङ्क्याह—समस्तव्यस्तेष्विति ॥ स्वभाववैचित्र्याद्देहाकारपरिणतेष्वेव चैतन्यं स्यादिति संभावयन्तः तेभ्यो भूतेभ्यश्चैतन्यमिति प्राहुः। संघातविशेषे कार्यविशेषः संभाव्यत इत्यत्रोदाहरणमाह—मदशक्तिवदिति ॥ यथैकैकस्मादन्नादेः अदृष्टापि मदशक्तिः संघातविशेषे स्यात्तद्वदित्यर्थः। देह एव चेत् भोक्ता मृतदेहेऽपि किं भोगो न स्यादित्याशङ्क्याह— 20
चैतन्यविशिष्ट इति ॥ ननु स्वर्गापवर्गभोक्तान्य एव चेतनः। तच्चैतन्यमेव देहे भाति, अयो दहतीतिवत्; अतो न चैतन्यविशिष्टत्वं कायस्यास्तीत्याशङ्क्याह—न स्वर्गगमनायेति ॥ अन्वयव्यतिरेकाभ्यां चैतन्यस्य देहधर्मत्वमेवेत्यर्थः। यथानुमीयते प्राणचेष्टादयः साश्रयाः, कार्यत्वात्, संप्रतिपन्नवत्;

१. A. व्यस्तेऽपीति २. T and T[1] omit आयाङ्क्य

भाष्यम्

धर्मावौष्ण्यप्रकाशौ। प्राणचेष्टाचैतन्यस्मृत्यादयश्च आत्मधर्मत्वेनाभिमता आत्मवादिनाम्—तेऽप्यन्तरेव देहे उपलभ्यमानाः, बहिश्चानुपलभ्यमानाः असिद्धे देहव्यतिरिक्ते धर्मिणि देहधर्मा एव भवितुमर्हन्ति। तस्माद-
5 व्यतिरेको देहादात्मन इति॥

एवं प्राप्ते ब्रूमः—

## व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत्॥ ३-३-५४॥

न त्वेतदस्ति — यदुक्तमव्यतिरेको देहादात्मन इति; व्यतिरेक

10 प्रकटार्थविवरणम्

यस्त्वाश्रयः स देहव्यतिरिक्त आत्मेति, तदपि प्रत्यक्षबाधितमित्याह — प्राणचेष्टेति॥

व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत्॥

नेतुशब्दं[1] प्रथमं व्याचष्टे—न त्वेतदस्तीति॥ 'अहं मनुष्यः' इति सामा-
15 नाधिकरण्यप्रत्ययात् देहात्मनोरैक्यमिति यदुक्तं तत्तावन्नास्ति, 'सर्पोऽयम्' इतिवदध्यासादपि सामानाधिकरण्यसंभवात्; बाधकादर्शनान्नेति चेन्न, 'मम शरीरम्' इति भेदप्रत्ययस्य दर्शनात्; विपरीतं किं न स्यादिति चेन्न, एकस्मिं-श्चन्द्रे भेदाध्यासे द्वितीयचन्द्राकारवन्मनुष्याकारस्य द्वितीयस्य प्रसङ्गात्; स्पष्टं च मनुष्यत्वभावनाज्ञ तदज्ञाननिर्मितो भेदभ्रमः, उपाध्यनुपलम्भाच्च
20 नौपाधिकः तादात्म्यभ्रमस्तु तत्त्वात्मज्ञानविजृम्भितः संभाव्यते। स्वप्ने च मनुष्यत्वाकारसंसर्गविधुराहंकाराविष्कारात् नैतच्छरीरगोचरोऽहंप्रत्यय इति भावः। किं च देहः स्वव्यतिरिक्तद्रष्टृकः, दृश्यत्वात्, घटवदित्याह—व्यतिरेक एवास्येति॥ यच्चोक्तं चैतन्यादीनां देहधर्मत्वमिति तत्राह—

१. T¹. ननु शब्द
A. न भूशब्दं
TM. तुशब्दः

भाष्यम्

एवास्य देहाद्भवितुमर्हति-; तद्भावाभावित्वात्; यदि देहभावे भावात् देहधर्मत्वम् आत्मधर्माणां मन्येत—ततो देहभावेऽपि अभावात् अतद्धर्मत्वमेव एषां किं न मन्येत? देहधर्मवैलक्षण्यात्; ये हि देहधर्मा रूपादयः, ते यावद्देहं भवन्ति; प्राणचेष्टादयस्तु सत्यपि देहे मृतावस्थायां न भवन्ति; देहधर्माश्च रूपादयः परैरप्युपलभ्यन्ते, न त्वात्मधर्माश्चैतन्यस्मृत्यादयः। अपि च सति हि तावत् देहे जीवदवस्थायाम् एषां भावः शक्यते निश्चेतुम्, न तु असत्यभावः; पतितेऽपि कदाचिदस्मिन्देहे देहान्तरसंचारेण आत्मधर्मा अनुवर्तेरन्; संशयमात्रेणापि परपक्षः प्रतिषिध्यते। किमात्मकं च पुनरिदं चैतन्यं मन्यते, यस्य भूतेभ्य उत्पत्तिमिच्छति—इति परः पर्यनुयोक्तव्यः, न हि भूतचतुष्टयव्यतिरेकेण लोकायतिकः किंचित्तत्त्वं प्रत्येति; यत् अनुभवनं भूतभौतिकानाम्, तत् चैतन्यमिति चेत्, तर्हि विषयत्वात्तेषां न तद्धर्मत्वमश्नुवीत, स्वात्मनि क्रियाविरोधात्। न हि अग्निरुष्णः सन्स्वात्मानं दहति, न हि नटः शिक्षितः सन् स्वस्कन्धमधिरोक्ष्यति। न हि भूतभौतिकधर्मेण सता चैतन्येन भूतभौतिकानि विषयीक्रियेरन्; न हि रूपादिभिः स्वरूपं पररूपं वा विषयीक्रियते; विषयीक्रियन्ते तु बाह्याध्यात्मिकानि भूतभौतिकानि चैतन्येन। अतश्च यथैव अस्या भूतभौतिकविषयाया उपलब्धेर्भावोऽभ्युपगम्यते, एवं व्यतिरेकोऽपि अस्यास्तेभ्योऽभ्युपगन्तव्यः; उपलब्धि-

प्रकटार्थविवरणम्

तद्भावाभावित्वादिति ॥ चैतन्यादयो न देहस्य विशेषगुणाः, तद्भावाभावित्वात्, ये तद्विशेषगुणास्ते तद्भावभाविनः, यथा रूपादय इत्यर्थः। किंच चैतन्यधर्मकत्वाच्चेत् 'अहं मनुष्यः' इति सामानाधिकरण्यं तदा परशरीरेऽपि गौरो देह इतिवत् 'अहं मनुष्यः' इति सामानाधिकरण्यप्रत्ययः स्यात्। आत्मीयत्वाभावे च व्यतिरिक्तात्मसाधकत्वानुपपत्त्यैव चैतन्यस्य तद्व्यतिरेको वक्तव्य इत्याह—न हि भूतभौतिकधर्मेणेत्यादिना ॥ ननूपलब्धेरस्तु व्यतिरेकः; ततः आत्मनि किमायातमित्याशङ्क्याह — उपलब्धिस्वरूप एव चेति ॥

भाष्यम्

स्वरूप एव च न आत्मेति आत्मनो देहव्यतिरिक्तत्वम् । नित्यत्वं चोपलब्धेः, ऐकरूप्यात्, अहमिदमद्राक्षमिति च अवस्थान्तरयोगेऽप्युपलब्धृत्वेन प्रत्यभिज्ञानात्, स्मृत्याद्युपपत्तेश्च । यत्तूक्तम्—शरीरे 5 भावात् शरीरधर्म उपलब्धिरिति, तद्वर्णितेन[1] प्रकारेण प्रत्युक्तम् । अपि च सत्सु प्रदीपादिषु उपकरणेषु उपलब्धिर्भवति, असत्सु न भवतीति न च एतावता प्रदीपादिधर्म एवोपलब्धिर्भवति, एवं सति देहे उपलब्धिर्भवति, असति च न भवतीति—न देहधर्मो भवितुमर्हति ; उपकरणत्वमात्रेणापि प्रदीपादिवत् देहोपयोगोपपत्तेः । न च अत्यन्तं देहस्य उप-

10 प्रकटार्थविवरणम्

ननूपलब्धेः क्षणिकत्वात् कथं नित्यात्मस्वरूपतेत्याशङ्क्याह—नित्यत्वं चेति ॥ कुम्भोपलब्धिरिति स्तम्भकुम्भादिव्यावृत्तावप्युपलब्धिस्वरूपैक्यपरिस्फुरणात् स्थायित्वं साधितमित्यर्थः । अधिकाभिधित्सया निरस्तमप्यनुवदति—यत्तूक्तमिति ॥ अन्वयव्यतिरेकयोरन्यथासिद्धिरिति अधिकमाह—अपि 15 चेति ॥ इदानीं उपकरणत्वमपि देहस्योपलब्धौ न संभवतीत्याह—न चात्यन्तमिति ॥ उपलब्धिर्न देहजन्या, तस्मिन्नव्याप्रियमाणेऽपि सद्भाववत्त्वात्, पदार्थान्तरवत्; जागरिते च व्यञ्जकजनकतया कथंचिदुपयोगमङ्गीकृत्या-त्यन्तमित्युक्तम् । ननु नानुमानं मानं लोकायतिकानाम्; मैवं वोचः, अन्तर्भावाभ्युपगमात् । नो खल्वमानं मानेऽन्तर्भावयितुमुचितम्; कथं च मानान्तरानङ्गी-20 कारे तदन्तर्भावो वा परं प्रति प्रतिपाद्येत । न हि मानान्तराणां प्रत्यक्षे अन्तर्भाव इत्ययमर्थोऽस्माकं प्रत्यक्षगोचरः । न च वाङ्मात्रेण विप्रतिपत्तिनिरासः । किंच कोऽयं अन्तर्भावः? प्रत्यक्षे[2] किं प्रत्यक्षत्वापादनम्, किं वा प्रामाण्यम्, किं वा विलक्षणसामग्र्यनिरूपणम्, किं वा प्रमेयानिरूपणम्, उत स्वातन्त्र्यप्रतिषेध इति । नाद्यः—तर्कसहस्रेणापि वस्तुस्वभाववैपरीत्यासंभवात् । परोक्षत्वं च 25 प्रत्यक्षत्वस्य अपलापात् प्रत्यक्षेऽन्तर्भाव इति व्यर्थं वचः स्यात् । यदि प्रत्यक्षवत्

१. TM omits च    २. A. किं प्रत्यक्षे

भाष्यम्

लब्धावुपयोगोऽपि दृश्यते, निश्चेष्टेऽप्यस्मिन्देहे स्वप्ने नानाविधोपलब्धि-
दर्शनात् । तस्मादनवद्यं देहव्यतिरिक्तस्य आत्मनोऽस्तित्वम् ॥

[ अङ्गावबद्धाधिकरणम् ]

## अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥३-३-५५॥ 5

समाप्ता प्रासङ्गिकी कथा ; संप्रति तु प्रकृतामेवानुवर्तामहे । "ओमि-
त्येतदक्षरमुद्गीथमुपासीत" "लोकेषु पञ्चविधं सामोपासीत" "उक्थमुक्थ-

प्रकटार्थविवरणम्

प्रामाण्यं तत्रान्तर्भावः स इष्टमेवास्माकम् । नापि तृतीयः, अन्तर्भावोक्तस्यैव
विलक्षणसामग्र्यङ्गीकारात् । न हि तावन्मात्रसामग्रीकस्यैव तत्रान्तर्भावोप- 10
पादनं कश्चिच्चिकीर्षत्यमूढः। चतुर्थोऽप्यर्थशून्यः प्रत्यक्षस्येव प्रसिद्धेनैवार्थेन अर्थ-
वत्त्वात् । सामान्यविशेषविकल्पासहत्वेन प्रमेयानिरूपणं तु प्रत्यक्षेऽपि समा-
नम् । तथा हि—न तावत् प्रथमप्रत्यक्षस्य सामान्यमालम्बनम्, वस्त्वन्तरानु-
सन्धानापेक्षत्वात् सामान्यप्रत्ययस्य ; नापि विशेषः, व्यावृत्तो हि विशेष
उच्यते । न च सर्वपरिचयमन्तरेण सर्वतो व्यावृत्तिं कश्चिन्निश्चिकीर्षति । ततः 15
सर्वज्ञस्यैव विशेषः प्रकाशेत । व्यावृत्तत्व[वृत्तितन्त्रः] प्रतियोगी प्रतियोगित-
न्त्राच्च व्यावृत्ति[वृत्तिरिति] दुरुत्तरं परस्पराश्रयम् । तस्माद्व्यावहारिकेणैवालम्ब-
नेन यथाप्रत्यक्षं सालम्बनं तथा मानान्तरमपीति । पञ्चमोऽप्यनभिमतः, न ह्यनु-
मानादिशब्दाभिधेयं ज्ञानं स्वतन्त्रं ब्रूमः । तस्मादन्तर्भावोऽप्यविचारितरमणीय
एव । न च वयं कस्यचिदन्तर्भावं ब्रूमः, प्रसिद्धविभागाङ्गीकारात् ; तस्माद्विशेष- 20
ग्रहं परिहृत्य व्यावहारिकैः प्रमाणैः प्रमेयं निरूपणीयं निरूपकैरित्यलम् ॥

अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥

अवान्तरसङ्गतिमाह —समाप्तेति ॥ कर्माङ्गावबद्धान्युपासनानि विषय
इत्येतद्दर्शयितुं वाक्यानि पठति—ओमित्येतदिति ॥ लोकेष्विति ॥ लोक-

१. T and T¹ प्रमाणं  ३. T, T¹ and A. प्रकाशते

२. TM. न एतावन्मात्रेण

भाष्यम्

मिति वै प्रजा वदन्ति तदिदमेवोक्थम्" "इयमेव पृथिवी" "अयं वाव लोक एषोऽग्निश्चितः" इत्येवमाद्या ये उद्गीथादिकर्माङ्गावबद्धाः प्रत्ययाः प्रतिवेदं शाखाभेदेषु विहिताः, ते तत्तच्छाखागतेष्वेव उद्गीथादिषु
5 भवेयुः, अथवा सर्वशाखागतेषु—इति विशयः । प्रतिशाखं च स्वरादिभेदात् उद्गीथादिभेदान् उपादाय अयमुपन्यासः । किं तावत्प्राप्तम्? स्वशाखागतेष्वेव उद्गीथादिषु विधीयेरन्निति; कुतः? संनिधानात्— "उद्गीथमुपासीत" इति हि सामान्यविहितानां विशेषाकाङ्क्षायां संनिकृष्टेनैव स्वशाखागतेन विशेषेण आकाङ्क्षादिनिवृत्तेः, तदतिलङ्घनेन
10 शाखान्तरविहितविशेषोपादाने कारणं नास्ति । तस्मात्प्रतिशाखं व्यवस्थेत्येवं प्राप्ते, ब्रवीति—अङ्गावबद्धास्त्विति । तुशब्दः पक्षं व्यावर्तयति । नैते प्रतिवेदं स्वशाखास्वेव व्यवतिष्ठेरन्, अपि तु सर्वशाखास्वनुवर्तेरन्; कुतः? उद्गीथादिश्रुत्यविशेषात्; स्वशाखाव्यवस्थायां हि "उद्गीथमुपासीत" इति सामान्यश्रुतिरविशेषप्रवृत्ता सती संनिधान-

15 प्रकटार्थविवरणम्

दृष्ट्या "पञ्चविधं सामोपासीत पृथिवी हिङ्कारोऽग्निः प्रस्तावोऽन्तरिक्षमुद्गीथः आदित्यः प्रतिहारो द्यौर्निधनम्" इति । उक्थं कर्माङ्गभूतं शस्त्रं तच्चानेनैव नाम्ना प्रसिद्धं प्रजा वदन्ति । तदुक्थमिदमेव येयं पृथिवीति पृथिवीदृष्ट्या उक्थोपासनमित्यर्थः । चितोऽग्निः कर्माङ्गभूतः; तत्रैतल्लोकदृष्टिरित्यर्थः । प्रक-
20 रणादुद्गीथादिशब्दसाधारण्याच्च संशय इत्यर्थः । ननु उद्गीथादेः सर्वत्रैकरूप्याद्ध्येयरूपाभेदेनोपासनाभेदः पूर्वन्यायेनैव सिद्ध इति कथमयं विचार इत्याशङ्क्याह—प्रतिशाखं चेति ॥ नीचैष्ट्वादिस्वभावादध्ययनधर्मभेदाच्चोद्गीथादेरपि भेदोऽस्तीत्यर्थः । यच्छाखाविहितमुपासनं तच्छाखाभिरेव[शाखिभिरेव] तदनुष्ठेयं नान्यैरित्याह-स्वशाखागतेष्वेवेति ॥ श्रौतेन सामान्येन प्राकरणिकस्य
25 विशेषनियमस्य बाधात् सर्वशाखाविहितप्रधानकर्माङ्गत्वेन प्रयुज्यमानसर्वोद्गीथादिविशेषेषु तदालम्बनोपासनानामुपसंहार इति सर्वशाखिभिरनुष्ठेयत्वमित्याह—नैते प्रतिवेदमिति ॥ ननु तत्तत्स्वरविशिष्टोद्गीथादिभेदात् सामा-

भाष्यम्

वशेन विशेषे व्यवस्थाप्यमाना पीडिता स्यात्; न चैतन्न्याय्यम्; संनिधानाच्च श्रुतिर्बलीयसी; न च सामान्याश्रयः प्रत्ययो नोपपद्यते। तस्मात् स्वरादिभेदे सत्यपि उद्गीथत्वाद्यविशेषात् सर्वशाखागतेष्वेव उद्गीथादिषु एवंजातीयकाः प्रत्ययाः स्युः ॥ 5

## मन्त्रादिवद्वाविरोधः ॥ ३-३-५६ ॥

अथवा नैवात्र विरोधः शङ्कितव्यः—कथमन्यशाखागतेषु उद्गीथादिषु अन्यशाखाविहिताः प्रत्यया भवेयुरिति, मन्त्रादिवत् अविरोधोपपत्तेः। तथा हि—मन्त्राणां कर्मणां गुणानां च शाखान्तरोत्पन्नानामपि शाखान्तरे उपसंग्रहो दृश्यते; येषामपि हि शाखिनाम् "कुटरुरसि" इति अश्मादानमन्त्रो नाम्नातः, तेषामपि असौ विनियोगो दृश्यते—"कुक्कुटोऽसीत्यश्मानमादत्ते कुटरुरसीति वा" इति; येषामपि च समिदादयः प्रयाजा नाम्नाताः, तेषामपि तेषु गुणविधिरा- 10

प्रकटार्थविवरणम्

न्यस्य च अनुपास्यत्वान्न सर्वत्रोपास्याभेद इत्याशङ्क्याह—न चेति ॥ "नाम ब्रह्मेत्युपासीत" इत्यादौ सामान्येन नामादेरुपास्यत्वदर्शनात् ॥ 15

मन्त्रादिवद्वाविरोधः ॥

पूर्वमुद्गीथश्रुत्यवष्टम्भेन यत्र यत्रोद्गीथो विहितः, तत्र सर्वत्रैव क्वचिद्विहितस्यापि प्रत्ययस्यानुवृत्तिरित्युक्तम्। इदानीं उदाहरणावष्टम्भेनाविरोधमाह—अथ वेति ॥ प्रथमं मन्त्रोदाहरणमाह—येषामपि हीति ॥ तण्डुलपेषणाय "कुटरुरसि" इत्यश्मादानमन्त्रो येषां यजुर्वेदिनां नाम्नातः; तेषां हि "कुक्कुटोऽसि मधुजिह्वः" इत्ययं मन्त्र आम्नायते। तथापि सूत्रेण वि[विनि]योगेऽसौ मन्त्रो दृश्यत इत्यर्थः। इदानीं कर्मणामुदाहरणमाह—येषामपि चेति ॥ मैत्रायणी- 20

भाष्यम्

म्नायते—"ऋतवो वै प्रयाजाः समानत्र होतव्याः" इति; तथा येषामपि "अजोऽग्नीषोमीयः" इति जातिविशेषोपदेशो नास्ति, तेषामपि तद्विषयो मन्त्रवर्ण उपलभ्यते—"छागस्य वपाया मेदसोऽनुब्रूहि"
5 इति। तथा वेदान्तरोत्पन्नानामपि "अग्नेर्वेर्होत्रं वेरध्वरम्" इत्येवमादिमन्त्राणां वेदान्तरे परिग्रहो दृष्टः; तथा बह्वृचपठितस्य सूक्तस्य "यो जात एव प्रथमो मनस्वान्" इत्यस्य "आध्वर्यवे सजनीयं शस्यम्" इत्यत्र परिग्रहो दृष्टः। तस्मात् यथाश्रयाणां कर्माङ्गानां सर्वत्रानुवृत्तिः, एवमाश्रितानामपि प्रत्ययानाम्—इत्यविरोधः॥

10 प्रकटार्थविवरणम्

यानाम् "समिधो यजति" "तनूनपातं यजति" "इडो यजति" "बर्हिर्यजति" "स्वाहाकारं यजति" इति समिदादयः प्रयाजा आम्नाताः; तथापि तेषु प्रयाजेषु संख्यादिगुणविधिराम्नायते "द्वादश मासाः पञ्चर्तवः" इति। अत्र हेमन्तशिशिरयोरेकीकरणेन पञ्चर्तवः सिद्धाः। अतः ऋतुवत्पञ्चसंख्याकाः
15 प्रयाजाः समानत्र समानदेशे होतव्या इत्यर्थः। गुणोदाहरणमाह—तथा येषामिति॥ "अग्नीषोमीयं पशुमालभेत" इति यजुर्वेदिनामग्नीषोमीयः पशुराम्नायते, नाज इति जातिविशेषः; तथापि जातिविशेषोपसंग्रहो दृश्यते प्रैषमन्त्रलिङ्गादित्यर्थः। मन्त्राणामुदाहरणान्तरमाह—तथा वेदान्तरोत्पन्नानामिति॥ "स जनास इन्द्रः" इत्येतेनोपलक्षितं सूक्तं सजनीयम्, शंसनीय-
20 मित्यध्वर्युकर्तृके प्रयोगे परिग्रहो दृश्यत इत्यर्थः। भो जनासः स इन्द्र एवंविधः, यो जातमात्र एवोत्पन्नमात्र एव प्रथमः श्रेष्ठः मनस्वी मेधावीत्यर्थः। इदानीं दृष्टान्तानुवादेन दार्ष्टान्तिकं निगमयति—तस्मादिति॥

१. A omits तथा

भाष्यम्

[ भूमज्यायस्त्वाधिकरणम् ]

# भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥ ३-३-५७ ॥

"प्राचीनशाल औपमन्यवः" इत्यस्यामाख्यायिकायां व्यस्तस्य समस्तस्य च वैश्वानरस्य उपासनं श्रूयते । व्यस्तोपासनं तावत्—"औपमन्यव कं त्वमात्मानमुपास्स इति दिवमेव भगवो राजन्निति होवाचैष वै सुतेजा आत्मा वैश्वानरो यं त्वमात्मानमुपास्से" इत्यादि; तथा समस्तोपासनमपि—"तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा संदेहो बहुलो बस्तिरेव रयिः पृथिव्येव पादौ" इत्यादि । तत्र संशयः—किमिह उभयथाप्युपासनं स्यात् व्यस्तस्य समस्तस्य च, उत समस्तस्यैवेति । किं तावत्प्राप्तम्? प्रत्यवयवं सुतेजःप्रभृतिषु "उपास्से" इति क्रियापदश्रवणात्, "तस्मा-

प्रकटार्थविवरणम्

भूम्नः क्रतुवज्ज्यायस्त्वं तथाहि दर्शयति ॥

वैश्वानरोपासनमिह विषय इति दर्शयितुमाह—प्राचीनशाल इत्यादिना ॥ उभयत्र विधिफलयोः श्रवणात् संशयमाह—तत्रेति ॥ प्राक् श्रुत्या सन्निधानं बाधित्वा उद्गीथाद्युपासनानां सर्वत्रानुगम उक्तः; तद्वदिहापि समस्तोपासनसन्निधिं विधिश्रुतिफलश्रुतिभ्यां बाधित्वा व्यस्तोपासनमपि स्यादित्याह—किं तावदित्यादिना ॥ सुतमित्यभिषवस्य कुण्डनस्य[कण्डनस्य] कर्मतापन्नं सोमरूपम्; प्रसुतम्, आसुतमित्यवस्थाविशेषापेक्षं तस्यैव विशेषणम्; सोमयागकारणसंपत्तिः तव कुले दृश्यत इत्यर्थः । व्यस्तोपासनानां प्रकरणवाक्याभ्यां समस्तोपासनानां तदभावेन प्रयाजदर्शपूर्णमासादेकप्रयोगत्वे सिद्धे प्रधानतदङ्गफलानामर्थवादगतानामेकीकरणेन समस्तोपासनमेव ज्याय इति सिद्धान्ता-

१. TM. कथनस्य २. A. करणे न सम-

भाष्यम्

च्चव सुतं प्रसुतमासुतं कुले दृश्यते” इत्यादिफलभेदश्रवणाच्च, व्यस्तान्यप्युपासनानि स्युः—इति प्राप्तम् ॥

ततोऽभिधीयते—भूम्नः पदार्थोपचयात्मकस्य समस्तस्य वैश्वानरोपासनस्य ज्यायस्त्वं प्राधान्येन अस्मिन्वाक्ये विवक्षितं भवितुमर्हति, न प्रत्येकम् अवयवोपासनानामपि; क्रतुवत्—यथा क्रतुषु दर्शपूर्णमासप्रभृतिषु सामस्त्येन साङ्गप्रधानप्रयोग एव एको विवक्ष्यते, न व्यस्तानामपि प्रयोगः प्रयाजादीनाम्, नाप्येकदेशाङ्गयुक्तस्य प्रधानस्य—तद्वत् । कुत एतत्—भूमैव ज्यायानिति? तथा हि श्रुतिः भूम्नो ज्यायस्त्वं दर्शयति, एकवाक्यतावगमात्; एकं हि इदं वाक्यं वैश्वानरविद्याविषयं पौर्वापर्यालोचनात्प्रतीयते; तथा हि—प्राचीनशालप्रभृतय उद्दालकावसानाः षडृषयो वैश्वानरविद्यायां परिनिष्ठामप्रतिपद्यमानाः अश्वपतिं कैकेयं राजानमभ्याजग्मुः—इत्युपक्रम्य, एकैकस्य ऋषेः उपास्यं द्युप्रभृतीनामेकैकं श्रावयित्वा, “मूर्धा त्वेष आत्मन इति होवाच” इत्यादिना मूर्धादिभावं तेषां विदधाति; “मूर्धा ते व्यपतिष्यद्यन्मां नागमिष्यः” इत्यादिना च व्यस्तोपासनमपवदति; पुनश्च व्यस्तोपासनं व्यावर्त्य, समस्तोपासनमेवानुवर्त्य, “स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति” इति भूमाश्रयमेव फलं दर्शयति । यत्तु प्रत्येकं सुतेजःप्रभृतिषु फलभेदश्रवणम्, तदेवं सति अङ्गफलानि प्रधान एवाभ्युच्चिनोतीति द्रष्टव्यम् । तथा “उपास्से” इत्यपि प्रत्यवयवमाख्यातश्रवणं पराभिप्रायानुवादार्थम्, न व्यस्तोपासनविधानार्थम् । तस्मात् समस्तोपासनपक्ष एव श्रेयानिति ॥

केचित्तु अत्र समस्तोपासनपक्षं ज्यायांसं प्रतिष्ठाप्य, ज्यायस्त्ववचनादेव किल व्यस्तोपासनपक्षमपि सूत्रकारोऽनुमन्यत इति कल्प-

प्रकटार्थविवरणम्

शयः । परकीयं व्याख्यानमनूद्य दूषयति—केचित्त्वतेति ॥ यदोभयथोपासनमिति सिद्धान्तः, तदा व्यस्तोपासनमेवेति पूर्वः पक्षो वक्तव्यः । स च न संभ-

भाष्यम्

यन्ति। तदयुक्तम्, एकवाक्यतावगतौ सत्यां वाक्यभेदकल्पनस्यान्याय्यत्वात्, "मूर्धा ते व्यपतिष्यत्" इति च एवमादिनिन्दावचनविरोधात्, स्पष्टे च उपसंहारस्थे समस्तोपासनावगमे तदभावस्य पूर्वपक्षे वक्तुमशक्यत्वात्, सौत्रस्य च ज्यायस्त्ववचनस्य प्रमाणवत्त्वाभिप्रायेणापि उपपद्यमानत्वात् ॥ 5

[ शब्दादिभेदाधिकरणम् ]

## नाना शब्दादिभेदात् ॥ ३-३-५८ ॥

पूर्वस्मिन्नधिकरणे सत्यामपि सुतेजःप्रभृतीनां फलभेदश्रुतौ समस्तोपासनं ज्याय इत्युक्तम्; अतः प्राप्ता बुद्धिः—अन्यान्यपि भिन्नश्रुतीन्युपासनानि समस्य उपासिष्यन्ते इति। अपि च नैव वेद्याभेदे विद्याभेदो विज्ञातुं शक्यते; वेद्यं हि रूपं विद्याया द्रव्यदैवतमिव यागस्य; वेद्यश्च एक एव ईश्वरः श्रुतिनानात्वेऽप्यवगम्यते—"मनोमयः प्राणशरीरः" "कं ब्रह्म खं ब्रह्म" "सत्यकामः सत्यसङ्कल्पः" इत्येवमादिषु—तथा "एक एव प्राणः" "प्राणो वाव संवर्गः" "प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च" "प्राणो ह पिता प्राणो माता" इत्येवमादिषु; वेद्यैकत्वाच्च विद्यैकत्वम्। श्रुतिनानात्वमप्यस्मिन्पक्षे गुणान्तरपरत्वात् न अनर्थ- 10 15

प्रकटार्थविवरणम्

वतीत्याह—स्पष्टे चोपसंहारस्थ इति ॥ कथं तर्हि सूत्रे ज्यायस्त्वविशेषणमित्याह—सौत्रस्य चेति ॥ 20

नानादिशब्दादिभेदात् ॥

वृत्तानुवादेन पूर्वाधिकरणन्यायेन शङ्काप्राप्तिमाह — पूर्वस्मिन्निति ॥ वद्यैकत्वाच्च विद्यैकत्वं युक्तमित्याह- अपि चेति ॥ सर्वत्र विद्यैक्यं चेत् तर्हि पृथगुपदेशो व्यर्थ इत्याशङ्क्याह—श्रुतिनानात्वमपीति ॥ वहरवैश्वानरादिविद्या

भाष्यम्

कम्। तस्मात् स्वपरशाखाविहितम् एकवेद्यव्यपाश्रयं गुणजातमुपसंहर्तव्यम् विद्याकात्स्न्याय इत्येवं प्राप्ते—

प्रतिपाद्यते—नानेति; वेद्याभेदेऽपि एवंजातीयका विद्या भिन्ना
5 भवितुमर्हति; कुतः? शब्दादिभेदात्; भवति हि शब्दभेदः "वेद" "उपासीत" "स क्रतुं कुर्वीत" इत्येवमादिः; शब्दभेदश्च कर्मभेदहेतुः समधिगतः पुरस्तात् "शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात्" इति। आदिग्रहणात् गुणादयोऽपि यथासंभवं भेदहेतवो योजयितव्याः। ननु "वेद" इत्यादिषु शब्दभेद एव अवगम्यते, न 'यजति' इत्यादिवत्
10 अर्थभेदः, सर्वेषामेवैषां मनोवृत्त्यर्थत्वाभेदात्, अर्थान्तरासंभवाच्च; तत् कथं शब्दभेदाद्विद्याभेद इति—नैष दोषः, मनोवृत्त्यर्थत्वाभेदेऽपि अनुबन्धभेदाद्वेद्यभेदे सति विद्याभेदोपपत्तेः; एकस्यापीश्वरस्य उपास्यस्य प्रतिप्रकरणं व्यावृत्ता गुणाः शिष्यन्ते; तथा एकस्यापि प्राणस्य तत्र

प्रकटार्थविवरणम्

15 एका नाना वेति सन्देहे विद्यैक्यमुक्तन्यायेन प्राप्ते[प्राप्तं] यस्मात्तस्मादिति पूर्वपक्षफलोपसंहारः॥

सिद्धान्तसूत्रं योजयति—वेद्याभेदेऽपीति॥ भिन्नभावार्थविषयः शब्दः शब्दान्तरम्, यथा—यजति, जुहोति, ददाति—इति। तस्मिन् सति कर्मभेदो भवितुमर्हति; कुतः? कृतानुबन्धत्वाद्विधेर्धात्वर्थभेदेन भिन्नधात्वर्थावच्छिन्न-
20 तया विधिभेदादित्यर्थः। आदिशब्दार्थमाह—आदिग्रहणादिति॥ तत्तत्प्रकरणविहितगुणकलापविशिष्टोपास्यरूपभेदात्,प्रतिविद्यं नामधेयभेदात्,कौण्डपायिनवत्[पायिनामयनवत्] प्रकरणभेदात्,कृत्स्नोपसंहारस्याशक्यानुष्ठानत्वाच्चेत्यर्थः। इदानीं शब्दभेदमाक्षिपति—नन्विति॥ यथा क्रियात्वाविशेषेऽपि यागदानहोमानामवान्तररूपभेदः, तथा मनोवृत्तित्वाविशेषेऽपि वेदनादीनां तत्तद्गुणविशिष्ट-
25 वेद्यरूपभेदाद्विद्याभेद उपपद्यत इत्याह—नैष दोष इति॥ उक्तमेव विवृणोति—एकस्यापि हीति॥ यदुक्तं गुणान्तरविधानार्थमुपदेशान्तरमिति, तत्राह—

१. A. भिन्नार्थविषय २. TM and A. विधेर्धात्वर्थावच्छिन्नतया

भाष्यम्

तत्र उपास्यस्य अभेदेऽपि अन्यादृग्गुणोऽन्यत्रोपासितव्यः अन्यादृग्गुणश्चान्यत्र—इत्येवमनुबन्धभेदाद्वेद्यभेदे सति विद्याभेदो विज्ञायते। न च अत्र एको विद्याविधिः, इतरे गुणविधय इति शक्यं वक्तुम्—विनिगमनायां हेत्वभावात्, अनेकत्वाच्च प्रतिप्रकरणं गुणानां प्राप्तविद्यानुवादेन विधानानुपपत्तेः। न च अस्मिन्पक्षे समानाः सन्तः सत्यकामादयो गुणा असकृच्छ्रावयितव्याः। प्रतिप्रकरणं च—इदंकामेनेदमुपासितव्यम्, इदंकामेन च इदम्—इति नैराकाङ्क्ष्यावगमात् नैकवाक्यतापत्तिः। न च अत्र वैश्वानरविद्यायामिव समस्तचोदना अपरा अस्ति, यद्बलेन प्रतिप्रकरणवर्तीन्यवयवोपासनानि भूत्वा एकवाक्यताम् इयुः। वेद्यैकत्वनिमित्ते च विद्यैकत्वे सर्वत्र निरङ्कुशे प्रतिज्ञायमाने, समस्तगुणोपसंहारोऽशक्यः प्रतिज्ञायेत। तस्मात्सुष्ठु उच्यते—नाना शब्दादिभेदादिति। स्थिते च एतस्मिन्नधिकरणे, सर्ववेदान्तप्रत्ययमित्यादि द्रष्टव्यम्॥

प्रकटार्थविवरणम्

न चात्रैक इति॥ किं च पौनरुक्त्यप्रसङ्गादपि विद्याभेद एव युक्त इत्याह—न चास्मिन्पक्ष इति॥ किं च "सर्वेषु लोकेषु कामचारो भवति" "सर्वंस्यात्मस्वत्वमस्ति" "जयतीमान् लोकान्" इत्यादिफलसंयोगभेदादपि विद्याभेद इत्याह — प्रतिप्रकरणं चेति॥ यच्चोक्तं पूर्वाधिकरणन्यायेनेति तत्राह—न चात्रेति॥ [यदपि] वेद्यैकत्वाद्विद्यैक्यमिति तत्राह—वेद्यैकत्वनिमित्ते चेति॥ ननु यदि शब्दादिभेदाद्विद्याभेदः, कथं तर्ह्याद्येऽधिकरणे विद्यैक्यं साधितमित्याशङ्क्याह—स्थिते चैतस्मिन्निति॥ शब्दादिभेदात् विद्याभेदे सिद्धे सति सर्वशाखागतं तत्तद्ब्रह्मविज्ञानं [1]प्राणविज्ञानं च भिन्नमिति शङ्कायां सर्ववेदान्तगतं तद्विज्ञानमेकमिति साधितमित्यर्थः॥

१. T and T[1] omit प्राणविज्ञानं

भाष्यम्

[ विकल्पाधिकरणम् ]

# विकल्पोऽविशिष्टफलत्वात् ॥ ३-३-५९ ॥

स्थिते विद्याभेदे विचार्यते—किमासामिच्छया समुच्चयो विकल्पो
5 वा स्यात्, अथवा विकल्प एव नियमेनेति । तत्र स्थितत्वात् तावद्विद्या-
भेदस्य न समुच्चयनियमे किंचित्कारणमस्ति । ननु भिन्नानामप्यग्निहोत्र-
दर्शपूर्णमासादीनां समुच्चयनियमो दृश्यते—नैष दोषः; नित्यताश्रुतिर्हि
तत्र कारणम्; नैवं विद्यानां काचिन्नित्यताश्रुतिरस्ति; तस्मान्न समु-
च्चयनियमः । नापि विकल्पनियमः । विद्यान्तराधिकृतस्य विद्यान्तरा-

10 प्रकटार्थविवरणम्

विकल्पो विशिष्टफलत्वात् ॥

एवं तावदुपासनानां स्वरूपमवधार्यानुष्ठानप्रकारं निरूपयितुमुपक्रमत
इत्याह—स्थित इति ॥ उपासनान्यपि त्रिधा भिद्यन्ते—कानिचिदहंग्रहोपा-
सनानि, कानिचिदनङ्गावबद्धान्यप्यनहंग्रहोपासनानि, कानिचिदङ्गावबद्धा-
15 नीति । तत्रेह तावदहंग्रहोपासनेषु संशयः । स च याथाकाम्यविकल्पयोः
विद्यानानात्वस्य साधारण्यात् भवतीत्यर्थः । याथाकाम्येनानुष्ठानमिति पूर्व-
पक्षमाह—तत्र स्थितत्वादित्यादिना ॥ भिन्नफलत्वात्समुच्चयनियमो नास्ती-
त्यस्य व्यभिचारं शङ्कते — ननु भिन्नानामपीति ॥ "यावज्जीवं दर्शपूर्ण-
मासाभ्यां यजेत" "यावज्जीवं[यावज्जीवमग्निहोत्रं] जुहुयात्" इत्यादिश्रुतिबलात्
20 तत्र समुच्चयाङ्गीकारः। उपासनानां तु नित्यत्वे न श्रुतिरस्तीत्याह–नैष दोष इति ॥
ननु समुच्चयो न घटते चेत् तर्हि विकल्पोऽस्त्वित्याशङ्क्याह—नापीति ॥ यथा
व्रीहिभिरेव पुरोडाशे निष्पन्ने न यवानां समुच्चयोऽङ्गीक्रियते, कृतकरत्वप्रस-
ङ्गात्, तथात्राप्यविशिष्टं ब्रह्मावाप्तिलक्षणं फलमस्ति तदेकेनैवोपासनेन कृतं चेत्

१. A. समुच्चयोऽङ्गीक्रियते    ३. T, T¹ and TM omit अस्ति

२. A. अस्ति

भाष्यम्

प्रतिषेधात् पारिशेष्यात् याथाकाम्यमापद्यते । नन्[1] आविशिष्टफलत्वा-
दासां विकल्पो न्याय्यः; तथा हि—"मनोमयः प्राणशरीरः" "कं
ब्रह्म खं ब्रह्म" "सत्यकामः सत्यसंकल्पः" इत्येवमाद्याः तुल्यवत् ईश्वर-
प्राप्तिफला लक्ष्यन्ते—नैष दोषः, समानफलेष्वपि स्वर्गादिसाधनेषु 5
कर्मसु याथाकाम्यदर्शनात् । तस्मात् याथाकाम्यप्राप्तौ उच्यते—विकल्प
एव आसां भवितुमर्हति, न समुच्चयः; कस्मात्? अविशिष्टफलत्वात् ।
अविशिष्टं हि आसां फलमुपास्यविषयसाक्षात्करणम्; एकेन च उपास-
नेन साक्षात्कृते उपास्ये विषये ईश्वरादौ, द्वितीयमनर्थकम् । अपि च
असंभव एव, साक्षात्करणस्य समुच्चयपक्षे, चित्तविक्षेपहेतुत्वात्; साक्षा- 10
त्करणसाध्यं च विद्याफलं दर्शयन्ति श्रुतयः—"यस्य स्यादद्धा न
विचिकित्सास्ति" इति, "देवो भूत्वा देवानप्येति" इति च एवमाद्याः;
स्मृतयश्च—"सदा तद्भावभावितः" इत्येवमाद्याः । तस्मात् अविशिष्ट-
फलानां विद्यानामन्यतमामादाय तत्परः स्यात्, यावदुपास्यविषयसाक्षा-
त्करणेन तत्फलं प्राप्तमिति ॥ 15

प्रकटार्थविवरणम्

किं समुच्चयेनेत्याह-नन्वविशिष्टफलत्वादिति ॥ कर्मभूयस्त्वात्फलभूयस्त्वमिति
न्यायेनैकफलत्वेऽपि न विकल्पनियमो भविष्यतीत्याह — नैष दोष इति ॥
सिद्धान्तसूत्रं योजयति —विकल्प एवासामिति ॥ साक्षात्कारस्य अनति-
शयत्वात् द्वयोः । साक्षात्करणपर्यन्तः संस्कारोपचयासंभवात् चित्तविक्षेपाच्च 20
विकल्प एवेत्यर्थः । नन्वन्त्यकाले चेत् साक्षात्करणमनेकोपासने न घटते, मा
घटिष्ट, किं तेनेत्याशङ्क्याह—साक्षात्करणसाध्यं चेति ॥ यस्य पुंसः स्यादद्धा
साक्षात्कारः, न विचिकित्सा संशयोऽस्ति, तस्यैवैष ब्रह्मलोक इत्यर्थः । देवो
भूत्वा जीवन्नेव देवभावमनुभूय पतितेऽपि देहे देवान् प्राप्नोतीत्यर्थः ॥

१. TM omits ननु

भाष्यम्

[ काम्याधिकरणम् ]

## काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥ ३-३-६० ॥

5 अविशिष्टफलत्वादित्यस्य प्रत्युदाहरणम् । यासु पुनः काम्यासु विद्यासु "स य एतमेवं वायुं दिशां वत्सं वेद न पुत्ररोदं रोदिति" "स यो नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति" इति चैवमाद्यासु क्रियावत् अदृष्टेनात्मन आत्मीयं फलं साधयन्तीषु, साक्षात्करणापेक्षा नास्ति ; ता यथाकामं समुच्चीयेरन्, न वा
10 समुच्चीयेरन्—पूर्वहेत्वभावात्—पूर्वस्य अविशिष्टफलत्वादित्यस्य विकल्पहेतोरभावात् ॥

प्रकटार्थविवरणम्

काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥

अनहङ्ग्रहाणि अकर्माङ्गावबद्धानि उपासनानि विषयः । तेषु किं विकल्प-
15 नियमो याथाकाम्यं वेति संशये अहंग्रहोपासनवदुपासनत्वाविशेषात् विकल्पनियमे प्राप्ते तद्वैपरीत्यमाह—अविशिष्टफलत्वादित्यस्येति ॥ स यः कश्चिदेवं वायुं दिशां गोत्वेन कल्पितानां वत्सं वेद नासौ पुत्रमरणनिमित्तं रोदनं रोदिति लभत इत्यर्थः । एतानि याथाकाम्येनानुष्ठेयान्यविरुद्धविभिन्नफलत्वात् स्वर्गपश्वर्थचित्राज्योतिष्टोमवदित्यर्थः ॥

१. A. वत्सवेदना

T[1]. वत्सवेदना

भाष्यम्

[ यथाश्रयभावाधिकरणम् ]

# अङ्गेषु यथाश्रयभावः ॥ ३-३-६१ ॥

कर्माङ्गेषु उद्गीथादिषु ये आश्रिताः प्रत्यया वेदत्रयविहिताः, किं ते समुच्चीयेरन्, किं वा यथाकामं स्युरिति संशये—यथाश्रयभाव इत्याह। यथैव एषामाश्रयाः स्तोत्रादयः संभूय भवन्ति, एवं प्रत्यया अपि, आश्रयतन्त्रत्वात्प्रत्ययानाम् ॥ 5

# शिष्टेश्च ॥ ३-३-६२ ॥

यथा वा आश्रयाः स्तोत्रादयः त्रिषु शिष्यन्ते, एवमाश्रिता अपि प्रत्ययाः—नोपदेशकृतोऽपि कश्चिद्विशेषः अङ्गानां तदाश्रयाणां च[1] प्रत्ययानामित्यर्थः ॥ 10

प्रकटार्थविवरणम्

अङ्गेषु यथाश्रयाभावः ॥

इहोद्गीथाद्यङ्गावबद्धोपासनानि विषयः। तेषां किमङ्गवत् समुच्चयनियमः, उत प्रतीकदृष्टिवद्यथाकाम्यमित्यङ्गद्वारेण कृतसंबन्धात्फलसन्निकर्षाच्च संशयमाह—कर्माङ्गेष्विति॥ "तन्निर्धारणनियमः" इत्यत्र क्रत्वर्थत्वं पुरुषार्थत्वं वेति विचारः। इह त्वग्निहोत्रदर्शादिवत् पुरुषार्थत्वेऽपि समुच्चये प्रमाणमस्ति वा न वेति विचार्यते। पूर्वाधिकरणवत् यथारुच्यधिष्ठानं न संभवतीत्यत्र पूर्वपक्षे सूत्रं योजयति—यथैषामिति॥ अङ्गाश्रितोपासनानि नियमेन क्रतौ समुच्चित्यानुष्ठेयानि, नियमेन समुच्चीयमानाङ्गव्यपाश्रयत्वात्, अङ्गाश्रितोपाङ्गवदित्यर्थः[2] ॥ 15 20

शिष्टेश्च ॥

इतश्च समुच्चय इत्याह—शिष्टेश्चेति॥ शिष्टिः शासनम् विधानं तस्याप्यविशेषादङ्गानां[3] प्रत्ययानां च न गोदोहनवदसार्वत्रिकत्वमित्यर्थः ॥

१. A adds न
२. T, TM and A. तोपासनवत्
३. T, TM and A. नामप्यप्रत्ययानां

भाष्यम्

## समाहारात् ॥ ३-३-६३ ॥

"होतृषदनाद्धैवापि दुरुद्गीतमनुसमाहरति" इति च—प्रणवोद्गीथै-कत्वविज्ञानमाहात्म्यात् उद्गाता स्वकर्मण्युत्पन्नं क्षतं हौत्रात्कर्मणः प्रति-
5 समादधाति—इति ब्रुवन् वेदान्तरोदितस्य प्रत्ययस्य वेदान्तरोदितपदार्थ-संबन्धसामान्यात् सर्ववेदोदितप्रत्ययोपसंहारं सूचयति—इति लिङ्गदर्शनम्॥

## गुणसाधारण्यश्रुतेश्च ॥ ३-३-६४ ॥

विद्यागुणं च विद्याश्रयं सन्तम् ओंकारं वेदत्रयसाधारणं श्राव-

प्रकटार्थविवरणम्

10 समाहारात् ॥

इतश्चोपासनानानां समुच्चय इत्याह—समाहारादिति ॥ समाहरणं सम-ताकरणम्, क्षतस्य सन्धानं समाहारः[१]। तस्माल्लिङ्गात्समुच्चयो गम्यते प्रत्ययाना-मिति योजना। यः प्रणवो बह्वृचानामिति प्रणवोद्गीथयोः एकत्वेन यदुपासन-मुद्गात्रा कृतं तस्येदं फलमाह— होतृषदनादिति ॥ होतुः सदनम्, होता यत्रस्थः
15 शंसति, तद्धोतृषदनम्, हौत्रं कर्म; तस्माद्धोतृषदनात् सम्यक् संपादितात् हैवापि दुरुद्गीतं दुष्टं[दुष्टं] यदुद्गानं कृतं स्वरोष्मव्यञ्जनादिप्रमादात् उद्गातानु-समाहरति प्रतिसंदधाति, क्षतमिव वैद्य इत्यर्थः। किमनेन सूचितं भवती-त्याशङ्क्याह — प्रणवेत्यादिना ॥ वेदद्वयसंबद्धयोः प्रणवोद्गीथयोरेकत्व-विज्ञानस्यैतादृशं फलं ब्रुवन् सर्ववेदोदितानां प्रत्ययानामुपसंहारं समुच्चयं
20 सूचयतीत्यन्वयः। कुतः? सर्वोपासनेषु वेदान्तरोदितप्रत्ययस्य वेदान्तरोदितेन पदार्थेन संबन्धस्य समानत्वादित्यर्थः॥

गुणसाधारण्यश्रुतेश्च ॥

किञ्चोपास्यस्योङ्कारस्य साधारण्यादप्युपासनानां साधारण्यं समुच्चि-त्यानुष्ठानमित्याह — गुणसाधारण्येति ॥ तेनोङ्कारेणेयं त्रयी विद्या वेदत्रय-

१. A adds समताहरणं
२. A. यद्गीतं
३. T, T¹ and TM. क्षमति च वैद्यः
A. क्षतमिव वैद्यहेत्यर्थः

भाष्यम्

यति—"तेनेयं त्रयी विद्या वर्तत ओमित्याश्रावयत्योमिति शंसत्योमित्युद्गायति" इति च; ततश्च आश्रयसाधारण्यात् आश्रितसाधारण्यमिति—लिङ्गदर्शनमेव । अथवा गुणसाधारण्यश्रुतेश्चेति; यदीमे कर्मगुणा उद्गीथादयः सर्वे सर्वप्रयोगसाधारणा न स्युः, न स्यात् ततः तदाश्रयाणां प्रत्ययानां सहभावः; ते तु उद्गीथादयः सर्वाङ्गग्राहिणा प्रयोगवचनेन सर्वे सर्वप्रयोगसाधारणाः श्राव्यन्ते; ततश्च आश्रयसहभावात्प्रत्ययसहभाव इति ॥

## न वा तत्सहभावाश्रुतेः ॥ ३-३-६५ ॥

न वेति पक्षव्यावर्तनम् । न यथाश्रयभाव आश्रितानामुपासनानां भवितुमर्हति; कुतः? तत्सहभावाश्रुतेः; यथा हि त्रिवेदीविहितानामङ्गानां स्तोत्रादीनां सहभावः श्रूयते—"ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोति""स्तुतमनुशंसति""प्रस्तोतः साम गाय""होतरेतद्यज" इत्यादिना; नैवमुपासनानां सहभावश्रुतिरस्ति । ननु प्रयोगवचन एषां सहभावं प्रापयेत्—नेति ब्रूमः, पुरुषार्थत्वादुपासनानाम्; प्रयोगवचनो हि क्रत्वर्थानामुद्गीथादीनां सहभावं प्रापयेत्; उद्गीथाद्युपासनानि क्रत्वर्थाश्रयाण्यपि गोदोहनादिवत् पुरुषार्थानीत्यवोचाम "पृथग्घ्यप्रतिबन्धः

प्रकटार्थविवरणम्

विहितं कर्म प्रवर्तते । तदवाह—ओमित्यादिना ॥ व्यतिरेकमुखेन सूत्रं योजयति—यदीत्यादिना ॥

न वा तत्सहभावाश्रुतेः ॥

यस्य यस्मिन्नुपासनेऽभिरुचिरुत्पद्यते, स तदनुतिष्ठति । सर्वोपासनानां समुच्चये न प्रमाणमस्तीति सिद्धान्तमाह—न वेति ॥ अङ्गाव[न अङ्गाव]बद्धान्युपासनानि समुच्चित्यानुष्ठेयानि, अङ्गाश्रितत्वेऽपि भिन्नफलत्वात्, गोदोहनवत्, इति विशेषानुमानेन यथारुच्यनुष्ठानमित्यर्थः ॥

१. T, TM and A. तदित्यादिना २. T¹. अनुवादेन

भाष्यम्

फलम्" इत्यत्र । अयमेव च उपदेशाश्रयो विशेषः अङ्गानां तदालम्बनानां च उपासनानाम्—यदेकेषां क्रत्वर्थत्वम् एकेषां पुरुषार्थत्वमिति । परं च लिङ्गद्वयम् अकारणमुपासनसहभावस्य, श्रुतिन्यायाभावात् ।
5 न च प्रतिप्रयोगम् आश्रयकार्त्स्न्योपसंहारादाश्रितानामपि तथात्वं विज्ञातुं शक्यम्, अतत्प्रयुक्तत्वादुपासनानाम्—आश्रयतन्त्राण्यपि हि उपासनानि कामम् आश्रयाभावे मा भूवन्; न त्वाश्रयसहभावेन सहभावनियममर्हन्ति, तत्सहभावाश्रुतेरेव । तस्माद्यथाकाममेवोपासनान्यनुष्ठीयेरन् ॥

10 ## दर्शनाच्च ॥ ३-३-६६ ॥

दर्शयति च श्रुतिरसहभावं प्रत्ययानाम्—"एवंविद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षति" इति । सर्वप्रत्ययोपसंहारे हि, सर्वे सर्वविदः इति न विज्ञानवता ब्रह्मणा परिपाल्यत्वमितरेषां संकीर्त्येत । तस्माद्यथाकाममुपासनानां समुच्चयो विकल्पो वेति ॥

15 इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ शारीरकमीमांसासूत्रभाष्ये तृतीयाध्यायस्य तृतीयः पादः ॥

प्रकटार्थविवरणम्

यदुक्तं शिष्टेश्चाविशेष इति तत्राह अयमेव चोपदेशाश्रय इति ॥
20 यच्चोक्तम् "समाहारात्" "गुणसाधारण्यश्रुतेश्च" इति, तद्दूषयति—परं च लिङ्गद्वयमिति ॥ अर्थवादसामर्थ्यं तदन्यतःप्राप्तद्योतकं भवति । न ह्युपासनानां समुच्चये प्रापकं दृश्यत इत्यर्थः । गुणसाधारण्यश्रुतेश्चेत्यस्य द्वितीयं व्याख्यानं दूषयति—न च प्रतिप्रयोगमिति ॥

दर्शनाच्च ॥

25 किं च विदुषा ब्रह्मणान्येषां ऋत्विजां परिपाल्यत्ववचनादपि न सर्वविज्ञानोपसंहार इत्याह — दर्शनाच्चेति ॥

इति श्रीमच्छारीरकमीमांसाभाष्यविवरणे प्रकटार्थे तृतीयस्याध्यायस्य तृतीयः पादः समाप्तः ॥

# अथ चतुर्थः पादः

——:o:——

भाष्यम्

[ पुरुषार्थाधिकरणम् ]

अथेदानीम् औपनिषदमात्मज्ञानं किमधिकारिद्वारेण कर्मण्येवानु-
प्रविशति, आहोस्वित् स्वतन्त्रमेव पुरुषार्थसाधनं भवतीति मीमांस-  5
मानः, सिद्धान्तेनैव तावदुपक्रमते पुरुषार्थोऽत इति ।

## पुरुषार्थोऽतःशब्दादिति बादरायणः ॥ ३-४-१ ॥

अस्माद्वेदान्तविहितादात्मज्ञानात् स्वतन्त्रात् पुरुषार्थः सिद्ध्यतीति
बादरायण आचार्यो मन्यते; कुत एतदवगम्यते ? शब्दादित्याह ।
तथा हि—"तरति शोकमात्मवित्" "स यो ह वै तत्परमं ब्रह्म  10
वेद ब्रह्मैव भवति" "ब्रह्मविदाप्नोति परम्" "आचार्यवान्पुरुषो

प्रकटार्थविवरणम्

पुरुषार्थोऽतःशब्दादिति बादरायणः ॥

एवं तावन्मन्दमध्यमाधिकारिणामुपासनज्ञानमुच्चावचरूपं निरूप्य उत्त-
माधिकारिणां चैकरूपब्रह्मज्ञानायापुनरुक्तपदोपसंहारमुक्त्वा अधुना तस्यैव एक-  15
रूपब्रह्मज्ञानस्य स्वातन्त्र्येण परमपुरुषार्थसाधनत्वमन्तरङ्गबहिरङ्गसाधनकलापं
च निरूपयितुं परः पादः प्रवर्तते[र्त्स्यते] । तत्र प्रथमाधिकरणविचारमाह—
अथेदानीमिति ॥ वादिविप्रतिपत्तेरियं मीमांसा—क्रत्वर्थमात्मज्ञानम्, किं वा
पुरुषार्थमिति । तत्रापि सिद्धान्तमुपन्यस्य पूर्वपक्षं स्वयमेव दर्शयिष्यति; अतो
बहिर्नोपन्यस्यत इत्याह—सिद्धान्तेनैव तावदिति ॥  20

१. A omits ज्ञान  
२. TM. इतीयं  
३. A omits किं

भाष्यम्

वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये" "य आत्माऽपहतपाप्मा" इत्युपक्रम्य "सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्यस्तमात्मानमनुविद्य विजानाति" इति; "आत्मा वा अरे द्रष्टव्यः"
5 इत्युपक्रम्य "एतावदरे खल्वमृतत्वम्" इत्येवंजातीयका श्रुतिः केवलाया विद्यायाः पुरुषार्थहेतुत्वं श्रावयति ॥

अथात्र प्रत्यवतिष्ठते—

## शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनिः ॥ ३-४-२ ॥

10 कर्तृत्वेन आत्मनः कर्मशेषत्वात्, तद्विज्ञानमपि व्रीहिप्रोक्षणादिवत् विषयद्वारेण कर्मसंबन्ध्येव—इत्यतः, तस्मिन् अवगतप्रयोजने आत्मज्ञाने या फलश्रुतिः, सा अर्थवादः—इति जैमिनिराचार्यो मन्यते; यथा अन्येषु द्रव्यसंस्कारकर्मसु "यस्य पर्णमयी जुहूर्भवति न स पापं

प्रकटार्थविवरणम्

15 शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनिः ॥

पूर्वपक्षसूत्रमवतारयति —अथात्रेति ॥ "भूतं भव्यायोपदिश्यते" इति न्यायेनात्मनः कर्तृकारकत्वेन क्रियाङ्गत्वात् तज्ज्ञानस्यापि[1] क्रियाफलेनैव फलवत्त्वसिद्धिः । तत्र फलश्रवणं स्तुतिमात्रमित्याह-कर्तृत्वेनेति ॥ अत्र प्रयोगः—आत्मज्ञानं प्रयोगविधानोपादेयम्[2], साध्यफलव्यपदेशशून्यत्वे सति कर्माङ्गव्य-
20 पाश्रयत्वात्, पर्णमयीत्वादिवत् इति । वेदार्थजिज्ञासायां तत्त्वनिर्णयार्थं संशयविपर्यासप्रतिभासात्[भासाः] गुरोरग्रे शिष्यैर्निवेदनीयाः । गुरुणा च तद्व्युदासेन तत्त्वमाविष्कर्तव्यमिति शिष्टव्यवहारप्रदर्शनाय जैमिनिग्रहणम्, न तु प्रतिपक्षत्वेनेति द्रष्टव्यम् । फलश्रुतेरर्थवादत्वे दृष्टान्तमाह—यथान्येष्विति ॥ पर्णमयी-

१. TM. तदज्ञानस्य  २. TM. विधिनोपादेयं
A. विधिविधेयं

भाष्यम्

श्लोकं शृणोति" "यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते" "यत्प्रयाजानूयाजा इज्यन्ते वर्म वा एतद्यज्ञस्य क्रियते वर्म यजमानस्य भ्रातृव्याभिभूत्यै" इत्येवंजातीयका फलश्रुतिः अर्थवादः—तद्वत् । कथं पुनः अस्य अनारभ्याधीतस्य आत्मज्ञानस्य प्रकरणादीनामन्यतमेनापि हेतुना विना क्रतुप्रवेश आशङ्क्यते? कर्तृद्वारेण वाक्यात् तद्विज्ञानस्य क्रतुसंबन्ध इति चेत्, न, वाक्याद्विनियोगानुपपत्तेः—अव्यभिचारिणा हि केनचिद्द्वारेण अनारभ्याधीतानामपि वाक्यनिमित्तः क्रतुसंबन्धोऽवकल्पते; कर्ता तु व्यभिचारि द्वारम्, लौकिकवैदिककर्मसाधारण्यात्; तस्मान्न तद्द्वारेण आत्मज्ञानस्य क्रतुसंबन्धसिद्धिरिति—न, व्यतिरेकविज्ञानस्य वैदिकेभ्यः कर्मभ्योऽन्यत्रानुपयोगात्; न हि देहव्यतिरिक्तात्मज्ञानं लौकिकेषु

प्रकटार्थविवरणम्

द्रव्ये यजमानगताञ्जनादिसंस्कारे प्रयाजादिकर्मसु च फलश्रुतिरर्थवादः स्यात्, परार्थत्वात्पर्णमय्यादेः,फलशेषत्वानुपपत्तेरित्यर्थः । श्रुतिलिङ्गादीनि हि विनियोजकप्रमाणानि; तदभावे न आत्मज्ञानस्य कर्माङ्गतैव; कुतः फलश्रुतेरर्थवादत्वमित्याह—कथं पुनरिति ।। व्रीहिमात्रे प्रोक्षणस्य वैयर्थ्यादशक्यत्वाच्च प्रकृतापूर्वसंबद्धव्रीहिषु प्रोक्षणं विधीयत इति तस्य क्रत्वङ्गता । आत्मज्ञानस्य तु न प्रकरणमस्तीत्यर्थः । यथा जुहूद्वारेण पर्णमयीत्वस्य वाक्यात्क्रतुसंबन्धोऽनारभ्याधीतत्वेऽपि तथा कर्तृद्वारेण तद्विज्ञानस्य 'विद्वान्यजते' 'विद्वान् याजयति' इतिवाक्यात् क्रतुसंबन्ध इति शङ्कते—कर्तृद्वारेणेति ।। जुहूः क्रतुसंबन्धं न व्यभिचरतीति तद्द्वारेण पर्णमयीत्वस्य वाक्येन विनियोगो घटते; कर्ता तु क्रतुसंबन्धं व्यभिचरतीति न तज्ज्ञानस्य वाक्येन विनियोगो घटत इत्याह—न वाक्येति ।। देहव्यतिरिक्तः कर्ताधिगतः क्रतुसंबन्धं न व्यभिचरतीति पूर्ववादी दूषयति—न व्यतिरेकेति ।।      अव्यभिचारितक्रतुसंबन्धव्यतिरिक्त-

१. T¹. क्रतुद्वारेण

२. T omits क्रतु

३. A. व्यतिरेकेणेति

भाष्यम्

कर्मसु उपयुज्यते, सर्वथा दृष्टार्थप्रवृत्त्युपपत्तेः, वैदिकेषु तु देहपातोत्तर-
कालफलेषु देहव्यतिरिक्तात्मज्ञानमन्तरेण प्रवृत्तिः नोपपद्यत इति, उप-
युज्यते व्यतिरेकविज्ञानम् । ननु अपहतपाप्मत्वादिविशेषणात् असं-
5 सार्यात्मविषयम् औपनिषदं दर्शनं न प्रवृत्त्यङ्गं स्यात्—न, प्रियादि-
संसूचितस्य संसारिण एव आत्मनो द्रष्टव्यत्वेनोपदेशात्; अपहत-
पाप्मत्वादिविशेषणं तु स्तुत्यर्थं भविष्यति । ननु तत्र तत्र प्रसाधि-
तमेतत्—अधिकमसंसारि ब्रह्म जगत्कारणम्, तदेव च संसारिण
आत्मनः पारमार्थिकं स्वरूपम् उपनिषत्सु उपदिश्यत इति—सत्यं प्रसा-
10 धितम्; तस्यैव तु स्थूणानिखननवत् फलद्वारेण आक्षेपसमाधाने
क्रियेते दार्ढ्याय ॥

## आचारदर्शनात् ॥ ३-४-३ ॥

"जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे" "यक्ष्यमाणो वै भग-
वन्तोऽहमस्मि" इत्येवमादीनि ब्रह्मविदामपि अन्यपरेषु वाक्येषु कर्म-

15 प्रकटार्थविवरणम्

कर्तृद्वारेण भवतु तज्ज्ञानस्य कर्मशेषता, न त्वशेषकर्मोन्मूलनसमर्थौपनिष-
दात्मज्ञानस्येति सिद्धान्ती शङ्कते — नन्वपहतेति ॥ औपनिषदमप्यात्मज्ञानं
संसारिविषयमेवेत्याह — न प्रियादीति ॥ "आत्मनस्तु कामाय सर्वं प्रियं
भवति" इति प्रियत्वसंबद्धसंसार्यात्मप्रक्रमानुसारेणोत्तरं द्रष्टव्यत्वादि-
20 वचनं तद्विषयं चेत् कथं तत्रापहतपाप्मत्वादिसङ्कीर्तनमित्याशङ्क्याह —
अपहतपाप्मत्वादीति ॥ पूर्वपक्षमाक्षिप्य समाधत्ते—नन्वित्यादिना ॥

आचारदर्शनात् ॥

किंच जनकादीनां विद्यया सह कर्माचरणदर्शनान्न केवलैव विद्या मोक्ष-
साधनम्; अतः सहानुष्ठानं विद्यायाः स्वातन्त्र्याभावेन कर्माङ्गत्वे लिङ्गमित्याह–
25 आचारदर्शनादिति ॥ ईजे यागं चक्रे । भगवन्तः पूजावन्तः । अहं यक्ष्यमाणो-

१. T¹. न प्रयाजादीति

भाष्यम्

संबन्धदर्शनानि भवन्ति । तथा उद्दालकादीनामपि पुत्रानुशासनादिदर्शनात् गार्हस्थ्यसंबन्धोऽवगम्यते । केवलाच्चेत् ज्ञानात् पुरुषार्थसिद्धिः स्यात् किमर्थम् अनेकायाससमन्वितानि कर्माणि ते कुर्युः ? "अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्" इति न्यायात् ॥ 5

## तच्छ्रुतेः ॥ ३-४-४ ॥

"यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" इति च कर्मशेषत्वश्रवणात् विद्याया न केवलायाः पुरुषार्थहेतुत्वम् ॥

## समन्वारम्भणात् ॥ ३-४-५ ॥

"तं विद्याकर्मणी समन्वारभेते" इति च विद्याकर्मणोः फलारम्भे 10 सहकारित्वदर्शनात् न स्वातन्त्र्यं विद्यायाः ॥

प्रकटार्थविवरणम्

ऽस्मि, तत आध्वं कतिचिद्दिनानीति[1] कैकयस्य ब्रह्मविदो वचनम् । ननु कैश्चिद्ब्रह्मविद्भिः कर्म[2] कृतमित्येतावता किं ज्ञानस्य सामर्थ्यमपगच्छति ; तत्त्वज्ञानं तु केवलमेव मोक्षायालमित्याह—केवलाच्चेदिति ॥ न ह्यल्पायासं हित्वा 15 बह्वायासं कोऽप्यवलम्बत इत्यर्थः । अर्के समीपे ॥

तच्छ्रुतेः ॥

"यदेव विद्यया" इति च श्रुतिः प्रमाणम्, कर्माङ्गत्वेऽपि विद्याया इत्याह—तच्छ्रुतेरिति ॥

समन्वारम्भणात् ॥ 20

इतश्च न स्वतन्त्रा विद्या[3] पुरुषार्थसाधनमित्याह—समन्वारम्भणादिति ॥ तं परलोकं व्रजन्तं विद्याकर्मणी समनुगच्छत इत्यर्थः ॥

१. TM. कतिचिद्दिलीनानीति
२. T. कर्तृकृतं
T¹. अकर्तृकृतं
३. A. स्वतन्त्राविद्या न पुरु
T. न स्वतन्त्रनाविद्या
TM. न स्वतन्त्राविद्या

भाष्यम्

## तद्वतो विधानात् ॥ ३-४-६ ॥

" आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानः " इति चैवंजातीयका श्रुतिः समस्तवेदार्थविज्ञानवतः कर्माधिकारं दर्शयति ; तस्मादपि न विज्ञानस्य स्वातन्त्र्येण फलहेतुत्वम् । ननु अत्र " अधीत्य " इत्यध्ययनमात्रं वेदस्य श्रूयते, न अर्थविज्ञानम्—नैष दोषः ; दृष्टार्थत्वात् वेदाध्ययनम् अर्थावबोधपर्यन्तमिति स्थितम् ॥

## नियमाच्च ॥ ३-४-७ ॥

" कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः ।
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥ " इति,

तथा " एतद्वै जरामर्यं सत्रं यदग्निहोत्रं जरया वा ह्येवास्मान्मुच्यते मृत्युना वा " इत्येवंजातीयकात् नियमादपि कर्मशेषत्वमेव विद्याया इति ॥

प्रकटार्थविवरणम्

### तद्वतो विधानात् ॥

विद्यायाः स्वातन्त्र्याभावे लिङ्गान्तरमाह—तद्वत इति ॥ गुरोः शुश्रूषालक्षणं कर्म कृत्वा अतिशेषेण परिशिष्टेन कालेन यथाविधानं वेदमधीत्यानन्तरमभिसमावृत्य व्रतविसर्गं कृत्वा दारानाहृत्य कुटुम्बे गार्हस्थ्ये स्थितः शुचौ देशे स्वाध्यायाध्ययनादिकर्म कुर्वाणः ब्रह्मलोकमभिसंपद्यत इत्यर्थः । अध्ययनशब्दस्य यथाश्रुतमर्थं गृहीत्वाह —नन्वत्रेति ॥ अध्ययनविधेरवघातादिविधिवद्दृष्टफलत्वादर्थावबोधपर्यन्तो व्यापारः विध्याक्षिप्तोऽध्ययनमिति प्रथमसूत्रे सिद्धमित्याह—नैष दोष इति ॥

### नियमाच्च ॥

इतोऽपि न स्वतन्त्रा विद्या पुरुषार्थहेतुरित्याह—नियमाच्चेति ॥ शतं समाः शतसंख्याकान् संवत्सरान् यज्जिजीविषेत् तत्कर्माणि कुर्वन्नेवेति नियमविधा-

भाष्यम्

एवं प्राप्ते, प्रतिविधत्ते—

## अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ ३-४-८ ॥

तुशब्दात् पक्षो विपरिवर्तते । यदुक्तम्—"शेषत्वात्पुरुषार्थवादः" इति, तन्नोपपद्यते; कस्मात्? अधिकोपदेशात्; यदि संसारैव आत्मा शारीरः कर्ता भोक्ता च शरीरमात्रव्यतिरेकेण वेदान्तेषु उपदिष्टः स्यात्, ततो वर्णितेन प्रकारेण फलश्रुतेः अर्थवादत्वं स्यात्; अधिकस्तावत् शारीरादात्मनः असंसारीश्वरः कर्तृत्वादिसंसारिधर्मरहितोऽपहतपाप्मत्वादिविशेषणः परमात्मा वेद्यत्वेन उपदिश्यते वेदान्तेषु । न च तद्विज्ञानं कर्मणां प्रवर्तकं भवति, प्रत्युत कर्माण्युच्छिनत्ति—इति वक्ष्यति "उपमर्दं च" इत्यत्र । तस्मात् "पुरुषार्थोऽतःशब्दात्" इति यन्मतं भगवतो बादरायणस्य, तत् तथैव तिष्ठति; न शेषत्वप्रभृतिभिर्हेत्वाभासैश्चालयितुं शक्यते । तथा हि तमधिकं शारीरादीश्वरमात्मानं दर्शयन्ति श्रुतयः—"यः सर्वज्ञः सर्ववित्" "भीषास्माद्वातः पवते" "महद्भयं वज्रमुद्यतम्" "एतस्य वा अक्षरस्य प्रशासने गार्गि" "तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत" इत्येवमाद्याः । यत्तु प्रियादिसंसूचितस्य संसारिण एव आत्मनो वेद्यतयानुकर्षणम्—"आत्मनस्तु कामाय सर्वं प्रियं भवति । आत्मा वा अरे द्रष्टव्यः" "यः प्राणेन प्राणिति स त आत्मा सर्वान्तरः" "य एषोऽक्षिणि पुरुषो दृश्यते" इत्युपक्रम्य "एतं त्वेव ते भूयोऽनुव्या-

प्रकटार्थविवरणम्

नम् । एवं त्वयि नरे वर्तमाने सति इतोऽन्यथा प्रकारान्तरं नास्ति, येन कर्म न लिप्यते, पापेन कर्मणा त्वं न लिप्यस इत्यर्थः । जरामरणावधिकत्वात्[ त्वम्] जरामर्यम् ॥

अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥

तदेवं श्रुत्यादिभिर्विद्यायाः कर्माङ्गत्वे प्राप्ते सिद्धान्तमुपक्रमते — अधिकोपदेशात्त्विति ॥ यः कर्ता कर्माङ्गभूतः नासौ वेदान्तवेद्यः; बन्धस्य

भाष्यम्

ख्यास्यामि" इति चैवमादि—तदपि "अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः" "योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति" "परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः" इत्येवमादिभिर्वाक्यशेषैः सत्यामेव अधिकोपदिदिक्षायाम्, अत्यन्ताभेदाभिप्रायमित्यविरोधः। पारमेश्वरमेव हि शारीरस्य पारमार्थिकं स्वरूपम्; उपाधिकृतं तु शारीरत्वम्, "तत्त्वमसि" "नान्यदतोऽस्ति द्रष्टृ" इत्यादिश्रुतिभ्यः। सर्वं च एतत् विस्तरेणास्माभिः पुरस्तात् तत्र तत्र वर्णितम् ॥

## तुल्यं तु दर्शनम् ॥ ३-४-९ ॥

यदुक्तम्—आचारदर्शनात्कर्मशेषो विद्येति, अत्र ब्रूमः—तुल्यमाचारदर्शनम्, अकर्मशेषत्वेऽपि विद्यायाः। तथा हि श्रुतिर्भवति—"एतद्ध स्म वै तद्विद्वांस आहुर्ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे। एतद्ध स्म वै तत्पूर्वे विद्वांसोऽग्निहोत्रं न जुहवांचक्रिरे" "एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति" इत्येवंजातीयका। याज्ञवल्क्यादीनामपि ब्रह्मविदाम् अकर्मनिष्ठत्वं दृश्यते—"एतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यो विजहार" इत्यादिश्रुतिभ्यः। अपि च "यक्ष्यमाणो वै भगवन्तोऽहमस्मि" इत्येतत् लिङ्ग-

प्रकटार्थविवरणम्

वेदान्तवेद्यं न तत्कर्माङ्गम्; अतः तज्ज्ञानस्य कुतः कर्मशेषता, कुतस्तरां फलश्रुतेरर्थवादतेत्यर्थः ॥

तुल्यं तु दर्शनम् ॥

यच्च लिङ्गमुपन्यस्तं तद्व्यभिचरति इत्याह—तुल्यं तु दर्शनमिति ॥ इदानीमुदाहृतवाक्यस्य गत्यन्तरमाह —अपि चेति ॥ येषां च ब्रह्मविदामपि कर्म

भाष्यम्

दर्शनं वैश्वानरविद्याविषयम्; संभवति च सोपाधिकायां ब्रह्मविद्यायां कर्मसाहित्यदर्शनम्; न तु अत्रापि कर्माङ्गत्वमस्ति, प्रकरणाद्यभावात् ॥

यत्पुनरुक्तम्—"तच्छ्रुतेः" इति, अत्र ब्रूमः—

## असार्वत्रिकी ॥ ३-४-१० ॥　　5

"यदेव विद्यया करोति" इत्येषा श्रुतिर्न सर्वविद्याविषया, प्रकृतविद्याभिसंबन्धात् । प्रकृता चोद्गीथविद्या—"ओमित्येतदक्षरमुद्गीथमुपासीत" इत्यत्र ॥

## विभागः शतवत् ॥ ३-४-११ ॥

यदप्युक्तम्—"तं विद्याकर्मणी समन्वारभेते" इत्येतत् समन्वारम्भवचनम् अस्वातन्त्र्ये विद्याया लिङ्गमिति, तत् प्रत्युच्यते—विभागोऽत्र द्रष्टव्यः—विद्या अन्यं पुरुषमन्वारभते, कर्म अन्यमिति । शतवत्—यथा शतम् आभ्यां दीयतामित्युक्ते विभज्य दीयते—पञ्चाशदेकस्मै पञ्चाशदपरस्मै, तद्वत् । न च इदं समन्वारम्भवचनं मुमुक्षुविषयम्—"इति नु कामयमानः" इति संसारिविषयत्वोपसंहारात्, "अथाकामयमानः" इति च मुमुक्षोः पृथगुपक्रमात्; तत्र संसारिविषये　10 15

प्रकटार्थविवरणम्

दृश्यते न तत्तेषां कर्म; चोदनालक्षणं हि कर्म; तेषां च मनुष्यत्वाभिमानाभावेन चोदनाभावात् कथंचिद्वर्तमानमप्याभासमात्रं तदिति द्रष्टव्यम् ॥

असार्वत्रिकी ॥　20

विभागः शतवत् ॥

समन्वारम्भवचनस्य मुमुक्षुविषयत्वमङ्गीकृत्य कर्मसाहित्ये लिङ्गं न भवतीत्युक्तम् । इदानीं तदपि नास्तीत्याह—न चेदं समन्वारम्भवचनमिति ॥ विहिता विद्या उद्गीथादिविषया; प्रतिषिद्धा च नग्नस्त्रीसन्दर्शनादिलक्षणा ॥

१. T, T[1] and TM add पूर्वे

भाष्यम्

विद्या विहिता प्रतिषिद्धा च परिगृह्यते ; विशेषाभावात् ; कर्मापि विहितं प्रतिषिद्धं च, यथाप्राप्तानुवादित्वात्, एवं सति अविभागेनापि इदं समन्वारम्भवचनमवकल्पते ॥

5 यच्चैतत् "तद्वतो विधानात्" इति, अत उत्तरं पठति—

## अध्ययनमात्रवतः ॥ ३-४-१२ ॥

"आचार्यकुलाद्वेदमधीत्य" इत्यत्राध्ययनमात्रस्य श्रवणात् अध्ययनमात्रवत एव कर्मविधिरित्यध्यवस्यामः । ननु एवं सति अविद्यत्वात् अनधिकारः कर्मसु प्रसज्येत—नैष दोषः ; न वयम् अध्ययनप्रभवं कर्मावबोधनम् अधिकारकारणं वारयामः ; किं तर्हि ? औपनिषदमात्मज्ञानम्, स्वातन्त्र्येणैव प्रयोजनवत् प्रतीयमानम् न कर्माधिकारकारणतां प्रतिपद्यते—इत्येतावत्प्रतिपादयामः । यथा च न क्रत्वन्तरज्ञानं क्रत्वन्तराधिकारेण अपेक्ष्यते एवमेतदपि द्रष्टव्यमिति ॥

यदप्युक्तम् "नियमाच्च" इति, अत्राभिधीयते—

## नाविशेषात् ॥ ३-४-१३ ॥

"कुर्वन्नेवेह कर्माणि जिजीविषेत्" इत्येवमादिषु नियमश्रवणेषु न विदुष इति विशेषोऽस्ति, अविशेषेण नियमविधानात् ॥

प्रकटार्थविवरणम्

अध्ययनमात्रवतः ॥

20 नाविशेषात् ॥

यथा यतत् यच्चैतत् "अध्ययनमात्रवतमति[वतः" इति]मात्रार्थोपरिज्ञानात् शङ्कते — नन्वेवं सतीति ॥ अविद्यत्वात् विद्यारहितत्वादित्यर्थः । अधीतवाक्यप्रसूतं ज्ञानं मात्रशब्देनास्माभिर्न वार्यते, किंतु तत्त्वज्ञानमनुपयोगा- दित्याह—नैष दोष इति ॥

१. T¹. योगमित्याह

भाष्यम्

## स्तुतयेऽनुमतिर्वा ॥ ३-४-१४ ॥

"कुर्वन्नेवेह कर्माणि" इत्यत्रापरो विशेष आख्यायते । यद्यपि अत्र प्रकरणसामर्थ्यात् विद्वानेव—कुर्वन्—इति संबध्येत, तथापि विद्यास्तुतये कर्मानुष्ठानम् एतद्द्रष्टव्यम्; "न कर्म लिप्यते नरे" इति हि वक्ष्यति । एतदुक्तं भवति—यावज्जीवं कर्म कुर्वत्यपि त्वयि विदुषि पुरुषे न कर्म लेपाय भवति, विद्यासामर्थ्यादिति—तदेवं विद्या स्तूयते ॥ 5

## कामकारेण चैके ॥ ३-४-१५ ॥

अपि च एके विद्वांसः प्रत्यक्षीकृतविद्याफलाः सन्तः, तदवष्टम्भात् फलान्तरसाधनेषु प्रजादिषु प्रयोजनाभावं परामृशन्ति कामकारेण— 10 इति श्रुतिर्भवति वाजसनेयिनाम्—"एतद्ध स्म वै तत्पूर्वे विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोकः" इति। अनुभवारूढमेव च विद्याफलं न क्रियाफलवत् कालान्तरभावि—इत्य-

प्रकटार्थविवरणम्

स्तुतयेऽनुमतिर्वा ॥ 15

नियमविधानं अब्रह्मविषयमित्येकं परिहारमुक्त्वा प्रकरणभङ्गभयात् परिहारान्तरमाह—स्तुतय इति ॥ एवं कर्म कुर्वत्यपि त्वयि नेतो ब्रह्मभावाद्विद्याविषयात् अन्यथा संसारापत्तिरस्ति, यतो न कर्म लिप्यत इति योजना ॥

कामकारेण चैके ॥

कामकारेणेति ॥ स्वेच्छातः कर्मसाधनप्रजादिपरित्यागलिङ्गादपि विद्यायाः 20 स्वातन्त्र्यमित्यर्थः । येषां नोऽस्माकम् अयमात्मैव अयं प्राप्यो लोको मोक्षाख्य इत्यर्थः । ननु मोक्षस्यादृष्टफलत्वात् कथमुक्तस्वनिश्चयात् प्रजापरित्याग इत्याशङ्क्याह—अनुभवारूढमेव चेति ॥

१. T, TM and A. मोक्षार्थः

भाष्यम्

सकृदवोचाम । अतोऽपि न विद्यायाः कर्मशेषत्वम्, नापि तद्विषयायाः फलश्रुतेरयथार्थत्वं शक्यमाश्रयितुम् ॥

## उपमर्दं च ॥ ३-४-१६ ॥

5 अपि च कर्माधिकारहेतोः क्रियाकारकफललक्षणस्य समस्तस्य प्रपञ्चस्य अविद्याकृतस्य विद्यासामर्थ्यात्स्वरूपोपमर्दमामनन्ति—"यत्र वा अस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्तत्केन कं जिघ्रेत्" इत्यादिना । वेदान्तोदितात्मज्ञानपूर्विकां तु कर्माधिकारसिद्धिं प्रत्याशासानस्य कर्माधिकारोच्छित्तिरेव प्रसज्येत । तस्मादपि स्वातन्त्र्यं विद्यायाः ॥

## 10 ऊर्ध्वरेतःसु च शब्दे हि ॥ ३-४-१७ ॥

ऊर्ध्वरेतःसु च आश्रमेषु विद्या श्रूयते; न च तत्र कर्माङ्गत्वं विद्याया उपपद्यते, कर्माभावात्; न हि अग्निहोत्रादीनि वैदिकानि

प्रकटार्थविवरणम्

उपमर्दं च ॥

15 किंच अकर्तृब्रह्मात्मज्ञानं न क्रतुप्रयोगविधिनोपादेयम्, उपादीयमानक्रत्वङ्गविरोधित्वात्, क्रतुप्रयोगविधिनोपादीयमानोदितहोमविरोध्यनुदितहोमवदित्याह—उपमर्दं चेति ॥

ऊर्ध्वरेतःसु च शब्दे हि ॥

किं च ब्रह्मज्ञानकर्मणी नाङ्गाङ्गिभूते, इतरेतरव्यतिरेकित्वात्, क्रतुगमन-
20 नैष्ठिकव्रतवदिति विशेषानुमानानुगृहीतया फलश्रुत्या स्वतन्त्रमेव ब्रह्मज्ञानं फलसाधनमित्याह—ऊर्ध्वरेतस्सु चेति ॥ "शब्दे हि" इतिसूत्रभागं शङ्कापूर्वकं

१. A. वित्याशङ्क्याह

भाष्यम्

कर्माणि तेषां सन्ति । स्यादेतत्, ऊर्ध्वरेतस आश्रमा न श्रूयन्ते वेद इति—तदपि नास्ति; तेऽपि हि वैदिकेषु शब्देष्ववगम्यन्ते "त्रयो धर्मस्कन्धाः" "ये चेमेऽरण्ये श्रद्धा तप इत्युपासते" "तपःश्रद्धे ये ह्युपवसन्त्यरण्ये" "एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" 5 "ब्रह्मचर्यादेव प्रव्रजेत्" इत्येवमादिषु । प्रतिपन्नाप्रतिपन्नगार्हस्थ्यानाम् अपाकृतानपाकृतर्णत्रयाणां च ऊर्ध्वरेतस्त्वं श्रुतिस्मृतिप्रसिद्धम् । तस्मादपि स्वातन्त्र्यं विद्यायाः ॥

प्रकटार्थविवरणम्

व्याचष्टे — स्यादेतदित्यादिना ॥ "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा 10 जायते ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः" इति श्रुतेः,

"ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ।
अनुपाकृत्य मोक्षं तु सेवमानः पतत्यधः ॥"

इति स्मृतेश्च गार्हस्थ्यं स्वीकृत्यैव ऋणत्रयं चापाकृत्यैवोर्ध्वरेतःशब्दाभिधेयमैथुनासमाचरणोपलक्षितं पारिव्राज्यमनुष्ठेयमित्यपि नाशङ्कनीयमित्याह — 15 प्रतिपन्नेति ॥ साक्षाद्विधिश्रुतिविरोधेऽर्थवादः श्रुतिः स्मृतिर्वा बाध्यत इति भावः । तथा च श्रुतिस्मृत्यन्तराणि "तस्याश्रमविकल्पमेके ब्रुवते" "यमिच्छेत्तमाविशेत्"

"गृहस्थाश्रमकामस्तु गृहस्थाश्रममाविशेत् ।
वानप्रस्थाश्रमं वापि चतुर्थं वेच्छयात्मनः ॥ 20
ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथ वा पुनः ।
वियुक्तः सर्वकामेभ्यः पारिव्राज्यं समाचरेत् ॥"

इति च । तस्माद्यस्य ब्राह्मणस्य पूर्वत्र वैराग्यमुत्तरोपादित्सा च जायते, तस्यानियमेनैव आश्रमस्वीकारः प्रत्यवायाप्राप्तिश्च सूतकादिप्रतिबन्ध इवेत्यर्थः ॥

१. T, T[1] and TM add ननु
२. A omits च
३. A omits अर्थवाद...अथवा पुनः
४. A. आश्रमविकल्पः

भाष्यम्

[ परामर्शाधिकरणम् ]

## परामर्शं जैमिनिरचोदना चापवदति हि ॥ ३-४-१८ ॥

"त्रयो धर्मस्कन्धाः" इत्यादयो ये शब्दा ऊर्ध्वरेतसामाश्रमाणां
5 सद्भावाय उदाहृताः, न ते तत्प्रतिपादनाय प्रभवन्ति ; यतः परामर्शम्
एषु शब्देष्वाश्रमान्तराणां जैमिनिराचार्यो मन्यते, न विधिम् । कुतः?
न हि अत्र लिङादीनामन्यतमश्चोदनाशब्दोऽस्ति ; अर्थान्तरपरत्वं च
एषु प्रत्येकमुपलभ्यते । "त्रयो धर्मस्कन्धाः" इत्यत्र तावत् "यज्ञोऽ-
ध्ययनं दानमिति प्रथमस्तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृती-
10 योऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन् सर्व एते पुण्यलोका भवन्ति"
इति परामर्शपूर्वकमाश्रमाणामनात्यन्तिकफलत्वं संकीर्त्य, आत्यन्तिक-
फलतया ब्रह्मसंस्थता स्तूयते--"ब्रह्मसंस्थोऽमृतत्वमेति" इति । ननु
परामर्शेऽपि आश्रमा गम्यन्त एव—सत्यं गम्यन्ते ; स्मृत्याचाराभ्यां

प्रकटार्थविवरणम्

15 परामर्शं जैमिनिरचोदना चापवदति हि ॥

पूर्वाधिकरणोक्तपारिव्राज्यस्यानुष्ठेयत्वं प्रासङ्गिकमनेन अधिकरणेन
प्रपञ्च्यते । तत्र पूर्वपक्षमुपन्यस्यति—त्रयो धर्मस्कन्धा इत्यादय इति ॥
विध्यश्रवणात् ब्रह्मसंस्थतास्तुतिपरत्वाच्चाश्रमपरामर्शमात्रमित्युक्तम्[1]; तत्र
शङ्कते — ननु परामर्शोऽपीति ॥ अनुवादस्य पुरोवादसापेक्षत्वादित्यर्थः ।
20 परामर्शानुपपत्त्या आश्रमा गम्यन्त इत्येतत्सत्यम्; किंतु स्मृत्याचाराभ्यां तेषां
प्रसिद्धिः[2], न विधिश्रुतेरित्यर्थः ॥

तथा च काण्वायनस्मृतिः आश्रमचतुष्टयं व्याचचक्षे—

"ब्रह्मचारिगृहस्थवानप्रस्थपरिव्राजकाश्चत्वार आश्रमाः षोडशभेदा
भवन्ति । तत्र ब्रह्मचारिणः चतुर्विधा भवन्ति, गायत्रो ब्राह्मः प्राजापत्यो
25 बृहन्निति । य उपनयनादूर्ध्वं त्रिरात्रमक्षारलवणाशी गायत्रीमधीते, स

१. T¹ and TM. मात्रत्वमित्युक्तं २. T and T¹ तेषामप्रसिद्धिः

## प्रकटार्थविवरणम्

गायत्रः। योऽष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यं चरेत् प्रतिवेदं द्वादश द्वादश वा, यावद्ग्रहणान्तं वा वेदस्य स ब्राह्मः। स्वदारतुकालाभिगामी सदा परदारवर्जी यः स प्राजापत्यः। आ प्रायणात् गुरोरपरित्यागी यः स नैष्ठिको बृहन्निति॥

गृहस्था अपि चतुर्विधा भवन्ति—वार्ताकवृत्तयः, शालीनवृत्तयः, यायावराः, घोरसंन्यासिकाश्चेति। तत्र वार्ताकवृत्तयः कृषिगोरक्षणवाणिज्यमगर्हितमुपभुञ्जानाः शतसंवत्सराभिः क्रियाभिर्यजन्त आत्मानं प्रार्थयन्ते। शालीनवृत्तयो यजन्तः [यजन्तोऽयाजयन्तः] अधीयाना नाध्यापयन्तः, ददतो न प्रतिगृह्णन्तः शतसंवत्सराभिः क्रियाभिर्यजन्त आत्मानं प्रार्थयन्ते। यायावराः यजन्तो याजयन्तः अधीयाना अध्यापयन्तः ददतः प्रतिगृह्णन्तः शतसंवत्सराभिः क्रियाभिः यजन्त आत्मानं प्रार्थयन्ते। घोरसंन्यासिका उद्धृतपरिपूताभिरद्भिः कार्यं कुर्वन्तः प्रतिदिवसमाहृतोञ्छवृत्तिमुपभुञ्जानाः शतसंवत्सराभिः क्रियाभिर्यजन्त आत्मानं प्रार्थयन्ते॥

वानप्रस्था अपि चतुर्विधा भवन्ति—वैखानसा औदुम्बरा वालखिल्याः फेनपाश्चेति। तत्र वैखानसा अकृष्टपच्यौषधिवनस्पतिभिर्ग्रामबहिष्कृताभिरग्निपरिचरणं कृत्वा पञ्चमहायज्ञक्रियां निर्वर्तयन्त आत्मानं प्रार्थयन्ते। औदुम्बराः प्रातरुत्थाय यां दिशमभिप्रेक्षन्ते, तथाहृतोदुम्बरबदरनीवारकश्यामाकैरग्निपरिचरणं कृत्वा पञ्चमहायज्ञक्रियां निर्वर्तयन्त आत्मानं प्रार्थयन्ते। वालखिल्याः जटाधराश्चीरचर्मवल्कलपरिवृताः कार्तिक्यां पौर्णमास्यां पुष्पफलमुत्सृजन्तः शेषानष्टौ मासान् वृत्त्युपार्जनं कृत्वाग्निपरिचरणं कृत्वा पञ्चमहायज्ञक्रियां निर्वर्तयन्तः आत्मानं प्रार्थयन्ते। फेनपाः उन्मत्तकाः शीर्णपर्णफलभोजिनो यत्र तत्र वा वसन्तः अग्निपरिचरणं कृत्वा पञ्चमहायज्ञक्रियां निर्वर्तयन्त आत्मानं प्रार्थयन्ते॥

परिव्राजका अपि चतुर्विधा भवन्ति—कुटीचकाः बहूदकाः हंसाः परमहंसाश्चेति। तत्र कुटीचकाः स्वपुत्रगेहेषु भैक्षचर्यं चरन्त आत्मानं प्रार्थयन्ते।

१. T and T¹ omit शालीनवृत्तयः... प्रार्थयन्ते in line 13.

२. T, T¹ and TM. फेनवश्चेति

३. TM and A add तत्र

४. T, T¹ and TM. फेनवः

५. A. पञ्चमहायज्ञान्

भाष्यम्

तु तेषां प्रसिद्धिः, न प्रत्यक्षश्रुतेः ; ततश्च प्रत्यक्षश्रुतिविरोधे सति अना-
दरणीयास्ते भविष्यन्ति, अनधिकृतविषया वा । ननु गार्हस्थ्यमपि
सहैवोर्ध्वरेतोभिः परामृष्टम्—"यज्ञोऽध्ययनं दानमिति प्रथमम्" इति—
5 सत्यमेवम्, तथापि तु गृहस्थं प्रत्येव अग्निहोत्रादीनां कर्मणां विधानात्
श्रुतिप्रसिद्धमेव हि तदस्तित्वम् ; तस्मात्स्तुत्यर्थ एव अयं परामर्शः,

प्रकटार्थविवरणम्

बहूदकाः त्रिदण्डकमण्डलुशिक्यपक्ष्मजलपवित्रपात्रपादुकासनशिखायज्ञो
पवीतकौपीनकाषायवेषधारिणः साधुवृत्तेषु ब्राह्मणकुलेषु भैक्षं चरन्तः
10 आत्मानं प्रार्थयन्ते । हंसाः एकदण्डधराः शिखावर्जिताः यज्ञोपवीतधारिणः
शिक्यकमण्डलुहस्ताः ग्रामैकरात्रवासिनो नगरे तीर्थेषु च पञ्चरात्रं वसन्तः
एकरात्रद्विरात्रत्रिरात्रकृच्छ्रचान्द्रायणादि चरन्त आत्मानं प्रार्थयन्ते । परम-
हंसा नामैकदण्डधरा मुण्डाः कन्थाकौपीनवासिनोऽव्यक्तलिङ्गा व्यक्ताचाराः
अनुन्मत्ता उन्मत्तवदाचरन्तः त्रिदण्डकमण्डलुशिक्यपक्ष्मजलपवित्रपादुका-
15 सनशिखायज्ञोपवीतानां च त्यागिनः शून्यागारदेवगृहनिवासिनः ।

"न तेषां धर्मो नाधर्मो न सत्यं नापि चानृतम् ।
सर्वसहाः सर्वसमाः समलोष्टाश्मकाञ्चनाः ॥

यथोपपन्नचातुर्वर्ण्यभैक्षाचर्यं चरन्तः आत्मानं मोक्षयन्ते—

यतीनामुपशमो धर्मो नियमो वनवासिनाम् ।
20 दानमेकं गृहस्थानां शुश्रूषा ब्रह्मचारिणाम् ॥" इति ॥

भवत्वेवं स्मार्तत्वम्, ततः किमित्याशङ्क्याह—ततश्चेति ॥ यावज्जीवादि
श्रुतिविरोधे नादरणीया ऊर्ध्वरेतस आश्रमाः धर्मानधिकृतान्धपङ्ग्वादिविषया
वा भविष्यन्तीत्यर्थः । आश्रमान्तराणामननुष्ठेयत्वं चेत् गार्हस्थ्यस्याप्यननुष्ठेयत्वं
स्यात्, परामर्शाविशेषादित्याह—ननु गार्हस्थ्यमपीति ॥ परामर्शसाम्येऽपि
25 श्रौतत्वात्तस्यानुष्ठेयत्वमित्याह —सत्यमेवमिति ॥ यस्मात् गार्हस्थ्यमेवैकं श्रौतं

१. T and T¹. नगरतीर्थेषु  २. A. धारिणः

### भाष्यम्

न चोदनार्थः । अपि च अपवदति हि प्रत्यक्षा श्रुतिराश्रमान्तरम्—
"वीरहा वा एष देवानां योऽग्निमुद्वासयते" "आचार्याय प्रियं धनमा-
हृत्य प्रजातन्तुं मा व्यवच्छेत्सीः" "नापुत्रस्य लोकोऽस्तीति तत्सर्वे
पशवो विदुः" इत्येवमाद्या । तथा "ये चेमेऽरण्ये श्रद्धा तप इत्युपा- 5
सते" "तपःश्रद्धे ये ह्युपवसन्त्यरण्ये" इति च देवयानोपदेशः, न
आश्रमान्तरोपदेशः । संदिग्धं च आश्रमान्तराभिधानम्—"तप एव
द्वितीयः" इत्येवमादिषु । तथा "एतमेव प्रव्राजिनो लोकमिच्छन्तः
प्रव्रजन्ति" इति लोकसंस्तवोऽयम्, न पारिव्राज्यविधिः । ननु
"ब्रह्मचर्यादेव प्रव्रजेत्" इति विस्पष्टमिदं प्रत्यक्षं पारिव्राज्यविधानं 10
जाबालानाम्—सत्यमेवमेतत्; अनपेक्ष्य तु एतां श्रुतिम्, अयं विचार
इति द्रष्टव्यम् ॥

### प्रकटार्थविवरणम्

तस्माद्ब्रह्मसंस्थतास्तुत्यर्थ एवाश्रमान्तरानुवाद इत्युपसंहारः । "अपवदति हि"
इति सूत्रभागं व्याचष्टे—अपि चेति ॥ यथोदाहृतं वाक्यान्तरं तदप्यन्यपर- 15
मित्याह—तथा ये चेति ॥ "तेऽर्चिरभिसंभवन्ति" इत्यादिना देवयानोपदेशार्थ-
मित्यर्थः । आश्रमाभिधायिशब्दाभावाच्चार्थान्तरपरत्वं वक्तव्यमित्याह —
सन्दिग्धं चेति ॥ तर्हि प्रव्रजन्तीति स्पष्ट एवाश्रमाभिधायी शब्दोऽस्तीत्या-
शङ्क्याह—तथैतमेवेति ॥ एवंविशिष्टोऽयमात्मलोकः यदेनमिच्छन्तः साक्षा-
त्कर्तुं प्रव्रज्यामपि कुर्वन्तीति । इदानीं पूर्वपक्षमाक्षिपति—नन्विति ॥ एतां 20
श्रुतिं करेण पिधायायं विचारः प्रवृत्त इत्याह—सत्यमेवमेतदिति ॥

१. T and T[1] श्रुत्यर्थ

भाष्यम्

## अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ ३-४-१९ ॥

अनुष्ठेयम् आश्रमान्तरं बादरायण आचार्यो मन्यते—वेदेऽश्रवणात् अग्निहोत्रादीनां च अवश्यानुष्ठेयत्वात् तद्विरोधादनधिकृतानुष्ठेयमाश्र-
5 मान्तरम्—इति हि इमां मतिं निराकरोति, गार्हस्थ्यवदेव आश्रमान्तरमपि अनिच्छता प्रतिपत्तव्यमिति मन्यमानः । कुतः ? साम्यश्रुतेः ; समा हि गार्हस्थ्येनाश्रमान्तरस्य परामर्शश्रुतिर्दृश्यते "त्रयो धर्मस्कन्धाः" इत्याद्या ; यथा इह श्रुत्यन्तरविहितमेव गार्हस्थ्यं परामृष्टम् , एवमाश्रमान्तरमपीति प्रतिपत्तव्यम् — यथा च शास्त्रान्तरप्राप्तयोरेव
10 निवीतप्राचीनावीतयोः परामर्श उपवीतविधिपरे वाक्ये ; तस्मात् तुल्यमनुष्ठेयत्वं गार्हस्थ्येन आश्रमान्तरस्य । तथा "एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" इत्यस्य वेदानुवचनादिभिः, समभिव्याहारः "ये चेमेऽरण्ये श्रद्धा तप इत्युपासते" इत्यस्य च पञ्चाग्निविद्यया । यत्तूक्तम्—"तप एव द्वितीयः" इत्यादिष्वाश्रमान्तराभिधानं संदि-
15 ग्धमिति, नैष दोषः ; निश्चयकारणसद्भावात् ; "त्रयो धर्मस्कन्धाः"

प्रकटार्थविवरणम्

### अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥

सिद्धान्तसूत्रं व्याचष्टे— अनुष्ठेयमिति ॥ पूर्वपक्षं सङ्क्षेपतोऽनूद्य तन्निराकरणप्रतिज्ञां आचार्यस्य विवृणोति— वेदेऽश्रवणादित्यादिना ॥ "त्रयो धर्म-
20 स्कन्धाः" इत्यत्र ऊर्ध्वरेतस आश्रमाः श्रुत्यन्तरविहिता एव परामृष्टाः, एतद्वाक्यपरामृष्टत्वात्, गार्हस्थ्यवदित्युक्तम् । उदाहरणान्तरमाह—यथा चेति ॥ "निवीतं मनुष्याणां प्राचीनावीतं पितृणामुपवीतं देवानामुपव्ययते देवलक्ष्ममेव तत्कुरुत" इत्यस्मिन्वाक्ये यथा कण्ठलम्बितापसव्ययोः शास्त्रान्तरविहितयोरेव परामर्शः, तथाश्रमाणामपीत्यर्थः । वाक्यान्तरेऽपि पारिव्राज्यमनुष्ठेय-
25 साहचर्यादनुष्ठेयमेवोपदिष्टमित्याह — तथैवेति [तथैतमिति] ॥ परोक्तदूषणं परिहरति—यत्तूक्तमित्यादिना ॥ उत्पत्तिभिन्ना इति ॥ यजेत वधात् इत्याद्यु-

भाष्यम्

इति हि धर्मस्कन्धत्रित्वं प्रतिज्ञातम्; न च यज्ञादयो भूयांसो धर्मा उत्पत्तिभिन्नाः सन्तः अन्यत्राश्रमसंबन्धात् त्रित्वेऽन्तर्भावयितुं शक्यन्ते; तत्र यज्ञादिलिङ्गो गृहाश्रम एको धर्मस्कन्धो निर्दिष्टः, ब्रह्मचारीति च स्पष्ट आश्रमनिर्देशः; तप इत्यपि कोऽन्यस्तपःप्रधानादाश्रमात् धर्मस्कन्धोऽभ्युपगम्यते। "ये चेमेऽरण्ये" इति च अरण्यलिङ्गात् श्रद्धातपोभ्यामाश्रमगृहीतिः। तस्मात् परामर्शेऽप्यनुष्ठेयमाश्रमान्तरम्॥ 5

## विधिर्वा धारणवत्॥ ३-४-२०॥

विधिरेवायमाश्रमान्तरस्य, न परामर्शमात्रम्। ननु विधित्वाभ्युपगमे एकवाक्यताप्रतीतिरुपरुध्येत; प्रतीयते च अत्र एकवाक्यता— 10

प्रकटार्थविवरणम्

त्पत्तिविधिभिन्नाः सन्तो बहवो धर्माः आश्रमसंबन्धमन्तरेण न त्रित्वेऽन्तर्भावयितुं शक्यन्ते; अतस्त्रित्वेनापादानमेवाश्रमनिश्चायकमित्यर्थः। तत्र केन धर्मेण कतम आश्रम उपात्त इत्याशङ्क्याह—तत्र यज्ञादीति॥

विधिर्वा धारणवत्॥ 15

पूर्वं परामर्शमभ्युपगम्यानुष्ठेयत्वमुक्तम्[१]। इदानीं विधिरेवायमित्याह—विधिरेवेति॥ स्मृत्याचारयोराश्रमचतुष्टयप्रतिपादकयोर्भ्रान्तित्वासंभवने मूलकल्पनाया विधिसंयुक्तवाक्यकल्पनाल्लघीयः; "त्रयो धर्मस्कन्धाः" इत्यादिषु आश्रमविधिकल्पनमित्यर्थः। अल्पफलत्वेनाश्रमत्रयनिन्दापूर्वकं ब्रह्मसंस्थतास्तुतिलक्षणैकार्थपरत्वादेकमिदं वाक्यम्; तद्भिद्येताश्रमविधिकल्पनायामित्याह— 20 ननु विधित्वेति॥ संभवत्येकवाक्यत्वे वाक्यभेददोषः स्यात्। नात्रैकवाक्यतैवास्ति, अपूर्वत्वात् संसर्गभेदस्य; पुण्यलोकफलास्त्रयो धर्मस्कन्धाः ब्रह्मसंस्थता

१. T, P and TM. अनुष्ठेयमुक्तं

भाष्यम्

पुण्यलोकफलास्त्रयो धर्मस्कन्धाः, ब्रह्मसंस्थता त्वमृतत्वफलेति—सत्य-
मेतत्; सतीमपि तु एकवाक्यताप्रतीतिं परित्यज्य विधिरेवाभ्युपग-
न्तव्यः, अपूर्वत्वात्, विध्यन्तरस्यादर्शनात्, विस्पष्टाच्च आश्रमान्तर-
5 प्रत्ययात् गुणवादकल्पनया एकवाक्यत्वयोजनानुपपत्तेः। धारणवत्—
यथा "अधस्तात्समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयति"
इत्यत्र सत्यामप्यधोधारणेन एकवाक्यताप्रतीतौ, विधीयत एव उपरि-
धारणम्, अपूर्वत्वात्; तथाच उक्तं शेषलक्षणे—"विधिस्तु धारणेऽ-
पूर्वत्वात्" इति। तद्वत् इहापि आश्रमपरामर्शश्रुतिः विधिरेवेति
10 कल्प्यते ॥

यदापि परामर्श एवायमाश्रमान्तराणाम्, तदापि ब्रह्मसंस्थता
तावत्, संस्तवसामर्थ्यादवश्यं विधेया अभ्युपगन्तव्या। सा च किं

प्रकटार्थविवरणम्

मृतत्वफलत्वेति[फलेति] विध्यन्तरमपि सन्निहितं न दृश्यते, यच्छेषभूतार्थ-
15 समर्पणेनैकवाक्यता स्यादित्याह— सत्यमेतदित्यादिना ॥ किं च मुख्यमा-
श्रमान्तरप्रत्ययं परित्यज्य स्तुतिलक्षणैकवाक्यत्वकल्पना नोपपद्यत इत्याह—
विस्पष्टाच्चेति ॥ अवान्तरपदान्वयेनापूर्वार्थविधाने दृष्टान्तमाह—धारणव-
दिति ॥ अग्निहोत्रविशेषे स्रुचि क्षिप्तस्य हविषः आहवनीयं नीयमानस्य
पित्रिये[पित्र्य]होमेऽधस्तात् समिद्धारणस्य विहितत्वात्तच्छेषभूतोऽयमनुवादः
20 "उपरि हि देवेभ्यः" इत्येकवाक्यताप्रतीतावप्युपरिष्टात् समित्प्रच्छादनस्या-
पूर्वत्वाद्दैवे होमे तद्विधीयत इत्यर्थः। शेषलक्षणे तृतीयाध्याये जैमिनिनाप्ये-
तदुक्तम्; एतच्च व्याचचक्षिरे वार्तिककारमिश्राः। प्रभाकरेण तूपेक्षितम् ॥

पुनः परामर्शपक्षमवलम्ब्याह — यदापीति ॥ यत्स्तूयते तद्विधीयत
इति न्यायादित्यर्थः। ततस्तव को लाभ इत्याकाङ्क्षायां लाभं दर्शयितुं
25 विचारमारभते — सा चेति ॥ ननु पक्षद्वयस्यापि निर्बीजत्वान्नैतद्विचा-

१. T. तच्छेष

२. T and T¹ हविषि

३. T, T¹ and A. चित्र

## भाष्यम्

चतुर्ष्वाश्रमेषु यस्य कस्यचित्, आहोस्वित्परिव्राजकस्यैवेति विवेक्तव्यम्। यदि च ब्रह्मचर्यन्तेष्वाश्रमेषु परामृश्यमानेषु परिव्राजकोऽपि परामृष्टः, ततश्चतुर्णामप्याश्रमाणां परामृष्टत्वाविशेषात् अनाश्रमित्वानुपपत्तेश्च यः कश्चिच्चतुर्ष्वाश्रमेषु ब्रह्मसंस्थो भविष्यति; अथ न परामृष्टः, ततः परिशिष्यमाणः परिव्राडेव ब्रह्मसंस्थ इति सेत्स्यति। तत्र तपःशब्देन वैखानसग्राहिणा परामृष्टः परिव्राडपि इति केचित्। तदयुक्तम्; न हि सत्यां गतौ वानप्रस्थविशेषणेन परिव्राजको ग्रहणमर्हति; यथा अत्र ब्रह्मचारिगृहमेधिनौ असाधारणेनैव स्वेन स्वेन विशेषणेन विशेषितौ एवं भिक्षुवैखानसावपीति युक्तम्; तपश्चासाधारणो धर्मो 10

## प्रकटार्थविवरणम्

रणीयमित्याशङ्क्याह—यदि चेति॥ अनाश्रमित्वस्य निन्द्यमानत्वेन ब्रह्मसंस्थस्यानाश्रमित्वानुपपत्तेश्चेत्यर्थः। पक्षद्वयसंभावनायां विचारारम्भमुक्त्वा पूर्वपक्षमाह—तत्र तपःशब्देनेति॥ परिव्राजकस्यापि यमनियमादितपः-संभवादित्यर्थः। सिद्धान्ती दूषयति—तदयुक्तमिति॥ एकेनैव शब्देनोभय- 15
ग्रहणमगतिकागतिन्यायेनाङ्गीक्रियते, यथोद्भिज्जशब्देन स्वेदजस्य। न तु सत्यां गतौ अनेकशक्तिकल्पनप्रसङ्गादित्यर्थः। किं तर्हि युक्तमित्याशङ्क्याह—यथात्रेति॥ दानाध्ययनादीनां कथंचिदाश्रमान्तरसाधारण्येऽपि प्राधान्येनासाधारणसंबन्धमाश्रित्यैकैकेन धर्मकलापेनैकैक एवाश्रमः परामृश्यते। तथा भिक्षोर्ब्रह्मसंस्थताप्राधान्यात्, वानप्रस्थस्य च तपःप्राधान्यात्, कथंचित्तयोरि- 20
तराश्रमसाधारण्येऽपि तपःशब्देन वानप्रस्थस्य ग्रहणम्, ब्रह्मसंस्थशब्देन च परिव्राजकस्य। तत्र च ब्रह्मसंस्थता सहैवाश्रयेण पारिव्राज्येन विधीयते, स्तुतिसामर्थ्यादिति भावः। किंच तपःशब्दस्य कृच्छ्रादौ रूढत्वात् अन्यत्र चारूढत्वात् तेन वानप्रस्थ एव परामृश्यत इत्याह—तपश्चासाधारण इति॥ प्रसिद्ध-

१. A omits नियम
२. T, TM and A. उद्भिदशब्देन
३. TM. प्रयुक्तं
४. T and T[1] omit अन्यत्रचारूढत्वात्

भाष्यम्

वानप्रस्थानां कायक्लेशप्रधानत्वात्, तपःशब्दस्य तत्र रूढेः; भिक्षोस्तु धर्म इन्द्रियसंयमादिः लक्षणयैव तपःशब्देनाभिलप्येत । चतुष्ट्वेन च प्रसिद्धा आश्रमाः त्रित्वेन परामृश्यन्त इत्यन्याय्यम् । अपि च भेद-
5 व्यपदेशोऽत्र भवति—त्रय एते पुण्यलोकभाजः एकोऽमृतत्वभागिति;

प्रकटार्थविवरणम्

संख्यापह्नवप्रसङ्गादपि न पूर्वे परिव्राट् परामृष्ट इत्याह—चतुष्ट्वेन चेति ॥ किंच पृथगुपदेशसामर्थ्यादपि प्रकृताश्रमत्रयविलक्षणो ब्रह्मसंस्थ इत्याह—अपि चेति ॥

10 यदत्र भास्करो व्याजहार—'अवस्थान्तरापेक्षयाव्यपदेशभेदो न विरुध्यते; केवलकर्मिणः पुण्यलोका एव ब्रह्मसंस्था अमृतत्वभागिन इति । इहान्तेऽपि पूर्वे ...ब्रह्मावभूताम् इदानीं अन्यतरो महाप्राज्ञो वर्तत इत्यविरोधः'। तत्रैतद्वक्त-व्यम्—किमवस्थान्तरेऽपि पूर्वोपात्तकर्मनिष्ठतापरिहारेण ब्रह्मसंस्थतोच्यते, किं वा नेति । प्रथमे त्वयापि ब्रह्मसंस्थः परिव्राडेवोक्तः; चरमस्य चासंभवं
15 वक्ष्यति; कर्मनिष्ठतायां सत्यामेव ब्रह्मनिष्ठताया मुख्याया असंभवात्; न हि मन्दप्रज्ञत्वे सत्येव महाप्रज्ञत्वमपि संभवति । भगवतापि—"आरुरुक्षो-र्मुनेर्योगं कर्म कारणमुच्यते" इति प्रागेव ब्रह्मनिष्ठताया कर्मानुष्ठानत्वमुक्त्वा—"योगारूढस्य तस्यैव शमः कारणमुच्यते" इति ब्रह्मनिष्ठस्य कर्मणः उपशम उक्तः । तथा—

20 "अश्वत्थमेनं सुविरूढमूलमसङ्गशस्त्रेण दृढेन छित्त्वा ।
ततः पदं तत्परिमार्गितव्यं यस्मिन्गता न निवर्तन्ति भूयः ॥" इति ।

यच्चान्यज्जगौ—'ब्रह्मसंस्थशब्दोऽयं यौगिकः; सन्निहितालम्बनत्वं च यौ-गिके प्रसिद्धम् । यथा "आग्नेय्याग्नीध्रमुपतिष्ठते" इति प्रकृतेनै[प्रकृतै]वाग्नेयी गृह्यते । तत्र यदि तपःशब्देन परिव्राजकः सन्निधापितः, तदा तस्य नामृतत्वा-
25 प्ता'इति । तत्र तावन्न यौगिकस्य सन्निहितावलम्बनत्वनियमः "वाजिभ्यो वाजि-

१. TM. चतुर्थेनचेति
२. T¹ एतदेव वक्तव्यं
३. T¹ अवस्थान्तरमपि
४. A. निष्ठायाः

भाष्यम्

पृथक्त्वे च भेदव्यपदेशोऽवकल्पते ; न ह्येवं भवति—देवदत्तयज्ञदत्तौ मन्दप्रज्ञौ, अन्यतरस्त्वनयोर्महाप्रज्ञ इति ; भवति त्वेवम्—देवदत्तयज्ञदत्तौ मन्दप्रज्ञौ, विष्णुमित्रस्तु महाप्रज्ञ इति ; तस्मात् पूर्वे त्रय आश्रमिणः पुण्यलोकभाजः, परिशिष्यमाणः परिव्राट् अमृतत्वभाक् । कथं पुनः ब्रह्मसंस्थशब्दो योगात्प्रवर्तमानः सर्वत्र संभवन्परिव्राजक एवावतिष्ठेत ? रूढ्यभ्युपगमे च आश्रममात्रादमृतत्वप्राप्तेर्ज्ञानानार्थक्यप्रसङ्ग इति ; अत्रोच्यते—ब्रह्मसंस्थ इति हि ब्रह्मणि परिसमाप्तिः अनन्य- 5

प्रकटार्थविवरणम्

नम्" इत्यत्र वाजमन्नं विद्यते येषां ते वाजिन इति यौगिकत्वप्रतिभासेऽपि 10 सन्निहितालम्बनानभ्युपगमात्; भूमाधिकरणे च भूमशब्दस्य यौगिकत्वेऽपि प्रकृतालम्बित्वाभ्युपगमात्; अतोऽकिञ्चित्करं यौगिकत्वम्, प्रकृतसंभव एव तु तत्र प्रयोजकः[1]; तथापि ब्रह्मसंस्थताक्रियायोगात् सर्वत्रैव पाचकादिशब्दवत् प्रवर्तमानः कथं परिव्राजक एवावतिष्ठेत[2] ? न कथंचिदित्याह—कथं पुनरिति ॥ यद्यश्वकर्णादिशब्दवद्रूढ एवायं परिव्राजकेऽभ्युपगम्येत, तत्राह — रूढ्य- 15 भ्युपगमे चेति ॥ प्रथमं यौगिकत्वमभ्युपगम्य परिहरति—अत्रोच्यत इति ॥ ब्रह्मेत्योङ्कारोऽभिधीयते, प्रकरणात् । तस्मिन् संस्था सम्यगवस्थानम् । नाम तदभिधेयब्रह्मानुध्यानम्, तज्जपः स्नानाचमनादिव्यापारोऽपि तेनैव नान्येन मन्त्रादिना व्यापरवत्त्वं[3] तन्निष्ठत्वमुच्यते । तच्च गृहस्थादीनां न संभाव्यते, गायत्रीजपाद्यकरणे प्रत्यवायश्रवणात् "अकुर्वन् विहितं कर्म" इति । 20

"श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥"

इति भगवद्वचनम् । अतो यौगिकोऽप्ययं ब्रह्मनिष्ठे भिक्षौ वर्तत इत्यर्थः । ननु भिक्षोरपि सन्ध्यावन्दनाकरणे प्रत्यवायः स्मर्यते हारीते—

१. A omits प्रकृतसंभव एव तु तत्र प्रयोजकः  २. T and T¹. तिष्ठते
३. A. व्यापारत्वं

भाष्यम्

व्यापारतारूपं तन्निष्ठत्वमभिधीयते; तच्च त्रयाणामाश्रमाणां न संभवति, स्वाश्रमविहितकर्माननुष्ठाने प्रत्यवायश्रवणात्; परिव्राजकस्य तु सर्व-

प्रकटार्थविवरणम्

5 "चत्वारोऽप्याश्रमा एते सन्ध्योपासनवर्जिताः ।
ब्राह्मण्यादेव हीयन्ते यद्यप्युग्रतपोरताः ॥" इति ।

बोधायनोऽपि स्मरति स्म—

"अनागतां तु ये पूर्वामनतीतां तु पश्चिमाम् ।
सन्ध्यां नोपासते विप्राः कथं ते ब्राह्मणाः स्मृताः ॥
10 सायंप्रातः सदा सन्ध्यां ये विप्रा नो उपासते ।
कामं तान् धार्मिको राजा शूद्रकर्मसु योजयेत् ॥" इति ।

तत्राह — परिव्राजकस्य त्विति ॥ "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः" इति तैत्तिरीयकश्रुतेः कर्मादिनिन्दापूर्वकं तत्त्यागस्यामृतत्वफलसंबन्धावगमात्, अपूर्वत्वाच्च अमृतत्वकामं प्रति तद्विधाने तात्पर्या-
15 वगतौ नित्यनैमित्तिकानामप्यविशेषप्राप्ते परित्यागे का नाम सन्ध्यावन्दनमात्रस्यातिक्षुद्रस्यावस्थानसंभावना? तथाचारुणी श्रुतिः — "अत ऊर्ध्वं अमन्त्रवदाचरेत् सन्ध्यं समाधावात्मन्याचरेत्" इति । तथाथर्वणिकाः—

"सशिखं वपनं कृत्वा बहिःसूत्रं त्यजेद्बुधः ।
यदक्षरं परं ब्रह्म तत्सूत्रमिति कल्पयेत् ॥
20 धारणात्तस्य सूत्रस्य नोच्छिष्टो नाशुचिर्भवेत् ।
कर्मण्यधिकृता ये तु वैदिके ब्राह्मणादयः ॥
तैस्तु धार्यं बहिःसूत्रं क्रियाङ्गं तद्धि वै स्मृतम् ।
अग्नेरिव शिखा नान्या यस्य ज्ञानमयी शिखा ॥
स शिखीत्युच्यते विद्वान् नेतरे केशधारिणः ॥"

25 इत्यादिना शिखायज्ञोपवीतादिपरित्यागोपदेशेन सर्वकर्मपरित्यागोऽभिधीयते । काठके—"सशिखान् केशान्निकृत्य विसृज्य यज्ञोपवीतं भूः स्वाहेत्यप्सु

१. T[1], धारयेत्

भाष्यम्

कर्मसंन्यासात् प्रत्यवायो न संभवति अननुष्ठाननिमित्तः शमदमादिस्तु तदीयो धर्मो ब्रह्मसंस्थताया उपोद्बलकः, न विरोधी; ब्रह्मनिष्ठत्वमेव हि तस्य शमदमाद्युपबृंहितं स्वाश्रमविहितं कर्म; यज्ञादीनि

प्रकटार्थविवरणम् 5

जुहुयात्" इति। तथा वाजसनेयके "पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति" इति वित्तपदोपात्तकर्माङ्गपरित्यागाभिधानेन सर्वकर्मसंन्यास एव दर्शितः। तस्मा[त्] सन्ध्यावन्दनाकरणान्न परमहंसानां प्रत्यवायप्राप्तिः। स्मृतेस्तु सन्ध्यावन्दनादियुक्तपरिव्राजकविशेषविषयत्वादविरोध इति भावः। ननु तस्यापि शमदमादिस्वाश्रमधर्मसद्भावान्न 10 सदा ब्रह्मनिष्ठत्वमेवेत्याशङ्क्याह—शमदमादिस्त्विति ॥ रागाद्याक्षिप्तचित्तस्य ब्रह्मसंस्थताया एवासंभवात्तदुपरम इधो[इद्धो]त्बणक एव ब्रह्मसंस्थताया इत्यर्थः। ननु यद्यपि शमदमादिर्निवृत्तिरूपत्वात् ब्रह्मसंस्थताया विरोधी न भवति, तथापि तीर्थयात्रादिस्तद्धर्मो भवेद्विरोधीत्याशङ्क्य, नेत्याह—ब्रह्मनिष्ठत्वमेव हीति ॥ तथा च मनुः— 15

"यथोक्तान्यपि कर्माणि परिहाय द्विजोत्तमः।
आत्मज्ञाने शमे च स्यात् वेदाभ्यासे च यत्नवान् ॥
एतद्धि जन्मसामर्थ्यं ब्राह्मणस्य विशेषतः।
प्राप्यैतत्कृतकृत्यो हि द्विजो भवति नान्यथा ॥" इति।

तथा कूर्मपुराणे योगिनामधेयं संन्यासिनमधिकृत्योक्तम्— 20

"न तस्य विद्यते कार्यं न लिङ्गं वा विपश्चितः।
निर्ममो निर्भयः शान्तो निर्द्वन्द्वः पर्णभोजनः ॥
जीर्णकौपीनवासाः स्यान्नग्नो वा ध्यानतत्परः।
ब्रह्मचारी मिताहारो ग्रामादन्नं समाहरेत् ॥
अध्यात्मरतिरासीत निरपेक्षो निरामिषः[शिषः]। 25
आत्मनैव सहायेन सुखार्थी विचरेदिह ॥

भाष्यम्

च इतरेषाम्; तद्व्यतिक्रमे च तस्य प्रत्यवायः । तथा च "न्यास इति ब्रह्मा ब्रह्मा हि परः परो हि ब्रह्मा तानि वा एतान्यवराणि तपांसि न्यास एवात्यरेचयत्" "वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगा-

5 प्रकटार्थविवरणम्

नाभिनन्देत मरणं नाभिनन्देत जीवितम् ।
कालमेव प्रतीक्षेत निर्देशं भृतको यथा ॥" इति ।

भागवते चैकादशस्कन्धे—

"यदृच्छयोपपन्नान्नमद्याच्छ्रेष्ठमुतावरम् ।
10 तथा वासस्तथाशय्यां प्राप्तं प्राप्तं भजेन्मुनिः ॥
शौचमाचमनं स्नानं न तु चोदनया चरेत् ।
अन्यांश्च नियमान् ज्ञानी यथाहं लीलयेश्वरः ॥
न हि तस्य विकल्पाख्या या च मद्वीक्षयाहताः ।
आ देहान्तात्कचित्ख्यातिः ततः संपद्यते मया ॥" इति ।

15 परिपक्वज्ञानस्य संन्यासिनो वृत्तिमुक्त्वा विविदिषुविषयमुक्तम्—

"दुःखोदर्केषु पापेषु जातनिर्वेद आत्मवान् ।
अजिज्ञासितमद्धर्मा गुरुं मुनिमुपव्रजेत् ॥
तावत्परिचरेद्भक्तः श्रद्धावाननसूयकः ।
यावद् ब्रह्म विजानाति मामेव गुरुमादृतः ॥" इति ।

20 अतः सूक्तं परमहंसस्य विदुषः शमाद्युपबृंहितं ब्रह्मनिष्ठत्वमेवाश्रमकर्मेति; तदकरणे च प्रत्यवायः स्यात् । उक्तं हि—

"त्वंपदार्थविवेकाय संन्यासः सर्वकर्मणाम् ।
श्रुत्या विधीयते यस्मात् तत्त्यागी पतितो भवेत् ॥"

इति सकलकर्मप्रहाणपूर्वकं ब्रह्मसंस्थत्वमेव स्वाश्रमधर्म इत्यत्र प्रमाण-
25 माह—तथा चेति ॥ न्यास इति संन्यासः ॥

"कर्मणां बन्धहेतूनां कृतानामकृतैः सह ।
कुशलाकुशलानां च प्रहाणं न्यास उच्यते ॥"

भाष्यम्

द्यतयः शुद्धसत्त्वाः" इत्याद्याः श्रुतयः, स्मृतयश्च—"तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः" इत्याद्या ब्रह्मसंस्थस्य कर्माभावं दर्श-

प्रकटार्थविवरणम्

इति स्मृतेः संन्यासो ब्रह्मेति स्तूयते। कथम्? ब्रह्मा हि परः प्रसिद्धः श्रुतिस्मृतिषु; संन्यासश्च परं ब्रह्म ज्ञानप्राधान्यात्; परो हि यस्मात्संन्यासो ब्रह्मा तत्परत्वं प्रकथयति। तानि वै प्रसिद्धानि गार्हस्थ्यादीन्येतान्यपराणि तपांसि ज्ञानहीनतयापरफलहेतुत्वात्; न्यास एवैभ्योऽतिरिक्तः श्रेष्ठो भवति, ब्रह्मसंस्थताया अमृतत्वहेतुत्वादित्यर्थः॥ 5

यत्तु भास्करेण व्याख्यायि—न्यासशब्देन हिरण्यगर्भो भण्यत इति, तदुक्तस्मृतिविरुद्धम्। अन्वयोऽपि च न सङ्गच्छते। यच्चाभिदधौ शौचाचमनव्याख्यान[मनस्नान]भिक्षाटनादि कर्म क्रियते, तद्विरुद्धश्च कर्मसंन्यासः प्रतिज्ञायत इति, तत्प्रतिप्रसवविध्यपरिज्ञानविलसितमेव। निमित्तान्तराद्-प्राप्तविषयो हि विधिः प्रतिप्रसव उच्यते। यथा ज्वरार्तस्याविशेषेण अन्नपानप्रतिषेऽपि औषधं पिबेदिति, तथेहापि संन्यसेदित्यविशेण सर्वस्वत्यागविधानेन संन्यासे विहिते यत्प्रतिप्रसवविध्युपात्तं शौचादि तत्कथं नोपादीयते। तथा च मैत्रायणीब्राह्मणे "अथ परिव्राडेकशाटीपरिवृतो मुण्डोदरपाव्यरण्यनित्यो भिक्षार्थी ग्रामं प्रविशेत्। असायंप्रदक्षिणेनापि विचिकित्सन् सार्ववर्णिकः भैक्षचरणमभिशस्तपतितवर्जं यज्ञोपवीती शौचनिष्ठः काममेकं वैणवं दण्डमाददीत" इत्युक्तम्। जाबालश्रुतावपि—"अथ परिव्राड्विवर्णवासा मुण्डोऽपरिग्रहः शुचिरद्रोही भैक्षान्नो ब्रह्मभूयाय कल्पत" इति। न चैवमुपवीतादेः प्रतिप्रसवः श्रूयते, प्रत्युत अयज्ञोपवीतीति संन्यासधर्मविधिसमये मैत्रायणश्रुतौ विशेषणादयज्ञोपवीतित्वमेव सिद्धम्। बाष्कलश्रुतावपि— 10 15 20

"कुटुम्बं पुत्रदारांश्च वेदाङ्गानि च सर्वशः।
यज्ञं यज्ञोपवीतं च त्यक्त्वामूढश्चरेन्मुनिः॥" इति। 25

१. A. स्मृतौ स संन्यासो

२. T and T[1] निमित्तान्तरादत्यन्तरागप्राप्त

३. A. नाविचिकित्सन्

## प्रकटार्थविवरणम्

तथा कौषीतकिब्राह्मणे "सशिखान् केशान्निकृत्य यज्ञोपवीतम्" इत्युपक्रम्य "किमस्य यज्ञोपवीतं का वास्य शिखा कथं चास्योपस्पर्शनमिति तान् होवाचेदमेवास्य यज्ञोपवीतं यदात्मध्यानं विद्या शिखा नीरैः सर्वत्रावस्थितैः
5 कार्यं निर्वर्तयन्ति" इति। न चैतेषां वाक्यानां सर्वत्रासिद्धिमात्रेण प्रहाणम्। न हि सर्वे सर्वशाखाविदः, तत्तच्छाखाध्येतॄणां देशविशेषेषु बहुलमुपलम्भात्, घटिकास्थानस्य चानियतत्वात्। अन्यथा शाबरभाष्योदाहृतसर्ववाक्यानां सांप्रतमधीयमानशाखास्वनुपलम्भात् प्रहाणप्रसङ्गः। यदि तत्र शिष्टपरिग्रहादाश्वासः, तर्हि किं व्यासादयः शिष्टा न भवन्ति। तथा च
10 व्यासः—

"यज्ञोपवीतं कर्माङ्गं वदन्त्युत्तमबुद्धयः।
उपकुर्वाणकान् पूर्वं यतो लोके न दृश्यते॥
यावत्कर्माणि कुरुते तावदस्यैव धारणम्।
यस्मादस्य परित्यागः क्रियते कर्मभिः सह॥" इति॥

15 नारदश्च—

"कर्मण्यधिकृता ये तु वैदिके ब्राह्मणादयः।
तैस्तु धार्यमिदं सूत्रं क्रियाङ्गं तद्धि वै स्मृतम्॥" इति॥

"मुण्डोऽममोऽपरिग्रहः" इति वसिष्ठः। विश्वामित्रोऽपि "अथापरं परिव्राजकलिङ्गं सर्वतः परिमोक्षमेके सत्यानृते सुखदुःखे वेदानिमं लोक-
20 ममुं च परित्यज्य आत्मानमन्विच्छेत् शिखायज्ञोपवीतकमण्डलुकपालानां च त्यागी तस्याप्यरण्यनित्यत्वं मुण्डः काषायपरिहितः कन्थाध्यानयोगपरो नित्यम्" इति। शौनकप्रोक्ते च संन्यासविधौ "अथान्यः परिव्राजको मुण्डोऽपरिग्रहः काषायवासा वाङ्मनःकर्मदण्डो भूतानामद्रोहुदरपात्री भिक्षाशीलः सर्ववर्णेष्वभिशस्तपतितवर्जमयज्ञोपवीती शौचनिष्ठः क्षमी तुल्य-
25 निन्दास्तुतिः समो भूतेषु मौनी" इत्यादि। बोधायने च—"अत ऊर्ध्वं यज्ञोपवीतमात्राच्छादनं यष्टयः शिक्यं जलपवित्रं कमण्डलुं पात्रमित्येतानि वर्जयित्वाथ दण्डमादत्ते—सखा मां गोपाय" इति। तस्माद्यथोक्तश्रुत्यर्थस्यानेकस्मृतिषु परिग्रहदर्शनात् नानाश्वासः। यत्र जाबालश्रुतौ पूर्वमुपवी-

## प्रकटार्थविवरणम्

तत्यागविधानाभावाद्यज्ञोपवीती कथं ब्राह्मण इत्याकस्मिकप्रश्नानुपपत्तेः प्रक्षिप्तमेवेदं वचनं केनचिद्दुर्विदग्धेन इति, तत्पूर्वापरपर्यालोचनाविजृम्भितम्। पूर्वमेव हि सर्वस्वत्यागात्मकसंन्यासविधिना दारादिवदुपवीतस्यापि त्यागसिद्धौ कथमाकस्मिकप्रश्नप्रसङ्ग इति। न चाचमनादिसिद्धये यज्ञोपवीतापेक्षा, स्त्रीशूद्रयोर्विनापि यज्ञोपवीतेन आचमनदर्शनात्। यच्च स्मृतिवचनम् "नवमुपादायाश्रमं प्रविशेत्" इत्युदाहृतम्, तत्रापि प्रविश्योपादद्रीतेत्यश्रवणात्, निहीनाधिकारिगोचरवृत्त्यन्तरविषयत्वाद्वा न विरोधः। यच्च "सशिखं वपनम्" इत्यस्य यथा शिखा परिशिष्यत इति व्याख्यानम्, तदग्नेरिव शिखा नान्येति वाक्यशेषविरुद्धम्। गोवधप्रायश्चित्तादौ च प्रसिद्धार्थं सशिखं वपनपदम्। न च अविशेषप्रवृत्तस्य छन्दोगब्रह्मचारिविषयत्वकल्पनं न्याय्यम्। यच्च त्रिदण्डालाभविषयमेकदण्डमिति, तत्

> "त्रिदण्डस्य परित्याग एकदण्डस्य धारणम्।
> एकस्मिन्दृश्यते वाक्ये तस्मादस्य प्रधानता॥"

इति व्यासवचनविरुद्धम्; "यावन्नस्युस्त्रयो दण्डाः तावदेकेन पर्यटेत्" इति; न च नष्टत्रिदण्डविषयम् "त्रिदण्डेन यतिश्चैव" इति तत्स्मृत्युक्तत्रिदण्डप्रशंसार्थम्, यथा उदितहोमिनामनुदितहोमो निन्द्यः; अन्यथा—

> "चतुर्विधा भिक्षवस्तु कुटीचबहूदकौ।
> हंसः परमहंसश्च यो यः पश्चात्स उत्तमः॥"

इत्यादिविरोधप्रसङ्गात्। यच्च सर्वकर्मसंन्यासवचनं काम्यसकलकर्मसंन्यासविषयमिति, तदसत्; विरक्तस्य संन्यासेऽधिकारात्, काम्यत्यागस्य प्रागेव सिद्धत्वात् संन्यासविधिवैयर्थ्यात्—

> "परमात्मनि यो रक्तो विरक्तः परमात्मनि।
> सर्वेषां नापि निर्मुक्तः स भैक्षं भोक्तुमर्हति॥"

१. A. वपनं वदन्
२. TM. कदाचित्
३. A omits स संन्यासे...कयो विदुरिति

भाष्यम्

यन्ति। तस्मात् परिव्राजकस्य आश्रममात्रादमृतत्वप्राप्तेर्ज्ञानानर्थक्यप्रसङ्ग इत्येषोऽपि दोषो नावतरति। तदेवं परामर्शेऽपि इतरेषामाश्रमाणाम्, पारिव्राज्यं तावद्ब्रह्मसंस्थतालक्षणं लभ्येतैव। अनपेक्ष्य च

5 प्रकटार्थविवरणम्

स्मरणात्, नित्याग्निहोत्राद्यनुष्ठानप्रसङ्गाच्च। यच्च भगवद्वचनम्—

"काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः"

इति, तद्गृहस्थविषयम्, अर्जुनस्य स्वकर्मकरणे[1] भगवतस्तात्पर्यदर्शनात्। तस्मात्केशवप्रभृतीनां स्वयंकक्षीकृतपक्षसंरक्षणाय प्रक्षिप्तपरापदेशबहुवाक्यानां

10 परमहंसप्रद्वेषानलज्वलितकलेबरतयातिव्याकुलतया[2] मत्सरमुत्सृज्य सर्वकर्मसंन्यासपूर्विका ब्रह्मसंस्थतास्थेया स्वस्थैः; बहु चात्र वक्तव्यमस्ति; ग्रन्थभूयस्त्वभयात्तूपरम्यते। इदानीं ब्रह्मसंस्थशब्दस्य परिव्राजके रूढत्वमभ्युपगम्योपसंहरति—तस्मात्परिव्राजकस्येति॥ यथा गृहस्थशब्दस्य यौगिकत्वे सत्यतिप्रसङ्ग परिहारायाश्रमिविशेषरूढ्यभ्युपगमेऽपि न गार्हस्थ्यमात्रात् पुण्य-

15 लोकावाप्तिः, किंतु यथोक्ताग्निहोत्रादिकरणात्; तथा परिव्राजकस्यापि प्रणवब्रह्मसंस्थस्य ब्रह्मलोकावाप्तिरापेक्षिकममृतत्वम्; वाक्यार्थसाक्षात्कारवतस्तु मुख्यमेवामृतत्वमिति भावः। एवमेकदेशिमतं प्रत्याख्याय मूलप्रमेयं निगमयति—तदेवमिति॥ विधिश्रुतिं करेण पिधाय शिष्यबुद्धिविकासायानुवादवाक्यमेवावलम्ब्यायं विचारः कृतः। परमार्थतस्तु नानेन

20 कृत्यम्, स्पष्टविधिसद्भावादित्याह—अनपेक्ष्य चेति॥ "यदि वेतरथा" इति ब्रह्मचर्यस्थितस्यैव पारिव्राज्येच्छा गार्हस्थ्ये च वैराग्यमित्यर्थः॥

१. T and T¹. स्वधर्मकरणे
TM. स्वधर्मकर्मकरणे

२. T, T¹ and TM. व्याकुलानां

भाष्यम्

जाबालश्रुतिमाश्रमान्तरविधायिनीम् अयमाचार्येण विचारः प्रवर्तितः; विद्यत एव तु आश्रमान्तरविधिश्रुतिः प्रत्यक्षा—"ब्रह्मचर्यं परिसमाप्य गृही भवेद्गृही भूत्वा वनी भवेद्वनी भूत्वा प्रव्रजेत्। यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा" इति; न च इयं श्रुतिः अनधिकृत- 5
विषया शक्या वक्तुम्, अविशेषश्रवणात्, पृथग्विधानाच्च अनधिकृतानाम्—"अथ पुनरेव व्रती वाव्रती वा स्नातको वास्नातको वोत्सन्नाग्निरनग्निको वा" इत्यादिना; ब्रह्मदानपरिपाकाङ्गत्वाच्च पारिव्राज्यस्य न अनधिकृतविषयत्वम्; तच्च दर्शयति—"अथ परिव्राड्विवर्ण-
वासा मुण्डोऽपरिग्रहः शुचिरद्रोही भैक्षाणो ब्रह्मभूयाय भवति" इति। 10
तस्मात्सिद्धा ऊर्ध्वरेतसामाश्रमाः। सिद्धं चोर्ध्वरेतःसु विधानाद्विद्यायाः स्वातन्त्र्यमिति ॥

प्रकटार्थविवरणम्

यच्चोक्तिमन्धपङ्ग्वादिविषयः संन्यासो भविष्यतीति, तत्राह — न चेयं श्रुतिरिति ॥ अविशेषप्रवृत्ता श्रुतिर्विशेषे व्याख्यमाना बाधिता स्यादित्यर्थः। 15
व्रती गोदानादिवेदव्रतवान्, अव्रती तद्विपरीतः; स्नातकः यो गुरुकुलनिवृत्तिरूपस्नानानन्तरमपि गुरुशुश्रूषादि करोति; तद्विपरीतोऽस्नातकः; उत्सन्नाग्निः मृतभार्यः पूर्वमेवाग्निपरिग्रहरहितो वा। प्रव्रजेदिति कर्माधिकारप्रतिपत्तिहीनानामपि संन्यासस्य पृथग्विधानाच्च पूर्ववाक्यमनधिकृतविषय-
मित्यर्थः। प्रकरणप्रमाणात् श्रवणादिद्वारेण संन्यासस्य ब्रह्मज्ञानदार्ढ्यार्थ- 20
त्वादपि श्रवणादिसमर्थस्यैव संन्यासाधिकार इत्याह — ब्रह्मज्ञानेति ॥
ब्रह्मभूयाय ब्रह्मभावानुभवायेत्यर्थः। प्रकृतमवान्तरविचारं मूलविचारं चोपसंहरति—तस्मादिति ॥

भाष्यम्

[ स्तुतिमात्राधिकरणम् ]

## स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ ३-४-२१ ॥

5 "स एष रसानां रसतमः परमः परार्ध्योऽष्टमो यदुद्गीथः" "इयमेवर्गग्निः साम" "अयं वाव लोक एषोऽग्निश्चितः, तदिदमेवोक्थम् इयमेव पृथिवी" इत्येवंजातीयकाः श्रुतयः किमुद्गीथादेः स्तुत्यर्थाः, आहोस्वित् उपासनाविध्यर्था इत्यस्मिन्संशये—स्तुत्यर्था इति युक्तम्, उद्गीथादीनि कर्माङ्गान्युपादाय श्रवणात्; तथा—"इयमेव जुहूरा-
10 दित्यः कूर्मः स्वर्गो लोक आहवनीयः" इत्याद्या जुह्वादिस्तुत्यर्थाः,

प्रकटार्थविवरणम्

स्तुतिमात्रमुपादानादित चेन्नापूर्वत्वात् ॥

विधिपदशून्यमपि "त्रयो धर्मस्कन्धाः" इत्यादिवाक्यमपूर्वार्थत्वाद्विधिपरं निर्णीतम्। तेनैव न्यायेन वाक्यान्तरमपि तादृशं निर्णेतुं पठति—स एष इति ॥
15 रसानां पृथिव्युदकौषधिपुरुषवागृक्सा[१]म्नां भूतेषूत्तरोत्तरसारत्वेन गृहीतानामतिशयेन सारो रसतमः परमश्रेष्ठो ब्रह्मोपासनप्रतीकानां परस्य ब्रह्मणोऽर्धे स्थानं तदर्हतीति परार्ध्यः; अष्टमः पृथिव्याद्यपेक्षया; य[२]दुद्गीथः य ओङ्कार इत्यर्थः। अङ्गसंबन्धे पर्णमयीत्वादौ विधिरुपलभ्यते, क्वचिदङ्गसंबद्धे स्वर्गो लोक इत्यादौ स्तुतिरुपलभ्यत इत्युभयोरुपलम्भात् संशयः। पूर्वत्रानुष्ठेयगार्ह-
20 स्थ्यसाम्यश्रुतेराश्रमान्तराणां अनुष्ठेयत्वं यथा तथा[३] अत्राप्यङ्गसंबद्धविधिपदशून्यवाक्यस्य स्तुतित्वदर्शनात् तत्साम्यात् स्तुतित्वमिति पूर्वपक्षभागार्थमाह—स्तुत्यर्था इति ॥ जुहूरियमेव पृथिवीति स्तूयते; कूर्मश्चयनग[४]त आदित्यः; आहवनीयोऽग्निः स्वर्गो लोक इति स्तुतिरित्यर्थः। सिद्धान्तभागं

१. TM. पुरुषवदृक्साम्नां

२. A omits यदुद्गीथः...पूर्वत्रानुष्ठेय

३. TM. अनुष्ठेयत्वं तथाप्यङ्ग

४. A omits गत

भाष्यम्

तद्वत्—इति चेत्, नेत्याह; न स्तुतिमात्रमासां श्रुतीनां प्रयोजनं युक्तम्, अपूर्वत्वात्; विध्यर्थतायां हि अपूर्वोऽर्थो विहितो भवति; स्तुत्यर्थतायां त्वानर्थक्यमेव स्यात्; विधायकस्य हि शब्दस्य वाक्यशेषभावं प्रतिपद्यमाना स्तुतिरुपयुज्यत इत्युक्तम् "विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः" इत्यत्र; प्रदेशान्तरविहितानां तु उद्गीथादीनाम् इयं प्रदेशान्तरपठिता स्तुतिः वाक्यशेषभावमप्रतिपद्यमाना अनर्थिकैव स्यात्; "इयमेव जुहूः" इत्यादि तु विधिसंनिधावेवाम्नातमिति वैषम्यम् । तस्माद्विध्यर्था एव एवंजातीयकाः श्रुतयः ॥

## भावशब्दाच्च ॥ ३-४-२२ ॥

"उद्गीथमुपासीत" "सामोपासीत" "अहमुक्थमस्मीति विद्यात्" इत्यादयश्च विस्पष्टा विधिशब्दाः श्रूयन्ते; ते च स्तुतिमात्रप्रयोजनतायां व्याहन्येरन् । तथा च न्यायविदां स्मरणम्—

"कुर्यात्क्रियेत कर्तव्यं भवेत्स्यादिति पञ्चमम् ।
एतत्स्यात्सर्ववेदेषु नियतं विधिलक्षणम् ॥" इति;

प्रकटार्थविवरणम्

व्याचष्टे—न स्तुतिमात्रमिति ॥ स्तुतिमात्रकल्पनाद्विधिकल्पनमेव युक्तमनुष्ठानफललाभादित्यर्थः[1] । ननु स्तुत्यर्थतयाप्यर्थवत्त्वमुक्तम् पूर्वतन्त्रे; कथमानर्थक्यमुच्यत इत्याशङ्क्याह — विधायकस्य हीति ॥ प्रकरणान्तरत्वे सति विशिष्टफलसंबन्धितयापूर्वत्वात् क्रत्वन्तरवत् स्तुतिमात्रं नोपपद्यत इत्यर्थः । दृष्टान्तवैषम्यमाह--इयमेव जुहूरिति ॥ "जुह्वा जुहोति" "कूर्ममुपदधाति" "आहवनीये जुहोति"[2] इत्यादिविधिसंनिधावित्यर्थः ॥

भावशब्दाच्च ॥

भाव्यतेऽनुष्ठीयतेऽधिकारिभिरिति विध्यर्थो भावः; तच्छब्दाच्च स्तुतिमात्रत्वं न संभवतीत्यर्थः । भाव्यते प्रार्थ्यत इति भावः फलं भण्यते; तच्छ्रु-

१. A. युक्तं फलभिलाभात्　　　　२. A omits कूर्म...नीये जुहोति

भाष्यम्

लिङाद्यर्थो विधिरिति मन्यमानास्त एवं स्मरन्ति । प्रतिप्रकरणं च फलानि श्राव्यन्ते—"आपयिता ह वै कामानां भवति" "एष ह्येव कामागानस्येष्टे" "कल्पन्ते हास्मै लोका ऊर्ध्वाश्चावृत्ताश्च" इत्यादीनि ; 5 तस्मादप्युपासनविधानार्था उद्गीथादिश्रुतयः ॥

[ पारिप्लवाधिकरणम् ]

## पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ ३-४-२३ ॥

"अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुर्मैत्रेयी च कात्यायनी च" "प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम" "जान-10 श्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस" इत्येवमादिषु वेदान्तपठितेष्वाख्यानेषु संशयः—किमिमानि पारिप्लवप्रयोगार्थानि, आहोस्वित्संनिहितविद्याप्रतिपत्त्यर्थानीति । पारिप्लवार्था इमा आख्यानश्रुतयः, आख्यानसामान्यात्, आख्यानप्रयोगस्य च पारि-

प्रकटार्थविवरणम्

15 वणाच्चेति प्रकारान्तरमाह —प्रतिप्रकरणमिति ॥ कामागानस्येति आगानेन कामसंपादनस्य समर्थ इति ॥

पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥

अपरमपि वाक्यं विधिशून्यं प्रसङ्गान्निर्णेतुं पठति—अथ हेति ॥ अश्वमेधे पारिप्लवप्रयोगो नामाख्यानकथनं विहितम् "पुत्रामात्यपरिवृताय 20 राज्ञेऽध्वर्युः पारिप्लवमाचक्षीत" इत्यादिना ; तदर्थान्याख्यानान्येतानि किं वा विद्याशेषभूतानीति संशयः, आख्यानत्वसाम्यात् विद्यासंनिधानाच्चेत्यर्थः । पूर्वाधिकरणन्यायेनापूर्वत्वाद्विध्यर्थत्वोपपत्तेः पारिप्लवार्था इति पूर्वः पक्षः । ननु संनिधानाद्विद्यार्थत्वं युक्तमित्याशङ्क्याह —आख्यानसामान्यादिति ॥

१. A. समान्यात्

भाष्यम्

प्लवे चोदितत्वात्; ततश्च विद्याप्रधानत्वं वेदान्तानां न स्यात्, मन्त्रवत्—प्रयोगशेषत्वादिति चेत्—तन्न; कस्मात्? विशेषितत्वात्—पारिप्लवमाचक्षीत" इति हि प्रकृत्य, "मनुर्वैवस्वतो राजा" इत्येवमादीनि कानिचिदेव आख्यानानि तत्र विशेष्यन्ते; आख्यानसामान्याच्चेत् सर्वगृहीतिः स्यात्, अनर्थकमेवेदं विशेषणं भवेत्। तस्मात् न पारिप्लवार्था एता आख्यानश्रुतयः ॥ 5

## तथा चैकवाक्यतोपबन्धात् ॥ ३-४-२४ ॥

असति च पारिप्लवार्थत्वे आख्यानानां संनिहितविद्याप्रतिपादनोपयोगितैव न्याय्या, एकवाक्यतोपबन्धात्; तथा हि तत्र तत्र संनिहिताभिर्विद्याभिरेकवाक्यता दृश्यते प्ररोचनोपयोगात् प्रतिपत्तिसौकर्योपयोगाच्च। मैत्रेयीब्राह्मणे तावत्—"आत्मा वा अरे द्रष्टव्यः" इत्याद्यया विद्यया एकवाक्यता दृश्यते; प्रातर्दनेऽपि "प्राणोऽस्मि प्रज्ञात्मा" इत्याद्यया; "जानश्रुतिः" इत्यत्रापि "वायुर्वाव संवर्गः" इत्याद्यया—यथा "स आत्मनो वपामुदखिदत्" इत्येवमादीनां कर्मश्रुतिगतानामाख्यानानां संनिहितविधिस्तुत्यर्थता, तद्वत्। तस्मान्न पारिप्लवार्थत्वम् ॥ 10 15

प्रकटार्थविवरणम्

सन्निधिः श्रुत्या बाध्यत इत्यर्थः। पूर्वपक्षफलमाह—ततश्चेति ॥ प्रथमेऽहनि मनुर्वैवस्वतः, द्वितीयेऽहनि यमो वैवस्वतः, तृतीयेऽहनि वरुण आदित्यः, इत्यादिविशेषसङ्कीर्तनवैफल्यपरिहाराय सामान्यश्रुतेः सङ्कोचः कर्तव्य इति सिद्धान्ताशयः ॥ 20

तथा चैकवाक्यतोपबन्धात् ॥

किं विशेषत्वं [किंशेषत्वं] तर्हि आख्यानानामित्याशङ्क्याह—तथा चेति ॥ प्ररोचनमनुरागजननम्। उदखिदत् उद्धृतवान् होमायेति ॥

भाष्यम्

[ अग्नीन्धनाद्यधिकरणम् ]

# अत एव चाग्नीन्धनाद्यनपेक्षा ॥ ३-४-२५ ॥

"पुरुषार्थोऽतः शब्दात्" इत्येतत् व्यवहितमपि संभवात् "अतः"
5 इति परामृश्यते । अत एव च विद्यायाः पुरुषार्थहेतुत्वात् अग्नीन्धना-

प्रकटार्थविवरणम्

अत एव चाग्नीन्धनाद्यनपेक्षा ॥

प्रासङ्गिकविचारान्परिसमाप्याद्याधिकरणसम्बन्धमाह — पुरुषार्थोऽत
इति ॥ परविद्या विषयः; सा किमाश्रमकर्माणि फले[१]ऽपेक्षते[२] न वेति वादिवि-
10 प्रतिपत्तेः संशयः । करणस्येतिकर्तव्यताकाङ्क्षादर्शनात् विद्यायाश्च करणत्वाद-
स्त्यपेक्षेति पूर्वः पक्षः । सिद्धान्तस्तु—विद्या स्वकार्ये नेतिकर्तव्यतापेक्षा, प्रमा-
णत्वात्, अबोधनिवृत्तिः[वृत्ति]फलत्वाद्वा, शुक्तिज्ञानवदिति । करणत्वादित्यस्य
चाक्षसंयोगादौ व्यभिचारात् श्रौतभावनाकरणात्वादित्यस्य च धिष्यनभ्युप-
गमेनासिद्धत्वात्, विपक्षबाधकानुकूलतर्काभावेन चाप्रयोजकत्वात्, केवल-
15 विद्यानिन्दायाश्चापरिपक्वविद्याविषयत्वात् भावनायाः प्रत्ययार्थत्वापाकरणाच्च
यज्ञादिभिरुपकृत्य वेदनेन मोक्षं भावयेत् इति कल्पनानुपपत्तिः । किंच
प्राकरणिकशमादीतिकर्तव्यनिरपेक्षत्वात् भावनायां नेतिकर्तव्यभावेन यज्ञा-
द्यन्वयः, किं तु वेदनकरणतया । किं च काष्ठैः पचतीति परम्परया
करणेषु करणविभक्तिदर्शनाच्चित्तशुद्धिद्वारेण ज्ञानहेतुषु कर्मसु न करणत्वं
20 बाध्यते; मोक्षान्वये तु श्रुतित्यागः, ज्ञानकरणत्वपरिहारेणाश्रुतमोक्ष-
साधनत्वकल्पना च "नास्त्यकृतः कृतेन" इत्यादिश्रुतिविरुद्धा परिव्राजकेषु
देवादिषु च यज्ञादिरहितेष्वपि विद्यायाः मोक्षसाधनत्वाच्च समुच्चयासिद्धिः ।

१. T¹. स्वफले
२. T. वेक्षते
३. T, T¹ and TM. कर्तव्या
४. T, T¹ and TM. श्रुतज्ञान
५. A. विधिः

भाष्यम्

दीन्याश्रमकर्माणि विद्यया स्वार्थसिद्धौ नापेक्षितव्यानीति आग्रस्यैवाधि-करणस्य फलमुपसंहरत्यधिकविवक्षया ॥

[ सर्वापेक्षाधिकरणम् ]

## सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ ३-४-२६ ॥ 5

इदमिदानीं चिन्त्यते—किं विद्याया अत्यन्तमेवानपेक्षा आश्रमकर्म-णाम्, उतास्ति काचिदपेक्षेति । तत्र अत एवाग्नीन्धनादीन्याश्रम-

प्रकटार्थविवरणम्

न च "विद्यां चाविद्यां च" इत्येकफलोपाधौ साहित्यम् "अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते" इति फलभेदावगमात् । किं तु उपायोपेयभावात् 10 साहित्यवाचोयुक्तिः । तेनैति ब्रह्मवित्पुण्यकृदिति[1] च ज्ञानपुण्यकर्मणोः क्रम-समुच्चयोऽभिप्रेतः "न तत्र दक्षिणा यन्ति" इति कर्मिणां गतिषेधात्, समुच्चये प्रमाणाभावाच्च न केवलकर्मविषयत्वं प्रतिषेधस्य ॥

"तत्प्राप्तिहेतुर्ज्ञानं च कर्म चोक्तं महामुने । यथान्नं मधुसंयुक्तम्" इत्यादिस्मृतीनामपरिपक्वात्मज्ञानग्याश्रमकर्मणां च तत्त्वसाक्षात्कारे साहित्य- 15 विषयात्[यत्वात्] अन्यथा "तमेव विदित्वा" "प्लवा ह्येते" इत्यादिविरोधः । किंच ब्रह्मात्मताविद्यानिवृत्ती न कर्मसाध्ये, ब्रह्मात्मताया नित्यत्वात्, अविद्यानिवृत्तेश्च ज्ञानैकनिवर्त्यत्वात्, कर्मवासना च ज्ञानेनैव निवर्तते "भिद्यते हृदयग्रन्थिः" इत्यादिश्रवणात्, शरीरद्वयस्य कर्माभावेनैवाभावसिद्धिः । तस्मात् प्राणाभावात्प्रयोजनाभावाच्च न ज्ञानस्याग्निकार्याश्रमकर्मापेक्षेति[2] ॥ 20

सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥

अधिकविवक्षयेत्युक्तं[3] दर्शयति–इदमिदानीमिति ॥ यथा पूर्वत्र विद्यायाः फलसिद्धौ नास्ति कर्मापेक्षेत्युक्तम्. एवं विद्यायाः स्वोत्पत्तावपि नास्त्येव

१. A. पुण्यकृत्तेजसश्च

२. T, T¹ and TM. कार्याद्याश्रम

३. T¹ विषयेत्युक्तं

४. A adds तत्

भाष्यम्

कर्माणि विद्यया स्वार्थसिद्धौ नापेक्ष्यन्ते; एवमत्यन्तमेवानपेक्षायां प्राप्तायाम्, इदमुच्यते—सर्वापेक्षा चेति; अपेक्षते च विद्या सर्वाण्याश्रमकर्माणि, नात्यन्तमनपेक्षैव । ननु विरुद्धमिदं वचनम्—अपेक्षते
5 चाश्रमकर्माणि विद्या, नापेक्षते चेति । नेति ब्रूमः; उत्पन्ना हि विद्या फलसिद्धिं प्रति न किंचिदन्यदपेक्षते, उत्पत्तिं प्रति तु अपेक्षते; कुतः? यज्ञादिश्रुतेः; तथा हि श्रुतिः—"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन" इति, यज्ञादीनां विद्यासाधन-

प्रकटार्थविवरणम्

10 कर्मापेक्षा, प्रमाणत्वात् स्वकारणमात्रायत्तत्वात्, केवलव्यतिरेकाभावादित्येवं प्राप्ते सिद्धान्तमाह— सर्वापेक्षा चेति ।। चोद्यमिव कृत्वा सिद्धान्तं स्फुटीकरोति—ननु विरुद्धमित्यादिना ।। यद्यपि प्रथमं शाब्दं प्रमाणज्ञानं प्रमाणादेव भविष्यतीत्यपरोक्षज्ञानस्यापि प्रमाणादेवोत्पत्तिः केवलव्यतिरेकाभावात् प्राप्ता, तथाप्यागमस्य केवलव्यतिरेकानपेक्षत्वात् यज्ञादीनां तत्त्वदर्शि-
15 नस्य च साध्यसाधनभावस्यापूर्वत्वात्, पञ्चमलकारपरिग्रहेण ब्रह्मानुभवकामो यज्ञादीन्यनुतिष्ठेदिति विधानाददृष्टसहकृताद्वाक्यादनुभव उत्पत्स्यते धर्मसहकृतादिव विषयेन्द्रियसंपर्कात् सुखम्; परोक्षज्ञानहेतुरपि शब्दः कर्मादिपरिमार्जितप्रत्यक्प्रवणेन शमादिनिरुद्धविपरीतप्रवृत्तिप्रतिबन्धकेन प्रत्ययाभ्यासजनितसंस्कारप्रचयनिर्मितब्रह्मैकाग्रवृत्तिचित्तदर्पणेन सहकारिणानुगृहीतोऽपरोक्ष-
20 ज्ञानमुत्पादयति शास्त्रीयसंस्कारसंस्कृताग्न्यधिकरण इव होमोऽपूर्वम्, पूर्वानुभवसंस्कारसहित इवाक्षसंयोगोऽभिज्ञातिरिक्तां प्रत्यभिज्ञाम् । तस्माददृष्टसहकृतशब्दसाध्यत्वादपरोक्षज्ञानस्य यज्ञादिसाध्यत्वं न विरुध्यते । तदेतदाह—यज्ञादीनामिति ।।

१. T शास्त्रं     ३. A. जनित
२. TM. निरूढ

भाष्यम्

भावं दर्शयति ; विविदिषासंयोगात्त्वेषामुत्पत्तिसाधनभावोऽवसीयते ; "अथ यद्यज्ञ इत्याचक्षते ब्रह्मचर्यमेव तत्" इत्यत्र च विद्यासाधनभूतस्य ब्रह्मचर्यस्य यज्ञादिभिः संस्तवात् यज्ञादीनामपि हि साधनभावः सूच्यते ;

"सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति । 5
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीमि ॥"

इत्येवमाद्या च श्रुतिः आश्रमकर्मणां विद्यासाधनभावं सूचयति ; स्मृतिरपि—

"कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः ।
कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते ॥" 10

इत्येवमाद्या । अश्ववदिति योग्यतानिदर्शनम्—यथाच योग्यतावशेन अश्वो न लाङ्गलाकर्षणे युज्यते, रथचर्यायां तु युज्यते, एवमाश्रमकर्माणि विद्यया फलसिद्धौ नापेक्ष्यन्ते, उत्पत्तौ च अपेक्ष्यन्त इति ॥

प्रकटार्थविवरणम्

इतोऽपि यज्ञादीनां साधनत्वमित्याह — विविदिषेति ॥ यज्ञादिभिरा- 15 त्मानं विविदिषन्ति वेदितुमिच्छन्तीति यज्ञादीनां वैभक्तिकविविदिषासंयोगात् । अर्थस्तु "प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः सनोऽन्यत्र" इति कारणादिच्छमाणतया प्राधान्याच्च ज्ञानेनैव संबन्धः, काष्ठेन पिपक्षति शस्त्रेण लुलूषति इतिवदित्यर्थः । अश्वेन जिगमिषतीत्यत्राप्यश्वस्य गमनसाधनतैव गमनक्रियाया एव च प्राप्तौ संयोगेऽनपेक्षकारणत्वमिति । यज्ञादीनां साध- 20 नत्वे लिङ्गमाह—अथ यद्यज्ञ इति ॥ वेदान्तानां सम्यग्ज्ञानसाधनत्वे वाक्यमाह—सर्वे वेदा यत्पदमामनन्तीति ॥ तपांसि आश्रमकर्माणि सर्वाणि यत्प्रतिपत्त्यर्थानि वदन्तीति कर्मणां विद्यासाधनत्वे लिङ्गमित्यर्थः । स्मृत्यनुसारेणापि कर्मणां ज्ञानोत्पत्तिसाधनतैवेत्याह—स्मृतिरपीति ॥ कषायस्य च पाचकत्वात् कर्माणि पक्तिरित्युच्यते । परमगतेः कैवल्यस्य साधनत्वात् ज्ञानं 25 परमगतिरित्यर्थः । दृष्टान्तस्यार्थमाह—अश्ववदिति ॥

१. T and T¹. कषायस्यापाचक    २. T¹. पक्तिरित्यु

भाष्यम्

## शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ॥ ३-४-२७ ॥

यदि कश्चिन्मन्येत—यज्ञादीनां विद्यासाधनभावो न न्याय्यः,
5 विध्यभावात्; "यज्ञेन विविदिषन्ति" इत्येवंजातीयका हि श्रुतिः
अनुवादस्वरूपा विद्याभिष्टवपरा, न यज्ञादिविधिपरा—इत्थं महा-
भागा विद्या, यत् यज्ञादिभिरेतामवाप्तुमिच्छन्तीति—तथापि तु शम-
दमाद्युपेतः स्यात् विद्यार्थी, "तस्मादेवंविच्छान्तो दान्त उपरतस्ति-
तिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्यति" इति विद्यासाधनत्वेन
10 शमदमादीनां विधानात्, विहितानां च अवश्यानुष्ठेयत्वात्। ननु
अत्रापि शमाद्युपेतो भूत्वा पश्यतीति वर्तमानापदेश उपलभ्यते, न
विधिः—नेति ब्रूमः, "तस्मात्" इति प्रकृतप्रशंसापरिग्रहाद्विधित्व-
प्रतीतेः; "पश्येत्" इति च माध्यंदिना विस्पष्टमेव विधिमधीयते।
तस्मात् यज्ञाद्यनपेक्षायामपि शमादीन्यपेक्षितव्यानि। यज्ञादीन्यपि

15 प्रकटार्थविवरणम्

शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ॥

सूत्रस्य शङ्कामाह— यदि कश्चिदित्यादिना ॥ विद्यास्तावकत्वेनाप्यर्थ-
वत्त्वे संभवति न वर्तमानताभङ्गेन विधिकल्पनं न्याय्यम्, वाक्यभेदप्रसङ्गात्;
अतः शब्दमात्रलभ्या विद्येति शङ्काशयः। यद्यप्येवं तवाभिप्रायः, तथाप्यवश्यं
20 साधनान्तरमनुष्ठेयम्; न शब्दमात्रलभ्या विद्येत्याह—तथापि त्विति ॥ यस्मा-
देवमात्मानं विदित्वा "न लिप्यते कर्मणा पापकेन" तस्मादेवं विदित्वा
अर्थी शमाद्युपेतो भूत्वा विचारयेदित्यवगम्यते इत्याह—नेति ब्रूम इति ॥
काण्वपाठे विधिमुक्त्वा माध्यन्दिनपाठे तु न संशय इत्याह— पश्येदि
ति चेति ॥ यज्ञादीनामसाधनत्वाशङ्कामापाततोऽभ्युपगम्य साधनान्तरापे
25 क्षोक्ता; साप्ययुक्तैवेत्याह—यज्ञादीन्यपीति ॥ सत्यपि महावाक्यस्यैक्ये

### भाष्यम्

तु अपेक्षितव्यानि, यज्ञादिश्रुतेरेव । ननु उक्तम्—यज्ञादिभिर्विविदिषन्तीत्यत्र न विधिरुपलभ्यत इति—सत्यमुक्तम्, तथापि अपूर्वत्वात्संयोगस्य विधिः परिकल्प्यते ; न हि अयं यज्ञादीनां विविदिषासंयोगः पूर्वं प्राप्तः, येनानूद्येत ; "तस्मात्पूषा प्रपिष्टभागोऽदन्तको हि" 5
इत्येवमादिषु च अश्रुतविधिकेष्वपि वाक्येषु अपूर्वत्वाद्विधिं परिकल्प्य, "पौष्णं पेषणं विकृतौ प्रतीयेत" इत्यादिविचारः प्रथमे तन्त्रे प्रवर्तितः ; तथा च उक्तम्—"विधिर्वा धारणवत्" इति । स्मृतिष्वपि भगवद्गीतासु अनभिसंधाय फलमनुष्ठितानि यज्ञादीनि मुमुक्षोर्ज्ञानसाधनानि भवन्तीति प्रपञ्चितम् । तस्माद्यज्ञादीनि शमदमादीनि च 10
यथाश्रमं सर्वाण्येव आश्रमकर्माणि विद्योत्पत्तावपेक्षितव्यानि । तत्रापि "एवंवित्" इति विद्यासंयोगात् प्रत्यासन्नानि विद्यासाधनानि शमादीनि, विविदिषासंयोगात्तु बाह्यतराणि यज्ञादीनीति विवेक्तव्यम् ॥

### प्रकटार्थविवरणम्

अनुष्ठानयोग्यापूर्वार्थविधानमवान्तरवाक्येन क्रियते ; न तत्र वाक्यभेद इत्यत्र 15
पूर्वतन्त्रसंमतिमाह — तस्मात्पूषेति ॥ दर्शपूर्णमासप्रकरणे श्रूयते "तस्मात्पूषा प्रपिष्टभागः" इत्यादि । तत्र पूष्णः प्रपिष्टद्रव्यसंबन्धः समासात्प्रतीतः ; पूषा देवता पिष्टभागो वा द्रव्यं न दर्शपूर्णमासयोरस्तीति तदेकवाक्यतायोगात् कालत्रयानवसृष्टद्रव्यदेवतासंबन्धस्य चाविनाभावेन यागविध्युपस्थापकत्वाव्यवहारसिद्धये विधिपदमध्याहृत्य प्रकरणादुत्कर्षेण पूषोद्देशेन पिष्टभागः 20
कर्तव्य इति विकृतौ संबन्धाभ्युपगमः "पौष्णं पेषणं विकृतौ प्रतीयेताचोदना प्रकृतौ" इत्यस्मिन्नधिकरण इत्यर्थः । स्मृत्यनुसारेणापि अवान्तरवाक्यस्य विधायकत्वं वक्तव्यमित्याह—स्मृतिष्वपीति ॥ यस्माच्छ्रुतिसिद्धं कर्मणां ज्ञानोत्पत्तिसाधनत्वं तस्मादित्युपसंहारः । ननु यज्ञादीनां विद्यासाधनत्वमङ्गीकृतं चेत् तर्हि यावद्विद्योदयं यज्ञाद्यनुष्ठानं प्रसज्येत शमाद्यनुष्ठानवदित्याशङ्क्याह— 25
तत्राप्येवंविदिति ॥ यद्यपि शमादीनां यज्ञादीनां च निरूप्यमाणे विद्यासाधनत्वमविशिष्टं प्रत्येकं यज्ञादिषु करणविभक्तिश्रवणात्, तथाप्यापाततः शमादी-

भाष्यम्

[ सर्वान्नानुमत्यधिकरणम् ]

## सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ ३-४-२८ ॥

प्राणसंवादे श्रूयते छन्दोगानाम्—"न ह वा एवंविदि किंचनानन्नं भवति" इति; तथा वाजसनेयिनाम्—"न ह वा अस्यानन्नं जग्धं भवति नानन्नं प्रतिगृहीतम्" इति; सर्वमेवास्यादनीयमेव भवतीत्यर्थः। किमिदं सर्वान्नानुज्ञानं शमादिवत् विद्याङ्गं विधीयते, उत स्तुत्यर्थं संकीर्त्यत इति संशये—विधिरिति तावत्प्राप्तम्; तथा हि प्रवृत्तिविशेषकर
10 उपदेशो भवति, अतः प्राणविद्यासंनिधानात् तदङ्गत्वेन इयं नियमनिवृत्ति-

प्रकटार्थविवरणम्

नामेवंवित्संबन्धप्रतीतेः दृष्टेनैव च चित्तस्यान्यथाप्रवृत्तिनिरोधेनोपकारकत्वादन्तरङ्गत्वम्; यज्ञादीनां च आपाततो विविदिषासंबन्धप्रतीतेरदृष्टेन चात्मना चित्तशुद्धिं प्रत्यक्प्रवणतां चोत्पाद्य ज्ञानसाधनत्वात् प्रत्यक्प्रवणताद्वारकार्यमुपलभ्योपरमसंभवात् बहिरङ्गत्वम्। अतः क्रमेण कर्मतत्त्यागयोर्ज्ञानसाधनत्वमित्यर्थः ॥
(15)

सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥

प्राणविदः सर्वान्नत्वं विषय इति दर्शयति—प्राणसंवाद इति ॥ जग्धं भक्षितम्। अपूर्वत्वाद्विध्यश्रवणाच्च संशये सति पूर्वपक्षमाह— विधिरिति ॥
20 पूर्वाधिकरणोक्तशमादिवत् "एवंवित्" इति विद्वत्संबन्धित्वेन सर्वान्नभक्षणस्य

१. TM. दृष्टेनैव
२. T, TM and A. विरोधेन
३. T, T¹ and TM. कारत्वात्
४. T. कार्यमुपलभ्यो
TM. कार्यमुपलभ्य्वा पर-
A. कार्यतामुपलभ्यैव रम-
५. A omits क्रमेण कर्म
६. T, TM and A. कर्मतत्त्याग

भाष्यम्

रुपदिश्यते । ननु एवं सति भक्ष्याभक्ष्यविभागशास्त्रव्याघातः स्यात्—नैष दोषः, सामान्यविशेषभावात् बाधोपपत्तेः; यथा प्राणिहिंसाप्रतिषेधस्य पशुसंज्ञपनविधिना बाधः, यथा च "न कांचन परिहरेत्तद्व्रतम्" इत्यनेन वामदेव्यविद्याविषयेण सर्वस्त्र्यपरिहारवचनेन सामान्यविषयं गम्यागम्यविभागशास्त्रं बाध्यते—एवमनेनापि प्राणविद्याविषयेण सर्वान्नभक्षणवचनेन भक्ष्याभक्ष्यविभागशास्त्रं बाध्येतेत्येवं प्राप्ते ब्रूमः— 5

नेदं सर्वान्नानुज्ञानं विधीयत इति; न हि अत्र विधायकः शब्द उपलभ्यते, "न ह वा एवंविदि किंचनानन्नं भवति" इति वर्तमानापदेशात् । न च असत्यामपि विधिप्रतीतौ प्रवृत्तिविशेषकरत्व- 10
लोभेनैव विधिरभ्युपगन्तुं शक्यते । अपि च श्वादिमर्यादं प्राणस्यान्नमित्युक्त्वा, इदमुच्यते—नैवंविदः किंचिदनन्नं भवतीति । न च श्वादिमर्यादमन्नं मानुषेण देहेनोपभोक्तुं शक्यते; शक्यते तु प्राणस्यान्नमिदं सर्वमिति विचिन्तयितुम् । तस्मात् प्राणान्नविज्ञानप्रशंसार्थोऽयमर्थवादः,

प्रकटार्थविवरणम् 15

समाम्नानादन्नविधिरित्यर्थः । सर्वान्नानुत्वं प्राणविद्याङ्गं चेत्तर्हि "कलञ्जं न भक्षयेत्" इत्यादिशास्त्रं विरुध्येतेत्याह—नन्वेवं सतीति ॥ प्राणविद्व्यतिरिक्तविषयं तच्छास्त्रमिति न विरोध इत्याह—नैष दोष इति ॥

उत्सूत्रमेव सिद्धान्तमाह— नेदमिति ॥ यदुक्तं विशेषविधिकल्पनम्, तत्राह — न चासत्यामपीति ॥ श्रूयमाणस्य विशेषविधेः सामान्य- 20
विधिबाधकत्वं युक्तम् । विशेषविधिकल्पना तु सामान्यविधिनापि बाध्यते, अविरोधापेक्षत्वात् कल्पनाया इत्यर्थः । अशक्यविधानत्वाच्च सर्वान्नभक्षणं स्तुतिरित्याह — अपि चेति ॥ उक्तेऽर्थे सूत्रसंमतिमाह —

भाष्यम्

न सर्वान्नानुज्ञानविधिः। तद्दर्शयति—"सर्वान्नानुमतिश्च प्राणात्यये" इति; एतदुक्तं भवति—प्राणात्यय एव हि परस्यामापदि सर्वमन्नमदनीयत्वेनाभ्यनुज्ञायते, तद्दर्शनात्; तथाहि श्रुतिः चाक्रायणस्य ऋषेः
5 कष्टायामवस्थायाम् अभक्ष्यभक्षणे प्रवृत्तिं दर्शयति — "मटचीहतेषु कुरुषु" इत्यस्मिन्ब्राह्मणे—चाक्रायणः किल ऋषिः आपद्गत इभ्येन सामिखादितान्कुल्माषांश्चखाद; अनुपानं तु तदीयम् उच्छिष्टदोषात्प्रत्याचचक्षे; कारणं चात्रोवाच "न वा अजीविष्यमिमानखादन्" इति, "कामो म उदपानम्" इति च; पुनश्चोत्तरेद्युः तानेव स्वप-
10 रोच्छिष्टान्पर्युषितान्कुल्माषान् भक्षयांबभूव—इति, तदेतत् उच्छिष्टोच्छिष्टपर्युषितभक्षणं दर्शयन्त्याः श्रुतेः आशयातिशयो लक्ष्यते—प्राणात्ययप्रसङ्गे प्राणसंधारणाय अभक्ष्यमपि भक्षयितव्यमिति; स्वस्थाव-

प्रकटार्थविवरणम्

तद्दर्शयतीति ॥ मटच्यः[1] शनयः; ताभिर्हतेषु कुरुसस्येषु[2] दुर्भिक्षे सञ्जाते सह
15 जायवाटित्वा[3] अनुपजातपयोधरादिस्त्रीव्यञ्जनया देशान्तरं प्रतिचक्रमे चाक्रायणः। स च कदाचित् इभ्यग्रामे वासं चक्रे; स तत्रेभ्येन हस्त्यारोहेण सामिखादितानर्धभक्षितान् कुत्सितान् माषान् भक्षितवानित्यर्थः। अनुपानं गृहाणेतीभ्येनोक्ते 'उच्छिष्टं वै मे पीतं स्यादिति होवाच' किमेतेऽप्युच्छिष्टा न भवन्तीत्युक्ते कारणं चात्रोक्तवानित्यर्थः। कामं स्वेच्छातः;
20 मे मम तटाकादिषूदकपानं भविष्यतीत्यर्थः। स्वयं खादित्वा परिशिष्टान्[4] जायार्थमाजहार। तथा च निहितानुत्तरदिने भक्षितवानित्याह—पुनश्चेति ॥ अस्याः श्रुतेरभिप्रायमाह—तदेतदिति ॥[5]

१. T and T¹. माचोऽशनयः
A. माटच्योऽशनयः

२. TM. कुरुदसस्येषु

३. TM. जाययादित्यानुप
A. जायया टिकानुप

४. A. परिशिष्टं

५. A adds तत्र तमेतमिति। आश्रमकर्मतया नित्यत्वं विद्यासाधनतया चानित्यत्वमिति कार्यत्वमित्येवमुभयसंबन्धो विरुद्ध इत्यर्थः and does not omit the passage later on where it occurs.

भाष्यम्

स्थायां तु तत्र कर्तव्यं विद्यावतापि—इत्यनुपानमत्याख्यानाद्गम्यते। तस्मादर्थवादः "न ह वा एवंविदि" इत्येवमादिः ॥

## अबाधाच्च ॥ ३-४-२९ ॥

एवं च सति "आहारशुद्धौ सत्त्वशुद्धिः" इत्येवमादि भक्ष्याभक्ष्य- 5
विभागशास्त्रम् अबाधितं भविष्यति ॥

## अपि च स्मर्यते ॥ ३-४-३० ॥

अपि च आपदि सर्वान्नभक्षणमपि स्मर्यते विदुषोऽविदुषश्च अविशेषेण—

"जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः। 10
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥"

इति। तथा "मद्यं नित्यं ब्राह्मणः" "सुरापस्य ब्राह्मणस्योष्णामासिञ्चेयुः" "सुरापाः क्रिमयो भवन्त्यभक्ष्यभक्षणात्" इति च—स्मर्यते वर्जनमन्नस्य ॥

## शब्दश्चातोऽकामकारे ॥ ३-४-३१ ॥ 15

शब्दश्च अनन्नस्य प्रतिषेधकः कामकारनिवृत्तिप्रयोजनः काठकानां संहितायां श्रूयते—"तस्माद्ब्राह्मणः सुरां न पिबेत्" इति। सोऽपि "न ह वा एवंविदि" इत्यस्यार्थवादत्वात् उपपन्नतरो भवति। तस्मादेवंजातीयका अर्थवादा न विधय इति ॥

प्रकटार्थविवरणम् 20

अबाधाच्च ॥

अपि च स्मर्यते ॥

शब्दश्चातोऽकामकारे ॥

सर्वान्नभक्षणस्यार्थवादत्वे हेत्वन्तरमाह—अबाधाच्चेत्यादिना ॥

भाष्यम्

[ आश्रमकर्माधिकरणम् ]

## विहितत्वाच्चाश्रमकर्मापि ॥ ३-४-३२ ॥

"सर्वापेक्षा च" इत्यत्र आश्रमकर्मणां विद्यासाधनत्वमवधारितम् ; इदानीं तु किममुमुक्षोरप्याश्रममात्रनिष्ठस्य विद्यामकामयमानस्य तान्यनुष्ठेयानि, उताहो नेति चिन्त्यते । तत्र "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति" इत्यादिना आश्रमकर्मणां विद्यासाधनत्वेन विहितत्वात् विद्यामनिच्छतः फलान्तरं कामयमानस्य नित्यान्यननुष्ठेयानि ; अथ तस्याप्यनुष्ठेयानि, न तर्हि एषां विद्यासाधनत्वम्, नित्यानित्यसंयोगविरोधात् — इत्यस्यां प्राप्तौ, पठति— आश्रममात्रनिष्ठस्याप्यमुमुक्षोः कर्तव्यान्येव नित्यानि कर्माणि, "यावज्जीवमग्निहोत्रं जुहोति" इत्यादिना विहितत्वात् ; न हि वचनस्यातिभारो नाम कश्चिदस्ति ॥

अथ यदुक्तम्—नैवं सति विद्यासाधनत्वमेषां स्यादिति, अत उत्तरं पठति—

प्रकटार्थविवरणम्

विहितत्वाच्चाश्रमकर्मापि ॥

व्यवहितेन संबन्धमाह—सर्वापेक्षा चेति ॥ विनियुक्तविनियोगविरोधाद्विनियोगदर्शनाच्च संशये पूर्वपक्षमाह —तत्र तमेतमिति ॥ आश्रमकर्मतया नित्यत्वं विद्यासाधनतया चानित्यत्वमिति काम्यत्वमित्येवमुभयसंबन्धो विरुद्ध इत्यर्थः । अपां प्रणयनस्य यथा स्वरूपेण दर्शपूर्णमासक्रत्वर्थत्वं गोदोहनोपरक्ततया पश्वर्थत्वं चोभयविधविनियोगसामर्थ्यात्, तथेहापि उभयविधविनियोगसामर्थ्यान्नित्यता विद्यार्थता च न विरुध्यत इति सिद्धान्तमाह— आश्रममात्रनिष्ठस्यापीति ॥

१. TM omits विरुद्धः and adds अपि  A. विरुद्धस्त्वित्यर्थः

भाष्यम्

## सहकारित्वेन च ॥ ३-४-३३ ॥

विद्यासहकारीणि च एतानि स्युः विहितत्वादेव "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति" इत्यादिना; तदुक्तम्—"सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इति । न चेदं विद्यासहकारित्ववचनमाश्रमकर्मणां प्रयाजादिवत् विद्याफलविषयं मन्तव्यम्, अविधिलक्षणत्वाद्विद्यायाः, असाध्यत्वाच्च विद्याफलस्य; विधिलक्षणं हि साधनं दर्शपूर्णमासादि स्वर्गफलसिसाधयिषया सहकारिसाधनान्तरम् अपेक्षते, नैवं विद्या; तथा चोक्तम् "अत एव चाग्नीन्धनाद्यनपेक्षा" इति; तस्मादुत्पत्तिसाधनत्व एव एषां सहकारित्ववाचोयुक्तिः । न च अत्र नित्यानित्यसंयोगविरोध आशङ्क्यः, कर्माभेदेऽपि संयोगभेदात्; नित्यो हि एकः संयोगो यावज्जीवादिवाक्यकल्पितः, न तस्य विद्याफलत्वम्; अनित्यस्तु अपरः संयोगः "तमेतं वेदानुवचनेन" इत्यादिवाक्यकल्पितः, तस्य विद्याफलत्वम्—यथा एकस्यापि खादिरत्वस्य नित्येन संयोगेन क्रत्वर्थत्वम्, अनित्येन संयोगेन पुरुषार्थत्वम्, तद्वत् ॥

प्रकटार्थविवरणम्

### सहकारित्वेन च ॥

सहकारिशब्दश्रवणात् फलोपकार्यङ्गत्वं प्राप्तम्; तन्निरस्यति — न चेदमिति ॥ प्रधानं स्वकार्ये न चोदितापेक्षम्, अचोदितत्वात्, मर्दनवत्; तथा विद्या स्वफले नेतिकर्तव्यापेक्षा, स्वरूपतोऽसाध्यफलत्वात्, कूपखनकव्यापारवदित्यर्थः । व्यतिरेकोदाहरणेन प्रकटयति—विधिलक्षणं हीति ॥ परोक्तमुद्भाव्य परित्यजति—न चात्रेति ॥ तुल्यबलश्रुतिद्वयेन पृथक्संबन्धावगमः संयोगभेदः; तस्मान्नोभयथाभावो विरुध्यत इत्यर्थः । "एकस्य तूभयत्वे संयोगपृथक्त्वम्" इत्यत्रैतन्निरूपितमित्युदाहरणेनाह —यथैकस्यापीति ॥ "खादिरे पशुं बध्नाति" इति नित्य एकः संयोगः; "खादिरं वीर्यकामस्य यूपं कुर्यात्"

भाष्यम्

## सर्वथापि त एवोभयलिङ्गात् ॥ ३-४-३४ ॥

सर्वथापि आश्रमकर्मत्वपक्षे विद्यासहकारित्वपक्षे च, त एव अग्निहोत्रादयो धर्मा अनुष्ठेयाः । "त एव" इत्यवधारयन्नाचार्यः किं निवर्तयति? कर्मभेदशङ्कामिति ब्रूमः ; यथा कुण्डपायिनामयने "मासमग्निहोत्रं जुहोति" इत्यत्र नित्यादग्निहोत्रात्कर्मान्तरमुपदिश्यते, नैवमिह कर्मभेदोऽस्तीत्यर्थः । कुतः? उभयलिङ्गात्—श्रुतिलिङ्गात्स्मृतिलिङ्गाच्च । श्रुतिलिङ्गं तावत्—"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति" इति सिद्धवदुत्पन्नरूपाण्येव यज्ञादीनि विविदिषायां विनि-
10 युङ्क्ते, न तु "जुहोति" इत्यादिवत् अपूर्वमेषां रूपमुत्पादयतीति । स्मृतिलिङ्गमपि—"अनाश्रितः कर्मफलं कार्यं कर्म करोति यः" इति

प्रकटार्थविवरणम्

इत्यपरः काम्यः संयोगः ; तदेतत् संयोगपृथक्त्वमेकस्य नित्यत्वे काम्ये च निमित्तमित्यर्थः ॥

15 सर्वथापि त एवोभयलिङ्गात् ॥

कौण्डपायिनामग्निहोत्रस्य प्रकरणभेदात् प्रसिद्धादग्निहोत्रात्कर्मान्तरत्ववत् प्रकरणभेदादेव प्रसिद्धेभ्योऽग्निहोत्रादिभ्यः कर्मान्तराण्येव विविदिषन्तीति विद्यासंयुक्ततया विधीयन्त इति शङ्कां निवर्तयति—सर्वथापीति ॥ यज्ञदानतपःशब्दानां लौकिकाभिधानतया स्वातन्त्र्येण प्रकरणान्तरविहिताग्निहोत्रादि-
20 परामर्शकत्वसंभवात् प्रसिद्धकर्मानुवादेन विद्यासंयोगमात्रं विधीयते । कौण्डपायिनामयने तु अग्निहोत्रशब्दस्याख्यातपरतन्त्रतया तदुक्तार्थाभिधायिनो देशान्तरवर्त्यग्निहोत्रस्य स्वातन्त्र्येण परामर्शकत्वायोगात् जुहोतेश्चाख्यातस्य सन्निहितद्रव्यगुणादिनिरूपितं कर्मान्तरं विहाय असन्निहिताग्निहोत्रपरामर्शकत्वानुपपत्तेः कर्मान्तरमेव विहितमिति युक्तमित्याह—श्रुतिलिङ्गं तावदिति ॥
25 नित्यान्येव कर्माणि मलापकर्षणगुणाधानलक्षणसंस्कारद्वारेण आत्मज्ञानार्थानि

१. T and T[1]. एतस्य २. T[1] adds तत्

भाष्यम्

विज्ञातकर्तव्यताकमेव कर्म विद्योत्पत्त्यर्थं दर्शयति ; "यस्यैतेऽष्टाचत्वारिंशत्संस्काराः" इत्याद्या च संस्कारत्वप्रसिद्धिः वैदिकेषु कर्मसु तत्संस्कृतस्य विद्योत्पत्तिमभिप्रेत्य स्मृतौ भवति । तस्मात्साध्विदमभेदावधारणम् ॥   5

## अनभिभवं च दर्शयति ॥ ३-४-३५ ॥

सहकारित्वस्यैव एतदुपोद्बलकं लिङ्गदर्शनम् । अनभिभवं च दर्शयति श्रुतिः ब्रह्मचर्यादिसाधनसंपन्नस्य रागादिभिः क्लेशैः—"एष ह्यात्मा न नश्यति यं ब्रह्मचर्येणानुविन्दते" इत्यादिना । तस्मात् यज्ञादीन्याश्रमकर्माणि च भवन्ति विद्यासहकारीणि चेति निश्चितम् ॥   10

प्रकटार्थविवरणम्

भवन्तीत्यत्र स्मृतिलिङ्गान्तरमाह—अष्टाचत्वारिंशदिति ॥ गर्भाधानपुंसुवनसीमन्तोन्नयनजातकर्मनामकरणबहिर्निष्क्रमणान्नप्राशनचौलकर्णवेधोपनयनमेधाजननानि अष्टौ वेदव्रतानि ; स्नानं सहधर्मचारिणीसंयोगः पञ्चानां यज्ञानामनुष्ठानम् ; सप्त सोमसंस्थाः अग्निष्टोमः अत्यग्निष्टोमः उक्थ्यः षोडशी वाजपेयः   15
अतिरात्रः अप्तोर्याम इति ; सप्त हविर्यज्ञसंस्थाः अग्न्याधानम् अग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि आग्रयणेष्टिः पशुबन्धः सौत्रामणी चेति; अष्टकाः पार्वणश्राद्धम् श्रावणी आग्रहायणी चैत्री आश्वयुजी चेति सप्त पाक[पाकयज्ञ]संस्थाः ; अनश्नन् संहिताध्ययनप्रायणकर्म जपोत्क्रमणौर्ध्वदैहिकभस्मसमूहनास्थिसञ्चयनश्राद्धादीन्यष्टाचत्वारिंशत्संस्काराः नित्यानि कर्माणि स्वतः पुण्यलोकावाप्ति-   20
फलान्यपि ज्ञानकामेनानुष्ठीयमानानि ज्ञानार्थानि भवन्तीत्युक्तसाधनार्थद्रव्यातिशयाभिधायिसंस्कारश्रुतिबलात् ॥

अनभिभवं च दर्शयति ॥

इदानीं ब्रह्मचर्यादेराश्रमकर्मणः प्रतिबन्धकव्युदासेन ज्ञानसाधनत्वं संभवतीत्यत्र लिङ्गमाह—अनभिभवं चेति ॥   25

१. TM and A omit अग्निष्टोमः... अनश्नन्

२. TM and A. इत्युक्तं इदानीं

३. T¹. असंभवश्चेति

भाष्यम्

[ विधुराद्यधिकरणम् ]

## अन्तरा चापि तु तद्दृष्टेः ॥ ३-४-३६ ॥

विधुरादीनां द्रव्यादिसंपद्रहितानां च अन्यतमाश्रमप्रतिपत्तिहीनाना-
5 मन्तरालवर्तिनां किं विद्यायामधिकारोऽस्ति, किं वा नास्ति—इति
संशये, नास्तीति तावत्प्राप्तम्, आश्रमकर्मणां विद्याहेतुत्वावधारणात्,
आश्रमकर्मासंभवाच्चैतेषाम्—इत्येवं प्राप्ते, इदमाह—अन्तरा चापि तु—
अनाश्रमित्वेन वर्तमानोऽपि विद्यायामधिक्रियते; कुतः? तद्दृष्टेः—
रैक्ववाचक्नवीप्रभृतीनामेवंभूतानामपि ब्रह्मवित्त्वश्रुत्युपलब्धेः ॥

10

## अपि च स्मर्यते ॥ ३-४-३७ ॥

संवर्तप्रभृतीनां च नग्नचर्यादियोगात् अनपेक्षिताश्रमकर्मणामपि महा-
योगित्वं स्मर्यत इतिहासे ॥

ननु लिङ्गमिदं श्रुतिस्मृतिदर्शनमुपन्यस्तम्; का नु खलु प्राप्ति-
रिति, साभिधीयते—

15 प्रकटार्थविवरणम्

अन्तराचापि तु तद्दृष्टेः ॥

अपि च स्मर्यते ॥

एवं तावदाश्रमकर्मणां ज्ञानसाधनत्वमुक्त्वाधुनानाश्रमिकर्मणामपि
ज्ञानसाधनत्वं दर्शयितुं विचारमारभते—विधुरादीनामिति ॥ अनाश्रमिणां
20 कर्मित्वप्रसिद्धेः निन्दाप्रसिद्धेश्च संशये पूर्वपक्षमाह—नास्तीति ॥ श्रुतिस्मृत्य-
वष्टम्भेन सिद्धान्तमाह—अन्तरा चापीति ॥

उत्तरसूत्रमवतारयति—ननु लिङ्गमिदमिति ॥ आश्रमधर्माभावेऽपि वर्ण-
धर्मविशेषैः अनुग्रहः विद्यालाभः संभवतीत्यर्थः । मित्रे भवो मैत्रः; सर्व-
भूताहिंसाकर इति ॥

भाष्यम्

## विशेषानुग्रहश्च ॥ ३-४-३८ ॥

तेषामपि च विधुरादीनाम् अविरुद्धैः पुरुषमात्रसंबन्धिभिर्जपोपवासदेवताराधनादिभिर्धर्मविशेषैरनुग्रहो विद्यायाः संभवति । तथा च स्मृतिः— 5

"जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः ।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥"

इत्यसंभवदाश्रमकर्मणोऽपि जप्येऽधिकारं दर्शयति । जन्मान्तरानुष्ठितैरपि च आश्रमकर्मभिः संभवत्येव विद्याया अनुग्रहः; तथा च स्मृतिः—"अनेकजन्मसंसिद्धस्ततो याति परां गतिम्" इति जन्मान्तरसंचितानपि संस्कारविशेषान् अनुग्रहीतॄन्विद्यायां दर्शयति । दृष्टार्था च विद्या प्रतिषेधाभावमात्रेणापि अर्थिनमधिकरोति श्रवणादिषु । तस्माद्विधुरादीनामप्यधिकारो न विरुध्यते ॥ 10

प्रकटार्थविवरणम्

विशेषानुग्रहश्च ॥ 15

किंच नैयोगिकफलेषु कर्मसु न कालनियमोऽस्ति । "आनन्तर्यं ह्यचोदितम् [दना]" इत्युक्तम् । तत्रैहिकाश्रमकर्माभावेऽप्यामुष्मिकैर्भविष्यति विद्यालाभ इत्याह—जन्मान्तरानुष्ठितैरपीति ॥ अनेकजन्मसु संचितसंस्कारैः संसिद्धः सम्यग्ज्ञानपरिपाकं प्राप्त इत्यर्थः ॥

नन्वथशब्दोपात्तन्यायेन संन्यासिनामेव विद्यासाधनश्रवणादौ विधिः; तत्कथमन्येषामप्यधिकारो वर्ण्यते[1] इत्याशङ्क्याह — दृष्टार्था च विद्येति ॥ संन्यासिनां श्रवणादिविधिर्नित्य एव, अकरणे प्रत्यवायश्रवणात्; इतरेषां तु काम्यो भविष्यति, विद्योद्देशेन श्रवणादिविधानात्, प्रतिषेधाभावाच्च; देवादीनामपि[2] विद्योत्पादाङ्गीकाराच्च यदा कदाचित् संन्यासित्वेन भवितव्यमिति भावः ॥ 20 25

१. T. वर्तते २. TM omits अपि

भाष्यम्

## अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३-४-३९ ॥

अतस्तु अन्तरालवर्तित्वात् इतरत् आश्रमवर्तित्वं ज्यायो विद्यासाधनम्, श्रुतिस्मृतिसंदृष्टत्वात्; श्रुतिलिङ्गाच्च—"तेनैति ब्रह्मवित्पु-
5 ण्यकृत्तैजसश्च" इति; "अनाश्रमी न तिष्ठेत दिनमेकमपि द्विजः। संवत्सरमनाश्रमी स्थित्वा कृच्छ्रमेकं चरेत्" इति च स्मृतिलिङ्गात् ॥

[ तद्भूताधिकरणम् ]

## तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः ॥ ३-४-४० ॥

10 सन्त्यूर्ध्वरेतस आश्रमा इति स्थापितम्; तांस्तु प्राप्तस्य कथंचित् ततः प्रच्युतिरस्ति, नास्ति वेति संशयः। पूर्वधर्मस्वनुष्ठानचिकीर्षया

प्रकटार्थविवरणम्

अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥

नन्वनाश्रमिकर्मापि चेत् विद्यासाधनम्, व्यर्थं तर्ह्याश्रमित्वमनेकायास-
15 मित्याशङ्क्याह —अतस्त्वितरदिति ॥ साधनोपचयादचिरेण विद्यासाधकत्वं ज्यायस्त्वं श्रुतिस्मृत्यनुगृहीतत्वादाश्रमित्वस्येत्यर्थः। श्रुतौ पुण्यकृत्त्वविशेषणलिङ्गाच्चाश्रमित्वं श्रेष्ठमित्याह —श्रुतिलिङ्गाच्चेति ॥ तेन अर्चिरादिमार्गेण एति गच्छति ब्रह्मवित् पुण्यं स्वाश्रमकर्म करोतीति पुण्यकृत् तेजसि परमात्मन्यात्मभावेन वर्तत इति तत्तेजस इत्यर्थः ॥

20 तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात्तद्रूपाभावेभ्यः ॥

प्रत्यवरूढानां कर्म विद्यासाधनं न भवतीति वक्तुं विचारमारभते—सन्त्यूर्ध्वरेतस इति ॥ रागादिप्राबल्यात् प्रत्यवरोहस्य प्रतिषेधाच्च संशयः। पूर्वपक्षमाह — पूर्वधर्मेति ॥ पूर्वाश्रमविहितो यागादिधर्मः सुखेनानुष्ठातुं शक्यत इति तदनुष्ठानचिकीर्षया रागद्वेषवशेन वा प्रत्यवरोहोऽपि स्यात्। पूर्वेण

भाष्यम्

वा रागादिवशेन वा प्रच्युतोऽपि स्याद्विशेषाभावादित्येवं प्राप्ते, उच्यते—तद्भूतस्य तु प्रतिपन्नोर्ध्वरेतोभावस्य न कथंचिदपि अतद्भावः, न ततः प्रच्युतिः स्यात्; कुतः? नियमातद्रूपाभावेभ्यः। तथा हि—"अत्यन्तमात्मानमाचार्यकुलेऽवसादयन्" इति "अरण्यमियादिति पदं ततो न पुनरेयादित्युपनिषत्" इति, 5

"आचार्येणाभ्यनुज्ञातश्चतुर्णामेकमाश्रमम्।
आ विमोक्षाच्छरीरस्य सोऽनुतिष्ठेद्यथाविधि॥"

इति च एवंजातीयको नियमः प्रच्युत्यभावं दर्शयति। यथा च "ब्रह्मचर्यं समाप्य गृही भवेत्" "ब्रह्मचर्यादेव प्रव्रजेत्" इति च एवमादीनि आरोहरूपाणि वचांस्युपलभ्यन्ते, नैवं प्रत्यवरोहरूपाणि। न 10 चैवमाचाराः शिष्टा विद्यन्ते। यत्तूक्तम्—पूर्वधर्मस्वनुष्ठानचिकीर्षया प्रत्यवरोहणमिति, तदसत्—"श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्" इति स्मरणात्, न्यायाच्च—यो हि यं प्रति विधीयते स तस्य धर्मः, न तु यो येन स्वनुष्ठातुं शक्यते, चोदनालक्षणत्वाद्धर्मस्य। न च रागादिवशा- 15

प्रकटार्थविवरणम्

यथा निन्दितमपि अनाश्रमिकर्मानुष्ठेयमुक्तम्, तथा प्रत्यवरोहस्यापि निन्दितत्वे विशेषाभावात् कर्मणि च तदीये कर्मत्वप्रसिद्धेः तदपि विद्यासाधनमिति भावः। सिद्धान्तसूत्रं योजयति–तद्भूतस्य त्विति॥ नियममाह—अत्यन्तमिति॥ अरण्यमित्येकान्तवासोपलक्षितं पारिव्राज्यम्;इयाद्गच्छेदिति;पदम् शास्त्रमार्गः; 20 ततोऽरण्यान्न पुनरागच्छेदिति; उपनिषत् रहस्यमित्यर्थः। अतद्रूपं व्याचष्टे—यथा ब्रह्मचर्यमिति॥ अभावमाह—न चैवमिति॥ पूर्वपक्षमनूद्य दूषयति—यत्तूक्तमित्यादिना॥ "चण्डालाः प्रत्यवसिताः" इत्यादिस्मृतेः पतितत्वाच्चानधिकारिणा कृतमकृतमिति[1] न्यायेन तदनुष्ठितानां गृहस्थधर्माणां न धर्मत्वम्, नापि विद्याङ्गभाव इति फलितार्थः। शास्त्रार्थानुसन्धानवतः श्रद्धा- 25 धानस्य रागादिनाप्यभिभवो न संभाव्यत इत्याह— न च रागादिवशादिति॥

१. T, T¹ and TM. कृतककृतमिति

भाष्यम्

त्मच्युतिः, नियमशास्त्रस्य बलीयस्त्वात् । जैमिनेरपीति अपिशब्देन जैमिनिबादरायणयोरत्र संप्रतिपत्तिं शास्ति प्रतिपत्तिदार्ढ्याय ॥

[ अधिकाराधिकरणम् ]

5 **न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥ ३-४-४१ ॥**

यदि नैष्ठिको ब्रह्मचारी प्रमादादवकीर्येत, किं तस्य "ब्रह्मचार्यवकीर्णी नैर्ऋतं गर्दभमालभेत" इत्येतत्प्रायश्चित्तं स्यात्, उत नेति । नेत्युच्यते; यदधिकारिलक्षणे निर्णीतं प्रायश्चित्तम् "अवकीर्णि-

10 प्रकटार्थविवरणम्

न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥

ऊर्ध्वरेतसां क्षतव्रतानां कृतप्रायश्चित्तानां कर्म विद्यासाधनं भवतीति दर्शयितुं विचारान्तरमारभते — यदीति ॥ अवकीर्येत योनौ रेतः सिञ्चेत्; अवकीर्णं योनौ निक्षिप्तं रेतोऽस्यास्तीति अवकीर्णी । निर्ऋतिदेवताकं
15 गर्दभमालभेत इत्येतत्प्रायश्चित्तं स्याद्वा न वेति महापातकेष्वगणनात् प्रायश्चित्तस्मृतेश्च संशय इत्यर्थः । पूर्वपक्षे सूत्रं योजयति—यदधिकारीत्यादिना ॥ अधिकारिलक्षणे षष्ठेऽध्याये यत्पूर्वमीमांसायां निर्णीतं प्रायश्चित्तं तदपि नैष्ठिकस्य भवितुं नार्हतीति संबन्धः । षष्ठाध्यायगतं सूत्रं पठति — अवकीर्णिपशुश्चेति ॥ यथोपनयनकाले लौकिकेऽग्नौ होमः, तद्वत् अवकीर्णि
20 पशुश्चेति यथोपनयनकाले लौकिकेऽग्नौ होतव्यम्, आधानस्य पत्नीपरिग्रहोत्तरकालीनतया पूर्वं प्राप्त्यभावादित्यर्थः ॥

१. T¹. प्रायश्चित्ताभाव
२. TM and A add उच्यते
३. T and T¹. अवकीर्णि
A. अवकीर्णी पशुश्चालौकिके
४. T and T. प्राप्त्याभावात्

भाष्यम्

पशुश्च तद्वदाधानस्याभावप्रकाशकत्वात्" इति, तदपि न नैष्ठिकस्य भवितुमर्हति ; किं कारणम् ?

"आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते पुनः ।
प्रायश्चित्तं न पश्यामि येन शुद्ध्येत्स आत्महा ॥"     5

इति अप्रतिसमाधेयपतनस्मरणात् छिन्नशिरस इव प्रतिक्रियानुपपत्तेः ; उपकुर्वाणस्य तु तादृक्पतनस्मरणाभावादुपपद्यते तत्प्रायश्चित्तम् ॥

## उपपूर्वमपि त्वेके भावमशनवत्तदुक्तम् ॥ ३-४-४२ ॥

अपि त्वेक आचार्या उपपातकमेवैतदिति मन्यन्ते ; यत् नैष्ठिकस्य गुरुदारादिभ्योऽन्यत्र ब्रह्मचर्यं विशीर्येत, न तत् महापातकं भवति, 10 गुरुतल्पादिषु महापातकेष्वपरिगणनात् ; तस्मात् उपकुर्वाणवत् नैष्ठिकस्यापि प्रायश्चित्तस्य भावमिच्छन्ति, ब्रह्मचारित्वाविशेषात् अवकीर्णित्वाविशेषाच्च ; अशनवत्—यथा ब्रह्मचारिणो मधुमांसाशने व्रतलोपः पुनःसंस्कारश्च, एवमिति । ये हि प्रायश्चित्तस्याभावमिच्छन्ति,

प्रकटार्थविवरणम्     15

प्रश्नपूर्वकं हेतुमवतारयति —किं कारणमित्यादिना ॥ पूर्वाधिकरणोक्तातद्भावनिषेधन्यायेन प्रायश्चित्तस्यापि निषिद्धत्वादसंभव इत्यर्थः । किंविषयं तर्हि प्रायश्चित्तस्मरणमित्याशङ्क्याह — उपकुर्वाणस्य त्विति ॥

उपपूर्वमपि त्वेके भावमशनवत्तदुक्तम् ॥

इदानीं सिद्धान्तमाह—उपपूर्वमपीति ॥ उपपूर्वं पातकमित्यध्याहारः । 20 ननु सूत्रकारेण पक्षद्वयमुपन्यस्तम् ; कथं पूर्वः पूर्वपक्षः, उत्तरः सिद्धान्त इत्याशङ्क्याह—ये हि प्रायश्चित्तस्येति ॥ न मूलं वेदवचनमुपलभ्यत इत्यर्थः । पौरुषेयप्रयोगद्वयात् पक्षद्वयप्रतिभासे यत्र यत्र मूलं वेदवचनमुपलभ्यते, स एव पक्षो ग्राह्य इत्यत्र संवादमाह—तदुक्तं[तदुक्तमिति ॥] जैमिनिना प्रथमाध्याये । "यवमयश्चरुः" इति श्रूयते; तत्र यवशब्दं केचित् दीर्घशूके प्रयुञ्जते ; केचिद्देशविशेषे 25

भाष्यम्

तेषां न मूलमुपलभ्यते; ये तु भावमिच्छन्ति, तेषाम् "ब्रह्मचार्यवकीर्णी" इत्येतदविशेषश्रवणं मूलम्; तस्मात् भावो युक्ततरः; तदुक्तं प्रमाणलक्षणे—"समा विप्रतिपत्तिः स्यात्" "शास्त्रस्था वा तन्निमित्त-
5 त्वात्" इति; प्रायश्चित्ताभावस्मरणं तु एवं सति यत्नगौरवोत्पादनार्थमिति व्याख्यातव्यम्। एवं भिक्षुवैखानसयोरपि "वानप्रस्थो दीक्षाभेदे कृच्छ्रं द्वादशरात्रं चरित्वा महाकक्षं वर्धयेत्" "भिक्षुर्वानप्रस्थवत्सोमवल्लिवर्जं स्वशास्त्रसंस्कारश्च" इत्येवमादिप्रायश्चित्तस्मरणमनुसर्तव्यम् ॥

10 प्रकटार्थविवरणम्

प्रियङ्गुषु; कस्य चरुः कर्तव्य इति सन्देहे वृद्धप्रयोगसाम्यात् समा तुल्या विकल्पप्रतिपत्तिः स्यादिति पूर्वः पक्षः। सिद्धान्तस्तु—शास्त्रस्था शास्त्रमूला शिष्टानां वा प्रतिपत्तिः सैव ग्राह्या, शास्त्रनिमित्तत्वात् धर्मादिविज्ञानस्य; शिष्टाश्च यवमयेषु करम्भपात्रेषु निहितेष्वेवमामनन्ति "यदान्या ओषधयो
15 म्लायन्त्यथैते मोदमाना इवोत्तिष्ठन्ति" इति; तस्माद्वेदे प्रयोगदर्शनादविच्छिन्नपारम्पर्यो दीर्घशूकेषु यवशब्द इति भावः। "प्रायश्चित्तं न पश्यामि" इति स्मरणस्य तर्हि का गतिरित्याशङ्क्याह — प्रायश्चित्तेति ॥ एवं तावन्नैष्ठिकस्य प्रायश्चित्तसद्भावमुक्त्वा भिक्षुवैखानसयोरतिदिशति — एवमिति ॥ दीक्षाभेदे व्रतलोपे द्वादशरात्रं कृच्छ्रं दिनत्रयमेकभुक्तकरणं
20 दिनत्रयं नक्तंकरणं दिनत्रयमयाचितभोजनं दिनत्रयमुपवास इति चरित्वा महाकक्षं बहुतृणकाष्ठं देशं वर्धयेत्। भिक्षुरपि कृच्छ्रं चरित्वा सोमवृत्ति[वल्लि] वर्जं महाकक्षं वर्धयेदित्यर्थः ॥

"सर्वपापप्रसक्तोऽपि ध्यायन्निमिषमच्युतम्।
पुनः स पूतो भवति पङ्क्तिपावन एव च ॥
25 मनोवाक्कायजान् दोषान् अज्ञानोत्थान्प्रमोदजान्।
सर्वं [सर्वान्]दहति योगाग्निः तूलराशिमिवानलः ॥

१. A. ध्यायन्ननिश-
२. A. पङ्क्तिपावनपावनः
३. A adds एवं च

भाष्यम्

[ बहिरधिकरणम् ]

## बहिस्तूभयथापि स्मृतेराचाराच्च ॥ ३-४-४३ ॥

यदि ऊर्ध्वरेतसां स्वाश्रमेभ्यः प्रच्यवनं महापातकम्, यदि वा उपपातकम्, उभयथापि शिष्टैस्ते बहिष्कर्तव्याः— 5

"आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते पुनः ।
प्रायश्चित्तं न पश्यामि येन शुध्येत्स आत्महा ॥" इति,

"आरूढपतितं विप्रं मण्डलाच्च विनिःसृतम् ।
उद्बद्धं कृमिदष्टं च स्पृष्ट्वा चान्द्रायणं चरेत् ॥"

इति च एवमादिनिन्दातिशयस्मृतिभ्यः, शिष्टाचाराच्च—न हि यज्ञा- 10
ध्ययनविवाहादीनि तैः सह आचरन्ति शिष्टाः ॥

प्रकटार्थविवरणम्

उपपातकेषु सर्वेषु[पातकसङ्केषु]पातकेषु महत्सु च ।
प्रविश्य रजनीपादं ब्रह्मध्यानं समाचरेत् ॥
नित्यमेव तु कुर्वीत प्राणायामांस्तु षोडश । 15
अपि भ्रूणहनं मासात्पुनन्त्यहरहःकृताः ॥"

"त्रिसन्ध्यादौ स्नानमाचरेत्" "अष्टौ ग्रासा मुनेर्भक्ष्याः"

"एकान्नं न तु भुञ्जीत बृहस्पतिसमादपि"

इत्यादियतिविषयशास्त्रविहितध्यानादिसंस्कारश्च कर्तव्य इत्यर्थः ॥

बहिस्तूभयथापि स्मृतेराचाराच्च ॥ 20

तैः कृतप्रायश्चित्तैः सह शिष्टाचारलक्षणं कर्म विषयः । तत्किं विधाङ्गं उत नेति संशये पूर्वाधिकरणोक्तप्रायश्चित्तेनैव व्यवहाराङ्गताया द्योतितत्वादङ्ग-मिति प्राप्ते सिद्धान्तमाह — यद्यूर्ध्वरेतसामिति ॥ निन्दातिशयस्मरणात् कल्मषक्षयेऽप्यैहिकव्यवहारयोग्यता नास्तीति गम्यते । तथा गुरुब्रह्महत्यायां

१. A. यामांश्च
२. A. कृतात्
३. T, T¹ and TM. यदूर्ध्व-

भाष्यम्

[ स्वाम्यधिकरणम् ]

## स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ३-४-४४ ॥

अङ्गेषूपासनेषु संशयः—किं तानि यजमानकर्माणि आहोस्वित्
5 ऋत्विक्कर्माणीति । किं तावत्प्राप्तम् ? यजमानकर्माणीति; कुतः ? फल-
श्रुतेः; फलं हि श्रूयते—"वर्षति हास्मै वर्षयति ह य एतदेवं विद्वा-
न्वृष्टौ पञ्चविधं सामोपास्ते" इत्यादि; तच्च स्वामिगामि न्याय्यम्,
तस्य साङ्गे प्रयोगेऽधिकृतत्वात्, अधिकृताधिकारत्वाच्च एवंजातीय-
कस्य; फलं च कर्तरि उपासनानां श्रूयते—"वर्षत्यस्मै य उपास्ते"
10 इत्यादि । नन्वृत्विजोऽपि फलं दृष्टम् "आत्मने वा यजमानाय वा यं

प्रकटार्थविवरणम्

नास्यास्मिन् लोके प्रत्यावृत्तिर्विद्यते, "कल्मषं तु निहन्यते" इति स्मृतेः;
तद्वदित्यर्थः ॥

स्वामिनः फलश्रुतेरित्यात्रेयः ॥

15 कर्माङ्गावबद्धान्युपासनानि विषयः । तेषूभयकर्तृत्वप्रतीतेः[1] संशयमाह—
अङ्गेष्विति ॥ यथा पूर्वत्र कृतप्रायश्चित्तानामपि वचनबलात् शिष्टैर्बहि-
ष्करणमुक्तम्, एवमिहापि अङ्गानुष्ठानाय वृतानामप्यृत्विजां वचनबलादेवा-
ङ्गोपासनेषु बहिष्करणमित्याह । यजमानकर्माणि अङ्गाश्रितोपासनेषु उद्गीथा-
दीनां प्राप्तोद्देशनत्वात् क्रत्वधिकारिण एव, प्राप्तेरुद्देशनसंभवात्; तदाश्रिता-
20 न्युपासनानि गोदोहनवदधिकृताधिकाराणि; ततः क्रत्वधिकारिण एव
गोदोहनफलवद्विद्याफलसंबन्धसिद्धिरित्याह —अधिकृताधिकारि[कार]त्वा-
च्चेति ॥ ननु फलं यजमानस्यास्तु; कर्तृत्वमृत्विजां भविष्यतीत्याशङ्क्याह—
फलं च कर्तरीति ॥ यजमानस्य फलमित्यस्यापवादं शङ्कते—नन्वृत्विजोऽ-

१. T¹. प्रतिपत्तेः

भाष्यम्

कामं कामयते तमागायति" इति—न, तस्य वाचनिकत्वात् । तस्मात् स्वामिन एव फलवत्सु उपासनेषु कर्तृत्वम्—इत्यात्रेय आचार्यो मन्यते ॥

## आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ॥ ३-४-४५ ॥ 5

नैतदस्ति—स्वामिकर्माण्युपासनानीति; ऋत्विक्कर्माण्येतानि स्युः—इत्यौडुलोमिराचार्यो मन्यते; किं कारणम्? तस्मै हि साङ्गाय कर्मणे यजमानेन ऋत्विक्परिक्रीयते; तत्प्रयोगान्तःपातीनि च उद्गीथाद्युपासनानि अधिकृताधिकारत्वात्; तस्मात् गोदोहनादिनियमवदेव ऋत्विग्भिर्निर्वर्त्येरन्; तथा च "तं ह बको दाल्भ्यो विदांचकार स ह नैमि- 10 षीयानामुद्गाता बभूव" इत्युद्गातृकर्तृकतां विज्ञानस्य दर्शयति । यत्तूक्तं कर्त्राश्रयं फलं श्रूयत इति—नैष दोषः, परार्थत्वादृत्विजः अन्यत्र वचनात् फलसंबन्धानुपपत्तेः ॥

प्रकटार्थविवरणम्

पीति ॥ आगायत्यागानेन संपादयतीत्यर्थः । न तत् न्यायसिद्धमित्याह— 15 न तस्येति ॥ यस्माद्यः कर्ता स एव फलीति न्यायः, तस्मादित्युपसंहारः ॥

आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ॥

सिद्धान्तमाह— आर्त्विज्यमिति ॥ अङ्गतत्संबन्धिकर्तृत्वस्यार्त्विज्यस्य[1] यजमानेन दक्षिणया क्रीतत्वात् तत्कर्तृत्वमृत्विजामेवेत्यर्थः । अत्रैव श्रौतं लिङ्गमाह—तदा चेति ॥ तदुद्गीथाख्यमक्षरं प्राणादिदृष्टिविशिष्टम्[3] । ह किल । 20 बको नामतः; दल्भस्यापत्यं दाल्भ्यो विदांचकार । विदित्वा च नैमिषीयाणां सत्रिणामुद्गाता बभूवेत्यर्थः । पूर्वपक्षबीजं गृह्णाति — यत्तूक्तमित्यादिना ॥ यत्राहत्य वचनमस्ति तत्रैव फलमृत्विजः; ततोऽन्यत्र फलसंबन्धः न साङ्गानुष्ठानाय क्रीतत्वादित्यर्थः[4] ॥

१. TM. अङ्गसंबन्धि
२. T and T[1] भक्षणीयाकी-
३. T, T[1] and A. प्रभादि
४. TM. क्रीतत्वानित्यर्थः

भाष्यम्

## श्रुतेश्च ॥ ३-४-४६ ॥

"यां वै कांचन यज्ञ ऋत्विज आशिषमाशासत इति यजमानायैव तामाशासत इति होवाच" इति, "तस्मादु हैवंविदुद्गाता ब्रूयात्कं ते 5 काममागायानि" इति च ऋत्विक्कर्तृकस्य विज्ञानस्य यजमानगामि फलं दर्शयति । तस्मादङ्गोपासनानामृत्विक्कर्मत्वसिद्धिः ॥

[ सहकार्यन्तरविध्यधिकरणम् ]

## सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ३-४-४७ ॥

10 "तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेद्बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मणः" इति बृह-

प्रकटार्थविवरणम्

इतोऽपि यजमानस्यैव फलं न ऋत्विजाम्; तेषां तु कर्तृत्वमेव भारवाहकव-दित्याह—श्रुतेश्चेति ॥

15 सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥

विधुरप्रभृतीनां मन्दाधिकारिणां अपरविद्यासाधननिरूपणप्रसङ्गेनो-क्तीयाद्युपासनमधमसाधनमेव निर्धार्य पुनरुक्तमेव विद्यासाधनं निरूपयितुं वाक्यं पठति—तस्मादित्यादि ॥ यस्मात्पूर्वे विद्वांसः ससाधनकर्मभ्योऽप्यु-त्थायात्मानं विदित्वा भिक्षाचर्यं चरन्ति, तस्मादिदानीन्तनोऽपि ब्राह्मणः 20 पाण्डित्यं पण्डितभावं निर्विद्य निर्वर्त्याचार्यपरिचर्यापूर्वकं वेदान्तवाक्यानि विचार्य बाल्येन बालभावेन डम्भाहङ्कारादिराहित्येन स्थातुमिच्छेदित्यर्थः । बाल्यं च पाण्डित्यं च निर्वर्त्याथ मुनिर्भवेत्; अमौनं च बाल्यादिकं मौनं च

भाष्यम्

दारण्यके श्रूयते । तत्र संशयः—मौनं विधीयते, न वेति । न विधीयत इति तावत्प्राप्तम्, "बाल्येन तिष्ठासेत्" इत्यत्रैव विधेरवसितत्वात्; न हि "अथ मुनिः" इत्यत्र विधायिका विभक्तिरुपलभ्यते; तस्मादयमनुवादो युक्तः; कुतः प्राप्तिरिति चेत्—मुनिपण्डितशब्दयोर्ज्ञानार्थत्वात् "पाण्डित्यं निर्विद्य" इत्येव प्राप्तं मौनम् । अपि च "अमौनं च मौनं च निर्विद्याथ ब्राह्मणः" इत्यत्र तावत् न ब्राह्मणत्वं विधीयते, प्रागेव प्राप्तत्वात्; तस्मात् "अथ ब्राह्मणः" इति प्रशंसावादः, तथैव "अथ मुनिः" इत्यपि भवितुमर्हति, समाननिर्देशत्वादित्येवं प्राप्ते ब्रूमः— 5 10

सहकार्यन्तरविधिरिति । विद्यासहकारिणो मौनस्य बाल्यपाण्डित्यवद्विधिरेव आश्रयितव्यः, अपूर्वत्वात् । ननु पाण्डित्यशब्देनैव मौनस्यावगतत्वमुक्तम्—नैष दोषः, मुनिशब्दस्य ज्ञानातिशयार्थ-

प्रकटार्थविवरणम्

निर्विद्याथ ब्राह्मणः कृतकृत्यो भवतीत्यर्थः । अत्र श्रूयमाणं मौनं विषयः; संशयश्च मौनशब्दस्य सिद्धे पारिव्राज्येऽनुष्ठेये ज्ञानाभ्यासे च प्रयोगदर्शनात् । पूर्वपक्षं रचयति—न विधीयत इति ॥ मुनिशब्दस्य परिव्राजकवाचकत्वात् सिद्धमेव पारिव्राज्यमनूद्यत इत्याह—तस्मादयमनुवादो युक्त इति ॥ "मन ज्ञाने"[1] इति धात्वनुसारेण ज्ञानं मौनम्; तस्य च प्राप्त्यभावान्नास्त्यनुवाद इत्याह—कुत इति ॥ तदापि पण्डितशब्दात्प्राप्तिरित्याह—मुनिपण्डितशब्दयोरिति ॥ 15 20
अविधिनिर्देशसाम्यादपि[2] न विधिरित्याह—अपि चेति ॥

विचारेण सकलयौक्तिकासंभावनानिरासे सति चित्तगतासंभावनानिवर्तनेन तत्त्वसाक्षात्करणाय ज्ञानाभ्यासो मौनं विधीयत इत्याह—सहकार्यन्तरेति ॥ पण्डेति बुद्धिनाम; सा यस्य प्रमाणतो जाता स पण्डित उच्यते । मुनिशब्दस्तु सकलानात्मप्रत्ययतिरस्कारेण ज्ञानाभ्यासवत्सु प्रयुज्यते; अतो 25
न पण्डितशब्देन गतत्वमित्याह—नैष दोष इति ॥ मुनिशब्देन परिव्राजक

१. T and T¹. मननं  २. A. साम्यादिति

भाष्यम्

त्वात्, मननान्मुनिरिति च व्युत्पत्तिसंभवात्, "मुनीनामप्यहं व्यासः" इति च प्रयोगदर्शनात्। ननु मुनिशब्द उत्तमाश्रमवचनोऽपि श्रूयते "गार्हस्थ्यमाचार्यकुलं मौनं वानप्रस्थम्" इत्यत्र—न, "वाल्मीकिर्मुनिपुङ्गवः" इत्यादिषु व्यभिचारदर्शनात्; इतराश्रमसंनिधानाच्च
5 पारिशेष्यात् तत्र उत्तमाश्रमोपादानम्, ज्ञानप्रधानत्वादुत्तमाश्रमस्य। तस्मात् बाल्यपाण्डित्यापेक्षया तृतीयमिदं मौनं ज्ञानातिशयरूपं विधीयते। यत्तु बाल्य एव विधेः पर्यवसानमिति, तथापि अपूर्वत्वान्मुनित्वस्य विधेयत्वमाश्रीयते—मुनिः स्यादिति; निर्वेदनीयत्वनिर्देशादपि
10 मौनस्य बाल्यपाण्डित्यवद्विधेयत्वाश्रयणम्। तद्वतः विद्यावतः संन्यासिनः; कथं च विद्यावतः संन्यासिन इत्यवगम्यते? तदधिकारात्—आत्मानं विदित्वा पुत्राद्येषणाभ्यो व्युत्थाय "अथ भिक्षाचर्यं

प्रकटार्थविवरणम्

उच्यत इत्यपि न वाच्यमित्याह—मननादिति॥ आपस्तम्बेन मौनशब्दस्य
15 पारिव्राज्ये प्रयोगात्तत्रैव रूढोऽयमित्याह—ननु मुनिशब्द इति॥ अपरिव्राजकेऽपि वृद्धप्रयोगान्तरदर्शनात् न रूढिरित्याह—न वाल्मीकिरिति॥ आपस्तम्बप्रयोगस्य तर्हि का गतिरित्याशङ्क्याह—नेत[इत]राश्रमेति॥ परोक्तं विघटयति-यत्त्वित्यादिना॥ वाक्यभेदेनोपरिधारणवन्मौनं विधीयत इत्यर्थः। किं च "मौनं निर्विद्य" इति पुरुषान् ज्ञानाभ्यासाभिष्कृत्य निर्वर्तनीयत्वाभिधानलिङ्गादपि विधेयत्वमित्याह—निर्वेदनीयत्वेति॥ कस्य तर्हि तद्विधी-
20 यत इत्याशङ्क्याह—तद्वत इति॥ आत्मानं विदित्वेति॥ शास्त्रयुक्तिभ्यां परोक्षत्वेन निश्चित्येत्यर्थः। परमानन्दरूपः परमात्माहमस्मीत्ययमेव परमार्थः; सर्वं तु द्वैतमपरमार्थमिति शास्त्रयुक्ती प्रतिपादयत इत्येवं परोक्षविद्यावत्त्वे सति तत्साक्षात्करणसाधनेऽभ्यासे स्वयमेव पुरुषस्योन्मुखत्वाद्विधिर्व्यर्थ इत्याह—

१. T and T¹. अनादीति
TM. मौनादीति
२. T, T¹ and TM. व्राजकोऽपि
३. T. तद्वन्त इति
T¹. तयत इति
४. A adds किं निर्वर्त्येति

भाष्यम्

चरन्ति" इति। ननु सति विद्यावत्त्वे प्राप्नोत्येव तत्रातिशयः, किं मौनविधिना—इत्यत आह—पक्षेणेति। एतदुक्तं भवति—यस्मिन्पक्षे भेददर्शनप्राबल्यात् न प्राप्नोति, तस्मिन्नेष विधिरिति। विध्यादिवत्। यथा "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्येवंजातीयके विध्यादौ 5 सहकारित्वेन अग्न्यन्वाधानादिकमङ्गजातं विधीयते, एवम् अविधिप्रधानेऽपि अस्मिन्विद्यावाक्ये मौनविधिरित्यर्थः॥

प्रकटार्थविवरणम्

ननु सतीति॥ [1]प्रकरणात्संन्यासधर्मस्य श्रवणात्; अतः साक्षात्कार-साधनतायाः अपूर्वत्वात् तद्विधिरपूर्वविधिरेव। अधिकारिविशेषं प्रति तु 10 ज्ञानाभ्यासविधेः अपूर्वविधित्वाभावेऽपि नियमविधिर्भविष्यतीत्याह— पक्षेणेति॥ अत्यन्ताप्राप्तविषयो विधिरपूर्वविधिः, यथा "सोमेन यजेत" इत्यादि। पक्षप्राप्तान्यतरनिवृत्तिनान्तरीयकपक्षप्राप्तान्यतरनियमप्रापको नियमविधिः। यथा "यजेत" इति प्रधानविधेः पक्षे साधनान्तरप्राप्तौ "व्रीहिभिः" इत्यादि नियमविधानम्। अविशेषप्राप्तौ परप्रतिषेधफलोऽन्यतरानुवादः परि- 15 संख्या, यथा रागत एवाविशेषभक्षणे प्राप्ते "पञ्च पञ्चनखा भक्ष्याः" इति। तदुक्तम्—

"विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति।
तत्र चान्यत्र च प्राप्तौ परिसंख्येति कीर्त्यते॥" इति।

वाचस्पतिस्तु मण्डनपृष्ठसेवी सूत्रभाष्यार्थानभिज्ञः समन्वयसूत्रे श्रव- 20 णादिविधिं निराचचक्षे; अत्र तु तद्विधिमूरीचक्रे। अहो बतास्य पाण्डित्यम्! श्रवणादीनां च संन्यासाश्रमधर्मत्वात् तद्विधिं निराकुर्वन् संन्यासाश्रमायैव द्वेष्टि; विध्यभावे च अथशब्देन साधनचतुष्टयसंपन्नाधिकारिसूत्रणं चानुपपन्नम्। तस्माद्वाचस्पतिप्रलापमुपेक्ष्य यावत्साक्षात्कारं श्रवणादि विधितोऽनुष्ठेयम्॥ 25

१. TM and A omit प्रकरणात्.....ज्ञानाभ्यासविधेः

भाष्यम्

एवं बाल्यादिविशिष्टे कैवल्याश्रमे श्रुतिमति विद्यमाने, कस्मात् छान्दोग्ये गृहिणोपसंहारः "अभिसमावृत्य कुटुम्बे" इत्यत्र? तेन हि उपसंहरन् तद्विषयमादरं दर्शयति—इत्यत उत्तरं पठति—

5 **कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ३-४-४८ ॥**

तुशब्दो विशेषणार्थः; कृत्स्नभावोऽस्य विशेष्यते; बहुलायासानि हि बहून्याश्रमकर्माणि यज्ञादीनि तं प्रति कर्तव्यतयोपदिष्टानि आश्रमान्तरकर्माणि च यथासंभवमहिंसेन्द्रियसंयमादीनि तस्य विद्यन्ते। तस्माद्गृहमेधिनोपसंहारो न विरुध्यते ॥

10 **मौनवदितरेषामप्युपदेशात् ॥ ३-४-४९ ॥**

यथा मौनं गार्हस्थ्यं च एतावाश्रमौ श्रुतिमन्तौ, एवमितरावपि वानप्रस्थगुरुकुलवासौ; दर्शिता हि पुरस्ताच्छ्रुतिः—"तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयः" इत्याद्या। तस्मात् चतुर्णामप्याश्रमाणाम् उपदेशाविशेषात् तुल्यवत् विकल्पसमुच्चयाभ्यां प्रतिपत्तिः। 15 इतरेषामिति द्वयोराश्रमयोर्बहुवचनं वृत्तिभेदापेक्षया अनुष्ठातृभेदापेक्षया वा—इति द्रष्टव्यम् ॥

[ अनाविष्काराधिकरणम् ]

**अनाविष्कुर्वन्नन्वयात् ॥ ३-४-५० ॥**

"तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्" इति बाल्य-

20 प्रकटार्थविवरणम्

कृत्स्नभावात्तु गृहिणोपसंहारः ॥

मौनवदितरेषामप्युपदेशात् ॥

प्रासङ्गिकशङ्कान्तरनिरासाय सूत्रद्वयं व्याचष्टे—एवं बाल्यादिविशिष्ट इत्यादिना ॥

25 अनाविष्कुर्वन्नन्वयात् ॥

पूर्वत्र बाल्यस्य विधेयत्वमङ्गीकृत्य अवान्तरवाक्यभेदेन मौनमपि विधेयमित्युक्तम्। इदानीं तदेव बाल्यं विचार्यत इत्याह—तस्माद्ब्राह्मण इति ॥

भाष्यम्

मनुष्ठेयतया श्रूयते ; तत्र बालस्य भावः कर्म वा बाल्यमिति तद्धिते सति, बालभावस्य वयोविशेषस्य इच्छया संपादयितुमशक्यत्वात्, यथोपपादं मूत्रपुरीषत्वादि बालचरितम्, अन्तर्गता वा भावविशुद्धिः अप्ररूढेन्द्रियत्वदम्भदर्पादिरहितत्वं वा बाल्यं स्यादिति संशयः । किं तावत्प्राप्तम् ? कामचारवादभक्षता यथोपपादमूत्रपुरीषत्वं च प्रसिद्धतरं लोके बाल्यमिति तद्ग्रहणं युक्तम् । ननु पतितत्वादिदोषप्राप्तेर्न युक्तं कामचारताद्याश्रयणम्—न ; विद्यावतः संन्यासिनो वचनसामर्थ्यात् दोषनिवृत्तिः, पशुहिंसादिष्विवेत्येवं प्राप्ते अभिधीयते— 5

न, वचनस्य गत्यन्तरसंभवात् ; अविरुद्धे हि अन्यस्मिन् बाल्यशब्दाभिलप्ये लभ्यमाने, न विध्यन्तरव्याघातकल्पना युक्ता ; प्रधानोपकाराय च अङ्गं विधीयते ; ज्ञानाभ्यासश्च प्रधानमिह यतीनामनुष्ठेयम् ; न च सकलायां बालचर्यायाम् अङ्गीक्रियमाणायां 10

प्रकटार्थविवरणम्

तद्धिते सति संशय इति संबन्धः । वयोविशेषग्रहणे हेतुमाह— बालभावस्येति ॥ प्रसिद्धिबलेन पूर्वाधिकरणन्यायेन पूर्वपक्षमाह —किं तावदिति ॥ चरणं चारः; वदनं वादः; भक्षणं भक्षः; कामतश्चारवादभक्षाः यस्य स तथोक्तः; तस्य भावः कामचारवादभक्षता; यथोपपादं यथासंभवम् यत्र क्वापि मूत्रपुरीषे यस्येति तथोक्तः, तस्य भावो यथोपपादमूत्रपुरीषत्वम्; बालस्य कर्म बाल्यमिति तद्धिताश्रयणे प्रतिषिद्धसेवनात्पतितत्वं शिष्टगर्हा च प्रसज्यत इत्याह— नन्विति ॥ विशेषशास्त्रात्पतितत्वं न भविष्यतीत्याह — न विद्यावत इति ॥ 15 20

उत्सूत्रमेव सिद्धान्तमाह— न वचनस्येति ॥ तद्धितप्रत्ययस्य भावेऽप्यविरोधात्, "एककालं चरेद्भैक्ष्यं न प्रसज्येत विस्तरे[रे]" इत्यादिसामान्यशास्त्राविरोधाच्च सर्वेन्द्रियादि[यत्वादि]कं मुमुक्षोरनुष्ठेयं चोद्यत इत्यर्थः । किं च बालकर्मणः सकाशात् बालभावस्याभ्यर्हितत्वात् स एव विधेय इत्याह । 25

१. A. विद्यावत इति

भाष्यम्

ज्ञानाभ्यासः संभाव्यते ; तस्मात् आन्तरो भावविशेषो बालस्य अप्र-
रूढेन्द्रियत्वादिः इह बाल्यमाश्रीयते ; तदाह — अनाविष्कुर्वन्निति ।
ज्ञानाध्ययनधार्मिकत्वादिभिः आत्मानमविख्यापयन् दम्भदर्पादिरहितो
5 भवेत्—यथा बालः अप्ररूढेन्द्रियतया न परेषाम् आत्मानमाविष्कर्तु-
मीहते, तद्वत् । एवं हि अस्य वाक्यस्य प्रधानोपकार्यर्थानुगम उप-
पद्यते ; तथाच उक्तं स्मृतिकारैः—

"यं न सन्तं न चासन्तं नाश्रुतं न बहुश्रुतम् ।
न सुवृत्तं न दुर्वृत्तं वेद कश्चित्स ब्राह्मणः ॥
10 गूढधर्माश्रितो विद्वानज्ञातचरितं चरेत् ।
अन्धवज्जडवच्चापि मूकवच्च महीं चरेत् ॥"

"अव्यक्तलिङ्गोऽव्यक्ताचारः" इति चैवमादि ॥

[ ऐहिकाधिकरणम् ]

## ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ३-४-५१ ॥

15 "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इत्यत आरभ्य उच्चावचं
विद्यासाधनमवधारितम् ; तत्फलं विद्या सिद्ध्यन्ती किमिहैव जन्मनि
सिद्ध्यति, उत कदाचित् अमुत्रापीति चिन्त्यते । किं तावत्प्राप्तम् ?

प्रकटार्थविवरणम्

प्रधानोपकाराच्च चेत्युक्तेऽर्थे सूत्रं योजयति—तदाहेति[1] ॥

20 ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥

साधनस्योभयथाभावदर्शनात् पूर्वोक्ते साधनजाते संशयमाह — सर्वा-
पेक्षेति ॥ ऐहिकत्वनियमं पूर्वपक्षमाह— किं तावदिति ॥ ननु विद्याया

१. T, T[1] and TM. तथाहेति

भाष्यम्

इहैवेति; किं कारणम्? श्रवणादिपूर्विका हि विद्या; न च कश्चिदमुत्र मे विद्या जायतामित्यभिसंधाय श्रवणादिषु प्रवर्तते; समान एव तु जन्मनि विद्याजन्माभिसंधायैतेषु प्रवर्तमानो दृश्यते। यज्ञादीन्यपि श्रवणादिद्वारेणैव विद्यां जनयन्ति, प्रमाणजन्यत्वाद्विद्यायाः। तस्मादैहिकमेव विद्याजन्मेत्येवं प्राप्ते वदामः— 5

ऐहिकं विद्याजन्म भवति, असति प्रस्तुतप्रतिबन्ध इति। एतदुक्तं भवति—यदा प्रक्रान्तस्य विद्यासाधनस्य कश्चित्प्रतिबन्धो न क्रियते उपस्थितविपाकेन कर्मान्तरेण, तदा इहैव विद्या उत्पद्यते; यदा तु खलु तत्प्रतिबन्धः क्रियते तदा अमुत्रेति। उपस्थितविपाकत्वं 10 च कर्मणो देशकालनिमित्तोपनिपाताद्भवति; यानि च एकस्य कर्मणो विपाचकानि देशकालनिमित्तानि, तान्येव अन्यस्यापीति न नियन्तुं

प्रकटार्थविवरणम्

यज्ञादिसाध्यत्वात् कथमैहिकत्वनियम इत्याशङ्क्याह — यज्ञादीन्यपीति ॥ चित्रायागवदनियतफलं विद्यासाधनमिति सिद्धान्तमाह —एवं प्राप्ते वदाम 15 इत्यादिना ॥

नन्वस्मिन् जन्मनि पुष्कले विद्यासाधनेऽनुष्ठितेऽपि प्रवृत्तफलेन कर्मणा प्रतिबन्धाच्चेत् विद्या नोदपादि, तर्हि जन्मान्तरेऽपि प्रवृत्तफलेन कर्मान्तरेण प्रतिबन्धसंभवान्न कदाचिदुत्पत्स्यत इत्याशङ्क्याह — उपस्थितविपाकत्वं चेति ॥ कस्मिंश्चिद्देशे काले निमित्ते वा कस्यचित्प्रतिबन्धाय किंचित्कर्मोप- 20 स्थितफलं भवति, न सदा प्रतिबन्धसद्भावे प्रमाणमस्तीति भावः। नन्वस्मिन् देशे काले प्रवृत्तफलं कर्म विद्योदयप्रतिबन्धकं चेदिष्यते, तर्हि विद्यासाधनोदयस्यापि प्रतिबन्धकं तदेवास्तु; ततो विद्यातत्साधनयोरेकदेहभावित्वमित्याशङ्क्याह — यानि चैकस्येति ॥ विद्योदयप्रतिबन्धकात् तत्साधनोदयप्रतिबन्धकं कर्मान्यत्; अन्यान्येव तद्व्यञ्जकादिदेशकालनिमित्ता- 25

भाष्यम्

शक्यते, यतो विरुद्धफलान्यपि कर्माणि भवन्ति। शास्त्रमपि अस्य कर्मण इदं फलं भवतीत्येतावति पर्यवसितं न देशकालनिमित्तविशेषमपि संकीर्तयति। साधनवीर्यविशेषात्तु अतीन्द्रिया कस्यचिच्छक्तिराविर्भवति, तत्प्रतिबद्धा परस्य तिष्ठति। न च अविशेषेण विद्यायामभिसंधि-
5 र्नोत्पद्यते—इह अमुत्र वा मे विद्या जायतामिति, अभिसंधेर्निरङ्कुशत्वात्। श्रवणादिद्वारेणापि विद्या उत्पद्यमाना प्रतिबन्धक्षयापेक्षयैव उत्पद्यते। तथा च श्रुतिः दुर्बोधत्वमात्मनो दर्शयति—

प्रकटार्थविवरणम्

10 नोति भावः। ननु कृते कर्मणि, यदि देशकालनिमित्तवैगुण्यात् फलं नोत्पद्यते, तदा शास्त्रस्य साधनबोधकस्याप्रामाण्यप्रसङ्ग इत्याशङ्क्याह—शास्त्रमपीति॥ साध्यसाधनसंबन्धबोधकं शास्त्रं न प्रतिबन्धभावाभावयोः व्याप्रियते; न चाप्रामाण्यम्, करतलानलसंयोगस्य दाहहेतुत्वग्राहकप्रत्यक्षस्य प्रामाण्यदर्शनादिति भावः। ननु सर्वेषां कर्मणां शास्त्रसमधिगम्यत्वात् अविशेषे कथं कस्यचित् प्रति-
15 बन्धकत्वमित्याशङ्क्याह—साधनवीर्येति॥ यथा प्रत्यक्षत्वाविशेषेऽपि अग्निमण्यादीनां स्वकारणेभ्यः शक्तिविशेषवतां प्रादुर्भावात् प्रतिबन्ध्यप्रतिबन्धकभावः, तत्कारणानामपि स्वकारणेभ्यो विचित्रशक्तिमतामेव प्रादुर्भाव इत्यनादिरयं प्रवाहः, तथा कर्मणोऽपि स्यादित्यर्थः। यच्चोक्तमामुष्मिकाभिसन्धिर्नोत्पद्यत इति, तत्राह—न चाविशेषेणेति॥ परिदृश्यमानसंसारनिमित्तशेष-
20 स्यानेकजन्मानुयायित्वमवगच्छतो यदाकदाचिदनर्थनिवृत्तिः स्यादिति अभिसन्धानं भविष्यतीत्यर्थः। यच्चोक्तं श्रवणादीनामिहैव पुष्कलत्वात् इहैव विद्या जायत इति, तत्राह—श्रवणादीति॥ प्रतिबन्धक्षयापेक्षया कदाचिद्विद्योदय इत्यत्र श्रुतिस्मृतिसंमतिमाह—तथा चेत्यादिना॥

१. A. नोप्पद्यते  २. TM. अपरि-

भाष्यम्

"श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यं न विद्युः।
आश्चर्यो वक्ता कुशलोऽस्य लब्धाश्चर्यो ज्ञाता कुशलानुशिष्टः ॥" इति।
गर्भस्थ एव च वामदेवः प्रतिपेदे ब्रह्मभावमिति वदन्ती जन्मान्तरसंचि-
तात् साधनात् जन्मान्तरे विद्योत्पत्तिं दर्शयति; न हि गर्भस्थस्यैव　5
ऐहिकं किंचित्साधनं संभाव्यते। स्मृतावपि—"अप्राप्य योगसंसिद्धिं
कां गतिं कृष्ण गच्छति" इत्यर्जुनेन पृष्टो भगवान्वासुदेवः "न हि
कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति" इत्युक्त्वा, पुनस्तस्य पुण्यलो-
कप्राप्तिं साधुकुले संभूतिं च अभिधाय, अनन्तरम् "तत्र तं बुद्धिसंयोगं
लभते पौर्वदेहिकम्" इत्यादिना "अनेकजन्मसंसिद्धस्ततो याति परां　10
गतिम्" इत्यन्तेन एतदेव दर्शयति। तस्मात् ऐहिकम् आमुष्मिकं वा
विद्याजन्म प्रतिबन्धक्षयापेक्षयेति स्थितम् ॥

[ मुक्तिफलाधिकरणम् ]

## एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्था-
## वधृतेः ॥ ३-४-५२ ॥　15

यथा मुमुक्षोर्विद्यासाधनावलम्बिनः साधनवीर्यविशेषाद्विद्यालक्षणे
फले ऐहिकामुष्मिकफलत्वकृतो विशेषप्रतिनियमो दृष्टः, एवं मुक्ति-

प्रकटार्थविवरणम्

विधिसामर्थ्यमाश्रित्य भुवन्नामुष्मिकं फलम्।
श्रवणादेः कथंकारं वाक्पतिर्न च तत्रपे ॥　20

एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥

विद्याफलं मुक्तिर्विषयः। तस्याः किं विद्यावदुत्कर्षापकर्षकृतो विशे-
षोऽस्ति, उत नेति फलस्योभयथाभावदर्शनात् संशयः। पूर्वपक्षमाह—यथेति ॥

भाष्यम्

लक्षणेऽपि उत्कर्षापकर्षकृतः कश्चिद्विशेषप्रतिनियमः स्यात्—इत्याशङ्क्य, आह—एवं मुक्तिफलानियम इति। न खलु मुक्तौ कश्चिदेवंभूतो विशेषप्रतिनियम आशङ्कितव्यः; कुतः? तदवस्थावधृतेः—मुक्त्यवस्था
5 हि सर्ववेदान्तेष्वेकरूपैव अवधार्यते। ब्रह्मैव हि मुक्त्यवस्था; न च ब्रह्मणोऽनेकाकारयोगोऽस्ति, एकलिङ्गत्वावधारणात्—"अस्थूलमनणु" "स एष नेति नेत्यात्मा" "यत्र नान्यत्पश्यति" "ब्रह्मैवेदममृतं पुरस्तात्" "इदं सर्वं यदयमात्मा" "स वा एष महानज आत्मा" "अजरोऽमरोऽमृतोऽभयो ब्रह्म" "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं
10 पश्येत्" इत्यादिश्रुतिभ्यः। अपि च विद्यासाधनं स्ववीर्यविशेषात् स्वफल एव विद्यायां कंचिदतिशयमासञ्जयेत्, न विद्याफले मुक्तौ; तद्धि असाध्यं नित्यसिद्धस्वभावमेव विद्ययाधिगम्यत इत्यसकृत् अवादिष्म। न च तस्यामप्युत्कर्षनिकर्षात्मकोऽतिशय उपपद्यते, निकृष्टाया विद्यात्वाभावात्; उत्कृष्टैव हि विद्या भवति; तस्मात् तस्यां चिरा-

15 प्रकटार्थविवरणम्

मुक्तिः उपचयापचयरूपिणी, फलत्वात्, विद्यावत्; ततः कर्मसाध्यत्वमित्यर्थः। मुक्तिस्वरूपब्रह्मैकरूप्यावधारणशास्त्रविरोधादनुमानमप्रमाणमित्याह —न खलु मुक्ताविति॥ ननु काष्ठोपचयापचयाभ्यां ज्वालोपचयापचयवत् श्रवणाद्यन्तरङ्ग-बहिरङ्गसाधनोपचयापचयाभ्यां विद्यायाः उपचयापचयभावान्मुक्तावपि तत्प्र-
20 सङ्ग इत्याशङ्क्याह—अपि च विद्यासाधनमिति॥ विद्यायामतिशयमङ्गी-कृत्य मुक्तौ नातिशयाधायकत्वमित्युक्तम्। इदानीं विद्यापि निरतिशयेत्याह—न च तस्यामपीति॥ निकृष्टविषयत्वेन हि विद्याया निकृष्टत्वम्; ब्रह्म च सर्व-दोषरहितम्; कथं तद्विद्या निकृष्टा स्यादित्यर्थः। सर्वेषामुत्कृष्टब्रह्मविषयत्वेनो-त्कृष्टैव चेद्विद्या, तर्हि साधनाधिक्यं व्यर्थमित्याशङ्क्याह — तस्मादिति॥

भाष्यम्

चिरोत्पत्तिरूपोऽतिशयो भवन् भवेत्; न तु मुक्तौ कश्चित् अतिशय-
संभवोऽस्ति। विद्याभेदाभावादपि तत्फलभेदनियमाभावः, कर्मफलवत्;
न हि मुक्तिसाधनभूताया विद्यायाः कर्मणामिव भेदोऽस्ति। सगुणासु तु
विद्यासु—"मनोमयः प्राणशरीरः" इत्याद्यासु गुणावापोद्वापवशा- 5
द्भेदोपपत्तौ सत्याम्, उपपद्यते यथास्वं फलभेदनियमः, कर्मफलवत्—
तथा च लिङ्गदर्शनम्—"तं यथा यथोपासते तदेव भवति" इति;
नैवं निर्गुणायां विद्यायाम्, गुणाभावात्; तथा च स्मृतिः—"न हि
गतिरधिकास्ति कस्यचित्सति हि गुणे प्रवदन्त्यतुल्यताम्" इति।

प्रकटार्थविवरणम् 10

यस्मात्ततो नास्ति विद्यायाः सातिशयत्वम्, किं तु निवर्तनीयकर्मांचित्तविक्षे-
पादेः सातिशयत्वेन तत्रैव साधनोपचयादेरुपक्षयः, तस्माद्विद्यायाः प्रति-
बन्धकनिवृत्तिचिराचिरत्वद्वारेण चिराचिरोत्पत्तिरूपोऽतिशयः भवेदि-
त्यर्थः। मुक्तावपि कालाल्पत्वबहुत्वलक्षण एव विशेषोऽस्त्विति न वाच्य-
मित्याह—न तु मुक्ताविति॥ विद्योदयमात्रेणैवाविद्याध्वंसादित्यर्थः। ननु 15
दहरवैश्वानर[नरादि]विद्यानां प्रतिपुरुषं भिन्नत्वदर्शनात् मुक्तिफलापि विद्या
ब्रह्मविद्यत्वाविशेषात् प्रतिपुरुषं भिन्ना; ततो मुक्तेरपि सातिशयत्वमित्या-
शङ्क्याह— विद्याभेदाभावादिति॥ एकरूपवस्तुविषयत्वेन पुरुषभेदेऽपि
विद्यायाः अन्यथात्वाभावान्नास्ति तत्फले कश्चिदतिशयनियमः कर्मफल-
वदिति वैधर्म्यदृष्टान्तः। परोक्तं दृष्टान्तं विघटयति — सगुणासु त्विति॥ 20
तस्मान्मुक्तेर्निरतिशयत्वान्न कर्मसाध्यत्वमिति भावः॥

१. T¹. ननु

भाष्यम्

तदवस्थावधृतेस्तदवस्थावधृतेरिति पदाभ्यासः अध्यायपरिसमाप्तिं द्योतयति ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपाद-
शिष्यस्य श्रीमच्छंकरभगवतः कृतौ शारीरकमीमांसासूत्रभाष्ये
तृतीयाध्यायस्य चतुर्थः पादः ॥

तृतीयोऽध्यायः समाप्तः ॥

प्रकटार्थविवरणम्

वैराग्यं तत्त्वमर्थौ द्वौ ततः शब्दोपसङ्ग्रहम् ।
पुरुषार्थं स्वतन्त्रांश्च प्रोचुर्नीचोच्चसाधनम् ॥

इति श्रीमच्छारीरकमीमांसाभाष्यविवरणे प्रकटार्थे
तृतीयस्याध्यायस्य चतुर्थः पादः समाप्तः
॥ समाप्तश्चाध्यायः ॥

---

# अथ चतुर्थोऽध्यायः ॥

## प्रथमः पादः



[ आवृत्त्यधिकरणम् ]

तृतीयेऽध्याये परापरासु विद्यासु साधनाश्रयो विचारः प्रायेणात्य-गात्; अथेह चतुर्थे फलाश्रय आगमिष्यति; प्रसङ्गागतं च अन्यदपि किंचिच्चिन्तयिष्यते; प्रथमं तावत् कतिभिश्चिदधिकरणैः साधनाश्रय-विचारशेषमेवानुसरामः— 5

## आवृत्तिरसकृदुपदेशात् ॥ ४-१-१ ॥

"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" "तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत" "सोऽन्वेष्टव्यः स विजिज्ञासि-तव्यः" इति च एवमादिश्रवणेषु संशयः—किं सकृत्प्रत्ययः कर्तव्यः, आहोस्वित् आवृत्त्येति । किं तावत्प्राप्तम्? सकृत्प्रत्ययः स्यात्, प्रया-जादिवत्, तावता शास्त्रस्य कृतार्थत्वात्; अश्रूयमाणायां हि आवृत्तौ 10

### प्रकटार्थविवरणम्

साध्यसिद्धेः साधनाधीनत्वात् साधननिरूपणानन्तरं फलं निरूपयितुं उपक्रमत इत्याह—तृतीयेऽध्याय इति ॥ फलनिरूपणप्रसङ्गेनार्चिरादिपदार्थो-पसंहारानुपसंहारौ निरूपयिष्येते इत्यर्थः । अवान्तरसंबन्धमाह — प्रथमं तावदिति ॥ साधनानुष्ठाने यत्नाधिक्यविधानायेति शेषः ॥ 15

आवृत्तिरसकृदुपदेशात् ॥

विषयमनूद्य संशयमाह—आत्मा वा इति ॥ साधनेषूभयथादर्शनात् संशय-मुक्त्वा श्रवणादीनि सकृदनुष्ठितानि सम्यग्दर्शनसाधनानीति पूर्वपक्षमाह— सकृदिति ॥ दर्शनक्रियायाः साधनाकाङ्क्षायां सकृत्साधनोपदेशेन नैराकाङ्क्ष्येऽ- 20

भाष्यम्

क्रियमाणायाम् अशास्त्रार्थः कृतो भवेत् । ननु असकृदुपदेशा उदाहृताः "श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इत्येवमादयः—एवमपि यावच्छब्दमावर्तयेत्—सकृच्छ्रवणं सकृन्मननं सकृन्निदिध्यासनं चेति, नातिरिक्तम् । सकृदुपदेशेषु तु 'वेद' 'उपासीत' इत्येवमादिषु अनावृत्तिरित्येवं प्राप्ते, ब्रूमः—प्रत्ययावृत्तिः कर्तव्या; कुतः? असकृदुपदेशात्—"श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इत्येवंजातीयको हि असकृदुपदेशः प्रत्ययावृत्तिं सूचयति । ननु उक्तम्—यावच्छब्दमेव आवर्तयेत् नाधिकमिति—न, दर्शनपर्यवसानत्वादेषाम्—दर्शनपर्यवसानानि हि श्रवणादीन्यावर्त्यमानानि दृष्टार्थानि भवन्ति—यथा अवघातादीनि तण्डुलादिनिष्पत्तिपर्यवसानानि, तद्वत् । अपि च उपासनं निदिध्यासनं च इत्यन्तर्णीतावृत्तिगुणैव क्रिया अभिधीयते; तथा हि लोके 'गुरुमुपास्ते' 'राजानमुपास्ते' इति च—यस्तात्पर्येण गुर्वादीननुवर्तते, स एवमुच्यते; तथा 'ध्यायति प्रोषितनाथा पतिम्' इति—या निरन्तरस्मरणा पतिं प्रति सोत्कण्ठा, सा एवमभिधीयते । विद्युपास्त्योश्च वेदान्तेषु अव्यतिरेकेण प्रयोगो दृश्यते; क्वचिद्विदिनोप-

प्रकटार्थविवरणम्

सकृदुपदेशानुपपत्त्यावृत्तौ तात्पर्यं कल्प्यते ; ततो नाशास्त्रार्थः कृतो भविष्यतीत्याह—नन्वसकृदिति ॥ समुच्चितानां श्रवणादीनां साधनत्वाभिप्रायेणाप्यसकृदुपदेशसंभवान्नावृत्तौ तात्पर्यं कल्पयितुं शक्यत इत्याह—एवमपीति ॥ आत्मा द्रष्टव्यः साक्षात्कर्तव्य इति साक्षात्करणफलमुद्दिश्य श्रवणादीनि साधनानि विधीयन्ते । फलपर्यन्तमेव कर्म विधिविषय इति विशेषन्यायेनार्थसिद्धावृत्तिगुणविशिष्टन्यायेन[विशिष्टान्येव]श्रवणादीनि विधीयन्त इत्याह— न दर्शनपर्यवसानत्वादेषामिति ॥ न केवलं आर्थिक आवृत्तिगुणः, किंत्वन्तर्भाव[भावात्]शब्दलभ्येत्याह[भ्य इत्याह]—अपि चेति ॥ यच्चोक्तं वेदेत्यादि सकृदुपदेशेषु नावृत्तिर्लभ्यत इति, तत्राह—विद्युपास्त्योश्चेति ॥ यः पुमान् तद्वस्तु वेद यत्स रैक्वो वेद स मयैतदुक्तः सर्वं तदभिसमेति यत्किञ्च प्रजाः साधु कुर्वन्तीति संवर्गविद्यायां विदिनोपक्रम्योपासिनोपसंहरति । भो भगवन्तः एतां देवतां मे

भाष्यम्

क्रम्य उपासिनोपसंहरति, यथा—“यस्तद्वेद यत्स वेद स मयैतदुक्तः” इत्यत्र “अनु म एतां भगवो देवतां शाधि यां देवतामुपास्से” इति; क्वचिच्च उपासिनोपक्रम्य विदिनोपसंहरति, यथा—“मनो ब्रह्मेत्युपासीत” इत्यत्र “भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद” इति। तस्मात्सकृदुपदेशेष्वपि आवृत्तिसिद्धिः। असकृदुपदेशस्तु आवृत्तेः सूचकः। 5

## लिङ्गाच्च ॥ ४-१-२ ॥

लिङ्गमपि प्रत्ययावृत्तिं प्रत्याययति। तथा हि—उद्गीथविज्ञानं प्रस्तुत्य, “आदित्य उद्गीथः” इत्येतत् एकपुत्रतादोषेणापोद्य “रश्मींस्त्वं पर्यावर्तयात्” इति रश्मिबहुत्वविज्ञानं बहुपुत्रतायै विदधत् सिद्धवत्प्रत्ययावृत्तिं दर्शयति; तत्सामान्यात् सर्वप्रत्ययेष्वावृत्तिसिद्धिः॥ 10

अत्राह—भवतु नाम साध्यफलेषु प्रत्ययेष्वावृत्तिः, तेष्वावृत्तिसाध्यस्यातिशयस्य संभवात्; यस्तु परब्रह्मविषयः प्रत्ययो नित्यशुद्ध-

प्रकटार्थविवरणम् 15

ममानुशाधि उपादिश, यां त्वमुपास्स इति रैक्वं प्रति जानश्रुतेः वचनम्। उपक्रमोपसंहारयोरैकरूप्यत्व[रूप्य]सिद्धये विद्युपास्योरेकार्थत्वं वक्तव्यम्; उपासनं चावृत्तिगुणकं यस्मात्तस्मादित्युपसंहारः॥

### लिङ्गाच्च ॥

लिङ्गाच्चावृत्तिर्न केवलमसकृदुपदेशादित्यर्थः। “एतमु एवाहमभ्यगासिषं तस्मान्मम त्वमेकोऽसीति ह कौषीतकिः पुत्रमुवाच” इत्यपोद्य रश्म्याधारमादित्यं तदाधारांश्च रश्मीनुद्गीथे संपाद्य त्वं पर्यावर्तयात् पर्यावर्तयेत्यर्थः। परि समन्तादावर्तनमिह दर्शितम्; अतोऽन्यत्रापि उपासनसामान्यादावृत्तिसिद्धिरित्यर्थः। तुषविमोकायावघातावृत्तिवत्परब्रह्मणि प्रत्ययावृत्तिर्व्यर्था। सकृदुत्पन्नमेव हि विज्ञानं सनिदानमनर्थं जेघ्रीयत इत्याक्षेपं शिष्यस्योत्थापयति—अत्राहेत्यादिना॥ शब्दस्य युक्तेर्वा ज्ञानजनने सामर्थ्यमस्ति चेद- 20 25

भाष्यम्

शुद्धमुक्तस्वभावमेव आत्मभूतं परं ब्रह्म समर्पयति, तत्र किमर्था आवृत्तिरिति । सकृच्छ्रुतौ च ब्रह्मात्मत्वप्रतीत्यनुपपत्तेरावृत्त्यभ्युपगम इति चेत्, न, आवृत्तावपि तदनुपपत्तेः; यदि हि "तत्त्वमसि" इत्येवंजातीयकं वाक्यं सकृच्छ्रूयमाणं ब्रह्मात्मत्वप्रतीतिं नोत्पादयेत् ततस्तदेव आवर्त्यमानमुत्पादयिष्यतीति का प्रत्याशा स्यात् । अथोच्येत—न केवलं वाक्यं कंचिदर्थं साक्षात्कर्तुं शक्नोति, अतो युक्त्यपेक्षं वाक्यमनुभावयिष्यति ब्रह्मात्मत्वमिति—तथाप्यावृत्त्यानर्थक्यमेव; सापि हि युक्तिः सकृत्प्रवृत्तैव स्वमर्थमनुभावयिष्यति । अथापि स्यात्—युक्त्या वाक्येन च सामान्यविषयमेव विज्ञानं क्रियते, न विशेषविषयम्; यथा "अस्ति मे हृदये शूलम्" इत्यतो वाक्यात् गात्रकम्पादिलिङ्गाच्च शूलसद्भावसामान्यमेव परः प्रतिपद्यते, न विशेषमनुभवति—यथा स एव शूली; विशेषानुभवश्च अविद्याया निवर्तकः, तदर्था आवृत्तिरिति चेत्—न, असकृदपि तावन्मात्रे क्रियमाणे विशेषविज्ञानोत्पत्त्यसंभवात्; न हि सकृत्प्रयुक्ताभ्यां शास्त्रयुक्तिभ्यामनवगतो विशेषः

प्रकटार्थविवरणम्

असंप्रयोगवत्सकृत्तत्प्रवृत्तयोरेव ज्ञानजनकत्वं स्यात्; न चेत्, न जातु स्यात् । उभयथाप्यावृत्तिः व्यर्थेत्युक्तम् । तत्र युक्तिवाक्याभ्यां ब्रह्मात्मत्वमात्रज्ञानं भवति । साक्षात्काराय त्वावृत्त्यपेक्षेति चोदकश्चोदयतीति—अथापि स्यात् युक्त्या वाक्येन चेति ॥ तत्राप्येतदेव वाच्यम्, युक्तिवाक्ये किं साक्षात्काराय समर्थे किं वा न; आद्ये साक्षात्कारोऽपि सकृत्प्रवृत्ताभ्यामेव भवेत्; अन्त्ये युक्तिवाक्ये आवृत्त्यपेक्षयापि न साक्षात्कारजनके; तत्रासमर्थत्वाल्लैङ्गिकज्ञानविदित्याह—नासकृदिति ॥ ननु चतुरचेताः श्वेतकेतुरपि नवकृत्व उपदेशे यदा विजज्ञौ तदा कैव कथा मलबहुलकलेबराणामसकृदुपदेशेऽपि ज्ञानोदयस्य ? अतोऽवश्यं-

१. T¹. ब्रह्मास्मित्व
२. T¹. प्रवृत्ति-
३. T¹. न चासकृत्
४. TM and A. सकृदुप-

भाष्यम्

शतकृत्वोऽपि प्रयुज्यमानाभ्यामवगन्तुं शक्यते; तस्मात् यदि शास्त्र-युक्तिभ्यां विशेषः प्रतिपाद्येत यदि वा सामान्यमेव, उभयथापि सकृत्प्रवृत्ते एव ते स्वकार्यं कुरुत इति आवृत्त्यनुपयोगः; न च सकृत्प्रवृत्ते शास्त्रयुक्ती कस्यचिदप्यनुभवं नोत्पादयत इति शक्यते नियन्तुम्, 5
विचित्रप्रज्ञत्वात्प्रतिपत्तॄणाम्। अपि च अनेकांशोपेते लौकिके पदार्थे सामान्यविशेषवति एकेनावधानेन एकमंशमवधारयति, अपरेण अपरम्—इति स्यादप्यभ्यासोपयोगः, यथा दीर्घप्रपाठकग्रहणादिषु; न तु निर्विशेषे ब्रह्मणि सामान्यविशेषरहिते चैतन्यमात्रात्मके प्रमोत्पत्तौ अभ्यासापेक्षा युक्तेति ॥ 10

अत्रोच्यते—भवेदावृत्त्यानर्थक्यं तं प्रति, यः "तत्त्वमसि" इति सकृदुक्तमेव ब्रह्मात्मत्वमनुभवितुं शक्नुयात्; यस्तु न शक्नोति, तं प्रत्युपयुज्यत एव आवृत्तिः। तथा हि छान्दोग्ये "तत्त्वमसि श्वेतकेतो" इत्युपदिश्य, "भूय एव मा भगवान्विज्ञापयतु" इति पुनः पुनः परिचोद्यमानः तत्तदाशङ्काकारणं निराकृत्य, "तत्त्वमसि" इत्येवासकृदुपदिशति; तथा च "श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इत्यादि दर्शितम्। 15

प्रकटार्थविवरणम्

भाविन्यावृत्तिरित्याशङ्क्याह—न च सकृत्प्रवृत्ते इति ॥ जन्मान्तरीयसंस्कारप्रचयवतां सकृदुपदेशोऽपि साक्षात्कारः संभवतीति शुकवामदेवादीनामिवेत्यर्थः। भास्करोद्गारोऽपि जन्मान्तरीयसंस्कारसामर्थ्यबोधविरहप्रयुक्तः 20
सर्वज्ञतामन्तरेण न कस्यचिदित्यवधारणगोचरो मूर्खत्वमेव तस्याविष्करोति—सोपमानेनानुमाने[1] जगति मतिवैचित्र्यविलोपः[2] इति। एवं तावद्युक्तिवाक्यसामर्थ्यानुसारेणावृत्त्यानर्थक्यमुक्त्वा प्रमेयस्वभावपर्यालोचनयाप्यावृत्त्यानर्थक्यमाह—अपि चानेकांशोऽपेत इति ॥

अधिकारिभेदेनावृत्तेः सार्थक्यमानर्थक्यं चाह—अत्रोच्यत इत्यादिना ॥ 25
यथा गान्धर्वशास्त्राभ्याससहकृतेन श्रोत्रेण षड्जादिविभागसाक्षात्कारो

१. T[1] omits अनुमाने　　　　२. TM omits मति

### भाष्यम्

ननु उक्तं सकृच्छ्रुतं चेत् तत्त्वमसिवाक्यं स्वमर्थमनुभावयितुं न शक्नोति, तत आवर्त्यमानमपि नैव शक्ष्यतीति—नैष दोषः; न हि दृष्टेऽनुपपन्नं नाम; दृश्यन्ते हि सकृच्छ्रुताद्वाक्यात् मन्दप्रतीतं वाक्यार्थम् आवर्तयन्तः
5 तत्तदाभासव्युदासेन सम्यक्प्रतिपद्यमानाः । अपि च "तत्त्वमसि" इत्येतद्वाक्यं त्वंपदार्थस्य तत्पदार्थभावमाचष्टे; तत्पदेन च प्रकृतं सत् ब्रह्म ईक्षितृ जगतो जन्मादिकारणमभिधीयते—"सत्यं ज्ञानमनन्तं ब्रह्म" "विज्ञानमानन्दं ब्रह्म" "अदृष्टं द्रष्टृ" 'अविज्ञातं विज्ञातृ" "अजमजरममरम्" "अस्थूलमनण्वह्रस्वमदीर्घम्" इत्यादिशास्त्रप्रसि-
10 द्धम्, तत्र अजादिशब्दैर्जन्मादयो भावविकारा निवर्तिताः; अस्थूलादिशब्दैश्च स्थौल्यादयो द्रव्यधर्माः; विज्ञानादिशब्दैश्च चैतन्यप्रकाशात्मकत्वमुक्तम्; एष व्यावृत्तसर्वसंसारधर्मकोऽनुभवात्मको ब्रह्मसंज्ञकस्तत्पदार्थो वेदान्ताभियुक्तानां प्रसिद्धः; तथा त्वंपदार्थोऽपि प्रत्यगात्मा श्रोता देहादारभ्य प्रत्यगात्मतया संभाव्यमानः चैतन्यपर्यन्तत्वेन
15 अवधारितः; तत्र येषामेतौ पदार्थौ अज्ञानसंशयविपर्ययप्रतिबद्धौ, तेषां "तत्त्वमसि" इत्येतद्वाक्यं स्वार्थे प्रमां नोत्पादयितुं शक्नोति, पदार्थज्ञानपूर्वकत्वाद्वाक्यार्थस्य—इत्यतः, तान्प्रति एष्टव्यः पदार्थविवेकप्रयोजनः शास्त्रयुक्त्यभ्यासः । यद्यपि च प्रतिपत्तव्य आत्मा निरंशः, तथापि अध्यारोपितं तस्मिन् बह्वंशत्वं देहेन्द्रियमनोबुद्धिविषयवेदनादि-

20 ### प्रकटार्थविवरणम्

जायते, प्रथममनुत्पन्नोऽपि, तथा युक्तिसहकृताद्वाक्यात् प्रथममनुत्पन्नोऽप्यनुभव आवृत्तिसहकृताज्जायमानो दृष्टः कथंकारं वार्यत इत्याह—न हि दृष्टेऽनुपपन्नं नामेति ॥ लक्ष्यपदार्थाज्ञानादिदोषप्रतिबन्धादेव च पारोक्ष्यभ्रमो भवति । तद्व्युदासायापि अवश्यमावृत्तिरङ्गीकरणीयेत्याह—अपि च तत्त्वम-
25 सीत्यादिना ॥ यच्च प्रमेयस्य निरंशत्वादावृत्त्यानर्थक्यमुक्तं तत्राह—यद्यपि चेति ॥ [1]स्वतो निरंशत्वेऽपि वादिसमारोपितानां बहूनां व्यावर्त्यांशानां सद्भा-

१. T[1] and TM. सतो

भाष्यम्

लक्षणम्; तत्र एकेन अवधानेन एकमंशमपोहति, अपरेण अपरम्—इति युज्यते तत्र क्रमवती प्रतिपत्तिः; तत्तु पूर्वरूपमेवात्मप्रतिपत्तेः। येषां पुनर्निपुणमतीनां न अज्ञानसंशयविपर्ययलक्षणः पदार्थविषयः प्रतिबन्धोऽस्ति, ते शक्नुवन्ति सकृदुक्तमेव तत्त्वमसिवाक्यार्थम् अनुभवितुमिति, तान्प्रति आवृत्त्यानर्थक्यमिष्टमेव; सकृदुत्पन्नैव हि आत्मप्रतिपत्तिः अविद्यां निवर्तयतीति, नात्र कश्चिदपि क्रमोऽभ्युपगम्यते। सत्यमेवं युज्येत, यदि कस्यचित् एवं प्रतिपत्तिर्भवेत्; बलवती हि आत्मनो दुःखित्वादिप्रतिपत्तिः; अतो न दुःखित्वाद्यभावं कश्चित्प्रतिपद्यत इति चेत्—न, देहाद्यभिमानवत् दुःखित्वाद्यभिमानस्य मिथ्याभिमानत्वोपपत्तेः; प्रत्यक्षं हि देहे छिद्यमाने दह्यमाने वा 'अहं छिद्ये दह्ये' इति च मिथ्याभिमानो दृष्टः; तथा बाह्यतरेष्वपि पुत्रमित्रादिषु संतप्यमानेषु 'अहमेव संतप्ये' इत्यध्यारोपो दृष्टः; तथा दुःखित्वाद्यभिमानोऽपि स्यात्, देहादिवदेव चैतन्याद्बहिरुपलभ्यमानत्वाद्दुःखित्वादीनाम्, सुषुप्तादिषु च अननुवृत्तेः; चैतन्यस्य तु सुषुप्तेऽपि

प्रकटार्थविवरणम्

वात् घटते क्रमवती प्रतिपत्तिरित्यर्थः। ननु पूर्वाध्यायान्ते निरतिशयैवात्मप्रतिपत्तिरित्युक्तम्। कथमिदानीं तस्य परिच्छेददुःखित्वादिव्यावर्त्यांशभेदात् सातिशयत्वमुच्यते? तत्राह—तत्तु पूर्वरूपमेवेति॥ सेयं विचाराद्युत्था क्रमवती प्रतिपत्तिः, तत्पूर्वरूपमेव साक्षात्काररूपायाः प्रतिपत्तेः; एकरसस्वरूपसाक्षात्कारस्तु निरतिशय उक्त इत्यर्थः। एवं तावत्साक्षात्कारात्पूर्वं श्रवणाद्यावृत्तेः अर्थवत्त्वमुक्त्वा यदुक्तमधिकारिविशेषं प्रत्यावृत्त्यानर्थक्यं तद्विवृणोति—येषां पुनरित्यादिना॥ बलवत्प्रत्यक्षविरोधादेवंविधात्मप्रतिपत्तिरेव न संभवतीत्याह—सत्यमेवं युज्येतेति॥ पूर्वं बहुशः परिहृतमिदमेतदित्याह—न देहादीति॥ दुःखित्वादयो न तत्त्व[तत्त्वतः]आत्मधर्मं[धर्माः] वेद्यत्वाद्व्यभिचारित्वाद्वा, देहधर्मवदित्याह—देहादिवदेवेति॥ तर्हि चैतन्यस्यापि सुषुप्ते व्यभिचारादात्मधर्मत्वं न स्यादित्याशङ्क्याह — चैतन्यस्य त्विति॥ यस्माद्दुःखित्वादिप्रत्ययो मिथ्याभिमानं[नः] चैतन्यमेवाव्यभिचारिस्वरूपम्, तस्मादात्मानुभवो न

भाष्यम्

अनुवृत्तिमामनन्ति ; "यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति" इत्यादिना ; तस्मात्सर्वदुःखविनिर्मुक्तैकचैतन्यात्मकोऽहमित्येष आत्मानुभवः। न च एवमात्मानमनुभवतः किंचिदन्यत्कृत्यमवशिष्यते ; तथा च श्रुतिः—
5 "किं प्रजया करिष्यामो येषां नोऽयमात्मायं लोकः" इत्यात्मविदः कर्तव्याभावं दर्शयति ; स्मृतिरपि—

"यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ॥" इति ।

यस्य तु नैषोऽनुभवो द्रागिव जायते, तं प्रति अनुभवार्थ एव आवृत्त्यभ्युप-
10 गमः । तत्रापि न तत्त्वमसिवाक्यार्थात् प्रच्याव्य आवृत्तौ प्रवर्तयेत् ; न हि वरघाताय कन्यामुद्वाहयन्ति ; नियुक्तस्य च 'अस्मिन्नधिकृतोऽहं कर्ता मयेदं कर्तव्यम्' इत्यवश्यं ब्रह्मप्रत्ययाद्विपरीतप्रत्यय उत्पद्यते ; यस्तु स्वयमेव मन्दमतिः अप्रतिभानात् तं वाक्यार्थं जिहासेत्, तस्य एतस्मि-

प्रकटार्थविवरणम्

15 विरुध्यत इत्याह—तस्मादिति ॥ यथोक्तानुभवादेव च कृतकृत्यतेत्याह—न चैवमात्मानमिति ॥ यदुक्तं साक्षात्कारात्प्रागावृत्तेरर्थवत्त्वम्, तदिदानीं निगमयति अधिकविवक्षया—यस्य त्विति ॥ द्रागिव झटिति । नन्वावृत्तौ नियोगबलात् प्रवृत्तिर्वक्तव्या ; अतो नियोगसिद्ध्यर्था प्रवृत्तिर्नानुभवार्थेत्याशङ्क्याह—तत्रापीति ॥ "अहं ब्रह्मास्मि" इति प्रत्ययात् प्रच्याव्य नावृत्तौ पुरुषं प्रवर्त-
20 येत्, प्रधानविरोधप्रसङ्गात् । अकर्त्रात्मानुभवोद्देशेन हि श्रवणादिविधानम्, न नियोगोद्देशेन ; प्रधानविरोधश्चायुक्त इत्याह—न हीति ॥ नियोगसिद्ध्यर्थमावृत्त्यभ्युपगमेऽपि नाकर्त्रात्मानुभवो व्याहन्यते, नियोगादेव तत्सिद्धेरित्याशङ्क्याह—नियुक्तस्य चेति ॥ 'अस्मिन्नियोगेऽधिकृतः' 'अहं कर्ता' 'मयेदं कर्तव्यं कर्म' इत्यवश्यं विपरीतः प्रत्ययः स्यात्, कर्त्रन्वयस्याधिकारान्वयपुरः-
25 सरत्वात् नियोगवादे । न च नियोगोऽनुभवे हेतुर्लोके प्रसिद्धः । तस्मान्नियोगोद्देशेनावृत्त्यभ्युपगमे ब्रह्मानुभवो विरुध्यत एवेत्यर्थः । नियोगानङ्गीकारे कस्तर्ह्यावृत्तिविषय इत्याशङ्क्याह—यस्तु स्वयमेवेति ॥ सकृच्छ्रुताद्वाक्यादसंभाव-

भाष्यम्

मेव वाक्यार्थे स्थिरीकार आवृत्त्यादिवाचोयुक्त्या अभ्युपेयते । तस्मात् परब्रह्मविषयेऽपि प्रत्यये तदुपायोपदेशेष्वावृत्तिसिद्धिः ॥

[ आत्मत्वोपासनाधिकरणम् ]

## आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ४-१-३ ॥ 5

यः शास्त्रोक्तविशेषणः परमात्मा, स किम् अहमिति ग्रहीतव्यः, किं वा मदन्य इति—एतद्विचारयति । कथं पुनरात्मशब्दे प्रत्यगात्मविषये श्रूयमाणे संशय इति, उच्यते—अयमात्मशब्दो मुख्यः शक्यतेऽभ्युपगन्तुम्, सति जीवेश्वरयोरभेदसंभवे, इतरथा तु गौणोऽयमभ्युपगन्तव्यः—इति मन्यते । किं तावत्प्राप्तम्? न अहमिति ग्राह्यः; 10 न हि अपहतपाप्मत्वादिगुणो विपरीतगुणत्वेन शक्यते ग्रहीतुम्, विपरीतगुणो वा अपहतपाप्मत्वादिगुणत्वेन; अपहतपाप्मादिगुणश्च परमेश्वरः,

प्रकटार्थविवरणम्

तया यो जिहासेत् तस्य मन्दमतेः तस्मिन्नेव वाक्यार्थे चित्तस्थिरीकारायावृत्त्या श्रवणादीनि तत्र ब्रह्मानुभवसाधनानीत्युपदिश्यत इत्यर्थः । अधिकरणार्थ- 15 मुपसंहरति—तस्मादिति ॥

आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥

श्रवणमनननिदिध्यासनादीनि साधनान्यावृत्त्यानुष्ठेयानि इत्युक्तम्; तत्र ध्यानकाले कथं प्रत्ययावृत्तिः कर्तव्येत्येतद्विचारयति — यः शास्त्रोक्तेति ॥ विचारारम्भमाक्षिप्य समाधत्ते—कथं पुनरिति ॥ भेदस्यापि प्रामाणिकत्वं 20 मन्यमानस्यायं संशयो युक्त इत्यर्थः । अस्मत्स्वामी परमेश्वर इत्ययमेव प्रत्ययः कार्य इत्याह—नाहमिति ॥ परस्परविरुद्धभूतत्वादेकत्वप्रत्ययोऽशक्यकरण इत्यर्थः । किं च ईश्वरस्य शारीरमात्रत्वं वा शारीरस्य चे[१]श्वरमात्रत्वमिति विक-

१. A. चित्तवृत्तेः

भाष्यम्

तद्विपरीतगुणस्तु शारीरः; ईश्वरस्य च संसार्यात्मत्वे ईश्वराभावप्रसङ्गः। ततः शास्त्रानर्थक्यम्; संसारिणोऽपीश्वरात्मत्वेऽधिकार्यभावाच्छास्त्रानर्थक्यमेव, प्रत्यक्षादिविरोधश्च। अन्यत्वेऽपि तादात्म्यदर्शनं शास्त्रात् कर्तव्यम्—प्रतिमादिष्विव विष्ण्वादिदर्शनमिति चेत्—काममेवं भवतु; न तु संसारिणो मुख्य आत्मेश्वर इत्येतन्नः प्रापयितव्यम्॥

एवं प्राप्ते, ब्रूमः—आत्मेत्येव परमेश्वरः प्रतिपत्तव्यः। तथा हि परमेश्वरप्रक्रियायां जाबाला आत्मत्वेनैवैतमुपगच्छन्ति—"त्वं वा अहमस्मि भगवो देवतेऽहं वै त्वमसि भगवो देवते" इति। तथा अन्येपि "अहं ब्रह्मास्मि" इत्येवमादय आत्मत्वोपगमा द्रष्टव्याः। ग्राहयन्ति च आत्मत्वेनैवेश्वरं वेदान्तवाक्यानि "एष त आत्मा सर्वान्तरः" "एष त आत्मान्तर्याम्यमृतः" "तत्सत्यं स आत्मा तत्त्वमसि" इत्येवमादीनि। यदुक्तम्—प्रतीकदर्शनमिदं विष्णुप्रतिमान्यायेन भविष्यतीति, तदयुक्तम्, गौणत्वप्रसङ्गात्, वाक्यवैरूप्याच्च—यत्र हि प्रतीकदृष्टिरभिप्रेयते सकृदेव तत्र वचनं भवति, यथा "मनो ब्रह्म" "आदित्यो ब्रह्म" इत्यादि; इह पुनः त्वमहमस्म्यहं च त्वमसि इत्याह; अतः प्रतीकश्रुतिवैरूप्यात् अभेदप्रतिपत्तिः; भेददृष्ट्यपवादाच्च; तथा हि

प्रकटार्थविवरणम्

लभ्याह—ईश्वरस्य चेत्यादिना॥ भेदवादिनापि[1] तत्त्वमस्यादिशास्त्रप्रामाण्यादवश्यं तादात्म्यदर्शनमभ्युपगन्तव्यम्। एवं चेत्तादात्म्यमप्यभ्युपगम्यतामित्याह—अन्यत्वेऽपीति[2]॥ तादात्म्यदर्शनं भवतु; न प्रमाणविरुद्धं तादात्म्यमित्याह—काममेवमिति॥

सिद्धान्ते सूत्रं व्याचष्टे—आत्मेत्येवेति॥ पराभ्युपगममनूद्य दूषयति—यदुक्तमित्यादिना॥ वेदसत्यत्वश्रद्धालुः शङ्कते—प्रत्यक्षाद्यभाव इति॥

१. TM and A. वादेनापि

२. T and T¹ omit अपि

३. T. अन्यत्वेऽपीति

भाष्यम्

"अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद" "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" "सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद" इत्येवमाद्या भूयसी श्रुतिर्भेददर्शनमपवदति। यत्तूक्तम् — न विरुद्धगुणयोरन्योन्यात्मत्वसंभव इति, नायं दोषः, 5 विरुद्धगुणताया मिथ्यात्वोपपत्तेः । यत्पुनरुक्तम् — ईश्वराभावप्रसङ्ग इति, तदसत्, शास्त्रप्रामाण्यात्, अनभ्युपगमाच्च; न हि ईश्वरस्य संसार्यात्मत्वं प्रतिपाद्यत इत्यभ्युपगच्छामः; किं तर्हि, संसारिणः संसारित्वापोहेन ईश्वरात्मत्वं प्रतिपिपादयिषितमिति । एवं च सति- अद्वैतेश्वरस्यापहतपाप्मत्वादिगुणता, विपरीतगुणता त्वितरस्य मिथ्या— 10 इति व्यवतिष्ठते । यदप्युक्तम्—अधिकार्यभावः प्रत्यक्षादिविरोधश्चेति, तदप्यसत्, प्राक्प्रबोधात्संसारित्वाभ्युपगमात्, तद्विषयत्वाच्च प्रत्यक्षादिव्यवहारस्य; "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" इत्यादिना हि प्रबोधे प्रत्यक्षाद्यभावं दर्शयति । प्रत्यक्षाद्यभावे श्रुतेरप्यभावप्रसङ्ग इति चेत्, न, इष्टत्वात्; "अत्र पितापिता भवति" इत्युप- 15 क्रम्य "वेदा अवेदाः" इति वचनात् इष्यत एवास्माभिः श्रुतेरप्यभावः

प्रकटार्थविवरणम्

अयं दोषो नास्माकम्, वेदस्यापि वस्तुत्वाभावस्येष्टत्वादित्याह—नेष्टत्वादिति॥ तथा हि—न तावद्वर्णमात्रं वेदः, ककारादौ वेदबुद्ध्यभावात्; नापि विभूनां नित्यानां च वर्णानां देशकालक्रमः, कपिः पिकः इति युगपदेकस्य पूर्वापरीभाव- 20 विरोधात्; न च वस्तुक्रमोऽपि, परोच्चारणोपलब्ध्योः परस्याप्रत्यक्षत्वात्; न तत्क्रमविशिष्टानां वर्णानां प्रत्यक्षता, समारोपितक्रमविशिष्टानां कल्पितत्वात्; न चोपलक्षणंक्रमः, वैशिष्ट्यानुभवविरोधात्, क्रमं[क्रमं विना]कदाचिदपि वेदबुद्ध्यदर्शनाच्चेति । अप्रबोधावस्थायामेव वेदसत्यत्वाभिनिवेशपूर्वको व्यवहारः; प्रबोधे

भाष्यम्

प्रबोधे। कस्य पुनरयमप्रबोध इति चेत्, यस्त्वं पृच्छसि तस्य ते—
इति वदामः। ननु अहमीश्वर एवोक्तः श्रुत्या—यद्येवं प्रतिबुद्धोऽसि,
नास्ति कस्यचिदप्रबोधः। योऽपि दोषश्चोद्यते कैश्चिदविद्यया किल
5 आत्मनः सद्वितीयत्वादद्वैतानुपपत्तिरिति, सोऽप्येतेन प्रत्युक्तः। तस्मात्
आत्मेत्येव ईश्वरे मनो दधीत ॥

[ प्रतीकाधिकरणम् ]

## न प्रतीके न हि सः ॥ ४-१-४ ॥

"मनो ब्रह्मेत्युपासीतेत्यध्यात्मम् अथाधिदैवतमाकाशो ब्रह्मेति" तथा
10 "आदित्यो ब्रह्मेत्यादेशः" "स यो नाम ब्रह्मेत्युपास्ते" इत्येवमा-

प्रकटार्थविवरणम्

तु न[1] तत्र वस्तुबुद्धिरित्युक्तम्[2]; तत्राविद्यामसहमान आह—कस्य पुनरिति ॥
प्रष्टुरज्ञत्वस्य प्रसिद्धत्वात् तवैव प्रष्टृत्वादज्ञत्वं सिद्धमिति प्रश्नानुपपत्तिमाह—
यस्त्वमिति[3] ॥ सर्वज्ञेश्वराभेदान्न ममाज्ञत्वमित्याह[4]—नन्वहमिति ॥ यद्येवं
15 सर्वज्ञेश्वराभेदं प्रतिबुद्धोऽसि, तर्हि नास्ति कस्यचिद्विषयस्य तवाप्रबोध इति
प्रश्नानुपपत्तिरित्यर्थः। तस्मात्स्वानुभवसिद्धाप्रबोधाधीन एव प्रमातृत्वादि-
व्यवहार इति स्थितं यावदविद्यं प्रमाणादिव्यवहारः; प्रबोधे तु तत्र वस्तु-
बुद्धिर्निवर्तत इति। एतेन न्यायेन चोद्यान्तरमपि चूर्णितम्, सर्वस्यापि भेदस्या-
वस्तुत्वादित्याह[5]—योऽपि दोष इति[6] ॥

20 न प्रतीके न हि सः ॥

विषयमनूद्योपासनेषु उभयथाभाव[7]दर्शनात् संशयमाह—मनो ब्रह्मेत्या-

१. A omits न
२. A. बुद्धिरित्येतेन न्यायेनेत्यु-
३. TM. अणुस्त्वमिति
४. A. ममाज्ञत्वं
५. TM adds आह
६. A. लोके दोष इति
७. A. भान

भाष्यम्

दिषु प्रतीकोपासनेषु संशयः—किं तेष्वपि आत्मग्रहः कर्तव्यः, न वेति। किं तावत्प्राप्तम्? तेष्वप्यात्मग्रह एव युक्तः कर्तुम्; कस्मात्? ब्रह्मणः श्रुतिष्वात्मत्वेन प्रसिद्धत्वात्, प्रतीकानामपि ब्रह्मविकारत्वाद्ब्रह्मत्वे सति आत्मत्वोपपत्तेरिति। एवं प्राप्ते, ब्रूमः— 5

न प्रतीकेष्वात्ममतिं बध्नीयात्; न हि स उपासकः प्रतीकानि व्यस्तानि आत्मत्वेन आकलयेत्। यत्पुनर्ब्रह्मविकारत्वात्प्रतीकानां ब्रह्मत्वं ततश्चात्मत्वमिति, तदसत्, प्रतीकाभावप्रसङ्गात्; विकारस्वरूपोपमर्देन हि नामादिजातस्य ब्रह्मत्वमेवाश्रितं भवति; स्वरूपोपमर्दे च नामादीनां कुतः प्रतीकत्वम् आत्मग्रहो वा? न च ब्रह्मण आत्मत्वाद्ब्रह्मदृष्ट्युपदेशेष्वा- 10 त्मदृष्टिः कल्प्या, कर्तृत्वाद्यनिराकरणात्; कर्तृत्वादिसर्वसंसारधर्मनिराक- रणेन हि ब्रह्मण आत्मत्वोपदेशः; तदनिराकरणेन च उपासनविधानम्; अतश्च उपासकस्य प्रतीकैः समत्वादात्मग्रहो नोपपद्यते; न हि रुचकस्व-

प्रकटार्थविवरणम्

दिना॥ पूर्ववन्नामादीन्यहमिति बुद्धिः कर्तव्येत्याह—तेष्वपीति॥ न प्रती- 15 केष्वात्ममतिं कुर्यात्, ऐक्यचोदनाभावे सति स्वरूपेण भिन्नत्वादुद्गीथादिष्विवे- त्याह—प्रतीकेष्विति॥ तानि प्रतीकानि आकलयेत् अवगच्छेदित्यर्थः। पूर्व- पक्षहेत्वाभासं निरस्यति—यत्पुनरित्यादिना॥ व्यावृत्तेन विकाररूपेण नामादीनां ब्रह्मत्वासंभवात्तदुपमर्दे च नामादेरेवाभावान्नाहंग्रहस्तत्र युक्त इत्यर्थः। ननु "नाम ब्रह्म" इत्यस्य नामाहमित्ययमेवार्थो ब्रह्मण आत्मत्वा- 20 दित्याशङ्क्याह—न च ब्रह्मण इति॥ यद्ब्रह्म नामादिष्वध्यस्यते तन्नाहंबुद्धि- ग्राह्यम्, कर्तृत्वादिविशिष्टस्याहंबुद्धिग्राह्यत्वात्; लक्षणयाप्यहंशब्दो न प्रयो- क्तव्यः, कर्तृत्वादेरुपासनादशायामनिराकरणादित्यर्थः। फलितमाह—अत- श्चेति॥ समत्वादिति॥ विशिष्टरूपेण विकारत्वसाम्यात् विकारस्य च विकारान्तरत्वानुपपत्तिरित्यर्थः। ननु रुचकस्वस्तिकयोः यथा स्वर्णात्मकत्वं 25

१. TM. ननु

२. TM. विशेषस्य

भाष्यम्

स्तिकयोरितरेतरात्मत्वमस्ति ; सुवर्णात्मनैव तु ब्रह्मात्मना एकत्वे प्रतीकाभावप्रसङ्गमवोचाम । अतो न प्रतीकेष्वात्मदृष्टिः क्रियते ॥

[ ब्रह्मदृष्ट्यधिकरणम् ]

5 ब्रह्मदृष्टिरुत्कर्षात् ॥ ४-१-५ ॥

तेष्वेव उदाहरणेष्वन्यः संशयः—किमादित्यादिदृष्टयो ब्रह्मण्यध्यसितव्याः, किं वा ब्रह्मदृष्टिरादित्यादिष्विति । कुतः संशयः ? सामा-

प्रकटार्थविवरणम्

तथा प्रतीकोपासकयोरपि ब्रह्मात्मनैकत्वादहंग्रहो भविष्यतीत्याशङ्क्याह —
10 सुवर्णात्मनैव त्विति ॥ विकाररूपतिरस्कारेणैवैकत्वम् ; तदा च न प्रतीकत्वमित्यर्थः । रुचकस्वस्तिके परस्परव्यावृत्ते[1] वस्तुनी स्वीक्रियेते; तदा सुवर्णमपि[2] ताभ्यां परस्परव्यावृत्ताभ्यां अनुवृत्ताकारेण विलक्षणमेवेति कथंकारं तत्तयोः स्वरूपं[3] स्यात् । प्रत्यक्षमपि रुचकमिदं स्वस्तिकमिदमित्येतावत् गोचरयति । अपरं च सुवर्णविकारताम्, न तु व्यावृत्तयोरेकरूपताम् ; न च दर्शने विप्रति-
15 पन्नः 'दृश्यते' इत्युक्त्यैव प्रतिबोधनीयः; अपि तु संप्रतिपन्नेन मानान्तरेण; नास्ति[4] चानेकेषामेकं रूपमित्यत्र मानान्तरम् । मम त्वस्ति–विमतं नानेकेषां रूपम्[5] अनौपाधिकतद्व्यावृत्तिमत्त्वात् यदेवं तदेवं यथा रुचकमिति । अथान्तर्बहिर्वा निरूप्यमाणे रुचकादिषु सुवर्णान्तत्वान्तरमुपलभ्यते । अतः सुवर्णात्मता यन्मण्यते, तर्हि विकाररूपमित्यत्र[रूपम] तिरस्कारेणैव प्रत्यगात्मतेति मन्मार्गमेवाश्रित[6] इत्युप-
20 रम्यते ॥

ब्रह्मदृष्टिरुत्कर्षात् ॥

प्रतीकोपासनेष्वेव संशयान्तरमाह—तेष्वेवेति ॥ प्रश्नपूर्वकं संशयबीजं[7] माह—कुत इत्यादिना ॥ अस्ति तावत् सामानाधिकरण्यम् ; न तत् सोऽयं देव-

१. T, T¹ and TM. परिहारव्यावृत्ते वस्तुनि
२. A. सुवर्णं च
३. A. रूपतया
४. T¹. नास्त्यृचामेके
५. T and T¹. एकरूपं
६. A. मनस्यस्ति
७. A omits बीजं

भाष्यम्

नाधिकरण्ये कारणानवधारणात्; अत्र हि ब्रह्मशब्दस्यादित्यादिशब्दैः सामानाधिकरण्यमुपलभ्यते, "आदित्यो ब्रह्म" "प्राणो ब्रह्म" "विद्युद्ब्रह्म" इत्यादिसमानविभक्तिनिर्देशात्; न च अत्र आञ्जसं सामानाधिकरण्यमवकल्पते, अर्थान्तरवचनत्वाद्ब्रह्मादिशब्दानाम्; न हि भवति— 5
गौरश्व इति सामानाधिकरण्यम्। ननु प्रकृतिविकारभावाद्ब्रह्मादित्यादीनां मृच्छरावादिवत्सामानाधिकरण्यं स्यात्—नेत्युच्यते; विकारप्रविलयो ह्येवं प्रकृतिसामानाधिकरण्यात्स्यात्, ततश्च प्रतीकाभावप्रसङ्गमवोचाम; परमात्मवाक्यं चेदं तदानीं स्यात्, ततश्चोपासनाधिकारो बाध्येत, परिमितविकारोपादानं च व्यर्थम्। तस्मात् "ब्राह्मणोऽग्निर्वैश्वानरः" 10
इत्यादिवदन्यत्रान्यदृष्ट्यध्यासे सति, क्व किंदृष्टिरध्यस्यतामिति संशयः। तत्र अनियमः, नियमकारिणः शास्त्रस्याभावादित्येवं प्राप्तम्। अथवा आदित्यादिदृष्टय एव ब्रह्मणि कर्तव्या इत्येवं प्राप्तम्; एवं हि आदित्यादिदृष्टिभिर्ब्रह्म उपासितं भवति; ब्रह्मोपासनं च फलवदिति शास्त्रमर्यादा। तस्मान्न ब्रह्मदृष्टिरादित्यादिष्वित्येवं प्राप्ते 15

ब्रूमः—ब्रह्मदृष्टिरेवादित्यादिषु स्यादिति। कस्मात्? उत्कर्षात्; एवमुत्कर्षेणादित्यादयो दृष्टा भवन्ति, उत्कृष्टदृष्टेस्तेष्वध्यासात्; तथा च लौकिको न्यायोऽनुगतो भवति; उत्कृष्टदृष्टिर्हि निकृष्टेऽध्यसितव्येति

प्रकटार्थविवरणम्

श्वः इतिवन्मुख्यम्; नापि प्रकृतिविकारभावनिबन्धनम्; परिशेषादध्यास- 20
निबन्धनं वक्तव्यम्। तथा च संशय इत्यर्थः। पूर्वपक्षमाह—तत्रानियम इति॥
यथा पूर्वत्राहंग्रहाभावे नियामक आत्यन्तिकभेद उक्तः, तथा आदित्यादिष्वेव ब्रह्मदृष्टिनियामकं किंचिन्नोपलभ्यत इत्यर्थः। उत्कृष्टनिकृष्टयोः उत्कृष्टमेवोपास्यम्, फलविशेषवत्त्वात् राजादिवदित्यनुमानं वा नियामकमित्याह—अथवेति॥

उत्कृष्टदृष्ट्या निकृष्टमुपास्यमिति लौकिकन्यायस्य निर्णायकस्य सद्भावा- 25
त्प्रथमः पूर्वपक्षोऽसंगत इत्याह—ब्रूम इति॥ किंच असञ्जातविरोधितया प्रथम-
श्रुता आदित्यादय एव चरमश्रुतत्वेन सञ्जातविरोधप्रत्ययमात्रब्रह्मदृष्टि[प्रत्यय-

भाष्यम्

लौकिको न्यायः—यथा राजदृष्टिः क्षत्तरि; स चानुसर्तव्यः विपर्यये प्रत्यवायप्रसङ्गात्; न हि क्षत्तृदृष्टिपरिगृहीतो राजा निकर्षं नीयमानः श्रेयसे स्यात्। ननु शास्त्रप्रामाण्यादनाशङ्कनीयोऽत्र प्रत्यवाय-
5 प्रसङ्गः, न च लौकिकेन न्यायेन शास्त्रीया दृष्टिर्नियन्तुं युक्तेति—अत्रोच्यते—निर्धारिते शास्त्रार्थे एतदेवं स्यात्; संदिग्धे तु तस्मिन्, तन्निर्णयं प्रति लौकिकोऽपि न्याय आश्रीयमाणो न विरुध्यते; तेन चोत्कृष्टदृष्ट्याध्यासे शास्त्रार्थेऽवधार्यमाणे, निकृष्टदृष्टिमध्यस्यन्प्रत्यवेयादिति श्लिष्यते। प्राथम्याच्चादित्यादिशब्दानां मुख्यार्थत्वमविरोधा-
10 द्गृहीतव्यम्; तैः स्वार्थवृत्तिभिरवरुद्धायां बुद्धौ, पश्चादवतरतो ब्रह्मशब्दस्य मुख्यया वृत्त्या सामानाधिकरण्यासंभवात् ब्रह्मदृष्टिविधानार्थतैव अवतिष्ठते। इतिपरत्वादपि ब्रह्मशब्दस्यैष एवार्थो न्याय्यः; तथा हि "ब्रह्मेत्यादेशः" "ब्रह्मेत्युपासीत" "ब्रह्मेत्युपास्ते" इति च सर्वत्रेतिपरं ब्रह्मशब्दमुच्चारयति, शुद्धांस्तु आदित्यादिशब्दान्;
15 ततश्च यथा शुक्तिकां रजतमिति प्रत्येतीत्यत्र, शुक्तिवचन एव शुक्तिकाशब्दः, रजतशब्दस्तु रजतप्रतीतिलक्षणार्थः—प्रत्येत्येव हि केवलं रजतमिति, न तु तत्र रजतमस्ति—एवमत्राप्यादित्यादीन्ब्रह्मेति प्रतीयादिति गम्यते। वाक्यशेषोऽपि च द्वितीयानिर्देशेनादित्यादीनेवोपास्तिक्रियया व्याप्यमानान्दर्शयति—"स य एतदेवं विद्वानादित्यं ब्रह्मेत्युपास्ते"
20 "यो वाचं ब्रह्मेत्युपास्ते" "यः संकल्पं ब्रह्मेत्युपास्ते" इति च। यत्तूक्तम्—ब्रह्मोपासनमेवात्रादरणीयं फलवत्त्वायेति, तदयुक्तम्; उक्तेन

प्रकटार्थविवरणम्

ब्रह्मदृष्टिमात्रे]विशिष्टा उपास्या इत्याह—प्राथम्याच्चेति ॥ अतोऽपि ब्रह्मशब्दः प्रत्ययमात्रपर इत्याह—इतिपरत्वादपीति ॥ कर्मत्वाभिधायिद्वितीयाश्रुतेरप्या-
25 दित्यादीनामेवोपास्यत्वमित्याह—वाक्यशेषोऽपि चेति ॥ द्वितीयपूर्वपक्षमनूद्य दूषयति-यत्तूक्तमिति ॥ आदित्यादीनामेवोपास्यत्वसमर्पकद्वितीयाश्रुतिविरुद्ध-

भाष्यम्

न्यायेनादित्यादीनामेव उपास्यत्वावगमात्; फलं तु अतिथ्याद्युपासन इव आदित्याद्युपासनेऽपि ब्रह्मैव दास्यति, सर्वाध्यक्षत्वात्; वर्णितं चैतत् "फलमत उपपत्तेः" इत्यत्र। ईदृशं चात्र ब्रह्मण उपास्यत्वं यत्प्रतीकेषु तद्दृष्ट्यध्यारोपणम्—प्रतिमादिष्विव विष्ण्वादीनाम्॥ 5

[आदित्यादिमत्यधिकरणम्]

## आदित्यादिमतयश्चाङ्ग उपपत्तेः॥ ४-१-६॥

"य एवासौ तपति तमुद्गीथमुपासीत" "लोकेषु पञ्चविधं सामोपासीत" "वाचि सप्तविधं सामोपासीत" "इयमेवर्गग्निः साम" इत्येवमादिष्वङ्गावबद्धेषूपासनेषु संशयः—किमादित्यादिषूद्गीथादिदृष्टयो 10 विधीयन्ते, किं वा उद्गीथादिष्वेवादित्यादिदृष्टय इति। तत्र अनियमः, नियमकारणाभावात्—इति प्राप्तम्; न ह्यत्र ब्रह्मण इव कस्यचिदुत्कर्षविशेषोऽवधार्यते; ब्रह्म हि समस्तजगत्कारणत्वादपहतपाप्मत्वादिगुणयोगाच्च आदित्यादिभ्य उत्कृष्टमिति शक्यमवधारयितुम्; न तु आदित्योद्गीथादीनां विकारत्वाविशेषात् किंचिदुत्कर्षविशेषावधारणे कारणमस्ति। 15 अथ वा नियमेनोद्गीथादिमतय आदित्यादिषु अध्यस्येरन्; कस्मात्? कर्मा-

प्रकटार्थविवरणम्

मनुमानमित्यर्थः। किं च फलदातृत्वमन्यथापि सिद्धमित्याह—फलं त्विति॥

किंच नास्माभिः ब्रह्मणोऽत्यन्तमनुपास्यत्वमुच्यत इत्याह—ईदृशं चात्रेति॥

आदित्यादिमतयश्चाङ्ग उपपत्तेः॥ 20

विषयमनूद्य विशेषानुपलम्भात्संशयमाह—य एवासौ तपतीति॥

पूर्वाधिकरणवन्निर्णयकारणाभावात् पूर्वपक्षमाह—तत्रानियम इति॥

कर्मरूपाणामुद्गीथादीनामुत्कर्षप्रतिभानात्पक्षान्तरमाह—अथ वेति॥ किंच

१. T. अन्यथा प्रसि- A omits अपि

२. A. उपास्यत्वं

भाष्यम्

त्मकत्वादुद्गीथादीनाम्, कर्मणश्च फलप्राप्तिप्रसिद्धेः; उद्गीथादिमतिभिरुपा-
स्यमाना आदित्यादयः कर्मात्मकाः सन्तः फलहेतवो भविष्यन्ति । तथा
च "इयमेवर्गग्निः साम" इत्यत्र "तदेतदेतस्यामृच्यध्यूढं साम"
5 इत्यृक्शब्देन पृथिवीं निर्दिशति, सामशब्देनाग्निम्; तच्च पृथिव्यग्न्योः
ऋक्सामदृष्टिचिकीर्षायामवकल्पते, न ऋक्सामयोः पृथिव्यग्निदृष्टिचि-
कीर्षायाम्; क्षत्तरि हि राजदृष्टिकरणात् राजशब्द उपचर्यते, न राजनि
क्षत्तृशब्दः । अपि च "लोकेषु पञ्चविधं सामोपासीत" इत्यधि-
करणनिर्देशात् लोकेषु साम अध्यसितव्यमिति प्रतीयते; "एतद्गायत्रं
10 प्राणेषु प्रोतम्" इति चैतदेव दर्शयति । प्रथमनिर्दिष्टेषु च आदित्यादिषु
चरमनिर्दिष्टं ब्रह्माध्यस्तम् "आदित्यो ब्रह्मेत्यादेशः" इत्यादिषु;
प्रथमनिर्दिष्टाश्च पृथिव्यादयः, चरमनिर्दिष्टा हिंकारादयः—"पृथिवी
हिंकारः" इत्यादिश्रुतिषु । अतः अनङ्गेष्वादित्यादिषु अङ्गमतिनिक्षेप
इत्येवं प्राप्ते ब्रूमः—

15 प्रकटार्थविवरणम्

सिद्धरूपादित्याद्यात्मना दृष्टा उद्गीथादयः फलहेतवः न भविष्यन्ति;
अङ्गपक्षे तु आदित्यादीनामपि फलहेतुत्वं भविष्यतीत्याह—कर्मणश्चेति ॥
अनङ्गेष्वेवाङ्गमतिकर्तव्यतायां हेत्वन्तरमाह — तथा चेयमेवेत्यादिना ॥
तदेतदग्न्याख्यं साम एतस्यां पृथिवीलक्षणायामृचि अध्यूढम् उपरि स्थितमिति
20 पृथिव्यग्नौ ऋक्सामशब्दप्रयोगान्यथानुपपत्त्या तत्र कर्माङ्गभूतऋक्सामाध्यास
इत्यर्थः । सप्तमीश्रुतिबलादपि अनङ्गेषु अङ्गमतिक्षेप इत्याह—अपि चेति ॥
पूर्वाधिकरणन्यायमप्युपोद्बलकमाह —प्रथमनिर्दिष्टेषु चेति ॥

सिद्धान्तसूत्रमवतारयति —एवं प्राप्ते ब्रूम इति ॥ यथा प्रोक्षणादिना
व्रीह्यादिषु संस्कृतेषु कर्मापूर्वं निष्पद्यते, तथा प्रकृतकर्मापूर्वसन्निधानादादित्या-
25 दिमतिभिः संस्क्रियमाणेषु उद्गीथादिषु कर्मसमृद्धिरुपपद्यते । अतः कर्म-

१. TM. दृष्टोऽपि

२. A. मतिक्षेप

३. T and T[1] omit अतः

भाष्यम्

आदित्यादिमतय एव अङ्गेषु उद्गीथादिषु क्षिप्येरन्; कुतः? उपपत्तेः; उपपद्यते हि एवम् अपूर्वसंनिकर्षात् आदित्यादिमतिभिः संस्क्रियमाणेषु उद्गीथादिषु कर्मसमृद्धिः। "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" इति च विद्यायाः कर्मसमृद्धिहेतुत्वं दर्शयति। भवतु 5 कर्मसमृद्धिफलेष्वेवम्; स्वतन्त्रफलेषु तु कथम् "य एतदेवं विद्वाँल्लोकेषु पञ्चविधं सामोपास्ते" इत्यादिषु? तेष्वप्यधिकृताधिकारात्प्रकृतापूर्वसंनिकर्षेणैव फलकल्पना युक्ता, गोदोहनादिनियमवत्। फलात्मकत्वाच्च आदित्यादीनाम् उद्गीथादिभ्यः कर्मात्मकेभ्य उत्कर्षोपपत्तिः; आदित्यादिप्राप्तिलक्षणं हि कर्मफलं शिष्यते श्रुतिषु। अपि च "ओमित्येत- 10 दक्षरमुद्गीथमुपासीत" "खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवति" इति च उद्गीथमेवोपास्यत्वेनोपक्रम्य, आदित्यादिमतीर्विदधाति। यत्तूक्तम्— उद्गीथादिमतिभिरुपास्यमाना आदित्यादयः कर्मभूयं भूत्वा फलं करि-

प्रकटार्थविवरणम्

समृद्धिफलोपपत्तेरङ्गेषु अनङ्गमतिक्षेप इत्यर्थः। ननु उपासनानां न कर्म- 15 समृद्धिः फलमित्याशङ्क्याह—यदेव विद्ययेति॥ यत्र कर्मसमृद्धिः फलं श्रूयते, तत्राङ्गेषु मतिक्षेपो भवतु, मतिसंस्कृतानां सातिशयकर्मजनकत्वात्; स्वतन्त्र- फलेषु तु कथं मतिक्षेप इति न ज्ञायत इत्याशङ्कार्थः॥ तेष्वपीति॥ स्वतन्त्र- फलेष्वप्युपासनेषु प्रकृतकर्मापूर्वाङ्गव्यपाश्रयेणैव तेष्वेव मतिक्षेपकरणेन फल- कल्पना युक्ता, कर्माङ्गाधिकृतस्यैव, तत्संबद्धोपासनेष्वधिकारात्। यथाधि- 20 कृताधिकारेषु गोदोहनादिषु स्वतन्त्रफलसाधनेष्वपि प्रकृतकर्माङ्गाश्रयणेनैव फलं तद्वदित्यर्थः। यत्प्रथमपूर्वपक्षे उत्कर्षावधारणं नास्तीति, तत्राह— फलात्मकत्वाच्चेति॥ उपक्रमानुसारेणाप्युद्गीथादिष्वेव मतिक्षेप इत्याह— अपि चेति॥ एतस्यैवाक्षरस्य उद्गीथस्य उप सामीप्येन व्याख्यानम् एवंगुणक- मुपासनमेवंफलकं चेति कथनं प्रस्तुतमित्यर्थः। द्वितीयपूर्वपक्षोक्तं दूषयति— 25 यत्तूक्तमित्यादिना॥ कर्मभूयं भूत्वा कर्मभावमापद्य। यथोक्तं पृथिव्यग्न्योः

१. T¹ पत्त्योपपत्तिं

भाष्यम्

ध्यन्तीति, तदयुक्तम्, स्वयमेवोपासनस्य कर्मत्वात्फलवत्त्वोपपत्तेः आदित्यादिभावेनापि च दृश्यमानानामुद्गीथादीनां कर्मात्मकत्वानपायात्। "तदेतदेतस्यामृच्यध्यूढं साम" इति तु लाक्षणिक एव पृथि-
5 व्यग्न्योः ऋक्सामशब्दप्रयोगः; लक्षणा च यथासंभवं संनिकृष्टेन विप्रकृष्टेन वा स्वार्थसंबन्धेन प्रवर्तते; तत्र यद्यपि ऋक्सामयोः पृथिव्यग्निदृष्टिचिकीर्षा, तथापि प्रसिद्धयोः ऋक्सामयोर्भेदेनानुकीर्तनात्, पृथिव्यग्न्योश्च संनिधानात्, तयोरेवैष ऋक्सामशब्दप्रयोगः ऋक्सामसंबन्धादिति निश्चीयते; क्षत्तृशब्दोऽपि हि कुतश्चित्कारणाद्राजानमुपसर्पन् न निवारयितुं

10 प्रकटार्थविवरणम्

ऋक्सामशब्दप्रयोगान्यथानुपपत्त्या तद्दृष्टिरिति, तत्राह— तदेतदस्यामिति ॥ पृथिव्यग्न्योः ऋक्सामाध्यासनमन्तरेणापि तत्र लाक्षणिकशब्दप्रयोगो भविष्यतीत्यर्थः। ननु लक्षणापि निर्निमित्ता न संभाव्यत इत्याशङ्क्याह— लक्षणा चेति ॥ 'शोणस्तिष्ठति' इत्यत्र गुणवाचकेन शोणशब्देन गुणी लक्ष्यत इति संनि-
15 कृष्टलक्षणा; 'अग्निरधीतेऽनुवाकम्' इत्यत्र अग्निशब्दस्तीव्रत्वान्माणवकं लक्षयतीति विप्रकृष्टलक्षणा; न हि साक्षादग्निशब्दस्य माणवकसंबन्धोऽस्तीत्यर्थः। ततः प्रकृते किमायातमित्याशङ्क्याह—तत्र यद्यपीति ॥ तथापि तयोरेव पृथिव्यग्न्योरेव एष[1]"तदेतदेतस्यामृच्यध्यूढं साम"इति ऋक्सामशब्दप्रयोग इति योजना। मुख्यसंभवे हेतुः—प्रसिद्धयोः ऋक्सामयोः "तस्मादृच्यध्यूढं साम गीयते" इति। भेदा-
20 नुकीर्तनात् पौनरुक्त्यापातात् "तदेतदेतस्यामृचि" इत्यत्र ग्रहणं[3] न संभवतीत्यर्थः। पृथिव्यग्न्योश्चाध्यस्तत्वेन ऋक्सामसंनिधानाल्लक्षणाहेतुः संबन्धोऽस्तीत्यर्थः। ननु ऋचि पृथिवीदृष्टिः, साम्नि चाग्निदृष्टिरित्येव...ता[रित्येतावता]संबन्धेन पृथिव्यग्न्योः ऋक्सामशब्दप्रयोगो लक्षणया घटते क्षत्तरि राजदृष्टिकरणेऽपि राजनि क्षत्तृशब्दप्रयोगप्रसङ्गादित्याशङ्क्याह — क्षत्तृशब्दोऽपीति ॥

१. A. सामयोगादिति
२. TM omits एतत्
३. TM. ग्रहणात्
४. T, TM and A omit पृथिव्याः... संबन्धेन

भाष्यम्

पार्यते । "इयमेवर्क्" इति च यथाक्षरन्यासम् ऋच एव पृथिवीत्वमव-धारयति; पृथिव्या हि ऋक्त्वेऽवधार्यमाणे इयमृगेवेत्यक्षरन्यासः स्यात् । "य एवं विद्वान्साम गायति" इति चाङ्गाश्रयमेव विज्ञानमुपसंहरति, न पृथिव्याद्याश्रयम् । तथा "लोकेषु पञ्चविधं सामोपासीत" इति यद्यपि सप्तमीनिर्दिष्टा लोकाः, तथापि साम्न्येव ते अध्यस्येरन्, द्वितीयानिर्देशेन साम्न उपास्यत्वावगमात्; सामनि हि लोकेष्वध्यस्यमानेषु साम लोकात्मनोपासितं भवति, अन्यथा पुनः लोकाः सामात्मनोपासिताः स्युः । एतेन "एतद्गायत्रं प्राणेषु प्रोतम्" इत्यादि व्याख्यातम् । यत्रापि तुल्यो द्वितीयानिर्देशः—"अथ खल्वमुमादित्यं सप्तविधं सामोपासीत" इति, तत्रापि "समस्तस्य खलु साम्न उपासनं साधु" "इति तु पञ्चविधस्य" "अथ सप्तविधस्य" इति च साम्न

प्रकटार्थविवरणम्

राजापि यदा क्षत्तुः सूतस्य कर्माचरति तदा तत्क्षत्तृशब्दो लक्षणया प्रयुज्यत एव; सदाप्रयोगाभावस्तु न दूषणम्, न हि प्रवृत्तिनिमित्तसद्भावमात्रेण[1] पङ्कजादिशब्दः सर्वत्र प्रयुज्यत इति भावः । इतोऽप्यृगादिष्वेव पृथिव्यादिदृष्टिः कर्तव्येत्याह—इयमेवर्गिति चेति ॥ यथोक्तं सप्तमीप्रयोगादनङ्गेष्वेवाङ्गदृष्टिरिति, तत्राह—तथा लोकेष्विति ॥ उत्कृष्टदृष्टिर्निकृष्टे[2] कर्तव्येति लौकिकन्यायानुगृहीतया द्वितीयाश्रुत्या सप्तमी तृतीयार्थे परिणेया । गायत्रं नाम साम प्राणात्मनोपासीतेत्यर्थः । यत्र तर्हि अङ्गानङ्गयोः द्वितीयानिर्देशः तुल्यस्तत्र कथं निर्णय इत्याशङ्क्याह—यत्रापीति ॥ सप्तविधमिति ॥ हिङ्कारः प्रस्तावः आदिरुद्गीथः प्रतिहार उपद्रवो निधनमिति । समस्तस्यावयविनः साम्न उपासनं साधुगुणकमुपक्रम्य मध्ये च लोकात्मना पञ्चविधं हिङ्कारप्रस्तावोद्गीथप्रतिहारनिधनलक्षणमुपासीतेति प्रस्तुतम् । "इति तु पञ्चविधस्य" इत्युपसंहृत्य

१. TM. मात्रे न

२. A omits उत्कृष्टदृष्टिः

३. T¹. विरलन

भाष्यम्

एवोपास्यत्वोपक्रमात्—तस्मिन्नेवादित्याद्यध्यासः । एतस्मादेव च साम्न उपास्यत्वावगमात् "पृथिवी हिंकारः" इत्यादिनिर्देशविपर्ययेऽपि हिंकारादिष्वेव पृथिव्यादिदृष्टिः । तस्मादनङ्गाश्रया आदित्यादिमतयः
5 अङ्गेषूद्गीथादिषु क्षिप्येरन्निति सिद्धम् ॥

[ आसीनाधिकरणम् ]

## आसीनः संभवात् ॥ ४-१-७ ॥

कर्माङ्गसंबद्धेषु तावदुपासनेषु कर्मतन्त्रत्वात् नासनादिचिन्ता ; नापि सम्यग्दर्शने, वस्तुतन्त्रत्वाद्विज्ञानस्य ; इतरेषु तु उपासनेषु किम् अनिय-
10 मेन तिष्ठन्नासीनः शयानो वा प्रवर्तेत उत नियमेनासीन एवेति चिन्तयति ।

प्रकटार्थविवरणम्

पुनः "अथ सप्तविधस्य"[1] इत्युक्तम् । एवं पञ्चविधं सप्तविधं[2] च समस्तसामोपास्यत्वेन प्रक्रान्तमित्यर्थः । यदुक्तं पूर्वाधिकरणन्यायेन[3] प्रथमश्रुतेः चरमश्रुतमध्यस्यत इति, तत्राह— एतस्मादेव चेति ॥ हिङ्कारोद्देशेन पृथिवीत्वविधाने
15 हिङ्कारः पृथिवीति निर्देशो युक्तः ; तस्य वैपरीत्येऽपि प्रकरणात् साम्न उपास्यत्वावगमात् हिङ्कारादिष्वेव पृथिव्यादिदृष्टिः कर्तव्येत्यर्थः ॥

आसीनः संभवात् ॥

एवं तावत्परापरोपासनेषु चिन्तनप्रकारमनुचिन्त्य आसनादि चिन्तयितुं उपक्रमते । तत्राप्यसन्दिग्धमङ्ग[ मंश ]मनूद्य सन्देहमाह–कर्माङ्गेत्यादिना ॥ उपा-
20 सनं अनुष्ठेयमवगम्यते[4] । अनुष्ठेयं च किंचित्तिष्ठतानुष्ठीयते, किंचिदुपविष्टेनेत्यनेकधा दर्शनात्संशयः । मनःशरीरयोर्भिन्नत्वात् मनोव्यापारमुपासनं प्रति शरीरस्यानुपकारकत्वाद्यया कयाचिदवस्थया वर्तमाने शरीरे मानसमुपासनं सुगमम् । अतः पूर्वाधिकरणोक्तादित्यादिदृष्टिनियमवदासननियमो नास्तीत्याह—

१. A omits सप्तविधं
२. T, T[1] and TM add वा
३. A. प्रथमाधिकरण
४. TM and A omit अनुष्ठेयमवगम्यते

भाष्यम्

तत्र मानसत्वादुपासनस्यानियमः शरीरस्थितेरित्येवं प्राप्ते, ब्रवीति—आसीन एवोपासीतेति; कुतः? संभवात्। उपासनं नाम समानप्रत्ययप्रवाहकरणम्; न च तद्गच्छतो धावतो वा संभवति, गत्यादीनां चित्तविक्षेपकरत्वात्; तिष्ठतोऽपि देहधारणे व्यापृतं मनो न सूक्ष्मवस्तुनिरीक्षणक्षमं भवति; शयानस्याप्यकस्मादेव निद्रयाभिभूयेत; आसीनस्य त्वेवंजातीयको भूयान्दोषः सुपरिहर इति संभवति तस्योपासनम् ॥ 5

## ध्यानाच्च ॥ ४-१-८ ॥

अपि च ध्यायत्यर्थ एषः, यत्समानप्रत्ययप्रवाहकरणम्; ध्यायतिश्च प्रशिथिलाङ्गचेष्टेषु प्रतिष्ठितदृष्टिष्वेकविषयाक्षिप्तचित्तेषूपचर्यमाणो दृश्यते—ध्यायति बकः, ध्यायति प्रोषितबन्धुरिति। आसीनश्चानायासो भवति; तस्मादप्यासीनकर्मोपासनम् ॥ 10

## अचलत्वं चापेक्ष्य ॥ ४-१-९ ॥

अपि च "ध्यायतीव पृथिवी" इत्यत्र पृथिव्यादिष्वचलत्वमेवापेक्ष्य ध्यायतिवादो भवति; तच्च लिङ्गमुपासनस्यासीनकर्मत्वे ॥ 15

## स्मरन्ति च ॥ ४-१-१० ॥

स्मरन्त्यपि च शिष्टा उपासनाङ्गत्वेनासनम् "शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः" इत्यादिना। अत एव पद्मकादीनामासनविशेषाणामुपदेशो योगशास्त्रे ॥

प्रकटार्थविवरणम् 20

तत्रेति ॥ शरीरे अनवस्थिते मनोऽनवस्थतायाः प्रत्यक्षसिद्धत्वादासीनेऽचलावयवे प्रतिष्ठितेन मनसानङ्गाश्रितान्युपासनानि कर्तव्यानीति सिद्धान्ताशयः ॥

ध्यानाच्च ॥

अचलत्वं चापेक्ष्य ॥

स्मरन्ति च ॥ 25

भाष्यम्

[ एकाग्रताधिकरणम् ]

## यत्रैकाग्रता तत्राविशेषात् ॥ ४-१-११ ॥

दिग्देशकालेषु संशयः—किमस्ति कश्चिन्नियमः, नास्ति वेति । 5 प्रायेण वैदिकेष्वारम्भेषु दिगादिनियमदर्शनात्, स्यादिहापि कश्चिन्नियम इति यस्य मतिः, तं प्रत्याह—दिग्देशकालेष्वर्थलक्षण एव नियमः; यत्रैवास्य दिशि देशे काले वा मनसः सौकर्येणैकाग्रता भवति, तत्रैवोपासीत, प्राचीदिक्पूर्वाह्णप्राचीनप्रवणादिवद्विशेषाश्रवणात्, एकाग्रताया इष्टायाः सर्वत्राविशेषात् । ननु विशेषमपि केचिदामनन्ति—

10 "समे शुचौ शर्करावह्निवालुकाविवर्जिते शब्दजलाश्रयादिभिः ।
मनोऽनुकूले न तु चक्षुपीडने गुहानिवाताश्रयणे प्रयोजयेत् ॥"

इति यथेति । उच्यते—सत्यमस्त्येवंजातीयको नियमः; सति त्वेत-

प्रकटार्थविवरणम्

यत्रैकाग्रता तत्राविशेषात् ॥

15 अनङ्गाश्रितान्युपासनानि विषयाः । तेषु किं दिग्देशकालनियमोऽस्त्युत नास्तीति विहितेषु उभयथादर्शनात्संशयमाह—दिग्देशेति ॥ अनङ्गोपासनानि नियतदिग्देशकालानि, चोदनालक्षणत्वात्, यागादिवदित्यनुमानेन पूर्वाधिकरणोक्तासननियमवत्कालादिनियमोऽप्यस्तीत्याह—प्रायेणेति ॥ "प्राचीनप्रवणे वैश्वदेवेन यजेत" इतिवद्विशेषाश्रवणात् न चोदनावशेन देशादि-20 नियमः, किं तु उपास्ये चित्तैकाग्र्यलक्षणाक्षिप्त एवेत्याह—दिग्देशकालेष्वर्थलक्षण एवेति ॥ विशेषाश्रवणादित्यस्यासिद्धिं शङ्कते—ननु विशेषमपीति ॥ शर्कराः क्षुद्रपाषाणाः । उक्तमभ्युपगम्याह—सत्यमिति ॥ शुच्यादिदेशगतेषु प्राचीनप्रवणादिष्वनियम इति सुहृद्भावेनाचार्यो ब्रवीति; अन्यथा कदाचित् प्राचीनप्रवणादिदेशे प्रदोषादिकाले प्राच्यादिदिशि च चित्तैकाग्र्यासंभवेन

भाष्यम्

स्मिन्, तद्गतेषु विशेषेष्वनियम इति सुहृद्भूत्वाचार्य आचष्टे। "मनोऽनुकूले" इति चैषा श्रुतिर्यत्रैकाग्रता तत्रैवेत्येतदेव दर्शयति॥

[ आप्रायणाधिकरणम् ]

## आप्रायणात्तत्रापि हि दृष्टम्॥ ४-१-१२॥　　　5

आवृत्तिः सर्वोपासनेष्वादर्तव्येति स्थितमाद्येऽधिकरणे; तत्र यानि तावत्सम्यग्दर्शनार्थान्युपासनानि, तान्यवघातादिवत्कार्यपर्यवसानानीति ज्ञातमेवैषामावृत्तिपरिमाणम्; न हि सम्यग्दर्शने कार्ये निष्पन्ने यत्नान्तरं किंचिच्छासितुं शक्यम्, अनियोज्यब्रह्मात्मत्वप्रतिपत्तेः शास्त्रस्याविषयत्वात्। यानि पुनरभ्युदयफलानि, तेष्वेषा　10
चिन्ता—किं कियन्तंचित्कालं प्रत्ययमावर्त्योपरमेत्, उत यावज्जीवमावर्तयेदिति। किं तावत्प्राप्तम्? कियन्तंचित्कालं प्रत्ययमभ्यस्योत्सृजेत्, आवृत्तिविशिष्टस्योपासनशब्दार्थस्य कृतत्वादिति। एवं प्राप्ते ब्रूमः—

आप्रायणादेवावर्तयेत्प्रत्ययम्, अन्त्यप्रत्ययवशाददृष्टफलप्राप्तेः; कर्मा-

प्रकटार्थविवरणम्　　　15

उपासनायोगात् शेषिविरोधप्रसङ्गादिति भावः। अनियमे श्रुतिं प्रमाणयति—मनोऽनुकूल इति॥

आ प्रायणात्तत्रापि हि दृष्टम्॥

व्यवहितसंबन्धमेवाह— आवृत्तिरिति॥ असन्दिग्धमंशमुक्त्वा संशयविषयमाह— यानि पुनरिति॥ अनुष्ठानस्योभयथा दर्शनात् संशयमुक्त्वा　20
पूर्वपक्षं निक्षिपति—किं तावदिति॥

मरणपर्यन्तं प्रत्ययावृत्तिः कर्तव्येति सिद्धान्तमाह— आप्रायणादिति॥ ननु अदृष्टफलेष्वन्त्यप्रत्ययनियमो नास्ति, कदाचिदनुष्ठितकर्मवशेनापि कालान्तरे फलप्राप्तेरित्याशङ्क्याह — कर्माण्यपीति॥

१. A. दित्यस्तमाव:　　　२. T and T¹. कर्मविशेषेऽपि

भाष्यम्

ण्यपि हि जन्मान्तरोपभोग्यं फलमारभमाणानि तदनुरूपं भावनाविज्ञानं प्रायणकाल आक्षिपन्ति, "सविज्ञानो भवति सविज्ञानमेवान्ववक्रामति" "यच्चित्तस्तेनैष प्राणमायाति" "प्राणस्तेजसा युक्तः सहात्मना
5 यथासंकल्पितं लोकं नयति" इति चैवमादिश्रुतिभ्यः; तृणजलूकानिदर्शनाच्च, प्रत्ययास्त्वेते स्वरूपानुवृत्तिं, मुक्त्वा किमन्यत्प्रायणकालभावि भावनाविज्ञानमपेक्षेरन्? तस्माद्ये प्रतिपत्तव्यफलभावनात्मकाः प्रत्ययास्तेष्वाप्रायणादावृत्तिः। तथा च श्रुतिः—"स यावत्क्रतुरयमस्माल्लोकात्प्रैति" इति प्रायणकालेऽपि प्रत्ययानुवृत्तिं दर्शयति। स्मृति
10 रपि—

"यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम्।
तं तमेवैति कौन्तेय सदा तद्भावभावितः॥"

इति, "प्रयाणकाले मनसाचलेन" इति च। "सोऽन्तवेलायामेतत्त्रयं प्रतिपद्येत" इति च मरणवेलायामपि कर्तव्यशेषं श्रावयति॥

15 प्रकटार्थविवरणम्

तर्हि कर्मवत्कदाचित् अनुष्ठितानां प्रत्ययानां मरणकालेऽपि ज्ञानान्तरारम्भकत्वं भविष्यति, किं सन्ततकरणेनेत्याशङ्क्याह—प्रत्ययास्त्वेत इति॥ सर्वभावानां स्वावान्तरजातीयनिरपेक्षत्वाद्भावनात्मक[ काना ]मुपासनानां न भावनान्तरापेक्षकत्वं घटते; स्वरूपसन्निधानेनैव चादृष्टफलोपयोगित्वं भविष्यती-
20 त्यर्थः। "तत्रापि हि दृष्टम्" इत्यस्यार्थमाह—तथा च श्रुतिरित्यादिना॥ एतत् मन्त्रत्रयम् "अक्षितमस्यच्युतमसि प्राणसंशितमसि" इति जप्यत्वेन प्रतिपद्यत इत्यर्थः॥

१. TM. भवतीत्यर्थः

भाष्यम्

[ तदधिगमाधिकरणम् ]

## तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ ४-१-१३ ॥

गतस्तृतीयशेषः । अथेदानीं ब्रह्मविद्याफलं प्रति चिन्ता प्रतायते । 5
ब्रह्माधिगमे सति तद्विपरीतफलं दुरितं क्षीयते, न क्षीयते वेति संशयः ।
किं तावत्प्राप्तम् ? फलार्थत्वात्कर्मणः फलमदत्त्वा न संभाव्यते क्षयः;
फलदायिनी ह्यस्य शक्तिः श्रुत्या समधिगता; यदि तदन्तरेणैव फलोप-
भोगमपवृज्येत, श्रुतिः कदर्थिता स्यात् । स्मरन्ति च "न हि कर्म
क्षीयते" इति । नन्वेवं सति प्रायश्चित्तोपदेशोऽनर्थकः प्राप्नोति— 10
नैष दोषः, प्रायश्चित्तानां नैमित्तिकत्वोपपत्तेर्गृहदाहेष्ट्यादिवत् । अपि

प्रकटार्थविवरणम्

तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥

साधनानुष्ठाने यत्नाधिक्यविधानाय फलाध्यायेऽपि साधनसंबन्धं
विचार्य अध्यायगतफलचिन्तैवेदानीं प्रतन्यत इत्याह—गत इति ॥ कर्मणां 15
फलावसानत्वप्रतीतेः ज्ञानात्क्षयप्रतीतेश्च संशयमुक्त्वा पूर्वपक्षमाह — किं
तावदिति ॥ "कलञ्जं न भक्षयेत्" इत्यादिप्रतिषेधविध्यन्यथानुपपत्त्या दुरित-
स्यानिष्टफलपर्यन्तत्वेऽवगते नार्थवादाद्दुरितक्षयः प्रमातुं शक्यते, फलमदत्त्वापि
विलये निषेधशास्त्रमप्रमाणं स्यादित्यर्थः । भोगेनैव क्षयनियमे "ब्रह्महा द्वादश-
वार्षिकं कुर्यात्" इत्यादिशास्त्रस्य वैयर्थ्यं स्यादित्याह—नन्वेवं सतीति ॥ "पुरो- 20
डाशमष्टाकपालं निर्वपेद्यस्याहिताग्नेः सतोऽग्निर्गृहान् दहेत्" "यस्य हिरण्यं नश्ये-
दाग्नेयादीन्निर्वपेत्" इत्यादिवन्नैमित्तिकविधायकत्वेनार्थवत्त्वसंभवान्न शास्त्रस्या-
नर्थक्यमित्याह—नैष दोष इति ॥ ननु यथा गृहदाहं निमित्तीकृत्येष्टिर्विधीयते,
तत्र च फलान्तरमेव कल्प्यते, न तथा प्रायश्चित्तविधानम्, दोषनिर्हरणाय
चोदितत्वात् "तरति ब्रह्महत्यां योऽश्वमेधेन यजते" इति, तत्राह—अपि च 25

भाष्यम्

च प्रायश्चित्तानां दोषसंयोगेन विधानाद्भवेदपि दोषक्षपणार्थता; न त्वेवं ब्रह्मविद्यायां विधानमस्ति । नन्वनभ्युपगम्यमाने ब्रह्मविदः कर्मक्षये तत्फलस्यावश्यंभोक्तव्यत्वादनिर्मोक्षः स्यात्—नेत्युच्यते; देश-
5 कालनिमित्तापेक्षो मोक्षः कर्मफलवद्भविष्यति । तस्मान्न ब्रह्माधिगमे दुरितनिवृत्तिरिति । एवं प्राप्ते ब्रूमः—

तदधिगमे ब्रह्माधिगमे सत्युत्तरपूर्वयोरघयोरश्लेषविनाशौ भवतः—उत्तरस्याश्लेषः, पूर्वस्य विनाशः। कस्मात्? तद्व्यपदेशात्; तथा हि ब्रह्मविद्याप्रक्रियायां संभाव्यमानसंबन्धस्यागामिनो दुरितस्यानभिसं-
10 बन्धं विदुषो व्यपदिशति—"यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते" इति । तथा विनाशमपि पूर्वोपचितस्य दुरितस्य व्यपदिशति—"तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते" इति । अयमपरः कर्मक्षयव्यपदेशो भवति—

15 प्रकटार्थविवरणम्

प्रायश्चित्तानामिति ॥ ब्रह्मविद्यायाः पापक्षयाय विधानाभावान्नाघविघातहेतुत्वमित्युक्तम् । तत्र मोक्षशास्त्रप्रामाण्यान्यथानुपपत्त्या विद्यायाः अघविघातकर्त्वं शङ्कते—नन्विति ॥ भोगेन सकलपापक्षये सति कदाचिन्मोक्षो भविष्यतीति अन्यथानुप[न्यथोप]पत्तिमाह — नेत्युच्यत इति ॥

20 "तद्व्यपदेशात्" इति हेतुं व्याचष्टे—तथा हीति ॥ तथा च लैङ्गे—

"ज्ञानिनः सर्वपापानि जीर्यन्ते नात्र संशयः ।
क्रीडन्नपि न लिप्येत पापैर्नानाविधैरपि ॥"

शिवधर्मोत्तरे—

"तस्माद् ज्ञानासिना तूर्णमशेषं कर्मबन्धनम् ।
25 कामाकामकृतं छित्त्वा शुद्धात्मा स्वात्मनि तिष्ठति ॥
यथा वह्निर्महादीप्तः शुष्कमार्द्रं च निर्दहेत् ।
तथा शुभाशुभं कर्म ज्ञानाग्निर्निर्दहेत् क्षणात् ॥

भाष्यम्

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥" इति ।

यदुक्तम्—अनुपभुक्तफलस्य कर्मणः क्षयकल्पनायां शास्त्रं कदर्थितं स्यादिति, नैष दोषः; न हि वयं कर्मणः फलदायिनीं शक्तिमवजानीमहे; विद्यत एव सा; सा तु विद्यादिना कारणान्तरेण प्रतिबध्यत इति वदामः; शक्तिसद्भावमात्रे च शास्त्रं व्याप्रियते, न प्रतिबन्धाप्रतिबन्धयोरपि । "न हि कर्म क्षीयते" इत्येतदपि स्मरणमौत्सर्गिकम्—न भोगादृते कर्म क्षीयते तदर्थत्वादिति; इष्यत एव तु प्रायश्चित्तादिना तस्य क्षयः—"सर्वं पाप्मानं तरति तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनमेवं वेद" इत्यादिश्रुतिस्मृतिभ्यः । यत्तूक्तम्—नैमित्तिकानि प्रायश्चित्तानि भविष्यन्तीति, तदसत्, दोषसंयोगेन चोद्यमानानामेषां दोषनिर्घातफलसंभवे फलान्तरकल्पनानुपपत्तेः । यत्पुनरेतदुक्तम्—न प्रायश्चित्तवद्दोषक्षयोद्देशेन विद्याविधानमस्तीति, अत्र ब्रूमः—सगुणासु तावद्विद्यासु विद्यत एव विधानम्, तासु च वाक्यशेषे ऐश्वर्यप्राप्तिः पापनिवृत्तिश्च विद्यावत उच्यते, तयोश्चाविवक्षाकारणं नास्तीत्यतः पाप्मप्रहाणपूर्वकैश्वर्यप्राप्तिस्तासां फलमिति निश्चीयते; निर्गुणायां तु विद्यायां यद्यपि विधानं नास्ति, तथाप्यकर्त्रात्मबोधा-

प्रकटार्थविवरणम्

यद्वन्मन्त्रबलोपेतः क्रीडन् सर्पेण दृश्यते । 20
क्रीडन्नपि न लिप्येत तद्वदिन्द्रियपन्नगैः ॥
मन्त्रौषधिबलैर्यद्वज्जीर्यते भक्षितं विषम् ।
तद्वत्सर्वाणि पापानि जीर्यन्ते ज्ञानिनः क्षणात् ॥" इति ।

पूर्वोक्तं क्रमेण पराकरोति—यदुक्तमित्यादिना ॥ ब्रह्मात्मज्ञानमात्मन्यशेषदुरितनिवर्तकम्, तस्मिन् दुरितकर्तृत्वादिबाधकत्वात्, स्वप्नगतसुरापानकर्तृत्वबाधकत्वेन तन्निमित्तदुरितबाधकजाग्रद्बोधवदित्याह—तथाप्यकर्त्रात्मबोधात् कर्मप्रदाहेति ॥ सकलमपि व्यापारं कार्यकरणसंघाताश्रयं पश्यन्नपि

१. TM and A omit अपि

भाष्यम्

त्कर्मप्रदाहसिद्धिः । अश्लेषेति चागामिषु कर्मसु कर्तृत्वमेव न प्रति-
पद्यते ब्रह्मविदिति दर्शयति । अतिक्रान्तेषु तु यद्यपि मिथ्याज्ञानात्क-
र्तृत्वं प्रतिपेद इव, तथापि विद्यासामर्थ्यान्मिथ्याज्ञाननिवृत्तेस्तान्यपि
5 प्रविलीयन्त इत्याह — विनाशेति । पूर्वसिद्धकर्तृत्वभोक्तृत्वविपरीतं
हि त्रिष्वपि कालेष्वकर्तृत्वाभोक्तृत्वस्वरूपं ब्रह्माहमस्मि, नेतः पूर्वमपि
कर्ता भोक्ता वाहमासम्, नेदानीम्, नापि भविष्यत्काले—इति ब्रह्म-
विदवगच्छति ; एवमेव च मोक्ष उपपद्यते ; अन्यथा ह्यनादिकालप्रवृ-
त्तानां कर्मणां क्षयाभावे मोक्षाभावः स्यात् । न च देशकालनिमित्ता-
10 पेक्षो मोक्षः कर्मफलवद्भवितुमर्हति, अनित्यत्वप्रसङ्गात्, परोक्षत्वानु-
पपत्तेश्च ज्ञानफलस्य । तस्माद्ब्रह्माधिगमे दुरितक्षय इति स्थितम् ॥

[ इतरासंश्लेषाधिकरणम् ]

## इतरस्याप्येवमसंश्लेषः पाते तु ॥ ४-१-१४ ॥

पूर्वस्मिन्नधिकरणे बन्धहेतोरघस्य स्वाभाविकस्याश्लेषविनाशौ ज्ञान-
15 निमित्तौ शास्त्रव्यपदेशान्निरूपितौ ; धर्मस्य पुनः शास्त्रीयत्वाच्छास्त्रीयेण

प्रकटार्थविवरणम्

अविक्रियब्रह्मात्मदर्शी न कर्तृत्वं तत्र स्वस्य मन्यते । अत एव च परकर्तृकेण पापेन
न लिप्यत इत्याह—अश्लेष इति[षेति] चेति ॥ कर्मविनाशं विद्वदनुभवानुसारेण
विवृणोति—अतिक्रान्तेष्विति ॥ किं च मोक्षशास्त्रप्रामाण्यानुपपत्त्यनुगृही-
20 ततयार्थवादप्रतिपन्नविद्यादुरितक्षयैकपुरुषसंबन्धान्यथानुपपत्त्या सामान्य-
प्रवृत्तां प्रतिषेधविध्यनुपपत्तिमपबाध्य ब्रह्मविद्विशेषविषये विद्यया पापक्षयो
ऽभ्युपगन्तव्य इत्याह—एवमेव च मोक्ष उपपद्यत इति ॥

इतरस्याप्येवमसंश्लेषः पाते तु ॥

वृत्तानुवादपूर्वकमधिकरणतात्पर्यमाह — पूर्वस्मिन्निति ॥ यदि पुण्य-
25 मपि ज्ञानान्नश्यति, कथं तर्हि पाप्मानः प्रधूयन्त इति पापग्रहणमित्याशङ्क्याह—

भाष्यम्

ज्ञानेनाविरोध इत्याशङ्क्य तन्निराकरणाय पूर्वाधिकरणन्यायातिदेशः क्रियते—इतरस्यापि पुण्यस्य कर्मण एवमघवदसंश्लेषो विनाशश्च ज्ञानवतो भवतः; कुतः? तस्यापि स्वफलहेतुत्वेन ज्ञानफलप्रतिबन्धित्वप्रसङ्गात्। "उभे उ हैवैष एते तरति" इत्यादिश्रुतिषु च दुष्कृतवत्सुकृतस्यापि प्रणाशव्यपदेशात्, अकर्त्रात्मत्वबोधनिमित्तस्य च कर्मक्षयस्य सुकृतदुष्कृतयोस्तुल्यत्वात् "क्षीयन्ते चास्य कर्माणि" इति चाविशेषश्रुतेः। यत्रापि केवल एव पाप्मशब्दः पठ्यते, तत्रापि तेनैव पुण्यमप्याकलितमिति द्रष्टव्यम्, ज्ञानफलापेक्षया निकृष्टफलत्वात्। अस्ति च श्रुतौ पुण्येऽपि पाप्मशब्दः "नैनं सेतुमहोरात्रे तरतः" इत्यत्र सह दुष्कृतेन सुकृतमप्यनुक्रम्य, "सर्वे पाप्मानोऽतो निवर्तन्ते" इत्यविशेषेणैव प्रकृते पुण्ये पाप्मशब्दप्रयोगात्। "पाते तु" इति तुशब्दोऽवधारणार्थः। एवं धर्माधर्मयोर्बन्धहेत्वोर्विद्यासामर्थ्यादश्लेषविनाशसिद्धेरवश्यंभाविनी विदुषः शरीरपाते मुक्तिरित्यवधारयति ॥

[ अनारब्धाधिकरणम् ]

## अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ ४-१-१५ ॥

पूर्वयोरधिकरणयोर्ज्ञाननिमित्तः सुकृतदुष्कृतयोर्विनाशोऽवधारितः; स किमविशेषेणारब्धकार्ययोरनारब्धकार्ययोश्च भवति, उत विशेषेणानारब्धकार्ययोरेवेति विचार्यते। तत्र "उभे उ हैवैष एते तरति"

प्रकटार्थविवरणम्

यत्रापि केवल एवेति ॥ ज्ञानसामर्थ्यादविशेषेण कर्मक्षये किं फलितमित्याशङ्क्याह—पाते त्विति ॥

अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥

वृत्तानुवादेन विचारमाह—पूर्वयोरिति ॥ "क्षीयन्ते चास्य कर्माणि" इत्यविशेषश्रुतेः "तस्य तावदेव चिरम्" इत्यादिश्रुतेश्च संशयः। पूर्वाधिकरणन्यायेनाविशेषेणैव क्षय इत्याह—तत्रेति ॥ सिद्धान्ते सूत्रमवतार्य व्याचष्टे—

भाष्यम्

इत्येवमादिश्रुतिष्वविशेषश्रवणादविशेषेणैव क्षय इत्येवं प्राप्ते
प्रत्याह—अनारब्धकार्ये एव त्विति। अप्रवृत्तफले एव पूर्वे जन्मान्तर-
संचिते, अस्मिन्नपि च जन्मनि प्राग्ज्ञानोत्पत्तेः संचिते, सुकृतदुष्कृते
5 ज्ञानाधिगमात्क्षीयेते, न त्वारब्धकार्ये सामिभुक्तफले, याभ्यामेतद्ब्रह्म-
ज्ञानायतनं जन्म निर्मितम्। कुत एतत्? "तस्य तावदेव चिरं यावन्न
विमोक्ष्येऽथ संपत्स्ये" इति शरीरपातावधिकरणात्क्षेमप्राप्तेः; इतरथा
हि ज्ञानादशेषकर्मक्षये सति स्थितिहेत्वभावाज्ज्ञानप्राप्त्यनन्तरमेव क्षेम-
मश्नुवीत; तत्र शरीरपातप्रतीक्षां नाचक्षीत। ननु वस्तुबलेनैवायम-
10 कर्त्रात्मावबोधः कर्माणि क्षपयन्कथं कानिचित्क्षपयेत्, कानिचिच्चोपेक्षेत?
न हि समानेऽग्निबीजसंपर्के, केषांचिद्बीजशक्तिः क्षीयते, केषांचिन्न
क्षीयते—इति शक्यमङ्गीकर्तुमिति; उच्यते—न तावदनाश्रित्यारब्ध-
कार्यं कर्माशयं ज्ञानोत्पत्तिरुपपद्यते; आश्रिते च तस्मिन्कुलालचक्र-

प्रकटार्थविवरणम्

15 अप्रवृत्तफले एवेत्यादिना ॥ तस्य ज्ञानिनस्तावत् चिरं विलम्बनम्, यावन्न
विमोक्ष्येते[1] विमुच्यते देहात्। तकारलोपश्छान्दसः। अथ संपत्स्ये शरीरपात-
समयमेव तदेव संपद्यत इति ज्ञानोत्पत्त्यनन्तरं सत्संपत्तेः शरीरपातावधि-
करणलिङ्गात् कञ्चित्कालं शरीरावस्थानं गम्यमानं कर्मसद्भावं गमयतीत्यर्थः।
न च तावदेव चिरं यावत् स्नातो भुञ्जानस्योतिवत् शैघ्र्यं विवक्षितमिति
20 वाच्यम्, लक्षणाप्रसङ्गात्; विद्यासामर्थ्यादारम्भकक्षये शरीरावस्थाने कारणाभा-
वात् लक्षणैव युक्तेत्याह—ननु वस्तुबलेनैवेति ॥ यथा तमोनिवर्तनसमर्थे[2]
सवितर्युदिते[3]ऽप्यपवरकप्रविष्टं तमो न निवर्तते, तथोदितेऽपि ज्ञानदिवाकरे
प्रवृत्तफलं कर्म न निवर्तिष्यत इत्याह—उच्यत इति ॥ अवश्यं तावत् स्वोत्प-
त्तये तत्त्वज्ञानेन प्रवृत्तफलं कर्माश्रयणीयम्। स्वीकृते च तस्मिन् कर्मणि कुलाल-
25 चक्रवत् प्रवृत्तवेगस्य तन्निवर्तनपाटवशून्येन मध्ये क्षयासंभवात् भवति वेगक्षय-

१. T, T¹ and TM. न मुच्यते
२. T, TM and A. सामर्थ्ये
३. A omits उदिते

## भाष्यम्

यत्प्रवृत्तवेगस्यान्तराले प्रतिबन्धासंभवाद्भवति वेगक्षयप्रतिपालनम् । अकर्त्रात्मत्वबोधोऽपि हि मिथ्याज्ञानबाधनेन कर्माण्युच्छिनत्ति ; बाधितमपि तु मिथ्याज्ञानवत्संस्कारवशात्कंचित्कालमनुवर्तत एव । अपि च

## प्रकटार्थविवरणम्

परिपालनम् ; तत्त्वज्ञानस्य च तन्निवर्तनपाटवशून्यत्वमुद्दालकादीनां तत्त्वदर्शिनामेव शरीरधारणविषयश्रुतिस्मृतिलिङ्गैः, तत्त्वदर्शिभिरेव गुरुशिष्यसंबन्धनिर्देशान्यथानुपपत्त्या चानुगृहीतात् "तस्य तावदेव चिरम्" इति लिङ्गाद्गम्यत इति भावः । नन्वकर्त्रात्मज्ञानं कर्मनिदानमज्ञानं निवर्तयति ; उपादानाभावे च कथंकारं कर्मानुवृत्तिरुदीर्येतेत्याशङ्क्याह — अकर्त्रात्मत्वबोधोऽपीति ॥ अकर्तृ ब्रह्माहमस्मीत्येवंरूपोऽनुभवो जन्मान्तरादिसकलसंसारारम्भकजीवोपाध्यनिर्वाच्याज्ञानशक्तिबाधनेनाप्रवृत्तफलानि कर्माणि यद्यप्युच्छिनत्ति, तथापि जन्मान्तराद्यारम्भकरूपेण कंचित्कालमनुवर्तते; तत्त्वज्ञानमप्युदयमात्रे न बाधते ; किं तु प्रारब्धभोगक्षयकाल एव उदितं तन्निहन्तीत्यर्थः । प्रयोगोऽपि— ब्रह्मज्ञानं न प्रवृत्तफलकर्मबीजदाहकम्, प्रवृत्तफलकर्मकार्यत्वात्, भोगवत् इति । अनुवृत्तौ दृष्टान्तः द्विचन्द्रज्ञानवत् ॥ संस्कारवशादिति ॥ संस्करोति व्यनक्ति द्वितीयं चन्द्रमिति संस्कारः, जलपात्रादिः, तद्वशात् ; यथा प्रमाणरूपेण बाधितमपि चन्द्रभेदज्ञानं कश्चित्कालमनुवर्तते, जलपात्रादिविरामकालीनमेव चन्द्रैकत्वज्ञानं निवर्तकं तद्वदिति व्यवस्था पूर्वोक्तप्रमाणबलादेव कल्प्यते । विचित्राश्च शक्तयो भावानां न सामान्यतोदृष्टेन ज्ञातव्याः ॥

यच्च भास्करप्रभृतीनां प्रलापः आश्रमाभावाच्च कर्माद्यनुवृत्तिः, जीवस्य ब्रह्मीभावात्, ब्रह्मणि तदसंभवाच्च "जीवन्नथ च मुक्तः" इत्यपि विरुद्धं पदद्वयमित्यादिः, सोऽपि प्रागुक्तपरिपाट्या प्रत्यूढ एव । यतो जीवसंबन्ध्येवाज्ञानादि वर्तमानकार्यसंपादकरूपेण वर्तत इत्यभाणि । जन्मान्तरादिसकलसंसारारम्भकाविद्याकामकर्मादिबन्धध्वंसान्मुक्तः वर्तमानभोगभागित्वाच्च जीवन्नित्यविरुद्धं पदद्वयम् । ब्रह्मीभूतत्वाभिधानमप्यब्रह्मत्वभ्रमव्यावृत्त्या ॥

१. $T^1$ and TM. तन्न भवतीत्यर्थः      २. T and $T^1$. संस्कारः

भाष्यम्

नैवात्र विवदितव्यम्—ब्रह्मविदा कंचित्कालं शरीरं ध्रियते न वा ध्रियत इति; कथं ह्येकस्य स्वहृदयप्रत्ययं ब्रह्मवेदनं देहधारणं चापरेण प्रतिक्षेप्तुं शक्येत; श्रुतिस्मृतिषु च स्थितप्रज्ञलक्षणनिर्देशेनैतदेव
5 निरुच्यते । तस्मादनारब्धकार्ययोरेव सुकृतदुष्कृतयोर्विद्यासामर्थ्यात्क्षय इति निर्णयः ॥

[ अग्निहोत्राद्यधिकरणम् ]

## अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ ४-१-१६ ॥

पुण्यस्याप्यश्लेषविनाशयोरघन्यायोऽतिदिष्टः; सोऽतिदेशः सर्व-
10 पुण्यविषय इत्याशङ्क्य प्रतिवक्ति—अग्निहोत्रादि त्विति । तुशब्द आशङ्कामपनुदति; यन्नित्यं कर्म वैदिकमग्निहोत्रादि, तत्तत्कार्यायैव भवति; ज्ञानस्य यत्कार्यं तदेवास्यापि कार्यमित्यर्थः; कुतः? "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन" इत्यादिदर्शनात् । ननु ज्ञानकर्मणोर्विलक्षणकार्यत्वात्कार्यैकत्वानुपपत्तिः—नैष दोषः, ज्वर-
15 मरणकार्ययोरपि दधिविषयोर्गुडमन्त्रसंयुक्तयोस्तृप्तिपुष्टिकार्यदर्शनात्; तद्व-

प्रकटार्थविवरणम्

विद्वदनुभवसिद्धत्वाच्च अस्यार्थस्य नात्र धाष्टर्यमात्रेण विवदितव्यमित्याह—अपि चेत्यादिना ॥

अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥

20 व्यवहिताधिकरणसंबन्धमाह —पुण्यस्यापीति ॥ निर्गुणब्रह्मज्ञानविषयत्वं सूत्रस्याङ्गीकृत्य लाङ्गलभोजनयोर्जीवनहेतुत्ववत् ज्ञानकर्मणोः साक्षात्पारं-

१. T[1] adds सद्योमुक्तमभिप्रेत्य कल्पिताचार्यगोचरः ।
जीवन्मुक्तिं श्रुतिं शिष्ये स्वार्थमूढाश्च चक्रिरे ॥
एको जीवः परं ब्रह्म मोक्ष्यते मोक्षशास्त्रतः ।
जीवाभासापर्य शृण्मो जल्पन्तोऽनलवर्जिते ॥

भाष्यम्

त्कर्मणोऽपि ज्ञानसंयुक्तस्य मोक्षकार्योपपत्तेः । नन्वनारभ्यो मोक्षः, कथमस्य कर्मकार्यत्वमुच्यते ? नैष दोषः, आराडुपकारकत्वात्कर्मणः; ज्ञानस्यैव हि प्रापकं सत्कर्म प्रणाड्या मोक्षकारणमित्युपचर्यते; अत एव चातिक्रान्तविषयमेतत्कार्यैकत्वाभिधानम् । न हि ब्रह्मविद आगामिन्यग्निहोत्रादि संभवति, अनियोज्यब्रह्मात्मत्वप्रतिपत्तेः शास्त्रस्याविषयत्वात् । सगुणासु तु विद्यासु कर्तृत्वानतिवृत्तेः संभवत्यागाम्यप्यग्निहोत्रादि । तस्यापि निरभिसंधिनः कार्यान्तराभावाद्विद्यासंगत्युपपत्तिः ॥ 5

किंविषयं पुनरिदमश्लेषविनाशवचनम्, किंविषयं वादो विनियोगवचनमेकेषां शाखिनाम् "तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्" इति—अत उत्तरं पठति— 10

## अतोऽन्यापि ह्येकेषामुभयोः ॥ ४-१-१७ ॥

अतोऽग्निहोत्रादेर्नित्यात्कर्मणोऽन्यापि ह्यस्ति साधुकृत्या, या फलमभिसंधाय क्रियते, तस्या एष विनियोग उक्त एकेषां शाखिनाम् "सुहृदः साधुकृत्यामुपयन्ति" इति । तस्या एव चेदमघवदश्लेषविनाशनिरूपणम्—इतरस्याप्येवमसंश्लेष इति । तथाजातीयकस्य काम्यस्य कर्मणो विद्यां प्रत्यनुपकारकत्वे संप्रतिपत्तिरुभयोरपि जैमिनिबादरायणयोराचार्ययोः ॥ 15

प्रकटार्थविवरणम् 20

पर्याभ्यां मोक्षहेतुत्वमुक्तम् । इदानीं सगुणविद्याविषयत्वे सूत्रस्य सामञ्जस्यमाह—सगुणासु तु विद्यास्विति ॥

अतोऽन्यापि ह्येकेषामुभयोः ॥

सूत्रान्तरमवतारयति—किंविषयं पुनरिति ॥

१. A. सूत्रसाम-

भाष्यम्

[ विद्याज्ञानसाधनाधिकरणम् ]

## यदेव विद्ययेति हि ॥ ४-१-१८ ॥

समधिगतमेतदनन्तराधिकरणे—नित्यमग्निहोत्रादिकं कर्म मुमुक्षुणा
5 मोक्षप्रयोजनोद्देशेन कृतम् उपात्तदुरितक्षयहेतुत्वद्वारेण सत्त्वशुद्धिकारणतां
प्रतिपद्यमानं मोक्षप्रयोजनब्रह्माधिगमनिमित्तत्वेन ब्रह्मविद्यया सहैक-
कार्यं भवतीति; तत्राग्निहोत्रादि कर्माङ्गव्यपाश्रयविद्यासंयुक्तं केवलं
चास्ति—"य एवं विद्वान्यजति" "य एवं विद्वान् जुहोति" "य एवं
विद्वाञ्छंसति" "य एवं विद्वान्गायति" "तस्मादेवंविदमेव ब्रह्माणं
10 कुर्वीत नानेवंविदम्" "तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद"
इत्यादिवचनेभ्यो विद्यासंयुक्तमस्ति, केवलमप्यस्ति । तत्रेदं विचार्यते—
किं विद्यासंयुक्तमेवाग्निहोत्रादिकं कर्म मुमुक्षोर्विद्याहेतुत्वेन तया सहैक-
कार्यत्वं प्रतिपद्यते, न केवलम्, उत विद्यासंयुक्तं केवलं चाविशेषे-
णेति । कुतः संशयः? "तमेतमात्मानं यज्ञेन विविदिषन्ति" इति
15 यज्ञादीनामविशेषेणात्मवेदनाङ्गत्वेन श्रवणात्, विद्यासंयुक्तस्य चाग्नि-
होत्रादेर्विशिष्टत्वावगमात् । किं तावत्प्राप्तम्? विद्यासंयुक्तमेव कर्माग्नि-
होत्राद्यात्मविद्याशेषत्वं प्रतिपद्यते, न विद्याहीनम्, विद्योपेतस्य विशिष्ट-
त्वावगमाद्विद्याविहीनात्—"यदहरेव जुहोति तदहः पुनर्मृत्युमपजय-
त्येवंविद्वान्" इत्यादिश्रुतिभ्यः, "बुद्ध्या युक्तो यया पार्थ कर्मबन्धं

20 प्रकटार्थविवरणम्

यदेव विद्ययेति हि ॥

वृत्तसङ्कीर्तनेन विचारारम्भमाह—समधिगतमिति ॥ सबीजं संशय-
मुक्त्वा पूर्वपक्षमाह—विद्यासंयुक्तमेवेति ॥ विद्याविहीनात्कर्मणः सकाशात्
विद्यासंयुक्तस्य वीर्यवत्तरत्ववचनात् विशिष्टत्वावगमादित्यर्थः । श्रुतिस्मृति-
25 लिङ्गाच्च विशिष्टत्वमाह—यदहरेवेति ॥ मृत्युमपमर्मम् । "यदेव विद्यया" इति

१. $T^1$ adds साधनत्वम्

भाष्यम्

प्रहास्यसि" "दूरेण ह्यवरं कर्म बुद्धियोगाद्धनंजय" इत्यादिस्मृतिभ्य-श्चेति। एवं प्राप्ते प्रतिपाद्यते—

यदेव विद्ययेति हि। सत्यमेतत्—विद्यासंयुक्तं कर्माग्निहोत्रादिकं विद्याविहीनात्कर्मणोऽग्निहोत्राद्विशिष्टम्, विद्वानिव ब्राह्मणो विद्या- 5 विहीनाद्ब्राह्मणात्; तथापि नात्यन्तमनपेक्षं विद्याविहीनं कर्माग्निहोत्रादिकम्; कस्मात्? "तमेतमात्मानं यज्ञेन विविदिषन्ति" इत्यविशेषेणाग्निहोत्रादेर्विद्याहेतुत्वेन श्रुतत्वात्। ननु विद्यासंयुक्तस्याग्निहोत्रादेर्विद्याविहीनाद्विशिष्टत्वावगमाद्विद्याविहीनमग्निहोत्राद्यात्मविद्याहेतुत्वेनानपेक्ष्यमेवेति युक्तम्—नैतदेवम्; विद्यासहायस्याग्निहोत्रादेर्विद्यानिमि- 10 त्तेन सामर्थ्यातिशयेन योगादात्मज्ञानं प्रति कश्चित्कारणत्वातिशयो भविष्यति, न तथा विद्याविहीनस्य—इति युक्तं कल्पयितुम्; न तु "यज्ञेन विविदिषन्ति" इत्यत्राविशेषेणात्मज्ञानाङ्गत्वेन श्रुतस्याग्निहोत्रादेरनङ्गत्वं शक्यमभ्युपगन्तुम्; तथा हि श्रुतिः—"यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" इति विद्यासंयुक्तस्य 15 कर्मणोऽग्निहोत्रादेर्वीर्यवत्तरत्वाभिधानेन स्वकार्यं प्रति कंचिदतिशयं ब्रुवाणा विद्याविहीनस्य तस्यैव तत्प्रयोजनं प्रति वीर्यवत्त्वं दर्शयति; कर्मणश्च वीर्यवत्त्वं तत्, यत्स्वप्रयोजनसाधनप्रसहत्वम्। तस्माद्विद्यासंयुक्तं नित्यमग्निहोत्रादि विद्याविहीनं चोभयमपि मुमुक्षुणा मोक्षप्रयोजनोद्देशेनेह जन्मनि जन्मान्तरे च प्राग्ज्ञानोत्पत्तेः कृतं यत्, तद्यथा- 20 सामर्थ्यं ब्रह्माधिगमप्रतिबन्धकारणोपात्तदुरितक्षयहेतुत्वद्वारेण ब्रह्माधिगमकारणत्वं प्रतिपद्यमानं श्रवणमननश्रद्धातात्पर्याद्यन्तरङ्गकारणापेक्षं ब्रह्मविद्यया सहैककार्यं भवतीति स्थितम्॥

प्रकटार्थविवरणम्

श्रुतेर्हि[1] यस्माद्विद्यासहितस्य वीर्यवत्तरत्वाभिधानेनेतरस्यापि वीर्यवत्तरत्वमव- 25 गम्यते, तस्मात्तदप्यपेक्षितव्यमिति संक्षेपः॥

१. T² adds निन्दितानाश्रमिकर्मणो विद्याङ्गत्वे सिद्धे न शङ्का विद्याविहीने। अतः प्रक्षिप्तमिदम्॥

भाष्यम्

[ इतरक्षपणाधिकरणम् ]

## भोगेन त्वितरे क्षपयित्वा संपद्यते ॥ ४-१-१९ ॥

अनारब्धकार्ययोः पुण्यपापयोर्विद्यासामर्थ्यात्क्षय उक्तः। इतरे त्वारब्धकार्ये पुण्यपापे उपभोगेन क्षपयित्वा ब्रह्म संपद्यते, "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये" इति "ब्रह्मैव सन्ब्रह्माप्येति" इति चैवमादिश्रुतिभ्यः। ननु सत्यपि सम्यग्दर्शने यथा प्राग्देहपाताद्भेददर्शनं द्विचन्द्रदर्शनन्यायेनानुवृत्तम्, एवं पश्चादप्यनुवर्तेत—न, निमित्ताभावात्। उपभोगशेषक्षपणं हि तत्रानुवृत्तिनिमित्तम्, न च तादृशमत्र किंचिदस्ति। नन्वपरः कर्माशयोऽभिनवमुपभोगमारप्स्यते—न, तस्य दग्धबीजत्वात्; मिथ्याज्ञानावष्टम्भं हि कर्मान्तरं देहपात उपभोगान्तरमारभते; तच्च मिथ्याज्ञानं सम्यग्ज्ञानेन दग्धम्—इत्यतः साध्वेतदारब्धकार्यक्षये विदुषः कैवल्यमवश्यं भवतीति ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीमच्छंकरभगवतः कृतौ शारीरकमीमांसासूत्रभाष्ये चतुर्थाध्यायस्य प्रथमः पादः ॥

प्रकटार्थविवरणम्

भोगेन त्वितरे क्षपयित्वा संपद्यते ॥

वृत्तानुवादेन सूत्रतात्पर्यमाह—अनारब्धकार्ययोरिति ॥ निर्गुणब्रह्मविद्वानारब्धकर्मभोगक्षयानन्तरमपि संसारी, विद्यावत्त्वेऽपि संसारसंबन्धयोग्यत्वात्, पूर्वकालीनब्रह्मविद्विदित्यनुमानं पूर्वपक्षबीजमाह–ननु सत्यपीति ॥ सुखाद्यनुभवनिमित्तकर्मवत्त्वमुपाधिरित्याह — न निमित्ताभावादिति ॥ साधनव्यापकत्वादनुपाधित्वं शङ्कते — नन्वपर इति ॥ "अथ संपत्स्ये" इत्यादिश्रुतिबाधात् बीजाभावस्य च विद्वदनुभवसिद्धत्वान्नापूर्वं कर्मानुमातुं शक्यत इत्याह—न तस्येति ॥

इति श्रीमच्छारीरकमीमांसाभाष्यविवरणे प्रकटार्थे चतुर्थस्याध्यायस्य प्रथमः पादः समाप्तः ॥

---

# अथ द्वितीयः पादः

—:o:—

भाष्यम्

[ वागधिकरणम् ]

## वाङ्मनसि दर्शनाच्छब्दाच्च ॥ ४-२-१ ॥

अथापरासु विद्यासु फलप्राप्तये देवयानं पन्थानमवतारयिष्यन् 5
प्रथमं तावद्यथाशास्त्रमुत्क्रान्तिक्रममन्वाचष्टे ; समाना हि विद्वदविदुषो-
रुत्क्रान्तिरिति वक्ष्यति ॥

अस्ति प्रायणविषया श्रुतिः—“अस्य सोम्य पुरुषस्य प्रयतो
वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम्”
इति । किमिह वाच एव वृत्तिमत्या मनसि संपत्तिरुच्यते, उत वाग्वृ- 10
त्तेरिति विशयः । तत्र वागेव तावत् मनसि संपद्यत इति प्राप्तम् ; तथा

प्रकटार्थविवरणम्

वाङ्मनसि दर्शनाच्छब्दाच्च ॥

पादसङ्गतिमाह—अथापरास्विति ॥ पूर्वपादान्ते परविद्याफलं निरूप्य
इदानीं अपरविद्याफलप्राप्तये तृतीयपादे देवयानमवतारयिष्यन् द्वितीयपादे 15
तावदुत्क्रान्तिक्रममाहेत्यर्थः । ननु विदुष उत्क्रान्त्यभावात् कथं तन्निरूपण-
मित्याशङ्क्याह—समाना हीति ॥ निर्गुणपरब्रह्मविदो यद्यपि नास्त्युत्क्रान्तिः,
तथाप्यपरब्रह्मविदोऽस्त्येवोत्क्रान्तिरित्यर्थः ॥

संक्षेपतः पादार्थमुक्त्वा आद्याधिकरणविषयमाह—अस्तीति ॥ प्रयतः
प्रयाणं कुर्वतः, उत्क्रमिष्योरित्यर्थः । [कर्तृव्युत्पत्त्या इन्द्रियप्रतिभानात्] 20
करणव्युत्पत्त्या तद्वृत्तिप्रतिभानाच्च संशयमाह—किमिहेति ॥ “वाङ्मनसि”
इति शब्दानुसारेण वागिन्द्रियस्यैव मनसि लय इत्याह—तत्र वागेवेति ॥

### भाष्यम्

हि श्रुतिरनुगृहीता भवति; इतरथा लक्षणा स्यात्; श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या, न लक्षणा; तस्मात् वाच एवायं मनसि प्रलय इति ॥

एवं प्राप्ते, ब्रूमः—वाग्वृत्तिर्मनसि संपद्यत इति । कथं वाग्वृत्तिरिति व्याख्यायते, यावता "वाङ्मनसि" इत्येव आचार्यः पठति? सत्यमेतत्; पठिष्यति तु परस्तात्—"अविभागो वचनात्" इति; तस्मादत्र वृत्त्युपशममात्रं विवक्षतीति गम्यते । तत्त्वप्रलयविवक्षायां तु सर्वत्रैव अविभागसाम्यात् किं परत्रैव विशिंष्यात्—"अविभागः" इति; तस्मादत्र वृत्त्युपसंहारविवक्षा । वाग्वृत्तिः पूर्वमुपसंह्रियते मनोवृत्तावव-स्थितायामित्यर्थः । कस्मात्? दर्शनात्—दृश्यते हि वाग्वृत्तेः पूर्वोप-संहारो मनोवृत्तौ विद्यमानायाम्; न तु वाच एव वृत्तिमत्या मनस्युप-संहारः केनचिदपि द्रष्टुं शक्यते । ननु श्रुतिसामर्थ्यात् वाच एवायं मन-स्यप्ययो युक्त इत्युक्तम्—नेत्याह, अतत्प्रकृतित्वात्; यस्य हि यत उत्पत्तिः, तस्य तत्र प्रलयो न्याय्यः, मृदीव शरावस्य; न च मनसो वागुत्पद्यत इति किंचन प्रमाणमस्ति । वृत्त्युद्भवाभिभवौ तु अप्रकृति-समाश्रयावपि दृश्येते; पार्थिवेभ्यो हि इन्धनेभ्यस्तैजसस्याग्नेर्वृत्तिरुद्भ-

### प्रकटार्थविवरणम्

इन्द्रियप्रवृत्तिविरोधिनि मनःसंसर्गविशेषे सति मनसि वचनव्यापार-विलय इत्युपवर्ण्यत इत्याह—वाग्वृत्तिर्मनसीति ॥ सूत्राक्षरविरोधमाशङ्क्य परिहरति—कथमित्यादिना ॥ उपरितनसूत्रबलादित्थं व्याख्यायते । तत्र हि विद्याबलादिन्द्रियाणां ब्रह्मण्यविभागापत्तिरिति वक्ष्यति । तद्विशेषाभिधानं व्यर्थं भवेत्, सर्वत्रैवेन्द्रियाणां स्वरूपप्रविलये विवक्षिते सतीत्यर्थः । इन्द्रिय-स्यातीन्द्रियत्वाद्यद्यपि प्रत्यक्षेण द्रष्टुं न शक्यते, तथापि श्रुतिबलादवगन्तुं शक्यत इत्याह—नन्नु श्रुतीति ॥ श्रुतिरप्यनुपपन्नमर्थं न ब्रूत इत्याह सिद्धान्ती—अतत्प्रकृतित्वादिति ॥ प्रकृतौ हि विकारलयो दृश्यते । वाचश्च मनःप्रकृति-कत्वाभावात्तत्र लयोऽनुपपन्न इत्यर्थः । तर्ह्यतत्प्रकृतित्वादेव प्रवृत्त्युपसंहा-रोऽपि न सिध्यतीत्याशङ्क्याह—वृत्त्युद्भवाभिभवौ त्विति ॥ सूत्रभागमव-

भाष्यम्

वति, अप्सु च उपशाम्यति । कथं तर्ह्यस्मिन्पक्षे शब्दः—"वाङ्मनसि संपद्यते" इति? अत आह शब्दश्चेति—शब्दोऽप्यस्मिन्पक्षेऽवकल्पते; वृत्तिवृत्तिमतोरभेदोपचारादित्यर्थः ॥

## अत एव च सर्वाण्यनु ॥ ४-२-२ ॥ 5

"तस्मादुपशान्ततेजाः । पुनर्भवमिन्द्रियैर्मनसि संपद्यमानैः ।" इत्यत्र अविशेषेण सर्वेषामेवेन्द्रियाणां मनसि संपत्तिः श्रूयते; तत्रापि अत एव वाच इव चक्षुरादीनामपि सवृत्तिके मनस्यवस्थिते वृत्तिलोपदर्शनात् तत्त्वप्रलयासंभवात् शब्दोपपत्तेश्च वृत्तिद्वारेणैव सर्वाणीन्द्रियाणि मनोऽनुवर्तन्ते । सर्वेषां करणानां मनस्युपसंहाराविशेषे सति वाचः पृथग्ग्रहणम् "वाङ्मनसि संपद्यते" इत्युदाहरणानुरोधेन ॥ 10

[ मनोऽधिकरणम् ]

## तन्मनः प्राण उत्तरात् ॥ ४-२-३ ॥

समधिगतमेतत्—"वाङ्मनसि संपद्यते" इत्यत्र वृत्तिसंपत्तिविवक्षेति; अथ यदुत्तरं वाक्यम् "मनः प्राणे" इति, किमत्रापि वृत्तिसंप- 15

प्रकटार्थविवरणम्

तात्पर्यति—कथं तर्हीति ॥

अत एव च सर्वाण्यनु ॥

वाच्युक्तन्यायं चक्षुराद्यावतिदिशति—अत एवेति ॥ अनुशब्देनानुवर्तनं सूचितम् । उपशान्तमौष्ण्यस्पर्शोलिङ्गकं तेजोऽस्येति तथोक्तः । इन्द्रियैर्मनसि 20 संपद्यमानैः पुनर्भवं प्रतिपद्यत इत्यत्र यद्यविशेषेणेन्द्रियाणां मनसि प्रत्युपसंहारो विवक्षितः, किमिति तर्ह्यादौ वाचः पृथग्ग्रहणमित्याशङ्क्याह—सर्वेषां करणानामिति ॥

तन्मनः प्राण उत्तरात् ॥

उक्तमनुकीर्त्य पूर्ववत्संशयपूर्वपक्षौ दर्शयति—समधिगतमेतदित्यादिना॥ 25

### भाष्यम्

त्तिरेव विवक्ष्यते, उत वृत्तिमत्संपत्तिः—इति विचिकित्सायाम्, वृत्तिमत्संपत्तिरेव अत्र इति प्राप्तम्, श्रुत्यनुग्रहात्, तत्प्रकृतिकत्वोपपत्तेश्च । तथा हि—"अन्नमयं हि सोम्य मन आपोमयः प्राणः" इत्यन्नयोनि
5 मन आमनन्ति, अब्योनिं च प्राणम्; आपश्चान्नमसृजन्त इति श्रुतिः । अतश्च यन्मनः प्राणे प्रलीयते अन्नमेव तदप्सु प्रलीयते; अन्नं हि मनः आपश्च प्राणः, प्रकृतिविकाराभेदादिति । एवं प्राप्ते ब्रूमः—तदपि अगृहीतबाह्येन्द्रियवृत्ति मनो वृत्तिद्वारेणैव प्राणे प्रलीयत इति उत्तराद्वाक्यादवगन्तव्यम्; तथा हि सुषुप्सोर्मुमूर्षोश्च प्राणवृत्तौ परिस्पन्दा-
10 त्मिकायामवस्थितायाम्, मनोवृत्तीनामुपशमो दृश्यते; न च मनसः स्वरूपाप्ययः प्राणे संभवति, अतत्प्रकृतित्वात् । ननु दर्शितं मनसः प्राणप्रकृतित्वम्—नैतत्सारम्; न हि ईदृशेन प्राणाडिकेन तत्प्रकृतित्वेन मनः प्राणे संपत्तुमर्हति; एवमपि हि अन्ने मनः संपद्येत अप्सु चान्नम्, अप्स्वेव च प्राणः; न ह्येतस्मिन्नपि पक्षे प्राणभावपरिणता-
15 भ्योऽद्भ्यो मनो जायत इति किंचन प्रमाणमस्ति; तस्मात् न मनसः प्राणे स्वरूपाप्ययः । वृत्त्यप्ययेऽपि तु शब्दोऽवकल्पते, वृत्तिवृत्तिमतोरभेदोपचारादिति दर्शितम् ॥

### प्रकटार्थविवरणम्

अधिकं हेतुमाह—तत्प्रकृतित्वोपपत्तेश्चेति ॥ प्राणाकारपरिणतानामपां मनः-
20 संस्थिताम्नाकारपरिणामात् परंपरया मनसः प्राणप्रकृतित्वोपपत्तेः प्राणे स्वरूपलयो घटत इत्यर्थः । मनःप्राणयोः स्वरूपेण प्रकृतिविकारभावाभावादसंभवति मुख्यार्थे मनःपरिस्पन्दस्य प्राणायत्तत्वमात्रेण प्राणे वृत्तिलय इत्युपपद्येत इत्याह—एवं प्राप्ते ब्रूम इत्यादिना ॥ प्राणाडिकेन व्यवहितेन । प्राणवादे प्राणस्य वायुविकारत्वाभिधानान्नास्त्यम्मयत्वम्, तथापि प्रौढवादेन "अन्नमयं
25 हि" इत्यादिश्रुतेर्यथाश्रुतार्थपरिग्रहेऽपि न पराभिप्रायसिद्धिरित्याह — एवमपि ह्यन्न इति ॥

१. T and T¹. नास्त्यम्मयत्वं

भाष्यम्

[ अध्यक्षाधिकरणम् ]

## सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४-२-४ ॥

स्थितमेतत्—यस्य यतो नोत्पत्तिः, तस्य तस्मिन्वृत्तिप्रलयः, न स्वरूपप्रलय इति; इदमिदानीम् "प्राणस्तेजसि" इत्यत्र चिन्त्यते— 5
किं यथाश्रुति प्राणस्य तेजस्येव वृत्त्युपसंहारः, किं वा देहेन्द्रियपञ्जराध्यक्षे जीव इति। तत्र श्रुतेरनतिशङ्क्यत्वात्—प्राणस्य तेजस्येव संपत्तिः स्यात्, अश्रुतकल्पनाया अन्याय्यत्वात्—इत्येवं प्राप्ते प्रतिपद्यते—सोऽध्यक्ष इति। स प्रकृतः प्राणः, अध्यक्षे अविद्याकर्मपूर्वप्रज्ञोपाधिके विज्ञानात्मनि अवतिष्ठते; तत्प्रधाना प्राणवृत्तिर्भवतीत्यर्थः; 10
कुतः? तदुपगमादिभ्यः। "एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति यत्रैतदूर्ध्वोच्छ्वासी भवति" इति हि श्रुत्यन्तरम् अध्यक्षोपगामिनः सर्वान्प्राणान् अविशेषेण दर्शयति; विशेषेण च "तमुत्क्रामन्तं प्राणोऽनूत्क्रामति" इति पञ्चवृत्तेः प्राणस्य अध्यक्षानुगामितां दर्शयति, तदनुवृत्तितां च इतरेषाम् "प्राणमनूत्क्रामन्तं सर्वे प्राणा 15
अनूत्क्रामन्ति" इति; "सविज्ञानो भवति" इति च अध्यक्षस्य अन्तर्विज्ञानवत्त्वप्रदर्शनेन तस्मिन् अपीतकरणग्रामस्य प्राणस्य अवस्थानं गम-

प्रकटार्थविवरणम्

सोऽध्यक्षे तदुपगमादिभ्यः ॥

वृत्तानुवादपूर्वकं संशयमाह—स्थितमित्यादिना ॥ "प्राणस्तेजसि" 20
तथा "इममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति" इति श्रुतिद्वयदर्शनात् संशयमुक्त्वा पूर्वपक्षमाह—तत्र श्रुतेरिति ॥ सिद्धान्तसूत्रं योजयति—स प्रकृत इत्यादिना ॥

भाष्यम्

यति । ननु "प्राणस्तेजसि" इति श्रूयते; कथं प्राणोऽध्यक्ष इत्यधिकावापः क्रियते? नैष दोषः, अध्यक्षप्रधानत्वादुत्क्रमणादिव्यवहारस्य, श्रुत्यन्तरगतस्यापि च विशेषस्यापेक्षणीयत्वात् ॥

5 कथं तर्हि "प्राणस्तेजसि" इति श्रुतिरित्यत आह—

## भूतेषु तच्छ्रुतेः ॥ ४-२-५ ॥

स प्राणसंपृक्तोऽध्यक्षः तेजःसहचरितेषु भूतेषु देहबीजभूतेषु सूक्ष्मेषु अवतिष्ठत इत्यवगन्तव्यम् "प्राणस्तेजसि" इति श्रुतेः । ननु च इयं श्रुतिः प्राणस्य तेजसि स्थितिं दर्शयति, न प्राणसंपृक्तस्याध्यक्षस्य—
10 नैष दोषः, सोऽध्यक्षे—इति अध्यक्षस्याप्यन्तराले उपसंख्याततत्वात्; योऽपि हि स्रुघ्नान्मथुरां गत्वा मथुरायाः पाटलिपुत्रं व्रजति, सोऽपि स्रुघ्नात्पाटलिपुत्रं यातीति शक्यते वदितुम्; तस्मात् "प्राणस्तेजसि" इति प्राणसंपृक्तस्याध्यक्षस्यैव एतत् तेजःसहचरितेषु भूतेष्ववस्थानम् ॥

कथं तेजःसहचरितेषु भूतेष्वित्युच्यते, यावतैकमेव तेजः श्रूयते—
15 "प्राणस्तेजसि" इति? अत आह—

प्रकटार्थविवरणम्

यथा राज्ञः प्रयाणाभिप्रायमात्रेण सर्वे भृत्या अभिसमायान्ति एवमेवेति श्रुतेरर्थाभिधानायोत्तरं सूत्रमवतारयति—कथं तर्हि प्राणस्तेजसीति ॥

भूतेषु तच्छ्रुतेः ॥

20 उभयविधश्रुत्यनुग्रहाय "प्राणस्तेजसि" इत्यव्यवधानं बाधित्वा प्राणस्य वृत्तिलयोऽभ्युपगन्तव्य इत्यर्थः ॥

भूतेष्विति बहुवचनं तेजश्शब्दस्योपलक्षणार्थत्वमङ्गीकृत्योक्तम्; तदाक्षिप्य समाधत्ते—कथं तेजस्सहचरितेष्वित्यादिना ॥

भाष्यम्

## नैकस्मिन्दर्शयतो हि ॥ ४-२-३ ॥

न एकस्मिन्नेव तेजसि शरीरान्तरप्रेप्सावेलायां जीवोऽवतिष्ठते, कार्यस्य शरीरस्यानेकात्मकत्वदर्शनात् । दर्शयतश्च एतमर्थं प्रश्नप्रतिवचने "आपः पुरुषवचसः" इति; तद्व्याख्यातम् "त्र्यात्मकत्वात्तु भूयस्त्वात्" इत्यत्र । श्रुतिस्मृती च एतमर्थं दर्शयतः; श्रुतिः "पृथ्वीमय आपोमयो वायुमय आकाशमयस्तेजोमयः" इत्याद्या; स्मृतिरपि 5

"अण्व्यो मात्राविनाशिन्यो दशार्धानां तु याः स्मृताः ।
ताभिः सार्धमिदं सर्वं संभवत्यनुपूर्वशः ॥"

इत्याद्या । ननु च उपसंहृतेषु वागादिषु करणेषु शरीरान्तरप्रेप्सावेलायाम् "कायं तदा पुरुषो भवति" इत्युपक्रम्य श्रुत्यन्तरं कर्माश्रयतां निरूपयति—"तौ ह यदूचतुः कर्म हैव तदूचतुरथ ह यत्प्रशशंसतुः कर्म हैव तत्प्रशशंसतुः" इति । अत्रोच्यते—तत्र कर्मप्रयुक्तस्य ग्रहातिग्रहसंज्ञकस्य इन्द्रियविषयात्मकस्य बन्धनस्य प्रवृत्तिरिति कर्माश्रयतोक्ता; इह पुनः भूतोपादानाद्देहान्तरोत्पत्तिरिति भूताश्रयत्वमुक्तम्; प्रशंसाशब्दादपि तत्र प्राधान्यमात्रं कर्मणः प्रदर्शितम्, न त्वाश्रयान्तरं निवारितम्; तस्मादविरोधः ॥ 10 15

प्रकटार्थविवरणम्

### नैकस्मिन् दर्शयतो हि ॥

अण्व्यः सूक्ष्माः । मीयन्त इति मात्राः । प्राङ्मोक्षादविनाशिन्यः । दशार्धानां पञ्चानां भूतानामित्यर्थः । जीवस्य भूताश्रयत्वं श्रुत्यन्तरविरुद्धमिति शङ्कते—ननु चेत्यादिना ॥ तौ याज्ञवल्क्यार्तभागौ । मन्त्रणं कृत्वा यज्जीवाधारभूतमूचतुः कर्मैव तदुक्तवन्ताविति श्रुतेर्वचने बन्धप्रयोजकत्वेन कर्मणामाश्रयत्वमुक्तम्; भूतानां तूपादानत्वेनेत्यविरोधमाह—अत्रोच्यत इति ॥ 20

१. TM adds के

भाष्यम्

[ आसृत्युपक्रमाधिकरणम् ]

## समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ४-२-७ ॥

5 सेयमुत्क्रान्तिः किं विद्वदविदुषोः समाना, किं वा विशेषवती— इति विशयानानां विशेषवतीति तावत्प्राप्तम् । भूताश्रयविशिष्टा ह्येषा; पुनर्भवाय च भूतान्याश्रीयन्ते; न च विदुषः पुनर्भवः संभवति । "अमृतत्वं हि विद्वानश्नुते"—इति स्थितिः; तस्मादविदुष एव एषा उत्क्रान्तिः । ननु विद्याप्रकरणे समाम्नानात् विदुष एव एषा भवेत्—
10 न, स्वापादिवत् यथाप्राप्तानुकीर्तनात्; यथा हि "यत्रैतत्पुरुषः स्वपिति नाम" "अशिशिषति नाम" "पिपासति नाम" इति च सर्वप्राणिसाधारणा एव स्वापादयोऽनुकीर्त्यन्ते विद्याप्रकरणेऽपि प्रतिपिपादयिषितवस्तुप्रतिपादनानुगुण्येन, न तु विदुषो विशेषवन्तो विधित्स्यन्ते; एवम् इयमपि उत्क्रान्तिः महाजनगतैवानुकीर्त्यते, यस्यां
15 परस्यां देवतायां पुरुषस्य प्रयतः तेजः संपद्यते स आत्मा तत्त्वमसि— इत्येतत्प्रतिपादयितुम् । प्रतिषिद्धा च एषा विदुषः—"न तस्य प्राणा उत्क्रामन्ति" इति । तस्मादविदुष एवैषेति ॥

प्रकटार्थविवरणम्

समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥

20 अनन्तरनिरूपितोत्क्रान्तिर्विषयः । तत्र "विद्ययामृतमश्नुते" इति श्रुतेः "अस्य सौम्य पुरुषस्य" इत्यविशेषश्रुतेश्च संशयमाह—सेयमिति ॥ विशयानानां सन्दिहानानां सताम् । अविदुष एवेति विशेषवतीति पूर्वपक्षत्वेन प्राप्तमित्यर्थः । पूर्वपक्षमाक्षिप्य समाधत्ते—ननु विद्येत्यादिना ॥ सृतेर्मार्गस्योपक्रमात् अर्वा-

भाष्यम्

एवं प्राप्ते, ब्रूमः—समानैवैषा उत्क्रान्तिः "वाङ्मनसि" इत्याद्या विद्वदविदुषोः आसृत्युपक्रमात् भवितुमर्हति, अविशेषश्रवणात्; अविद्वान् देहबीजभूतानि भूतसूक्ष्माण्याश्रित्य कर्मप्रयुक्तो देहग्रहणमनुभवितुं संसरति, विद्वांस्तु ज्ञानप्रकाशितं मोक्षनाडीद्वारमाश्रयते — तदेतत् 5
"आसृत्युपक्रमात्" इत्युक्तम्। ननु अमृतत्वं विदुषा प्राप्तव्यम्, न च तद्देशान्तरायत्तम्, तत्र कुतो भूताश्रयत्वं सृत्युपक्रमो वेति—अत्रोच्यते—अनुपोष्य च इदम्, अदग्ध्वा अत्यन्तमविद्यादीन्क्लेशान्, अपरविद्यासामर्थ्यात् आपेक्षिकममृतत्वं प्रेप्सते; संभवति तत्र सृत्युपक्रमः, भूताश्रयत्वं च—न हि निराश्रयाणां प्राणानां गतिरुपपद्यते; तस्माददोषः॥ 10

[ संसारव्यपदेशाधिकरणम् ]

## तदापीतेः संसारव्यपदेशात्॥ ४-२-८॥

"तेजः परस्यां देवतायाम्" इत्यत्र प्रकरणसामर्थ्यात् तत् यथाप्रकृतं तेजः साध्यक्षं सप्राणं सकरणग्रामं भूतान्तरसहितं प्रयतः पुंसः परस्यां देवतायां संपद्यत इत्येतदुक्तं भवति; कीदृशी पुनरियं संपत्तिः 15
स्यादिति चिन्त्यते। तत्र आत्यन्तिक एव तावत् स्वरूपप्रविलय इति

प्रकटार्थविवरणम्

कर्मिणां सगुणोपासकानां चोत्क्रान्तिस्तुल्यैवेत्याह — समानैवैषेति॥ पूर्वपक्षबीजापाकरणाय सूत्रभागं व्याचष्टे—अनुपोष्य चेदमिति॥

तदापीतेः संसारव्यपदेशात्॥ 20

पूर्वोदाहृतोत्क्रान्तिवाक्यस्य शेषं व्याख्याय संशयमाह—तेजः परस्यामित्यादिना॥ किमात्यन्तिकसंपत्तिः, किं वा नेति संपत्तेरुभयथा दर्शनात् संशये पूर्वपक्षमाह—तत्रात्यन्तिक एवेति॥ "परस्यां देवतायाम्" इति श्रूयमाणा सत्संपत्तिरात्यन्तिकी, अन्त्यकालीनसत्संपत्तित्वात्, परब्रह्म-

१. T[1]. अत्यन्त

भाष्यम्

प्राप्तम्, तत्प्रकृतित्वोपपत्तेः; सर्वस्य हि जनिमतो वस्तुजातस्य प्रकृतिः परा देवतेति प्रतिष्ठापितम्; तस्मात् आत्यन्तिकी इयमविभागापत्तिरिति । एवं प्राप्ते, ब्रूमः—तत् तेजआदि भूतसूक्ष्मं श्रोत्रादिकरणाश्रयभूतम्, आपीतेः आ संसारमोक्षात् सम्यग्ज्ञाननिमित्तात् अवतिष्ठते ।

"योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ।
स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम् ॥"

इत्यादिसंसारव्यपदेशात्; अन्यथा हि सर्वः प्रायणसमय एव उपाधिप्रत्यस्तमयादत्यन्तं ब्रह्म संपद्येत, तत्र विधिशास्त्रमनर्थकं स्यात्, विद्याशास्त्रं च; मिथ्याज्ञाननिमित्तश्च बन्धो न सम्यग्ज्ञानादृते विस्रंसितुमर्हति; तस्मात् तत्प्रकृतित्वेऽपि सुषुप्तप्रलयवत् बीजभावावशेषैव एषा सत्संपत्तिरिति ॥

## सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ४-२-९ ॥

तच्च इतरभूतसहितं तेजो जीवस्यास्माच्छरीरात् प्रवसत आश्रयभूतं स्वरूपतः प्रमाणतश्च सूक्ष्मं भवितुमर्हति । तथा हि नाडीनिष्क्रमणश्रवणादिभ्योऽस्य सौक्ष्म्यमुपलभ्यते । तत्र तनुत्वात्संचारोपपत्तिः; स्वच्छत्वाच्च अप्रतीघातोपपत्तिः; अत एव च देहान्निर्गच्छत् पार्श्वस्थैर्नोपलभ्यते ॥

प्रकटार्थविवरणम्

संपत्तिवदित्यर्थः । यत्पूर्वं स्वरूपविलयाभावे कारणमुक्तमतत्प्रकृतित्वम्, तदपीह नास्तीत्याह —तत्प्रकृतित्वोपपत्तेरिति ॥

सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥

देहान्तरोपभोगाय कर्मज्ञानविध्यन्यथानुपपत्त्या अनुमानं बाधित्वा पुनरुत्थानयोग्यसावशेषसंपत्तिरुक्ता सिद्धान्ते । तत्र स्वरूपेण पृथग्विद्यते चेत्किमिति पार्श्वस्थैर्नोपलभ्यत इति प्रासङ्गिकमाशङ्क्याह—सूक्ष्मं प्रमाणतश्चेति ॥

भाष्यम्

## नोपमर्देनातः ॥ ४-२-१० ॥

अत एव सूक्ष्मत्वात् न अस्य स्थूलस्य शरीरस्योपमर्देन दाहादि-
निमित्तेन इतरत्सूक्ष्मं शरीरमुपमृद्यते ॥

## अस्यैव चोपपत्तेरेष ऊष्मा ॥ ४-२-११ ॥   5

अस्यैव च सूक्ष्मस्य शरीरस्य एष ऊष्मा, यमेतस्मिञ्जीवशरीरे
संस्पर्शेनोष्माणं विजानन्ति । तथा हि मृतावस्थायाम् अवस्थितेऽपि देहे
विद्यमानेष्वपि च रूपादिषु देहगुणेषु, न ऊष्मा उपलभ्यते, जीव-
दवस्थायामेव तु उपलभ्यते—इतत उपपद्यते प्रसिद्धशरीरव्यतिरिक्त-
व्यपाश्रय एव एष ऊष्मेति । तथा च श्रुतिः—"उष्ण एव जीविष्य-   10
ञ्शीतो मरिष्यन्" इति ॥

[प्रतिषेधाधिकरणम्]

## प्रतिषेधादितिचेन्न शारीरात् ॥ ४-२-१२ ॥

"अमृतत्वं चानुपोष्य" इत्यतो विशेषणात् आत्यन्तिकेऽमृतत्वे
गत्युत्क्रान्त्योरभावोऽभ्युपगतः; तत्रापि केनचित्कारणेन उत्क्रान्ति-   15

प्रकटार्थविवरणम्

नोपमर्देनातः ॥

अस्यैव चोपपत्तेरेष ऊष्मा ॥

तत्सद्भावे श्रुतिलिङ्गमाह—अस्यैव चेति ॥

प्रतिषेधादितिचेन्न शारीरात् ॥   20

व्यवहितेन सम्बन्धमाह—अमृतत्वं चेति ॥ गत्वा यदमृतत्वं प्राप्यते
तदात्यन्तिकं न भवति, किं तु अविद्यादिक्लेशानदग्ध्वैवेति सूत्रकृता विशेष-

१. TM. संगत्व   २. T and T'. किञ्च

भाष्यम्

माशङ्क्य प्रतिषेधति । "अथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो भवति न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन्ब्रह्माप्येति" इत्यतः परविद्याविषयात्प्रतिषेधात् न परब्रह्मविदो देहात्प्राणानामुत्क्रान्तिरस्तीति चेत्, नेत्युच्यते, यतः शारीरादात्मन एष उत्क्रान्तिप्रतिषेधः प्राणानाम्, न शरीरात् । कथमवगम्यते ? "न तस्मात्प्राणा उत्क्रामन्ति" इति शाखान्तरे पञ्चमीप्रयोगात्; संबन्धसामान्यविषया हि षष्ठी शाखान्तरगतया पञ्चम्या संबन्धविशेषे व्यवस्थाप्यते; "तस्मात्" इति च प्राधान्यात् अभ्युदयनिःश्रेयसाधिकृतो देही संबध्यते, न देहः; न तस्मादुच्चिक्रमिषोर्जीवात् प्राणा अपक्रामन्ति—सहैव तेन भवन्ति इत्यर्थः ॥

सप्राणस्य च प्रवसतो भवत्युत्क्रान्तिर्देहादित्येवं प्राप्ते, प्रत्युच्यते—

प्रकटार्थविवरणम्

णोपादानेन तस्मिन्नेधाधिकरणे परविदो गत्युत्क्रान्त्योरभावोऽभ्युपगतो यद्यपि, तथापि माध्यन्दिनश्रुतिवशेनोत्क्रान्तिं प्रासङ्गिकीमाशङ्क्यास्मिन्नधिकरणे प्रतिषेधतीत्यर्थः । प्रथमं सिद्धान्ताशङ्कामुपन्यस्य पूर्वपक्षमुपन्यस्यति आद्यसूत्रेणेति व्याचष्टे—अथाकामयमान इत्यादिना ॥ [1]अकामो बाह्यविषय[यकाम]-रहितः; निष्कामः आन्तरकामवासनारहितः; आप्तकामः आप्तपरमानन्दः आत्मकामः सर्वात्मैकत्वदर्शी; [तत्र पूर्वं पूर्वं प्रति]परस्य परस्य हेतुत्वं द्रष्टव्यम् । नन्वेकत्र षष्ठीप्रयोगः, अपरत्र पञ्चमीप्रयोगः; तत्र कथं निर्णय इत्याशङ्क्याह—संबन्धसामान्येति ॥ काण्वश्रुतौ संबन्धसामान्यविषया षष्ठी; सा संबन्धविशेषमाकाङ्क्षमाणा माध्यन्दिनशाखागतया पञ्चम्यापादानलक्षणे संबन्धविशेषे व्यवस्थाप्यते; अतो जीवापादानकमुत्क्रमणं प्रतिषिध्यत इत्यर्थः । ननु माध्यन्दिनानां तच्छब्देन देहं परामृश्य देहापादानोत्क्रान्तिप्रतिषेधः किं न भवतीत्याशङ्क्याह तस्मादिति चेति[2] ॥ जीवेन सह भावे किं सिद्धमित्यत आह—सप्राणस्य चेति ॥

१. TM and A omit अकामो...द्रष्टव्यम्

२. TM omits चेति

भाष्यम्

## स्पष्टो ह्येकेषाम् ॥ ४-२-१३ ॥

नैतदस्ति—यदुक्तम्, परब्रह्मविदोऽपि देहात् अस्त्युत्क्रान्तिः उत्क्रान्तिप्रतिषेधस्य देह्यपादानत्वादिति; यतो देहापादान एवोत्क्रान्तिप्रतिषेध एकेषां समाम्नातॄणां स्पष्ट उपलभ्यते । तथा हि—आर्तभागप्रश्ने "यत्रायं पुरुषो म्रियत उदस्मात्प्राणाः क्रामन्त्याहो नेति" इत्यत्र "नेति होवाच याज्ञवल्क्यः" इत्यनुत्क्रान्तिपक्षं परिगृह्य न तर्ह्ययमनुत्क्रान्तेषु प्राणेषु मृतः—इत्यस्यामाशङ्कायाम् "अत्रैव समवनीयन्ते" इति प्रविलयं प्राणानां प्रतिज्ञाय तत्सिद्धये "स उच्छ्वयत्याध्मायत्याध्मातो मृतः शेते" इति सशब्दपरामृष्टस्य प्रकृतस्य उत्क्रान्त्यवधेः उच्छ्वयनादीनि समामनन्ति; देहस्य च एतानि स्युः न देहिनः; तत्सामान्यात्, "न तस्मात्प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते" इत्यत्रापि अभेदोपचारेण देहापादानस्यैव उत्क्रमणस्य प्रतिषेधः—यद्यपि प्राधान्यं देहिनः—इति व्याख्येयम्, येषां पञ्चमीपाठः ।

प्रकटार्थविवरणम्

स्पष्टो ह्येकेषाम् ॥

सिद्धान्तसूत्रं परोक्तप्रतिषेधं बहिरेव प्रतिज्ञाय हेतुत्वेन योजयति—नैतदस्तीत्यादिना[1] ॥ अस्मादिति यः प्रकृत उत्क्रान्त्यवधिः, तं सशब्देन परामृश्य उच्छ्वयनाद्यभिधानादार्तभागप्रश्ने तावद्विदुषः शरीरादुत्क्रान्तिः प्राणानां प्रतिषिद्धा । ततः प्रकृते किमायातमित्यत आह–तत्सामान्यादिति ॥ विद्याप्रकरणे विद्वद्विषयत्वाविशेषात् "न तस्मात्प्राणाः" इत्यत्रापि तच्छब्देन जीवाभिन्नं शरीरमेवोपलक्ष्य विदुषः शरीरात्प्राणा नोत्क्रामन्तीत्यर्थो ग्राह्य इत्यर्थः । इदानीं

१. T. नैतदपीत्यादिना

भाष्यम्

येषां तु षष्ठीपाठः, तेषां विद्वत्संबन्धिनी उत्क्रान्तिः प्रतिषिध्यत इति, प्राप्तोत्क्रान्तिप्रतिषेधार्थत्वात् अस्य वाक्यस्य देहापादानैव सा प्रतिषिद्धा भवति; देहादुत्क्रान्तिः प्राप्ता, न देहिनः; अपि च "चक्षुष्टो वा मूर्ध्नो
5 वान्येभ्यो वा शरीरदेशेभ्यस्तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" इत्येवमविद्वद्विषयं सप्रपञ्चमुत्क्रमणं संसारगमनं च दर्शयित्वा "इति तु कामयमानः" इति उपसंहृत्य अविद्वत्कथाम्, "अथाकामयमानः" इति व्यपदिश्य विद्वांसम्—यदि तद्विषयेऽप्युत्क्रान्तिमेव प्रापयेत् असमञ्जस एव व्यपदेशः स्यात्;
10 तस्मात् अविद्वद्विषये प्राप्तयोर्गत्युत्क्रान्त्योः विद्वद्विषये प्रतिषेधः—इत्येवमेव व्याख्येयम्, व्यपदेशार्थवत्त्वाय। न च ब्रह्मविदः सर्वगतब्रह्मात्मभूतस्य प्रक्षीणकामकर्मणः उत्क्रान्तिः गतिर्वा उपपद्यते, निमित्ताभावात्। "अत्र ब्रह्म समश्नुते" इति च एवंजातीयकाः श्रुतयो गत्युत्क्रान्त्योरभावं सूचयन्ति ॥

15 प्रकटार्थविवरणम्

काण्वपाठस्यार्थमाह—येषां तु षष्ठीपाठ इति ॥ "न तस्य प्राणा उत्क्रामन्ति" इत्यत्रापादानकारकापेक्षायाम्। "चक्षुष्टो वा मूर्ध्नो वा" इति शरीरावयवानामुत्क्रान्त्यपादानत्वेन प्रकृतानामिह संबन्धात् प्राप्तोत्क्रान्तिप्रतिषेधपरत्वाच्च वाक्यस्य, षष्ठ्याश्च "प्राणमयः" इत्यादौ प्रकृतोपाध्युपहितसंबन्धिविशेषा-
20 वलम्बितया शाखान्तरगतापादानानपेक्षत्वात् तस्योपाधिभूताः प्राणाः शरीरावयवेभ्यो नोत्क्रामन्तीति वाक्यार्थः सिध्यतीत्यर्थः। व्यपदेशभेदस्यार्थवत्त्वसिध्यर्थमप्ययमेव वाक्यार्थ इत्याह—अपि चेति ॥ नन्वविदुषः शरीरान्तरारम्भायोत्क्रान्तिः, विदुषस्तु न शरीरारम्भाय; किं तु संसारमण्डलमतिक्रम्य हिरण्यगर्भपर्यन्तं परब्रह्मप्राप्त्यर्थमित्यर्थविशेषो भविष्यतीत्याशङ्क्याह—
25 न च ब्रह्मविद इति ॥ तथा च स्मृतिः—

१. A and TM. संबन्ध

भाष्यम्

## स्मर्यते च ॥ ४-२-१४ ॥

स्मर्यतेऽपि च महाभारते गत्युत्क्रान्त्योरभावः—

"सर्वभूतात्मभूतस्य सम्यग्भूतानि पश्यतः ।
देवा अपि मार्गे मुह्यन्त्यपदस्य पदैषिणः ॥" 5

इति । ननु गतिरपि ब्रह्मविदः सर्वगतब्रह्मात्मभूतस्य स्मर्यते—'शुकः किल वैयासकिर्मुमुक्षुरादित्यमण्डलमभिप्रतस्थे पित्रा चानुगम्याहूतो भो इति प्रतिशुश्राव' इति—न, सशरीरस्यैव अयं योगबलेन विशिष्टदेश-प्राप्तिपूर्वकः शरीरोत्सर्ग इति द्रष्टव्यम्, सर्वभूतदृश्यत्वाद्युपन्यासात्; न हि अशरीरं गच्छन्तं सर्वभूतानि द्रष्टुं शक्नुयुः; तथा च तत्रैवोपसंहृतम्— 10

"शुकस्तु मारुताच्छीघ्रां गतिं कृत्वान्तरिक्षगः ।
दर्शयित्वा प्रभावं स्वं सर्वभूतगतोऽभवत् ॥" इति ।

तस्मादभावः परब्रह्मविदो गत्युत्क्रान्त्योः; गतिश्रुतीनां तु विषयमुपरि-ष्टाद्व्याख्यास्यामः ॥

प्रकटार्थविवरणम् 15

"नोत्क्रामन्ति मुनेः प्राणाः व्यापी सर्वगतो हि सः ।
तेन व्याप्तमिदं सर्वं कुत उत्क्रम्य यास्यति ॥" इति ॥

यच्च भास्करभाषणम् "उत्क्रान्तिप्रतिषेधे न्यायो नास्ति" इत्यादि, तदुक्त-न्यायापरिज्ञानविलसितमित्युपेक्ष्यते ॥

स्मर्यते च ॥ 20

स्मृत्यनुग्रहादपि अयमेव श्रुत्यर्थो ग्राह्य इत्याह—स्मर्यते चेति ॥ पदै-षिणो देवाः; अपदस्य प्राप्यपदरहितस्य विदुषो मार्गे मुह्यन्ति, मार्गं न जानन्ति, तदभावादेवेत्यर्थः । स्मृत्यन्तरविरोधं शङ्कते— ननु गतिरपीति ॥ परिहरति-सशरीरस्यैवेति ॥ योगबलेन सगुणविद्याफलेनेत्यर्थः ॥

भाष्यम्

[ वागादिलयाधिकरणम् ]

## तानि परे तथा ह्याह ॥ ४-२-१५ ॥

तानि पुनः प्राणशब्दोदितानि इन्द्रियाणि भूतानि च परब्रह्मविदः
5 तस्मिन्नेव परस्मिन्नात्मनि प्रलीयन्ते ; कस्मात् ? तथा हि आह श्रुतिः—
"एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं
गच्छन्ति" इति । ननु "गताः कलाः पञ्चदश प्रतिष्ठाः" इति
विद्वद्विषयैवापरा श्रुतिः परस्मादात्मनोऽन्यत्रापि कलानां प्रलयम् आह
स्म—न ; सा खलु व्यवहारापेक्षा—पार्थिवाद्याः कलाः पृथिव्यादि-

10 प्रकटार्थविवरणम्

तानि परे तथा ह्याह ॥

पूर्वत्र प्राणानुत्क्रान्त्यभिधानेनैव लयोऽभिहितः । तस्मिन्नेव लये श्रुति-
द्वयदर्शनात् संशयः । तथा हि "गताः कलाः पञ्चदश प्रतिष्ठाः" इति भूतेषु
लयः प्रतीयते, "पुरुषायणाः पुरुषं प्राप्यास्तं यन्ति" इति पुरुषे । तत्र सिद्धान्तमेव
15 तावदाह—तानि पुनरिति ॥ यथा नद्यः समुद्रं प्राप्यास्तं यन्त्येवमेवास्य जीवस्य
परि समन्तात्सर्वतोऽनवच्छिन्नं ब्रह्म द्रष्टुरिमाः प्राणाद्याः षोडशकलाः पुरुषा
भयाः पुरुषं प्राप्य बाह्यविषयासक्तत्यागेन परमपुरुष एव निष्ठयास्तं गच्छ-
न्तीत्यर्थः । संशयबीजमुद्भावयति —ननु गता इति ॥ मनःप्राणयोरेकत्व-
करणेन पञ्चदशसंख्याकाः कलाः प्रतिष्ठाः प्रति स्वं स्वं कारणं प्रति मोक्षकाले न
20 गता भवन्तीति श्रुत्या प्रकृतावेव विकारलय इति न्यायानुगृहीतया भूतेषु
ब्रह्मविदः करणानां लय इति पूर्ववादिनो मतं सिद्धान्ती श्रुत्या व्यवस्थितविष-
यत्वेन निर्णयमाह—सा खल्वित्यादिना ॥ सा कलानां भूतेषु लयप्रतिपादिका
श्रुतिः सर्वजीवसाधारणव्यवहारगोचरमहाभूतविषया । मायामयमहाभूतो-
पष्टब्धानि हि जीवाविद्याकृतभूतसूक्ष्माणि लिङ्गदेहाकारेण विवर्तन्ते । तत्रो-
25 पष्टम्भकभूतांशानां महाभूतेष्वेव विलय इत्यर्थः । इतरा तु पुरुषं प्राप्यास्तं

भाष्यम्

रेव स्वप्रकृतीरपियन्तीति ; इतरा तु विद्वत्प्रतिपत्त्यपेक्षा—कृत्स्नं कला-
जातं परब्रह्मविदो ब्रह्मैव संपद्यत इति ; तस्माददोषः ॥

[ अविभागाधिकरणम् ]

## अविभागो वचनात् ॥ ४-२-१६ ॥          5

स पुनर्विदुषः कलाप्रलयः किम् इतरेषामिव सावशेषो भवति,
आहोस्विन्निरवशेष इति । तत्र प्रलयसामान्यात् शक्त्यवशेषताप्रसक्तौ
ब्रवीति—अविभागापत्तिरेवेति ; कुतः ? वचनात् ; तथा हि कलाप्रलय-
मुक्त्वा वक्ति—"भिद्येते तासां नामरूपे पुरुष इत्येवं प्रोच्यते स
एषोऽकलोऽमृतो भवति" इति । अविद्यानिमित्तानां च कलानां न          10
विद्यानिमित्ते प्रलये सावशेषत्वोपपत्तिः । तस्मादविभाग एवेति ॥

प्रकटार्थविवरणम्

गच्छन्ति" इति श्रुतिः विद्वत्प्रतिपत्त्या अविद्याधिकृतभूतसूक्ष्मरचितकरणग्रामा-
दिदाहविषयेत्यर्थः ॥

अविभागो वचनात् ॥          15

लयस्योभयथात्वदर्शनात् पूर्वोक्त एव लये संशयमाह—स पुनरिति ॥
विमतः कलाविलयः सावशेषः, कलाविलयत्वात्, उत्क्रान्तौ कलाविलयवदि-
त्यनुमानात् शक्तिशेषे लये प्राप्ते, सिद्धान्तमाह— अविभागापत्तिरिति ॥
ब्रह्मभावमोक्षसाधकशास्त्रान्यथानुपपत्त्यनुगृहीतया "भिद्येते तासां नामरूपे"
इत्यस्तङ्गतानामपि सूक्ष्मनामरूपाभावपरया श्रुत्या अनुमानस्य बाधात् स्वरूप-          20
शेषो लय इति भावः ॥

१. TM. विद्वान् प्रति

भाष्यम्

[ तदोकोऽधिकरणम् ]

## तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ ४-२-१७ ॥

5

समाप्ता प्रासङ्गिकी परविद्यागता चिन्ता ; संप्रति त्वपरविद्याविषयामेव चिन्तामनुवर्तयति । समाना च आसृत्युपक्रमात् विद्वदविदुषोरुत्क्रान्तिः इत्युक्तम् ; इदानीं मृत्युपक्रमं दर्शयति । तस्य उपसंहृतवागादिकलापस्योच्चिक्रमिषतो विज्ञानात्मनः ओक आयतनं हृदयम्—"स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति" इति श्रुतेः ; तदग्रप्रज्वलनपूर्विका चक्षुरादिस्थानापादाना च उत्क्रान्तिः श्रूयते—तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वान्येभ्यो वा शरीरदेशेभ्यः" इति । सा किमनियमेनैव विद्वदविदुषोर्भवति, अथास्ति कश्चिद्विदुषो विशेषनियमः

10

15 प्रकटार्थविवरणम्

तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥

वृत्तानुवादपूर्वकं संक्षेपमाह—समाप्तेत्यादिना ॥ सूत्रभागव्याख्यानपूर्वकं विषयमाह—तस्येति ॥ सोत्क्रान्तिः किमुपासकानुपासकयोरनियतद्वारा भवति, अथवोपासकानामस्ति द्वारनियम इति संशयमाह–सा किमिति ॥

20 "चक्षुष्टो वा" इति द्वारानियमश्रुतेः "तयोर्ध्वमायन्नमृतत्वमेति" इति अविशेष-

१. T[1] adds अदृष्टाश्रितप्रतिपत्तव्यज्ञानं प्रद्योत

भाष्यम्

इति विचिकित्सायाम्, श्रुत्यविशेषादनियमप्राप्तौ आचष्टे—समानेऽपि हि विद्वदविदुषोर्हृदयाग्रप्रद्योतने तत्प्रकाशितद्वारत्वे च, मूर्धस्थानादेव विद्वान्निष्क्रामति, स्थानान्तरेभ्यस्तु इतरे; कुतः? विद्यासामर्थ्यात्; यदि विद्वानपि इतरवत् यतः कुतश्चिद्देहदेशात् उत्क्रामेत्, नैव उत्कृष्टं लोकं लभेत, तत्र अनर्थिकैव विद्या स्यात्। तच्छेषगत्यनुस्मृतियोगाच्च—विद्याशेषभूता च मूर्धन्यनाडीसंबद्धा गतिः अनुशीलयितव्या विद्याविशेषेषु विहिता; तामभ्यस्यन् तयैव प्रतिष्ठत इति युक्तम्। तस्मात् हृदयालयेन ब्रह्मणा सूपासितेन अनुगृहीतः तद्भावं समापन्नो विद्वान् मूर्धन्ययैव शताधिकया शतादतिरिक्तया एकशततम्या नाड्या निष्क्रामति, इतराभिस्त्वितरे। तथा हि हार्दविद्यां प्रकृत्य समामनन्ति—

"शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका।
तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति॥" इति॥

[ रश्म्यधिकरणम् ]

## रश्म्यनुसारी॥ ४-२-१८॥

अस्ति हार्दविद्या—"अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं

प्रकटार्थविवरणम्

श्रुतेश्च संशये पूर्वपक्षमाह—श्रुत्यविशेषादिति॥ पूर्वाधिकरणे कलानां वचनादविभाग उक्तः; तद्वदिहापि "चक्षुष्टो वा मूर्ध्नः" इत्यविशेषवचनात् सगुणविदामपि यया कयाचिन्नाड्या निष्क्रमणमिति प्राप्तौ सिद्धान्तमाचष्टे— समानेऽपीति॥ मूर्धानमभिलक्ष्य निर्गता या नाडी सुषुम्नाख्या तया ब्रह्मनाड्योर्ध्वमायन् गच्छन्नमृतत्वमेतीति। विष्वङ् नानागतयोऽन्यास्तिर्यग्गता नाड्यः उत्क्रमणनिमित्तं भवन्ति, नामृतत्वायेत्यर्थः। विद्याप्रकरणामृतत्वफलाभ्यां मूर्धन्यनाड्यैवोपासकानां गमनमिति सिद्धान्तः॥

रश्म्यनुसारी॥

प्रकरणपरिशोधनेन विषयमाह — अस्तीत्यादिना॥ रश्मिनाडीसंबन्धस्य कालविशेषाश्रवणाद्रात्रौ रश्म्यभावावगमाच्च संशयमाह —

भाष्यम्

वेश्म" इत्युपक्रम्य विहिता; तत्प्रक्रियायाम् "अथ या एता हृदयस्य नाड्यः" इत्युपक्रम्य सप्रपञ्चं नाडीरश्मिसंबन्धमुक्त्वा उक्तम्—"अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते" इति; पुनश्चोक्तम् "तयोर्ध्वमायन्नमृतत्वमेति" इति; तस्मात् शताधिकया नाड्या निष्क्रामन् रश्म्यनुसारी निष्क्रामतीति गम्यते। तत् किम् अविशेषेणैव अहनि रात्रौ वा म्रियमाणस्य रश्म्यनुसारित्वम्, आहोस्विदहन्येव इति संशये सति, अविशेषश्रवणात् अविशेषेणैव तावत् रश्म्यनुसारीति प्रतिज्ञायते॥

## निशि नेति चेन्न संबन्धस्य यावद्देहभावित्वा-दर्शयति च॥ ४-२-१९॥

अस्ति अहनि नाडीरश्मिसंबन्ध इति अहनि मृतस्य स्यात् रश्म्यनुसारित्वम्; रात्रौ तु प्रेतस्य न स्यात्, नाडीरश्मिसंबन्धविच्छेदात्—इति चेत्, न, नाडीरश्मिसंबन्धस्य यावद्देहभावित्वात्; यावद्देहभावी हि सिराकिरणसंपर्कः; दर्शयति चैतमर्थं श्रुतिः—"अमुष्मादादित्यात्प्रतायन्ते ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ताः" इति; निदाघसमये च निशास्वपि किरणानुवृत्तिरुप-

प्रकटार्थविवरणम्

तत्किमविशेषेणैवेति॥ सिद्धान्तमेव तावदाह—अविशेषश्रवणादिति॥

निशि नेति चेन्न संबन्धस्य यावद्देहभावित्वात् दर्शयति च॥

सूत्रभागेन पूर्वपक्षमुपन्यस्य दूषयति—निशि नेतीत्यादिना॥ न केवलं श्रौत एव रश्मिसंबन्धः, उष्णकाले चौष्ण्योपलब्धिलिङ्गगम्योऽपीत्याह — निदाघसमये चेति॥ तर्हि हेमन्तादिरात्रिष्वपि किमित्यौष्ण्यं नोपलभ्यत

भाष्यम्

लभ्यते, प्रतापादिकार्यदर्शनात्; स्तोकानुवृत्तेश्च दुर्लक्ष्यत्वम् ऋत्वन्तररजनीषु, शैशिरेष्विव दुर्दिनेषु; "अहरेवैतद्रात्रौ दधाति" इति च एतदेव दर्शयति। यदि च रात्रौ प्रेतः विनैव रश्म्यनुसारेण ऊर्ध्वमाक्रमेत, रश्म्यनुसारानर्थक्यं भवेत्; न ह्येतत् विशिष्य अभिधीयते— 5
यो दिवा प्रैति, स रश्मीनपेक्ष्योर्ध्वमाक्रमते, यस्तु रात्रौ सोऽनपेक्ष्यैवेति; अथ तु विद्वानपि रात्रिप्रायणापराधमात्रेण नोर्ध्वमाक्रमेत, पाक्षिकफला विद्येति अप्रवृत्तिरेव तस्यां स्यात्, मृत्युकालानियमात्; अथापि रात्रावुपरतोऽहरागमम् उदीक्षेत, अहरागमेऽप्यस्य कदाचित् अरश्मिसंबन्धार्हं शरीरं स्यात् पावकादिसंपर्कात्; "स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छति" इति च श्रुतिः अनुदीक्षां दर्शयति। 10
तस्मात् अविशेषेणैव इदं रात्रिंदिवं रश्म्यनुसारित्वम् ॥

प्रकटार्थविवरणम्

इत्याशङ्क्याह–स्तोकानुवृत्तेश्चेति॥ अहरेवैतद्रात्रौ दधाति सवितेति धारणाभिधानं स्तोकरश्म्यनुवृत्त्यभिप्रायमेवेत्यर्थः। विपक्षे दोषमाह—यदि चेति॥ ननु 15
किमिति वाक्यानर्थक्यम्? दिवाप्रेतविषयं भविष्यतीत्याशङ्क्याह—न ह्येतदिति॥ तर्हि रात्रौ प्रेतस्य माभूदूर्ध्वमाक्रमणम्, रश्म्यनुसारित्वश्रुतेः अर्थवत्त्वायेत्याशङ्क्याह—अथ तु विद्वानपीति ॥ तर्हि दिवसोदयपर्यन्तं प्रतीक्षा भवत्वित्याशङ्क्याह—अथापीत्यादिना ॥ दिवसोदयेऽप्यस्य कदाचिद्रश्मिसंबन्धार्हं शरीरं न भवति वह्न्यादिसंपर्कात्; अतः सिराकिरणसंपर्काभावात् व्यर्थं 20
प्रतीक्षणं स्यादित्यर्थः। श्रुतिविरोधाच्च न प्रतीक्षाकल्पनेत्याह — स यावदिति ॥

१. TM. संभविष्यति

भाष्यम्

[ दक्षिणायनाधिकरणम् ]

# अतश्चायनेऽपि दक्षिणे ॥ ४-२-२० ॥

अत एव च उदीक्षानुपपत्तेः, अपाक्षिकफलत्वाच्च विद्यायाः, अनियतकालत्वाच्च मृत्योः, दक्षिणायनेऽपि म्रियमाणो विद्वान् प्राप्नोत्येव विद्याफलम् । उत्तरायणमरणप्राशस्त्यप्रसिद्धेः भीष्मस्य च प्रतीक्षादर्शनात्, "आपूर्यमाणपक्षाद्यान्षडुदङ्ङेति मासांस्तान्" इति च श्रुतेः अपेक्षितव्यमुत्तरायणम्—इतीमामाशङ्काम् अनेन सूत्रेणापनुदति ; प्राशस्त्यप्रसिद्धिः अविद्वद्विषया ; भीष्मस्य प्रतिपालनम् आचारप्रतिपालनार्थं पितृप्रसादलब्धस्वच्छन्दमृत्युताख्यापनार्थं च । श्रुतेस्तु अर्थं वक्ष्यति "आतिवाहिकास्तल्लिङ्गात्" इति ॥

ननु च—

"यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः ।
प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥" इति

कालप्राधान्येन उपक्रम्य अहरादिकालविशेषः स्मृतावनावृत्तये नियतः ; कथं रात्रौ दक्षिणायने वा प्रयातोऽनावृत्तिं यायात्—इत्यत्रोच्यते—

प्रकटार्थविवरणम्

अतश्चायनेऽपि दक्षिणे ॥

दिवसमरणनियमाभावोक्तहेतूनुत्तरायणमरणानियमाभावेऽप्यतिदिशति – अत एवेति ॥ पूर्वपक्षमुपन्यस्यति — उत्तरायणेति ॥ अपनोदप्रकारमाह—प्राशस्त्यप्रसिद्धिरिति ॥ फलमुद्दिश्य विद्याविधानान्यथानुपपत्त्या लोकप्रसिद्ध्यादिबाधादुत्तरायणाभिमानिदेवतायाः नित्यत्वेन दक्षिणायनेऽपि मार्गपर्वत्वसंभवात् दक्षिणायनमृतानामपि विद्याफलमस्तीति भावः ॥

स्मृतिबलात्कालनियमं शङ्कते—ननु चेति ॥

१. T. मार्गपर्वतसंभवात्

भाष्यम्

## योगिनः प्रति च स्मर्यते स्मार्ते चैते ॥ ४-२-२१ ॥

योगिनः प्रति च अयमहरादिकालविनियोगोऽनावृत्तये स्मर्यते; स्मार्ते चैते योगसांख्ये, न श्रौते; अतो विषयभेदात् प्रमाणविशेषाच्च नास्य स्मार्तस्य कालविनियोगस्य श्रौतेषु विज्ञानेषु अवतारः। ननु—    5

"अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्।
धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम्॥"

इति च श्रौतावेतौ देवयानपितृयाणौ प्रत्यभिज्ञायेते स्मृतावपीति, उच्यते—"तं कालं वक्ष्यामि" इति स्मृतौ कालप्रतिज्ञानात् विरोध-

प्रकटार्थविवरणम्    10

योगिनः प्रति च स्मर्यते स्मार्ते चैते ॥

श्रौतदहराद्युपासकस्य अस्माभिः कालनियमो नास्तीत्युक्तम्[1]। स्मृतौ त्वन्यस्यैव कालनियम उच्यते, ततो[2] भिन्नविषयत्वान्न विरोध इत्याह—योगिन इति ॥ ननु योगी दहराद्युपासक एव किं न भवतीत्याशङ्क्याह—स्मार्ते चैत इति ॥ नित्यमग्निहोत्रादीश्वराराधानरूपेणैव यदनुष्ठीयते स योगः।    15

"अनाश्रितः कर्मफलं कार्यं कर्म करोति यः" इति स्मृतेः "इन्द्रियाणीन्द्रियार्थेषु वर्तन्ते" इति धारणापूर्वकोऽकर्तृत्वानुभवः साङ्ख्यमित्यर्थः। श्रुतिस्मृत्योरेकविषयत्वप्रत्यभिज्ञानात् भिन्नविषयत्वं नास्तीत्याह — नन्वग्निरिति ॥ प्रत्यभिज्ञायाः कालप्रतिज्ञाविरोधमाशङ्क्य[3] भिन्नविषयत्वेन सूत्रकारेण परिहारोऽभिहित इत्याह—उच्यत इति ॥ यदा तु स्मृतावपि कालस्य    20

१. T[1]. नियमोऽप्यस्ती

२. TM and A अतो

३. T, TM and A. कालप्रत्यभिज्ञयोर्विरो

भाष्यम्

माश्रित्य अयं परिहार उक्तः । यदा पुनः स्मृतावपि अग्न्याद्या देवता एव आतिवाहिक्यो गृह्यन्ते, तदा न कश्चिद्विरोध इति ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपाद-
5 शिष्यस्य श्रीमच्छंकरभगवतः कृतौ शारीरकमीमांसासूत्रभाष्ये
चतुर्थाध्यायस्य द्वितीयः पादः ॥

प्रकटार्थविवरणम्

विवक्षितत्वम्, तदा नास्ति प्रत्यभिज्ञायाः कश्चिद्विरोध इति दक्षिणायनेऽपि मृतः प्राप्नोत्येव विद्याफलमिति भावः ॥

10 इति श्रीमच्छारीरकमीमांसाभाष्यविवरणे प्रकटार्थे
चतुर्थस्याध्यायस्य द्वितीयः पादः समाप्तः

# अथ तृतीयः पादः

भाष्यम्

आसृत्युपक्रमात् समानोत्क्रान्तिरित्युक्तम्; सृतिस्तु श्रुत्यन्तरेष्व-
नेकधा श्रूयते—नाडीरश्मिसंबन्धेनैका "अथैतैरेव रश्मिभिरूर्ध्व आक्र-
मते" इति; अर्चिरादिकैका "तेऽर्चिषमभिसंभवन्त्यर्चिषोऽहः" इति; 5
"स एतं देवयानं पन्थानमासाद्याग्निलोकमागच्छति" इत्यन्या;
"यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति" इत्यपरा;
"सूर्यद्वारेण ते विरजाः प्रयान्ति" इति च अपरा। तत्र संशयः—
किं परस्परं भिन्ना एताः सृतयः, किं वा एकैव अनेकविशेषणेति।
तत्र प्राप्तं तावत्—भिन्ना एताः सृतय इति, भिन्नप्रकरणत्वात्, भिन्नो- 10
पासनाशेषत्वाच्च; अपि च "अथैतैरेव रश्मिभिः" इत्यवधारणम्
अर्चिराद्यपेक्षायाम् उपरुध्येत, त्वरावचनं च पीड्येत—"स याव-
त्क्षिप्येन्मनस्तावदादित्यं गच्छति" इति; तस्मादन्योन्यभिन्ना एवैते
पन्थान इति। एवं प्राप्ते, अभिदध्महे—

प्रकटार्थविवरणम् 15

अपरविद्यायाः फलावाप्तये देवयानं पन्थानमवतारयितुमुत्क्रान्तिः पूर्व-
पादे प्रत्यपादि; स इदानीं देवयानः पन्थाः प्रतिपाद्यत इत्याह—आसृत्युप-
क्रमादिति ॥ अनेकश्रुतिदर्शनात्संशयमुक्त्वा पूर्वपक्षमाह—तत्र प्राप्तं ताव-
दिति ॥ प्रतिप्रकरणं विद्याभेदाद्गतीनामपि विद्यागुणत्वेन चिन्तयितव्ये सति
गुणिभेदात् गुणभूतगतिभेद इत्यर्थः। गतिभेदे हेत्वन्तरमाह—अपि चेति ॥ 20
उपासनाभेदेषूपास्यब्रह्मैक्यवत् गुणभूतगत्यैक्योपपत्तेः अर्चिरादिकैकैव गति-
रित्याह—एवं प्राप्ते अभिदध्मह इति ॥

१. T and T[1] add एतेन

भाष्यम्

[ अर्चिराद्यधिकरणम् ]

## अर्चिरादिना तत्प्रथितेः ॥ ४-३-१ ॥

अर्चिरादिनेति; सर्वो ब्रह्म प्रेप्सुः अर्चिरादिनैवाध्वना रंह-
5 तीति प्रतिजानीमहे; कुतः? तत्प्रथितेः; प्रथितो ह्येष मार्गः सर्वेषां
विदुषाम्; तथा हि पञ्चाग्निविद्याप्रकरणे—"येऽचामी अरण्ये श्रद्धां
सत्यमुपासते" इति विद्यान्तरशीलिनामपि अर्चिरादिका सृतिः
श्राव्यते। स्यादेतत्—यासु विद्यासु न काचिद्गतिरुच्यते, तासु इयम-
र्चिरादिका उपतिष्ठताम्, यासु तु अन्या श्राव्यते, तासु किमित्यर्चि-
10 राद्याश्रयणमिति, अत्रोच्यते—भवेदेतदेवम्, यद्यत्यन्तभिन्ना एव एताः
सृतयः स्युः; एकैव त्वेषा सृतिः अनेकविशेषणा ब्रह्मलोकप्रपदनी
क्वचित् केनचिद्विशेषणेनोपलक्षितेति वदामः, सर्वत्रैकदेशप्रत्यभिज्ञा-
नात् इतरेतरविशेषणविशेष्यभावोपपत्तेः; प्रकरणभेदेऽपि हि विद्यैकत्वे
भवतीतरेतरविशेषणोपसंहारवत् गतिविशेषणानामप्युपसंहारः; विद्या-
15 भेदेऽपि तु गत्येकदेशप्रत्यभिज्ञानात् गन्तव्याभेदाच्च गत्यभेद एव;
तथा हि—"ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति" "तस्मिन्व-

प्रकटार्थविवरणम्

अर्चिरादिना तत्प्रथितेः ॥

साधारणवचनमश्रुतगतिकविद्याविषयं भविष्यतीत्याह—स्यादेतदिति ॥
20 अर्चिरादिमार्गविशेषणानामग्निवाय्वादीनां गतिभेदेऽपि प्रत्यभिज्ञानादन्यान्या
गतिरेव न भवत इत्याह—अत्रोच्यत इति ॥ यदुक्तं प्रकरणभेदादिति,
तत्राह— प्रकरणभेदेऽपीति ॥ गन्तव्याभेदं विवृणोति — तथा हीति ॥
परावतो ब्रह्मणः पराः संवत्सरान् वसन्ति यावदायुर्ब्रह्मणस्तिष्ठन्तीत्यर्थः ।

भाष्यम्

सन्ति शाश्वतीः समाः” “सा या ब्रह्मणो जितिर्या व्युष्टिस्तां जितिं जयति तां व्युष्टिं व्यश्नुते” “तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुविन्दति” इति च तत्र तत्र तदेव एकं फलं ब्रह्मलोकप्राप्तिलक्षणं प्रदर्श्यते । यत्तु “एतैरेव” इत्यवधारणम् अर्चिराद्याश्रयणे न स्यादिति, नैष दोषः, रश्मिप्राप्तिपरत्वादस्य ; न हि एक एव शब्दो रश्मींश्च प्रापयितुमर्हति, अर्चिरादींश्च व्यावर्तयितुम् ; तस्माद्रश्मिसंबन्ध एवायमवधार्येत इति द्रष्टव्यम् । त्वरावचनं तु अर्चिराद्यपेक्षायामपि गन्तव्यान्तरापेक्षया क्षैप्रयार्थत्वात् नोपरुध्यते—यथा निमिषमात्रेणात्रागम्यत इति । अपि च “अथैतयोः पथोर्न कतरेण चन” इति मार्गद्वयभ्रष्टानां कष्टं तृतीयं स्थानमाचक्षाणा पितृयाणव्यतिरिक्तमेकमेव देवयानमर्चिरादिपर्वाणं पन्थानं प्रथयति ; भूयांस्यर्चिरादिस्मृतौ मार्गपर्वाणि अल्पीयांसि त्वन्यत्र ; भूयसां च आनुगुण्येन अल्पीयसां नयनं न्याय्यमित्यतोऽपि अर्चिरादिना तत्प्रथितेरित्युक्तम् ॥

प्रकटार्थविवरणम्

शाश्वतीः नित्याः; समाः संवत्सरान् ; ब्रह्मणो हिरण्यगर्भस्य या जितिः सकललोकजयः ; व्युष्टिः व्याप्तिः ; तां लभते समानदेहतां प्राप्त इत्यर्थः[१] । परोक्तमनूद्य दूषयति—यत्त्वेतैरेवेति ॥ रात्रौ रश्मिसंबन्धानुपलम्भाद्रश्म्यनुसारित्वे प्राप्ते रात्रावपि मृत एते रश्मिभिरेवोर्ध्वमाक्रमत इत्ययोगव्यवच्छेदार्थ एवकारः, नान्ययोगव्यवच्छेदार्थः । त्वरावचनस्य गतिमाह — त्वरावचनं त्विति ॥ अर्चिराद्यनेकविशेषणविशिष्टस्य मार्गस्यैकत्वे लिङ्गमाह—अपि चेति ॥ मार्गभेदे सति स्थानान्तरस्यापि संभवात्तृतीयस्थानोपदेशो न स्यादित्यर्थः । ननु पितृयाणातिरिक्त एक एव पन्थाः भवतु, तथापि अर्चिरादिनेति विशेषणं किंकृतमित्याशङ्क्याह—भूयांसीति ॥

१. T and T¹ add इत्यर्थः

भाष्यम्

[ वाय्वधिकरणम् ]

## वायुमब्दादविशेषविशेषाभ्याम् ॥ ४-३-२ ॥

केन पुनः संनिवेशविशेषेण गतिविशेषणानाम् इतरेतरविशेषण-
5 विशेष्यभावः—इति तदेतत् सुहृद्भूत्वा आचार्यो ग्रथयति । “स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम्” इति कौषीतकिनां देवयानः पन्थाः पठ्यते ; तत्र अर्चिरग्निलोकशब्दौ तावत् एकार्थौ ज्वलनवचनत्वादिति नात्र संनिवेशक्रमः कश्चिदन्वेष्यः ; वायुस्तु अर्चि-
10 रादौ वर्त्मनि कतमस्मिन् स्थाने निवेशयितव्य इति, उच्यते—
“तेऽर्चिषमेवाभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्या-न्षडुदङ्ङेति मासांस्तान् मासेभ्यः संवत्सरं संवत्सरादादित्यम्” इत्यत्र संवत्सरात्पराञ्चम् आदित्यादर्वाञ्चं वायुमभिसंभवन्ति; कस्मात्? अविशेष-विशेषाभ्याम् । तथा हि—“स वायुलोकम्” इत्यत्र अविशेषोपदिष्टस्य

15　　प्रकटार्थविवरणम्

### वायुमब्दादविशेषविशेषाभ्याम् ॥

सर्वविद्यास्वेक एव अर्चिरादिमार्ग इत्युक्तम् । इदानीं तस्मिन्नेव मार्गे गतिविशेषणानां वाय्वादीनामस्मादयं पूर्वोऽस्मादयमुत्तर इत्यन्योन्यं विशेषण-विशेष्यभावः केन क्रमेणेति निरूप्यत इत्याह—केन पुनरिति ॥ संक्षेपतोऽ-
20 धिकरणतात्पर्यमुक्त्वा वाक्यं पठति संशयप्रदर्शनाय—स एतमिति ॥ अस-न्दिग्धमंशं मुक्त्वा संशयमाह— तत्रेत्यादिना ॥ कतमस्मिन् स्थान इति ॥ अर्चिषोऽनन्तरं संवत्सराद्धेति पाठक्रमार्थक्रमाभ्यां संशये सिद्धान्तमेव ताव-दुपक्रमते—उच्यत इत्यादिना ॥ तस्मै प्राप्तायोपासकाय वायुस्तत्र[1] तं प्रदेशं विजिहीते त्यजति; द्वारं प्रयच्छति । कियत्परिमाणम्? यथा रथचक्रस्य खं छिद्र-

१. TM and A omit पूर्वोऽस्मात्　　२. TM. तत्

## भाष्यम्

वायोः श्रुत्यन्तरेण विशेषोपदेशो दृश्यते—“यदा वै पुरुषोऽस्माल्लोका-त्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति” इति; एतस्मात् आदि-त्यात् वायोः पूर्वत्वदर्शनात् विशेषात् अब्दादित्ययोरन्तराले वायुर्निवे- 5
शयितव्यः। कस्मात्पुनरग्नेः परत्वदर्शनाद्विशेषादर्चिषोऽनन्तरं वायुर्न निवेश्यते? नैषोऽस्ति विशेष इति वदामः; ननु उदाहृता श्रुतिः—“स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुण-लोकम्” इति; उच्यते—केवलोऽत्र पाठः पौर्वापर्येणावस्थितः, नात्र क्रम-वचनः कश्चिच्छब्दोऽस्ति; पदार्थोपदर्शनमात्रं ह्यत्र क्रियते—एतमेतं 10
च आगच्छतीति; इतरत्र पुनः, वायुप्रत्तेन रथचक्रमात्रेण छिद्रेण ऊर्ध्वमाक्रम्य आदित्यमागच्छतीति अवगम्यते क्रमः; तस्मात् सूक्तम् अविशेषविशेषाभ्यामिति। वाजसनेयिनस्तु “मासेभ्यो देवलोकं देवलो-कादादित्यम्” इति समामनन्ति; तत्र आदित्यानन्तर्याय देवलोकाद्वायु-मभिसंभवेयुः; “वायुमब्दात्” इति तु छन्दोगश्रुत्यपेक्षयोक्तम्। छान्दो- 15
ग्यवाजसनेयकयोस्तु एकत्र देवलोको न विद्यते, परत्र संवत्सरः; तत्र

## प्रकटार्थविवरणम्

मित्यर्थः। सिद्धान्तमुपक्रम्येदानीं पूर्वपक्षमाह—कस्मात्पुनरिति॥ पाठक्र-मेणार्चिषोऽनन्तरं वायुर्निवेशनीय इत्यर्थः। वायुप्रत्तेन मार्गेण ऊर्ध्वमादित्य-माक्रमत इत्यर्थक्रमदर्शनेन पाठक्रमोऽयं बाध्यत इति निगूढाभिसन्धिः उत्तर- 20
माह—नैषोऽस्तीति॥ चोद्यपूर्वकं निगूढाभिसन्धिं विवृणोति—नन्वित्या-दिना॥ एवं तावत्कौषीतकिप्रोक्तस्य वायोश्छान्दोग्योपदिष्टेऽर्चिरादिमार्गे निवेशमुक्त्वा अधुना वाजसनेयिवाक्योपदिष्टे निवेशमाह— वाजसनेयिन-स्त्विति॥ ननु यदि देवलोकादादित्यं प्राप्नुवन्ति, कथं तर्हि “वायुमब्दात्” इति सूत्रकृतोक्तमित्याशङ्क्याह—वायुमब्दादिति त्विति॥ इदानीं छान्दोग्यवाज- 25
सनेयकयोरधिकान्तर्भावमाह — छान्दोग्येति॥ श्रुतिद्वयप्रामाण्यादुभावपि

भाष्यम्

श्रुतिद्वयप्रत्ययात् उभावपि उभयत्र ग्रथयितव्यौ ; तत्रापि माससंबन्धात्संवत्सरः पूर्वः, पश्चिमो देवलोक इति विवेक्तव्यम् ॥

[ तडिदधिकरणम् ]

5 ## तडितोऽधि वरुणः संबन्धात् ॥ ४-३-३ ॥

"आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतम्" इत्यस्या विद्युत उपरिष्टात् "स वरुणलोकम्" इत्ययं वरुणः संबध्येत ; अस्ति हि संबन्धो विद्युद्वरुणयोः ; यदा हि विशाला विद्युतस्तीव्रस्तनितनिर्घोषा जीमूतोदरेषु प्रनृत्यन्ति, अथ आपः प्रपतन्ति ; "विद्योतते स्तनयति वर्षि-
10 ष्यति वा" इति च ब्राह्मणम् ; अपां च अधिपतिर्वरुण इति श्रुतिस्मृतिप्रसिद्धिः ; वरुणादधि इन्द्रप्रजापती स्थानान्तराभावात् पाठसामर्थ्याच्च ; आगन्तुकत्वादपि वरुणादीनामन्ते एव निवेशः, वैशेषिकस्थानाभावात् विद्युच्च अन्त्यार्चिरादौ वर्त्मनि ॥

प्रकटार्थविवरणम्

15 यदि ग्रथयितव्यौ कस्तर्हि क्रम इत्याशङ्क्याह — तत्रापीति ॥ मासारभ्यत्वात्संवत्सरस्य मासेभ्योऽनन्तरं संवत्सरो निवेशनीय इत्यर्थः ॥

तडितोऽधि वरुणः संबन्धात् ॥

"स वरुणलोकम्" इत्यादिना श्रूयमाणो वरुणादिर्विषयः । स किमर्चिरादिमार्गपर्वत्वेन संबध्यते, उत नेति संशयः । पूर्वाधिकरणे अविशेषविशेषाभ्यां
20 वायोः संवत्सरादूर्ध्वं निवेशप्रतिपादनेन मार्गपर्वत्वमुक्तम् । इह विशेषाश्रवणान्मार्गपर्वत्वाभाव इति बहिरेव पूर्वपक्षयित्वा सिद्धान्तमाह — आदित्याच्चन्द्रमसमिति ॥ विद्युत उपरिष्टाज्जलगर्भितमेघदर्शनात् "आगन्तूनामन्ते निवेशः" इति न्यायाच्च विद्युतोऽधि वरुणादेर्निवेश इत्यर्थः ॥

भाष्यम्

[ आतिवाहिकाधिकरणम् ]

## आतिवाहिकास्तल्लिङ्गात् ॥ ४-३-४ ॥

तेष्वेवार्चिरादिषु संशयः—किमेतानि मार्गचिह्नानि, उत भोग-भूमयः, अथवा नेतारो गन्तॄणामिति । तत्र मार्गलक्षणभूता अर्चिरादय 5 इति तावत्प्राप्तम्, तत्स्वरूपत्वादुपदेशस्य ; यथा हि लोके कश्चिद्ग्रामं नगरं वा प्रतिष्ठासमानोऽनुशिष्यते—गच्छ इतस्त्वममुं गिरिं ततो न्यग्रोधं ततो नदीं ततो ग्रामं ततो नगरं वा प्राप्स्यसीति—एवमिहापि "अर्चिषोऽहरह्न आपूर्यमाणपक्षम्" इत्याद्याह । अथ वा भोगभूमय इति प्राप्तम् ; तथा हि लोकशब्देन अग्न्यादीननुबध्नाति—"अग्निलोक- 10 मागच्छति" इत्यादि ; लोकशब्दश्च प्राणिनां भोगायतनेषु भाष्यते—"मनुष्यलोकः पितृलोको देवलोकः" इति च ; तथा च ब्राह्मणम्—"अहोरात्रेषु ते लोकेषु सज्जन्ते" इत्यादि । तस्मान्नातिवाहिका अर्चि-रादयः । अचेतनत्वादप्येतेषामातिवाहिकत्वानुपपत्तिः ; चेतना हि लोके राजनियुक्ताः पुरुषा दुर्गेषु मार्गेष्वतिवाह्यान् अतिवाहयन्तीति । 15 एवं प्राप्ते ब्रूमः—आतिवाहिका एवैते भवितुमर्हन्ति ; कुतः ? तल्लि-ङ्गात् ; तथा हि—"चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एतान्ब्रह्म गमयति" इति सिद्धवद्गमयितृत्वं दर्शयति ; तद्वचनं तद्विषयमेवोपक्षीण-

प्रकटार्थविवरणम्

आतिवाहिकास्तल्लिङ्गात् ॥ 20

एवं तावदर्चिराद्यनेकविशेषणविशिष्टं देवयानं पन्थानं निरूप्य, इदानीं अर्चिरादिस्वरूपं निरूपयितुमुपक्रमते—तेष्वेवेति ॥ चिह्ननिर्देशसाम्याल्लोक-शब्दात् पुरुषविषयस्यापि निर्देशस्य दर्शनाच्च संशयः । आद्यं पक्षद्वयं पूर्वपक्ष-माह—तत्रेत्यादिना ॥ वैद्युतादुपचर्यमाणपुरुषेण नयनलिङ्गादमानवाख्यो - नेतारोऽर्चिरादय इति सिद्धान्तमाह—आतिवाहिका एवैत इति ॥ 25

भाष्यम्

मिति चेत्, न, प्राप्यमानवत्वनिवृत्तिपरत्वाद्विशेषणस्य ; यद्यर्चिरादिषु पुरुषा गमयितारः प्राप्तास्ते च मानवाः, ततो युक्तं तन्निवृत्त्यर्थं पुरुषविशेषणम्—अमानव इति ॥

5 ननु तल्लिङ्गमात्रमगमकम्, न्यायाभावात् ; नैष दोषः—

## उभयव्यामोहात्तत्सिद्धेः ॥ ४-३-५ ॥

ये तावदर्चिरादिमार्गाः ते देहवियोगात् संपिण्डितकरणग्रामा इति अस्वतन्त्राः अर्चिरादीनामप्यचेतनत्वादस्वातन्त्र्यम्—इत्यतः अर्चिराद्यभिमानिनश्चेतना देवताविशेषा अतियात्रायां नियुक्ता इति गम्यते ; 10 लोकेऽपि हि मत्तमूर्च्छितादयः संपिण्डितकरणाः परप्रयुक्तवर्त्मानो भवन्ति । अनवस्थितत्वादप्यर्चिरादीनां न मार्गलक्षणत्वोपपत्तिः ; न हि रात्रौ प्रेतस्य अहःस्वरूपाभिसंभव उपपद्यते ; न च प्रतिपालनमस्ती-

प्रकटार्थविवरणम्

लिङ्गस्यानुग्राहको न्यायो वक्तव्य इत्याह—नन्विति ॥ चेतनस्य स्वप्र-15 यत्नशून्यस्य ऊर्ध्वगमनं चेतनान्तराधीनमिति लौकिकन्यायेनार्चिराद्यभिमानिदेवताभिरेव भवितव्यमित्याह—नैष दोष इत्यादिना ॥

उभयव्यामोहात्तत्सिद्धेः ॥

उभयोर्मार्गतद्गन्त्रोर्व्यामोहादनभिज्ञत्वात्तत्सिद्धेर्गमयितृत्वसिद्धेरिति योजना। चिह्नत्वपक्षे दोषान्तरमाह—अनवस्थितत्वादपीति ॥ अहःशुक्लपक्षोत्तराय-20 णानां कालान्तरेषु मार्गचिह्नत्वं न संभाव्यते, तदानीमभावादेवेत्यर्थः । तत्तत्कालप्रतीक्षयपेक्षया अहरादीनां चिह्नत्वं भविष्यतीति न वक्तव्यमित्याह — न चेति ॥ नन्वहरादीनां अव्यवस्थितत्वे तत्तद्देवताया अव्यवस्थितत्वदोषः

भाष्यम्

त्युक्तं पुरस्तात्; ध्रुवत्वात्तु देवतात्मनां नायं दोषो भवति। अर्चि-
रादिशब्दता च एषाम् अर्चिराद्यभिमानादुपपद्यते; "अर्चिषोऽहः"
इत्यादिनिर्देशस्तु आतिवाहिकत्वेऽपि न विरुध्यते—अर्चिषा हेतुना
अहरभिसंभवति; अह्ना हेतुना आपूर्यमाणपक्षमिति; तथा च लोके    5
प्रासद्धेष्वप्यातिवाहिकेषु एवंजातीयकव्यपदेशो दृश्यते—गच्छ त्वम्
इतो बलवर्माणं ततो जयसिंहं ततः कृष्णगुप्तमिति। अपि च उपक्रमे
"तेऽर्चिरभिसंभवन्ति" इति संबन्धमात्रमुक्तम्, न संबन्धविशेषः
कश्चित्। उपसंहारे तु "स एतान्ब्रह्म गमयति" इति संबन्धविशेषः
अतिवाह्यातिवाहकत्वलक्षण उक्तः। तेन स एवोपक्रमेऽपीति निर्धार्यते।    10
संपिण्डितकरणत्वादेव च गन्तॄणां न तत्रोपभोगसंभवः; लोकशब्दस्तु
अनुपभुञ्जानेष्वपि गन्तृषु गमयितुं शक्यते, अन्येषां तल्लोकवासिनां
भोगभूमित्वात्। अतोऽग्निस्वामिकं लोकं प्राप्तः अग्निना अतिवाह्यते,
वायुस्वामिकं प्राप्तो वायुना—इति योजयितव्यम्॥

15        प्रकटार्थविवरणम्        15

स्यादित्याशङ्क्याह—ध्रुवत्वात्त्विति॥ तर्हि देवतास्वर्चिरादिशब्दप्रयोगः कथ-
मित्याकाङ्क्षायां लक्षणयेत्याह—अर्चिरादिशब्दता चेति॥ यदुक्तं चिह्ननिर्देश-
साम्यात् चिह्नत्वमिति, तत्राह—अर्चिषोऽहरित्यादीति॥ पूर्वं चिह्ननिर्देश-
सारूप्यमङ्गीकृत्य प्रकारान्तरेणापि अर्थवत्त्वमुक्तम्। इदानीं तदपि नास्ति,
"तेऽर्चिरभिसंभवन्ति" इति संबन्धमात्रप्रमितेरित्याह — संपिण्डितेति॥    20
यच्चोक्तं लोकशब्दाद्भोगभूमित्वमिति, तत्राह—लोकशब्दस्त्विति॥

१. TM and A omit चिह्न......त्वम्    २. TM. पूर्वश.
A. पूर्वचिह्न

भाष्यम्

कथं पुनरातिवाहिकत्वपक्षे वरुणादिषु तत्संभवः? विद्युतो ह्यधि वरुणादय उपक्षिप्ताः, विद्युतस्त्वनन्तरम् आ ब्रह्मप्राप्तेः अमानवस्यैव पुरुषस्य गमयितृत्वं श्रुतम्—इति अत उत्तरं पठति—

5 **वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ४-३-६ ॥**

ततो विद्युदभिसंभवनादूर्ध्वं विद्युदनन्तरवर्तिनैवामानवेन पुरुषेण वरुणलोकादिष्वतिवाह्यमाना ब्रह्मलोकं गच्छन्तीत्यवगन्तव्यम्, "तान्वैद्युतात्पुरुषोऽमानवः स एत्य ब्रह्मलोकं गमयति" इति तस्यैव गमयितृत्वश्रुतेः। वरुणादयस्तु तस्यैव अप्रतिबन्धकरणेन साहाय्यानुष्ठानेन 10 वा केनचित् अनुग्राहका इत्यवगन्तव्यम्। तस्मात्साधूक्तम्—आतिवाहिका देवतात्मानोऽर्चिरादय इति ॥

[ कार्याधिकरणम् ]

**कार्यं बादरिरस्य गत्युपपत्तेः ॥ ४-३-७ ॥**

"स एनान्ब्रह्म गमयति" इत्यत्र विचिकित्स्यते—किं कार्यमपरं 15 ब्रह्म गमयति, आहोस्वित्परमेवाविकृतं मुख्यं ब्रह्मेति। कुतः संशयः? ब्रह्मशब्दप्रयोगात् गतिश्रुतेश्च। तत्र कार्यमेव सगुणमपरं ब्रह्म एनान्गमयत्यमानवः पुरुष इति बादरिराचार्यो मन्यते; कुतः? अस्य गत्युपपत्तेः—अस्य हि कार्यब्रह्मणो गन्तव्यत्वमुपपद्यते, प्रदेशवत्त्वात्; न तु

प्रकटार्थविवरणम्      15

20 वैद्युतेनैव ततस्तच्छ्रुतेः ॥

सूत्रान्तरमवतारयति—कथं पुनरिति ॥

कार्यं बादरिरस्य गत्युपपत्तेः ॥

एवं तावद्गतिं निरूप्येदानीं गन्तव्यं निरूपयति—स एनानिति ॥

सिद्धान्तेनैव तावदुपक्रमते—तत्र कार्यमेवेति ॥ गत्वा प्राप्तिः संयोगलक्षणा

भाष्यम्

परस्मिन्ब्रह्मणि गन्तृत्वं गन्तव्यत्वं गतिर्वा अवकल्पते, सर्वगतत्वात्प्रत्यगात्मत्वाच्च गन्तॄणाम् ॥

## विशेषितत्वाच्च ॥ ४-३-८ ॥

"ब्रह्मलोकान्गमयति ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति" इति च श्रुत्यन्तरे विशेषितत्वात् कार्यब्रह्मविषयैव गतिरिति गम्यते; न हि बहुवचनेन विशेषणं परस्मिन्ब्रह्मण्यवकल्पते; कार्ये तु अवस्थाभेदोपपत्तेः संभवति बहुवचनम् । लोकश्रुतिरपि विकारगोचरायामेव संनिवेशविशिष्टायां भोगभूमावाञ्जसी; गौणी त्वन्यत्र "ब्रह्मैव लोक एष सम्राट्" इत्यादिषु । अधिकरणाधिकर्तव्यनिर्देशोऽपि परस्मिन्ब्रह्मणि अनाञ्जसः स्यात् । तस्मात्कार्यविषयमेवेदं नयनम् ॥

ननु कार्यविषयेऽपि ब्रह्मशब्दो नोपपद्यते, समन्वये हि समस्तस्य जगतो जन्मादिकारणं ब्रह्मेति स्थापितम्—इत्यतोच्यते—

प्रकटार्थविवरणम्

तादात्म्यलक्षणा वा? नाद्यः, सर्वगतत्वात् सदासंयोगात्; नापि द्वितीयः, प्रत्यगात्मत्वात् गन्तॄणां पूर्वमेव तादात्म्यसिद्धेरित्यर्थः ॥

विशेषितत्वाच्च ॥

इतश्च कार्यब्रह्मविषया गतिरित्याह—विशेषितत्वाच्चेति ॥ ननु वाजसनेयके श्रूयमाणं बहुवचनं कार्यपक्षे वा कथं भवतीत्याशङ्क्याह—कार्ये त्विति ॥ भोगभूमिवाचकलोकश्रुतेश्च कार्यमेव गन्तव्यमित्याह—लोकश्रुतिरपीति ॥ लोक्यते ज्ञायते मुमुक्षुभिरिति यौगिकत्व[1]मुक्तम्; ते तेषु ब्रह्मलोकेषु वसन्तीत्याश्रयाश्रयिभावोऽपि परब्रह्मणि मुख्यो नोपपद्यत इत्याह—अधिकरणेति ॥

उत्तरसूत्रनिरस्याशङ्कामाह — ननु कार्यविषयेऽपीति ॥

१. T, T¹ and A add गौणत्वं

भाष्यम्

## सामीप्यात्तु तद्व्यपदेशः ॥ ४-३-९॥

तुशब्द आशङ्काव्यावृत्त्यर्थः; परब्रह्मसामीप्यात् अपरस्य ब्रह्मणः, तस्मिन्नपि ब्रह्मशब्दप्रयोगो न विरुध्यते। परमेव हि ब्रह्म
5 विशुद्धोपाधिसंबन्धं क्वचित्कैश्चिद्विकारधर्मैर्मनोमयत्वादिभिः उपासनाय उपदिश्यमानम् अपरमिति स्थितिः ॥

ननु कार्यप्राप्तौ अनावृत्तिश्रवणं न घटते; न हि परस्माद्ब्रह्मणोऽन्यत्र क्वचिन्नित्यतां संभावयन्ति; दर्शयति च देवयानेन पथा प्रस्थितानामनावृत्तिम्—"एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते" इति,
10 तेषामिह न पुनरावृत्तिरस्ति—"तयोर्ध्वमायन्नमृतत्वमेति" इति च; अत्र ब्रूमः—

## कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ ४-३-१० ॥

कार्यब्रह्मलोकप्रलयप्रत्युपस्थाने सति तत्रैव उत्पन्नसम्यग्दर्शनाः

15 प्रकटार्थविवरणम्

सामीप्यात्तु तद्व्यपदेशः ॥

यथा 'अयो दहति' इति दाहकसंनिधानादयःपिण्डेऽपि दग्धृत्वं व्यपदिश्यते, तथा परब्रह्मसंनिधानाल्लक्षणया कार्ये व्यपदेशोऽपि न विरुध्यते, मुख्यार्थपरिग्रहे बहुतरकार्यलिङ्गभङ्गप्रसङ्गादित्याह—सामीप्यादिति ॥

20 तर्हि कार्यपरिग्रहेऽपि अमृतत्वश्रवणं विरुध्यत इत्याह—ननु कार्यप्राप्ताविति ॥

कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥

क्रममुक्त्यभिप्रायेण अमृतत्वश्रवणं घटत इत्याह सूत्रेण—कार्यात्यय इति ॥

१. A. कार्यव्यप-   २. TM. भाग

भाष्यम्

सन्तः, तदध्यक्षेण हिरण्यगर्भेण सह अतः परं परिशुद्धं विष्णोः परमं पदं प्रतिपद्यन्ते—इतीत्थं क्रममुक्तिः अनावृत्त्यादिश्रुत्यभिधानेभ्योऽभ्युपगन्तव्या । न ह्यञ्जसैव गतिपूर्विका परप्राप्तिः संभवतीत्युपपादितम् ॥

## स्मृतेश्च ॥ ४-३-११ ॥ 5

स्मृतिरप्येतमर्थमनुजानाति—

" ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥" इति ।

तस्मात्कार्यब्रह्मविषया गतिश्रुतय इति सिद्धान्तः ॥

कं पुनः पूर्वपक्षमाशङ्क्य अयं सिद्धान्तः प्रतिष्ठापितः "कार्यं 10 बादरिः" इत्यादिनेति, स इदानीं सूत्रैरेवोपदर्श्यते—

## परं जैमिनिर्मुख्यत्वात् ॥ ४-३-१२ ॥

जैमिनिस्त्वाचार्यः "स एनान्ब्रह्म गमयति" इत्यत्र परमेव ब्रह्म प्रापयतीति मन्यते; कुतः? मुख्यत्वात् । परं हि ब्रह्म ब्रह्मशब्दस्य मुख्यमालम्बनम्, गौणमपरम्, मुख्यगौणयोश्च मुख्ये संप्रत्ययो भवति ॥ 15

प्रकटार्थविवरणम्

स्मृतेश्च ॥

स्मृत्यनुसारेणापि क्रममुक्त्यभिप्रायमनावृत्तिवचनमित्याह — स्मृतेश्चेति ॥

एवं सिद्धान्तेनोपक्रम्य पूर्वपक्षसूत्राण्यवतारयति—कं पुनरिति ॥ 20

परं जैमिनिर्मुख्यत्वात् ॥

देशतः कालतो वस्तुतश्चानवच्छिन्नं वस्तु ब्रह्मशब्दस्य मुख्यमालम्बनम्[1] : अतो ब्रह्मश्रुतेः मुख्यार्थत्वलाभेन परमेव ब्रह्म गन्तव्यमित्यर्थः ॥

१. T¹. मुख्यातलम्बनं

भाष्यम्

## दर्शनाच्च ॥ ४-३-१३ ॥

“ तयोर्ध्वमायन्नमृतत्वमेति ” इति च गतिपूर्वकममृतत्वं दर्शयति; अमृतत्वं च परस्मिन्ब्रह्मण्युपपद्यते, न कार्ये, विनाशित्वात्कार्यस्य—
5 “ अथ यत्रान्यत्पश्यति तदल्पं...तन्मर्त्यम् ” इति प्रवचनात् परविषयैव च एषा गतिः कठवल्लीषु पठ्यते ; न हि तत्र विद्यान्तरप्रक्रमोऽस्ति, “ अन्यत्र धर्मादन्यत्राधर्मात् ” इति परस्यैव ब्रह्मणः प्रक्रान्तत्वात् ॥

## न च कार्ये प्रतिपत्त्यभिसंधिः ॥ ४-३-१४ ॥

अपि च “ प्रजापतेः सभां वेश्म प्रपद्ये ” इति नायं कार्यविषयः
10 प्रतिपत्त्यभिसंधिः, “ नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म ” इति कार्यविलक्षणस्य परस्यैव ब्रह्मणः प्रकृतत्वात् ; “ यशोऽहं भवामि ब्राह्मणानाम् ” इति च सर्वात्मत्वेनोपक्रमणात् ; “ न तस्य प्रतिमा अस्ति

प्रकटार्थविवरणम्

दर्शनाच्च ॥

15 अमृतत्वफलश्रवणलिङ्गबलेनापि परमेव ब्रह्म गन्तव्यमित्याह—तयोर्ध्वमायन्निति ॥ प्रकरणादपि परब्रह्मविषयत्वं गतेरित्याह — परविषयैव चैषेति ॥

न च कार्ये प्रतिपत्त्यभिसन्धिः ॥

प्रजापतेः सभां वेश्माहं प्रपद्ये प्राप्नुयामिति मरणकाले यः प्रत्य[प्रतिपत्त्य]-
20 भिसन्धिः प्राप्तिसंकल्पः स कार्यगोचर इति नाशङ्कनीयमित्याह—न च कार्ये इति ॥ यश आत्मा ब्राह्मणानाम् अहं भवामि, यशो राज्ञाम्, यशो विशाम्— इति सर्वात्मत्वाम्नानादपि न परिच्छिन्नकार्यापत्तिरित्यर्थः । ननु यशःशब्देन विश्रुतत्वमुच्यते, नात्मेत्याशङ्क्याह — न तस्य प्रतिमेति ॥ ननु भवतु प्रकरणाद्ब्रह्मविषयैव वेश्मप्रतिपत्त्यादिसंकल्पना ; तथापि सा गतिपूर्विका

## भाष्यम्

यस्य नाम महद्यशः" इति च परस्यैव ब्रह्मणो यशोनामत्वप्रसिद्धेः। सा चेयं वेश्मप्रतिपत्तिर्गतिपूर्विका हार्दविद्यायामुदिता—"तदपराजिता पूर्ब्रह्मणः प्रभुविमितं हिरण्मयम्" इत्यत्र। पदेरपि च गत्यर्थत्वात् मार्गापेक्षावसीयते। तस्मात्परब्रह्मविषया गतिश्रुतय इति पक्षान्तरम्। तावेतौ द्वौ पक्षावाचार्येण सूत्रितौ—गत्युपपत्त्यादिभिरेकः, मुख्यत्वादिभिरपरः। तत्र गत्युपपत्त्यादयः प्रभवन्ति मुख्यत्वादीनाभासयितुम्, न तु मुख्यत्वादयो गत्युपपत्त्यादीन्—इत्याद्य एव सिद्धान्तो व्याख्यातः, द्वितीयस्तु पूर्वपक्षः। न ह्यसत्यपि संभवे मुख्यस्यैवार्थस्य

## प्रकटार्थविवरणम्

वेश्मप्रतिपत्तिर्न भवति, किं तु स्तुतिमात्रमित्याशङ्क्याह —सा चेयमिति ॥ तत्तत्र ब्रह्मलोके केनापि ब्रह्मचर्यादिसाधनहीनेन न पराजितेत्यपराजिता पूर्विद्यते ब्रह्मणो हिरण्यगर्भस्य। प्रभुणा निर्मितं हिरण्मयं वेश्मास्ति तत्प्रतिपद्यते विद्वानिति दहरविद्यायां गतिपूर्विका वेश्मप्रतिपत्तिरुक्ता; अतः परब्रह्मण्यपि वेश्मप्रतिपत्तिसामान्यात् गतिपूर्वकत्वमेवेत्यर्थः। किंच "पद गतौ" इति धातुस्मरणादपि प्राप्तेर्मार्गापेक्षावगम्यत इत्याह—पदेरपि चेति॥ यस्मात्परब्रह्मप्राप्तिरपि गतिपूर्विका, तस्मादित्युपसंहारः। उक्तं संक्षेपतो दर्शयति–तावेताविति॥ पक्षद्वयस्यापि उपपत्तिमत्त्वं चेत्तर्हि किं विनिगमनकारणम्, येनाद्यस्य सिद्धान्तत्वम्, अन्त्यस्य पूर्वपक्षत्वमिति तत्राह—तत्र गत्युपपत्त्यादय इति ॥ कथं गत्युपपत्त्यादयः शक्नुवन्ति मुख्यत्वादीनाभासीकर्तुमित्याशङ्क्याह—न ह्यसत्यपीति ॥

इदमिहाकूतम्—किमिदं[1] ब्रह्मशब्दस्य मुख्यत्वम्, रूढत्वं यौगिकत्वं वा? रूढत्वं चेदपरेऽपि समानम्; "एतद्वै सत्यकाम परं चापरं च ब्रह्म" इति प्रयोगदर्शनात्; यौगिकत्वं चेत्, न, रूढार्थग्रहणे संभवति यौगिकग्रहणानुपपत्तेः; "रूढिर्योगमपहरति" इति न्यायात्। किं च यौगिकार्थग्रहणे ब्रह्म-

१. A omits किमिदं

प्रकटार्थविवरणम्

लोकशब्दस्य भोगभूमिविशेषरूढस्य बहुवचनस्य अधिकरणाधिकर्तव्यनिर्देशस्य "तृतीयस्यामितो दिवि" इति संख्याया द्युशब्दश्रवणस्य प्रजापतिसभावेश्मशब्दयोश्च विकारास्पृष्टे ब्रह्मण्यत्यन्तोपचरितार्थत्वप्रसङ्गः । तथा मदीयस्य सरसोऽश्वत्थस्य सोमसवनस्य अपराजितायाः पुरः प्रभुनिर्मितस्य वेश्मनोऽर्णवयोः पर्यङ्कादेश्च भोग्यवस्तुजातस्य विकारास्पृष्टे ब्रह्मण्यत्यन्तासंभव एव । अतो बहूनां शब्दानामर्थानां च उपकार[चार]कल्पनाद्वरमेकस्य शब्दस्य प्रयोगमुख्यत्वातिरिक्तार्थमुख्यत्वस्यागाङ्गीकरणम् । किंच पञ्चाग्निविदामपि परब्रह्मप्राप्तौ "तमेव विदित्वा" इत्यादिबहुशास्त्रविरोधः स्यात्; अप्राप्तौ "स एनान् ब्रह्म गमयति" इत्येतच्छब्दाविरोधः; तेन प्राधान्येन प्रकृतपञ्चाग्निविद्यातिरिक्तानां ग्रहणायोगात् तेषामनिर्दिष्टगतित्वप्रसङ्गात् । किंच परब्रह्म प्राप्तानामुपचयापचितैश्वर्ये ब्रह्मणः सर्वेश्वरत्वविरोधः स्यात् । एकरूपैश्वर्ये गुणप्रत्ययवृत्त्युपचयापचयात्मकसाधनवैषम्यवैयर्थ्यं स्यात् । साधनोपचयापचयाभ्यां फलोपचयापचयदर्शनेन विरोधः स्यात् । किंच परब्रह्मभूतस्य मनःशरीरवत्तया भोगसंबन्धाभ्युपगमे "अथायमशरीरोऽमृतः प्राणो ब्रह्मैव" इति श्रुतिविरोधः स्यात्, कलाप्रलयाधिकरणविरोधश्च । अशरीरत्वे "मनसैतान् कामान्" "स एकधा भवति" इत्यादिविरोधः स्यात् । किंच मुक्तस्य ब्रह्मभूतस्य पित्रादिसङ्कल्पैः भोगाभ्युपगमे ब्रह्मणः आप्तकामताश्रुतिविरोधः; अनभ्युपगमे "तेन पितृलोकेन संपन्नो महीयते" इत्यादिशास्त्रविरोधः । किंच वैश्वानराद्युपासनस्योपास्यत्रैलोक्यात्मत्वादिफलप्राप्तौ विकारातिवर्तिब्रह्मप्राप्त्ययोगादप्राप्तौ "तं यथा यथोपासते तदेव भवति" इति विरोधात् विकारवर्तिब्रह्मप्राप्तिद्वारेण पुनर्विकारसंबन्धाभ्युपगमे विकारातिवर्तिगमनकल्पनं व्यर्थम् । किं च ब्रह्मणो भेदेनावस्थाने[2] "ब्रह्मैव भवति" इति श्रुतिविरोधः, गन्तुर्गम्येनाभेदश्च न युज्यते । "जगद्व्यापारवर्जम्" "भोगमात्रसाम्यलिङ्गात्" इत्यादिसूत्राणां चात्यन्तासंबन्धः । यदि मुक्तस्य सर्वजीवात्मतावाप्तेः हिरण्यगर्भादिजीवगतानां[3] भोगैश्वर्याणां तत्सिमन्वयात् मुख्यभोगैश्वर्यवचनानामुपपत्तिः, तर्हि तिर्यङ्नारकस्थावरादिजीवापत्तेस्तद्गत-

१. A adds एवं

२. T, T¹ and A. भेदनोपस्थाने

३. T. जीवानां

भाष्यम्

ग्रहणमिति कश्चिदाज्ञापयिता विद्यते । परविद्याप्रकरणेऽपि च तत्स्तु-
त्यर्थं विद्यान्तराश्रयगत्यनुकीर्तनमुपपद्यते—"विष्वङ्ङन्या उत्क्रमणे
भवन्ति" इतिवत् । "प्रजापतेः सभां वेश्म प्रपद्ये" इति तु पूर्ववाक्य-
विच्छेदेन कार्येऽपि प्रतिपत्त्यभिसंधिर्न विरुध्यते । सगुणेऽपि च ब्रह्मणि　5
सर्वात्मत्वसंकीर्तनम् "सर्वकर्मा सर्वकामः" इत्यादिवत् अवकल्पते ।
तस्मादपरविषया एव गतिश्रुतयः ॥

प्रकटार्थविवरणम्

दुःखानैश्वर्याद्यवि[द्यपि]मुक्तस्य स्यादित्यपुरुषार्थः स्यात् । अथ मुक्तौ निरतिशया-
नन्दमात्मानं प्राप्नुवन् तदानन्दपरिच्छेदत्वाद्विषयानन्दानपि प्राप्नुवन् नित्यादिभि-　10
र्मुक्त[1] इत्युपचर्यते, न, एकस्य ब्रह्मशब्दस्य मुख्यार्थलाभेन सर्वासां परिच्छिन्नभोगै-
श्वर्यश्रुतीनां उपचरितार्थत्वकल्पनायोगात् ; कार्ये तु ब्रह्मणि गन्तव्ये सर्वासां
मुख्यार्थत्वमुपपद्यत इति । यच्च काठकादिषु परविद्याप्रकरणेऽपि गत्यनुकीर्तन-
मुक्तम्, तत्राह — परविद्याप्रकरणेऽपीति ॥ अयमाशयः—प्रकरणान्निर्गुण-
विद्यया गतेः संबन्धोऽवगतः ; भोगैश्वर्यलक्षणादर्थसामर्थ्यलिङ्गाद्भोगैश्वर्य-　15
फलवत्त्वाद्दहराद्युपासनेन च संबन्धोऽवगतः ; तत्रोभयविधप्रमाणानुग्रहाय
शरीरेन्द्रियादिभोगशून्ये निर्गुणज्ञाने स्तुतित्वेनान्वयः, विशिष्टभोगसंबन्धिनि
दहराद्युपासने फलत्वेनान्वय इति । किंच "विष्वङ्ङन्या उत्क्रमणे भवन्ति"
इति यथा नाड्यन्तराणां परविद्याप्रकरणे सङ्कीर्तनमात्रेण न परविद्यासंबन्धः,
किंतु व्यवहितेनापि योग्याविद्याकर्मादिना, तथा मूर्धन्यनाड्या अपि भविष्य-　20
तीत्यर्थः । यच्चोक्तं परविद्याप्रकरणान्न कार्ये प्रतिपत्त्यभिसंधिरिति, तत्राह—
प्रजापतेरिति ॥ "तस्मात्पूषा प्रपिष्टभागः" इतिवत् प्रकरणादुत्कर्षेण पूर्वप्रक-
रणस्थदहरविद्यासंबन्धात् कार्यब्रह्मगोचरत्वेन प्राप्तेरित्यभिसंधिरित्यर्थः । यच्चो-
क्तम् 'यशोऽहं भवामि' इत्यादिसर्वात्मत्वकीर्तनम्, तत्राह—सगुणेऽपि चेति ॥
यस्मात् सर्वश्रुतिव्याकोपपरिहाराय कार्यमेव ब्रह्म गमनार्हम्, तस्मादित्युप-　25
संहारः ॥

१. T¹. भुक्त

भाष्यम्

केचित्पुनः पूर्वाणि पूर्वपक्षसूत्राणि भवन्ति, उत्तराणि सिद्धान्तसूत्राणि—इत्येतां व्यवस्थामनुरुध्यमानाः परविषया एव गतिश्रुतीः प्रतिष्ठापयन्ति ; तत् अनुपपन्नम्, गन्तव्यत्वानुपपत्तेर्ब्रह्मणः, यत्सर्वगतं
5 सर्वान्तरं सर्वात्मकं च परं ब्रह्म "आकाशवत्सर्वगतश्च नित्यः" "यत्साक्षादपरोक्षाद्ब्रह्म" "य आत्मा सर्वान्तरः" "आत्मैवेदं सर्वम्" "ब्रह्मैवेदं विश्वमिदं वरिष्ठम्" इत्यादिश्रुतिनिर्धारितविशेषम्—तस्य गन्तव्यता न कदाचिदप्युपपद्यते ; न हि गतमेव गम्यते ; अन्यो ह्यन्यद्गच्छतीति प्रसिद्धं लोके । ननु लोके गतस्यापि गन्तव्यता

10 प्रकटार्थविवरणम्

एवं स्वाभिप्रायेणाधिकरणं व्याख्याय पराभिप्रायमनूद्य दूषयति—केचित्पुनरित्यादिना ॥ न पूर्वत्वमुत्तरत्वं वा पूर्वपक्षत्वे सिद्धान्तत्वे वा प्रयोजकम्, किंतु न्यायाघातासहिष्णुत्वं तत्सहिष्णुत्वं च ; न च ब्रह्मणो गन्तव्यत्वं न्यायसहम् । तथा हि—परं ब्रह्म न गन्तव्यम्, सर्वगतत्वात्, सर्वान्तरत्वाद्वा, न
15 यदेवं न तदेवम्, यथा नगरम् । यदत्र भास्करेणापि शुना बुबुक्के, 'यदि सर्वगतत्वाद्ब्रह्मणो गन्तव्यत्वानुपपत्तिः, तर्हि कार्यब्रह्मणोऽपि सर्वगतत्वाविशेषात् गन्तव्यता न स्यात् । अथ लिङ्गानवच्छिन्नस्य तत्र गमनमवकल्पते, तर्हि तथात्रापि भविष्यति' इति, तदशोभनम् । तथा हि—लिङ्गाभावे किं पुष्कलकारणम्? विद्या वा अमानवकरस्पर्शो वा, विकारवर्तिब्रह्मप्राप्तिर्वा ? विद्या चेत्, अन्त्यकाले स्यात्
20 लिङ्गवियोगः ; पुष्कलकारणे सत्यपि कार्ये नोत्पद्यते ; कालान्तरे तूत्पद्यत इति कल्पनानुपपत्तेः । अमानवकरस्पर्शश्चेत् वैद्युते स्यात्, तत ऊर्ध्वं निरुपाधिकगमनानुपपत्तेः । विकारावर्तिब्रह्मप्राप्तिश्चेत्, तत्र विकारावर्तीति कोऽर्थः ? किं विकारदोषास्पृष्टम्, किं वा विकारदेशाद्देशान्तरवर्ति? प्रथमे नभोवत् स्वभावविशेषादत्रापि तद्दोषास्पृष्टमिति गमनायोगः ; चरमे स्वतः परिच्छिन्नत्वेना-
25 नित्यत्वाविशेषः ; सगुणस्य तु स्वरूपेण सर्वगतस्यापि भोगदेहस्य देशान्तरवर्तित्वाद्गमनमुपपद्यते । तर्हि इहापि स्वरूपेण सर्वगतस्य देशान्तरावच्छिन्नं रूपं गन्तव्यं भविष्यतीत्याह—ननु लोके गतस्यापीति ॥ ब्रह्मणो निरस्तसमस्त-

१. TM. उत्तरपक्षत्वे

भाष्यम्

देशान्तरविशिष्टस्य दृष्टा—यथा पृथिवीस्थ एव पृथिवीं देशान्तरद्वारेण गच्छति, तथा अनन्यत्वेऽपि बालस्य कालान्तरविशिष्टं वार्धकं स्वात्मभूतमेव गन्तव्यं दृष्टम्, तद्वत् ब्रह्मणोऽपि सर्वशक्त्युपेतत्वात् कथंचिद्गन्तव्यता स्यादिति—न, प्रतिषिद्धसर्वविशेषत्वाद्ब्रह्मणः; "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" "अस्थूलमनण्वह्रस्वमदीर्घम्" "सबाह्याभ्यन्तरो ह्यजः" "स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म" "स एष नेति नेत्यात्मा" इत्यादिश्रुतिस्मृतिन्यायेभ्यो न देशकालादिविशेषयोगः परमात्मनि कल्पयितुं शक्यते, येन भूप्रदेशवयोवस्थान्यायेनास्य गन्तव्यता स्यात्; भूवयसोस्तु प्रदेशावस्थादिविशेषयोगादुपपद्यते देशकालविशिष्टा गन्तव्यता। जगदुत्पत्तिस्थितिप्रलयहेतुत्वश्रुतेरनेकशक्तित्वं ब्रह्मण इति चेत्, न, विशेषनिराकरणश्रुतीनामनन्यार्थत्वात्। उत्पत्त्यादिश्रुतीनामपि समानमनन्यार्थत्वमिति चेत्, न, तासामेकत्वप्रतिपादनपरत्वात्; मृदादिदृष्टान्तैर्हि सतो ब्रह्मण एकस्य सत्यत्वं विकारस्य च अनृतत्वं प्रतिपादयत् शास्त्रं नोत्पत्त्यादिपरं भवितुमर्हति ॥

प्रकटार्थविवरणम्

विशेषत्वाद्देशान्तरावच्छिन्नं रूपं कल्पितमेव गन्तव्यं स्यादित्याह—न प्रतिषिद्धेति ॥ प्रतिषिद्धसर्वविशेषत्वमसिद्धमित्याह — जगदुत्पत्तीति ॥ प्रतिषिद्धसर्वविशेषं ब्रह्म न भवति चेत् तदा विशेषाविशेषनिराकरणश्रुतीनामन्यस्यार्थस्यासंभवात् वैयर्थ्यमापद्यत इत्याह—न विशेषेति ॥ तर्ह्युत्पत्त्यादिश्रुतीनामप्यन्योऽर्थो नास्तीति वैयर्थ्यं समानमित्याह—उत्पत्त्यादीति ॥ उत्पत्त्यादिश्रुतीनामर्थान्तरमाह सिद्धान्ती —न तासामिति ॥

१. T¹. तत्राविशेष　　२. T¹. न हि

भाष्यम्

कस्मात्पुनरुत्पत्त्यादिश्रुतीनां विशेषनिराकरणश्रुतिशेषत्वम्, न पुनरितरशेषत्वमितरासामिति, उच्यते—विशेषनिराकरणश्रुतीनां निराकाङ्क्षार्थत्वात्; न हि आत्मन एकत्वनित्यत्वशुद्धत्वाद्यवगतौ सत्यां भूयः
5 काचिदाकाङ्क्षा उपजायते, पुरुषार्थसमाप्तिबुद्ध्युपपत्तेः, "तत्र को मोहः कः शोक एकत्वमनुपश्यतः" "अभयं वै जनक प्राप्तोऽसि" "विद्वान्न बिभेति कुतश्चन। एतं ह वाव न तपति। किमहं साधु नाकरवम्। किमहं पापमकरवम्" इत्यादिश्रुतिभ्यः, तथैव च विदुषां तुष्ट्यनुभवादिदर्शनात्, विकारानृताभिसंध्यपवादाच्च — "मृत्योः स
10 मृत्युमाप्नोति य इह नानेव पश्यति" इति; अतो न विशेषनिराकरणश्रुतीनामन्यशेषत्वमवगन्तुं शक्यम्। नैवमुत्पत्त्यादिश्रुतीनां निराकाङ्क्षार्थप्रतिपादनसामर्थ्यमस्ति; प्रत्यक्षं तु तासामन्यार्थत्वं समनुगम्यते; तथा हि—"तत्रैतच्छुङ्गमुत्पतितं सोम्य विजानीहि नेदममूलं भविष्यति" इत्युपन्यस्य उदर्के सत एवैकस्य जगन्मूलस्य विज्ञेयत्वं दर्श-
15 यति; "यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व। तद्ब्रह्मेति।" इति च; एवमुत्पत्त्यादिश्रुतीनाम् ऐकात्म्यावगमपरत्वात् नानेकशक्तियोगो ब्रह्मणः; अतश्च गन्तव्यत्वानुपपत्तिः। "न तस्य प्राणा उत्क्रामन्ति" "ब्रह्मैव सन्ब्रह्माप्येति" इति च परस्मिन्ब्रह्मणि गतिं निवारयति; तद्व्याख्यातं
20 "स्पष्टो ह्येकेषाम्" इत्यत्र॥

प्रकटार्थविवरणम्

पूर्ववादी विनिगमनकारणं पृच्छति—कस्मात्पुनरिति॥ "फलवत्सन्निधावफलं तदङ्गम्" इति न्यायेन विशेषनिराकरणश्रुतीनां निराकाङ्क्षपुरुषार्थपर्यवसायित्वात् शेषित्वमित्याह — उच्यत इत्यादिना॥ उत्पत्त्यादि-
25 श्रुतीनामर्थान्तरमाह। प्रतिबद्धं किंचित्फलं न श्रूयत इत्येतावदेव न भवति, किं तु साक्षाच्छ्रुत्यैवोत्पत्त्यादिप्रतिपादनस्यान्यशेषत्वमुक्तमित्याह—प्रत्यक्षं त्विति॥ फलितमाह—एवमुत्पत्त्यादिश्रुतीनामिति॥ श्रुतिरपि परमार्थस्य ब्रह्मणो गन्तव्यतां वारयतीत्याह—न तस्येति॥

## भाष्यम्

गतिकल्पनायां च गन्ता जीवो गन्तव्यस्य ब्रह्मणः अवयवो विकारः अन्यो वा ततः स्यात्, अत्यन्ततादात्म्ये गमनानुपपत्तेः। यद्येवम्, ततः किं स्यात्? अत उच्यते—यद्येकदेशः, तेन एकदेशिनो नित्यप्राप्तत्वात् न पुनर्ब्रह्मगमनमुपपद्यते; एकदेशित्वकल्पना च ब्रह्मण्यनुपपन्ना, निरवयवत्वप्रसिद्धेः। विकारपक्षेऽप्येतत्तुल्यम्, विकारेणापि विकारिणो नित्यप्राप्तत्वात्; न हि घटो मृदात्मतां परित्यज्य अवतिष्ठते, परित्यागे वा अभावप्राप्तेः। विकारावयवपक्षयोश्च तद्वतः स्थिरत्वात् ब्रह्मणः संसारगमनमपि अनवक्लृप्तम्। अथ अन्य एव जीवो ब्रह्मणः, सोऽणुर्व्यापी मध्यमपरिमाणो वा भवितुमर्हति; व्यापित्वे गमनानुपपत्तिः, मध्यमपरिमाणत्वे च अनित्यत्वप्रसङ्गः; अणुत्वे कृत्स्नशरीरवेदनानुपपत्तिः; प्रतिषिद्धे च अणुत्वमध्यमपरिमाणत्वे विस्तरेण पुरस्तात्। परस्माच्च अन्यत्वे जीवस्य "तत्त्वमसि" इत्यादिशास्त्रबाधप्रसङ्गः। विकारावयवपक्षयोरपि समानोऽयं दोषः।

## प्रकटार्थविवरणम्

पूर्वं गन्तव्यस्वभावपर्यालोचनया गमनानुपपत्तिमुक्त्वा अधुना गन्तृस्वभावपर्यालोचनयापि गमनानुपपत्तिरित्याह—गतिकल्पनायां चेत्यादिना॥ एकैकपक्षे दोषमुक्त्वा उभयत्र साधारणं दोषमाह—विकारावयवपक्षयोश्चेति॥ यथा[1] विदेहावयवेषु मलसंसृष्टेषु अवयवी देहो मलिनो भवति, यथा वा पटे मलिने तन्तवः, तद्वतः संसारिविकारावयववतो ब्रह्मणः स्थितत्वादिति विकारावयवानुगतत्वेन स्थितत्वात् संसारगमनमनवक्लृप्तमघटमानं प्रसज्येतेत्यर्थः। तृतीयविकल्पमनूद्य दूषयति—अथान्य एवेत्यादिना॥ एकत्वप्रतिपादकशास्त्रविरोध-

१. TM. तथा

भाष्यम्

विकारावयवयोस्तद्गतोऽनन्यत्वात् दोष इति चेत्, न, मुख्यैकत्वानुपपत्तेः। सर्वेषु च एतेषु पक्षेषु अनिर्मोक्षप्रसङ्गः, संसार्यात्मत्वानिवृत्तेः; निवृत्तौ वा स्वरूपनाशप्रसङ्गः, ब्रह्मात्मत्वानभ्युपगमाच्च ॥

5 यत्तु कैश्चिज्जल्प्यते—नित्यानि नैमित्तिकानि च कर्माण्यनुष्ठीयन्ते प्रत्यवायानुत्पत्तये, काम्यानि प्रतिषिद्धानि च परिह्रियन्ते स्वर्गनरकानवाप्तये, सांप्रतदेहोपभोग्यानि च कर्माण्युपभोगेनैव क्षिप्यन्ते—इत्यतो वर्तमानदेहपातादूर्ध्वं देहान्तरप्रतिसंधानकारणाभावात् स्वरूपावस्थानलक्षणं कैवल्यं विनापि ब्रह्मात्मतया एवंवृत्तस्य सेत्स्यतीति—

10 प्रकटार्थविवरणम्

लक्षणोऽयं दोषः समान इत्युक्तम्। तत्र भेदाभेदवाद्याह—विकारावयवयोरिति ॥ "तत्त्वमसि" इति सामानाधिकरण्यमेकद्रव्यनिष्ठम्, अकार्यकारणद्रव्याभिधायिसामानाधिकरण्यत्वात्, 'सोऽयं देवदत्तः' इति सामानाधिकरण्यवत्। भेदाभेदे तु न मुख्यं द्रव्यैक्यमिति भवति शास्त्रविरोध इत्याह—

15 न मुख्यैकत्वेति ॥ विकारावयवात्यन्तभेदपक्षे तु दोषान्तरमाह—सर्वेषु चेति ॥ स्वाभाविकसंसारित्वस्य ज्ञानेन निवृत्त्यनुपपत्तेः स्वाभाविकस्यापि प्रकारान्तरेण निवृत्तौ वा जीवस्वरूपनाशप्रसङ्गः, औष्ण्यप्रकाशविगम इवाग्नेरित्यर्थः। ननु तवापि स्वाभाविकमेव संसारित्वम्, सादित्वे संसारित्वस्य मुक्तबन्धप्रसङ्गादित्यावयोः समानगतित्वमित्याशङ्क्याह— ब्रह्मात्मत्वानभ्युपग-

20 मादिति ॥ चित्प्रतिबिम्बस्य जीवस्य स्वाभाविकी बिम्बभूतब्रह्मात्मता, अनाद्यविद्योपाधिकं संसारित्वम्; तस्य विद्यया निवृत्तौ स्वरूपावस्थानमुपपद्यते ॥

यत्तु संसारित्व्यतिरिक्तब्रह्मात्मतानभ्युपगमेऽपि प्रकारान्तरेण मोक्षोपपत्तिरिति कर्ममीमांसकाः; तन्मतं प्रसङ्गादुद्भावयति—यत्तु कैश्चिदित्यादिना ॥ मती-

१. TM and A. बद्धैः

भाष्यम्

तदसत्, प्रमाणाभावात्। न ह्येतत् शास्त्रेण केनचित्प्रतिपादितम्—मोक्षार्थी इत्थं समाचरेदिति। स्वमनीषिकया त्वेतत्तर्कितम्—यस्मात्कर्मनिमित्तः संसारः तस्मान्निमित्ताभावान्न भविष्यतीति। न च एतत् तर्कयितुं शक्यते, निमित्ताभावस्य दुर्ज्ञानत्वात्। बहूनि कर्माणि जात्यन्तरसंचितानि इष्टानिष्टविपाकानि एकैकस्य जन्तोः संभाव्यन्ते। तेषां विरुद्धफलानां युगपदुपभोगासंभवात् कानिचिल्लब्धावसराणि इदं जन्म निर्मिमते, कानिचित्तु देशकालनिमित्तप्रतीक्षाण्यासते—इत्यतः तेषामवशिष्टानां सांप्रतेनोपभोगेन क्षपणासंभवात् न यथावर्णितचरितस्यापि वर्तमानदेहपाते देहान्तरनिमित्ताभावः शक्यते निश्चेतुम्। कर्मशेषसद्भावसिद्धिश्च "तद्य इह रमणीयचरणास्ततः शेषेण" इत्यादिश्रुतिस्मृतिभ्यः। स्यादेतत्—नित्यनैमित्तिकानि तेषां क्षेपकाणि भविष्यन्तीति—तन्न, विरोधाभावात्; सति हि विरोधे क्षेप्यक्षेपकभावो भवति; न च जन्मान्तरसंचितानां सुकृतानां नित्यनैमित्तिकैरस्ति विरोधः, शुद्धिरूपत्वाविशेषात्; दुरितानां तु अशुद्धिरूपत्वात् सति विरोधे भवतु क्षपणम्; न तु तावता देहान्तरनिमित्ताभावसिद्धिः,

प्रकटार्थविवरणम्

न्द्रियेऽर्थे शास्त्रमेव शरणं वेदवादिनाम्, न त्वस्मिन्नर्थे किमपि शास्त्रमस्तीत्याह—तदसदिति॥ कथं तर्हि वेदवादिभिरेव कैश्चिदुक्तम् "मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः" इत्यादि, तत्राह—स्वमनीषिकयेति॥ दुर्ज्ञानत्वं विवृणोति—बहूनि कर्माणीत्यादिना॥ ननु तथाप्येतत्तर्कमात्रम्, बहूनां विरुद्धफलानां एकस्मिन्देहे भोगासंभवादस्ति कर्मावशिष्टमिति, नेत्याह—कर्मशेषसद्भावसिद्धिश्चेति॥ अनारब्धफलानि कर्माणि सन्तु; तेषां नित्याद्यनुष्ठानात् क्षयो भविष्यतीत्याह—स्यादेतदिति॥ जन्मान्तरसञ्चितानां [तानां शुभानां] नित्यानुष्ठानेन क्षयः उत अशुभानाम्? तत्राद्यं निराचष्टे—तन्न विरोधाभावादिति॥ ततः द्वितीयमनुजानाति—दुरितानां त्विति॥ नित्यानुष्ठानादशुभक्षयमभ्युपगम्य; तथापि

भाष्यम्

सुकृतनिमित्तत्वोपपत्तेः; दुरितस्याप्यशेषक्षपणानवगमात् । न च नित्य-
नैमित्तिकानुष्ठानात् प्रत्यवायानुत्पत्तिमात्रम्, न पुनः फलान्तरोत्पत्तिः
इति प्रमाणमस्ति, फलान्तरस्याप्यनुनिष्पादिनः संभवात्; स्मरति
5 हि आपस्तम्बः—"तद्यथाम्रे फलार्थे निर्मिते छायागन्धावनूत्पद्येते एवं
धर्मं चर्यमाणमर्था अनूत्पद्यन्ते" इति । न च असति सम्यग्दर्शने सर्वा-
त्मना काम्यप्रतिषिद्धवर्जनं जन्मप्रायणान्तराले केनचित्प्रतिज्ञातुं शक्यम्,
सुनिपुणानामपि सूक्ष्मापराधदर्शनात्; संशयितव्यं तु भवति; तथापि
निमित्ताभावस्य दुर्ज्ञानत्वमेव । न च अनभ्युपगम्यमाने ज्ञानगम्ये ब्रह्मा-
10 त्मत्वे कर्तृत्वभोक्तृत्वस्वभावस्य आत्मनः कैवल्यमाकाङ्क्षितुं शक्यम्,
अग्न्यौष्ण्यवत् स्वभावस्यापरिहार्यत्वात् । स्यादेतत्—कर्तृत्वभोक्तृत्व-
कार्यम् अनर्थः न तच्छक्तिः, तेन शक्त्यवस्थानेऽपि कार्यपरिहारादुप-

प्रकटार्थविवरणम्

तत्र नाभिमतसिद्धिरित्युक्तम् । इदानीं नित्यानुष्ठानान्निरशेषपापक्षयो भवती-
15 त्यत्रापि न प्रमाणमित्याह—दुरितस्यापीति ॥ यच्चोक्तम्—"नित्यनैमित्तिके
कुर्यात्प्रत्यवायजिहासया" इति, तत्राह—न च नित्येति ॥ नित्यानुष्ठाने क्रियमाणे
तावत् प्रत्यवायप्रागभावस्वीकारः फलान्तरं च अनु पश्चात् देहपातादूर्ध्वं निष्पद्यते
"कर्मणा पितृलोकः" इति श्रुतेः । तत्संभवाच्च यथोक्तचरितस्य मोक्षोपपत्ति-
रित्यर्थः । फलान्तरसंभवे स्मृतिमपि प्रमाणयति—स्मरतीति ॥ निमित्ते निर्मिते ।
20 यथोक्तं[^१चोक्तं]काम्यप्रतिषिद्धवर्जं[र्जमिति]तत्राह—न चासतीति ॥ ननु क्रियत
एव काम्यादीत्यपि निश्चयो नास्तीत्याशङ्क्याह—संशयितव्यं त्विति ॥ यच्चोक्तं
विनापि ब्रह्मात्मतया कैवल्यं सेत्स्यतीति, तत्राह—न चानभ्युपगम्यमान इति ॥
कर्तृत्वादिकं नात्मनः स्वभावः, किं तु स्वाभाविककर्तृत्वादिशक्तिमद्द्रव्यमात्मा । तत्र
कर्तृत्वाद्यभ्युपगमेऽपि द्रव्यरूपेणावस्थानं मोक्ष इत्याह—स्यादेतदिति ॥ शक्तिमत्त्वे-

१. A. त्वाभ्युप-

भाष्यम्

पश्चो मोक्ष इति—तच्च न । शक्तिसद्भावे कार्यप्रसवस्य दुर्निवारत्वात् ।
अथापि स्यात्—न केवला शक्तिः कार्यमारभते, अनपेक्ष्य अन्यानि
निमित्तानि; अत एकाकिनी सा स्थितापि नापराध्यतीति—तच्च न,
निमित्तानामपि शक्तिलक्षणेन संबन्धेन नित्यसंबद्धत्वात् । तस्मात् 5
कर्तृत्वभोक्तृत्वस्वभावे सति आत्मनि, असत्यां विद्यागम्यायां ब्रह्मात्म-
तायाम्, न कथंचन मोक्षं प्रति आशा अस्ति । श्रुतिश्च—"नान्यः
पन्था विद्यतेऽयनाय" इति ज्ञानादन्यं मोक्षमार्गं वारयति ॥

परस्मादनन्यत्वेऽपि जीवस्य सर्वव्यवहारलोपप्रसङ्गः, प्रत्यक्षादि-
प्रमाणाप्रवृत्तेरिति चेत्—न, प्राक्प्रबोधात् स्वप्नव्यवहारवत् तदुपपत्तेः; 10
शास्त्रं च "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति" इत्यादिना
अप्रबुद्धविषये प्रत्यक्षादिव्यवहारमुक्त्वा, पुनः प्रबुद्धविषये—"यत्र
त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" इत्यादिना तदभावं दर्शयति ।
तदेवं परब्रह्मविदो गन्तव्यादिविज्ञानस्य बाधितत्वात् न कथंचन गति-

प्रकटार्थविवरणम् 15

त्कारणमस्ति, कार्यमपि कदाचिद्भविष्यतीति न मोक्ष इत्याह—तच्च नेति ॥
शक्तिमदपि कारणं सहकार्यभावे कार्यं न जनयतीत्याह—अथापि स्यादिति ॥
सहकार्यभावः कुतः सिद्ध इत्याह—तच्च नेति ॥ कर्तृत्वादिकार्येण निमित्तानां
देशकालादीनां सदा[1]शक्तिसंबन्धेन संबद्धत्वात् स्यादेव कार्यमित्यर्थः । प्रास-
ङ्गिकं मतान्तरदूषणमुपसंहरति—तस्मादिति ॥ 20

मोक्षसिद्धये जीवस्य ब्रह्मात्मताभ्युपगमेऽप्यनुपपत्तिरस्तीत्याह—परस्मा-
दनन्यत्वेऽपीति ॥ परिहृतमपि चोद्यं पुनः परिहरति तदनुस्मरणदार्ढ्याय—
न प्रागित्यादिना ॥ प्रासङ्गिकं परिहृत्य प्रकृतं निगमयति—तदेवमिति ॥ एवं

१. T¹. सदेव

भाष्यम्

रुपपादयितुं शक्या । किंविषयाः पुनर्गतिश्रुतय इति, उच्यते—सगुण-
विद्याविषया भविष्यन्ति । तथा हि—क्वचित्पञ्चाग्निविद्यां प्रकृत्य गति-
रुच्यते, क्वचित्पर्यङ्कविद्याम्, क्वचिद्वैश्वानरविद्याम्; यत्रापि ब्रह्म
5 प्रकृत्य गतिरुच्यते—"यथा प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म" इति
"अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म" इति च, तत्रापि
वामनीत्वादिभिः सत्यकामादिभिश्च गुणैः सगुणस्यैव उपास्यत्वात्
संभवति गतिः । न क्वचित्परब्रह्मविषया गतिः श्राव्यते, यथा गति-
प्रतिषेधः श्रावितः—"न तस्य प्राणा उत्क्रामन्ति" इति । "ब्रह्म-
10 विदाप्नोति परम्" इत्यादिषु तु, सत्यपि आप्नोतेर्गत्यर्थत्वे, वर्णितेन
न्यायेन देशान्तरप्राप्त्यसंभवात् स्वरूपप्रतिपत्तिरेवेयम् अविद्याध्यारोपित-
नामरूपप्रविलयापेक्षया अभिधीयते—"ब्रह्मैव सन्ब्रह्माप्येति" इत्या-
दिवत् इति द्रष्टव्यम् । अपि च परविषया गतिर्व्याख्यायमाना प्ररोच-
नाय वा स्यात्, अनुचिन्तनाय वा; तत्र प्ररोचनं तावत् ब्रह्मविदो
15 न गत्युक्त्या क्रियते, स्वसंवेद्येनैव अव्यवहितेन विद्यासमर्पितेन स्वास्थ्येन
तत्सिद्धेः; न च नित्यसिद्धनिःश्रेयसनिवेदनस्य असाध्यफलस्य विज्ञा-
नस्य गत्यनुचिन्तने काचिदपेक्षा उपपद्यते; तस्मादपरब्रह्मविषया

प्रकटार्थविवरणम्

परमतं निराकृत्य स्वमतं पूर्वोक्तं प्रश्नपूर्वकं विवृणोति — किंविषयाः पुन-
20 रित्यादिना ॥ नन्वाप्नोतेः गत्यर्थत्वात् परब्रह्मविद्याप्रकरणेऽपि गतिः श्रूयत
इत्याशङ्क्याह—ब्रह्मविदाप्नोतीति ॥ अब्रह्मत्वभ्रमव्यावृत्त्यपेक्षया प्राप्त्यभिधान-
मौपचारिकमित्यर्थः । सर्वथानुपयोगादपि न परविषयत्वमित्याह—अपि चेति ॥
यस्यासाध्यफलं विज्ञानं तत्र गत्यनुचिन्तनमुपयुज्यते, न तु तत्सिद्धमेव निःश्रेयसं
समर्पयतीत्याह — न च सिद्धेति[नित्यसिद्धेति] ॥ ननु सर्वथा परविषयत्वं

भाष्यम्

गतिः। तत्र परापरब्रह्मविवेकानवधारणेन अपरस्मिन्ब्रह्मणि वर्तमाना गतिश्रुतयः परस्मिन्नध्यारोप्यन्ते। किं द्वे ब्रह्मणी—परमपरं चेति? बाढम्—"एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारः" इत्यादिदर्शनात्। किं पुनः परं ब्रह्म किमपरमिति, उच्यते—यत्र अविद्याकृतनामरूपादिविशेषप्रतिषेधात् अस्थूलादिशब्दैर्ब्रह्मोपदिश्यते, तत्परम्; तदेव यत्र नामरूपादिविशेषेण केनचिद्विशिष्टम् उपासनायोपदिश्यते—"मनोमयः प्राणशरीरो भारूपः" इत्यादिशब्दैः, तदपरम्। ननु एवमद्वितीयश्रुतिरुपरुध्येत—न, अविद्याकृतनामरूपोपाधिकतया परिहृतत्वात्। तस्य च अपरब्रह्मोपासनस्य तत्संनिधौ श्रूयमाणम् "स यदि पितृलोककामो भवति" इत्यादि जगदैश्वर्यलक्षणं संसारगोचरमेव फलं भवति, अनिवर्तितत्वादविद्यायाः; तस्य च देशविशेषावबद्धत्वात् तत्प्राप्त्यर्थं गमनमविरुद्धम्। सर्वगतत्वेऽपि च आत्मनः, आकाशस्येव घटादिगमने, बुद्ध्याद्युपाधिगमने गमनप्रसिद्धिः इत्यवादिष्म "तद्गुणसारत्वात्" इत्यत्र। तस्मात् "कार्यं बादरिः" इत्येष एव स्थितः पक्षः; "परं जैमिनिः" इति तु पक्षान्तरप्रतिभानमात्रप्रदर्शनं प्रज्ञाविकासनायेति द्रष्टव्यम्॥

प्रकटार्थविवरणम्

गतिश्रुतेर्नोपपद्यते; किंत्वपरविषयत्वमेव इति चेत्, कथं तर्हि कैश्चित्परविषयत्वमुक्तमित्याशङ्क्याह—तत्र परापरेति॥ परापरविभागे प्रमाणाभावात् न तदवधारणं भ्रमकारणमित्याह—किं द्वे इति॥ परिहरति—बाढमिति॥ परापरविभागं प्रश्नपूर्वकं विवृणोति—किं पुनरित्यादिना॥ उक्तमपि विस्मृत्य यच्चोदयति स तदेव स्मारणीयो न तूपेक्षणीयः शिष्य इत्याचार्यधर्मं दर्शयन्नचोद्यमिव कृत्वा परिहरति—नन्वेवमित्यादिना॥ भवत्वेवं मिथ्या परापरविभागः; ततः किं सिद्धमित्याशङ्क्याह—तस्य चेत्यादिना॥

भाष्यम्

[ अप्रतीकालम्बनाधिकरणम् ]

## अप्रतीकालम्बनान्नयतीति बादरायण उभयथा-दोषात्तत्क्रतुश्च ॥ ४-३-१५ ॥

5 स्थितमेतत्—कार्यविषया गतिः न परविषयेति। इदमिदानीं संदिह्यते—किं सर्वान्विकारालम्बान् अविशेषेणैव अमानवः पुरुषः प्रापयति ब्रह्मलोकम्, उत कांश्चिदेवेति। किं तावत्प्राप्तम्? सर्वेषामेव एषां विदुषाम् अन्यत्र परस्माद्ब्रह्मणः गतिः स्यात्; तथा हि—"अनियमः सर्वासाम्—" इत्यत्र अविशेषेणैव एषां विद्यान्तरेष्ववतारितेति। एवं 10 प्राप्ते प्रत्याह—अप्रतीकालम्बनानिति; प्रतीकालम्बनान्वर्जयित्वा सर्वानन्यान्विकारालम्बनान् नयति ब्रह्मलोकम्—इति बादरायण आचार्यो मन्यते; न हि एवम् उभयथाभावाभ्युपगमे कश्चिद्दोषोऽस्ति, अनियमन्यायस्य प्रतीकव्यतिरिक्तेष्वप्युपासनेषूपपत्तेः। तत्क्रतुश्च उभयथाभावस्य समर्थको हेतुर्द्रष्टव्यः; यो हि ब्रह्मक्रतुः, स ब्राह्ममैश्वर्यम् 15 आसीदेत्—इति श्लिष्यते, "तं यथा यथोपासते तदेव भवति" इति

प्रकटार्थविवरणम्

अप्रतीकालम्बनान्नयतीति बादरायण उभयथादोषात्तत्क्रतुश्च ॥

अधिकरणसंबन्धमाह — स्थितमेतदिति ॥ "स एनान् ब्रह्म गमयति" इत्यविशेषश्रवणात् अतत्क्रतुत्वादागमनप्रतिभासाच्च संशयमुक्त्वा पूर्वपक्ष- 20 माह—किं तावदिति ॥ पितृयाणतृतीयस्थानसंबन्धहीनत्वात्परिच्छिन्नफल- त्वात् गत्युपपत्तेश्च सर्वानेव नयतीत्यर्थः। तथा च पूर्वापरविरोधोऽपि न भविष्यतीत्याह—तथा हीति ॥ "स एनान् ब्रह्म गमयति" इति प्रकृतपरा- मर्शकेनैव एतच्छब्देन प्रतीकोपासकानामपरामर्शात् विद्युत्पर्यन्तमेव तेषां गम- नमिति सिद्धान्तमाह — अप्रतीकालम्बनानिति ॥ पूर्वापरविरोधोऽपि 25 नास्तीत्याह—न ह्येवमिति ॥ हेत्वन्तरमाह—तत्क्रतुश्चेति ॥ तत्क्रतुन्यायमा

भाष्यम्

श्रुतेः । न तु प्रतीकेषु ब्रह्मक्रतुत्वमस्ति, प्रतीकप्रधानत्वादुपासनस्य । ननु अब्रह्मक्रतुरपि ब्रह्म गच्छतीति श्रूयते; यथा पञ्चाग्निविद्यायाम्—"स एनान्ब्रह्म गमयति" इति—भवतु, यत्रैवम् आहत्यवाद उपलभ्यते; तदभावे तु औत्सर्गिकेण तत्क्रतुन्यायेन ब्रह्मक्रतूनामेव तत्प्राप्तिः, न इतरेषाम्—इति गम्यते ॥ 5

## विशेषं च दर्शयति ॥ ४-३-१६ ॥

नामादिषु प्रतीकोपासनेषु पूर्वस्मात्पूर्वस्मात् फलविशेषम् उत्तरस्मिन्नुत्तरस्मिन् उपासने दर्शयति—"यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति" "वाग्वाव नाम्नो भूयसी" "यावद्वाचो गतं तत्रास्य यथाकामचारो भवति" "मनो वाव वाचो भूयः" इत्यादिना । स च अयं फलविशेषः प्रतीकतन्त्रत्वादुपासनानामुपपद्यते । ब्रह्मतन्त्रत्वे तु ब्रह्मणोऽविशिष्टत्वात् कथं फलविशेषः स्यात् । तस्मात् न प्रतीकालम्बनानाम् इतरैस्तुल्यफलत्वमिति ॥ 10

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपाद- 15
शिष्यस्य श्रीमच्छंकरभगवतः कृतौ शारीरकमीमांसासूत्रभाष्ये
चतुर्थाध्यायस्य तृतीयः पादः ॥

प्रकटार्थविवरणम्

क्षिपति—नन्विति ॥ सिद्धान्तमाह—भवतीति [त्विति] ॥ तत्राब्रह्मक्रतूनामपि ब्रह्मगमनं यत्रैतादृशाहत्यवादः साक्षादपवादक उपलभ्यते । तदुक्तम्—"उत्सर्गस्यापवादेन बाधः कस्य न संमतः" इति । पञ्चाग्निविद्यायामिवापवादाभावे तूत्सर्गसिद्धिरेवेत्याह—तदभावे त्विति ॥ 20

विशेषं च दर्शयति ॥

किं च फलविशेषनिर्देशादपि न प्रतीकोपासकानां ब्रह्मगमनमित्याह—विशेषं चेति ॥ 25

इति श्रीमच्छारीरकमीमांसाभाष्यविवरणे प्रकटार्थे
चतुर्थस्याध्यायस्य तृतीयः पादः समाप्तः ॥

१. T[1]. पाठः २. T and T[1]. प्रवृत्तिः

# अथ चतुर्थः पादः

——:o:——

भाष्यम्

[ संपद्याविर्भावाधिकरणम् ]

"एवमेवैष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इति श्रूयते । तत्र संशयः—किं देवलोकाद्युपभोगस्थानेष्विव आगन्तुकेन केनचिद्विशेषेण अभिनिष्पद्यते, आहोस्वित् आत्ममात्रेणेति । किं तावत्प्राप्तम्? स्थानान्तरेष्विव आगन्तुकेन केनचिद्रूपेण अभिनिष्पत्तिः स्यात्, मोक्षस्यापि फलत्वप्रसिद्धेः, अभिनिष्पद्यत इति च उत्पत्तिपर्यायत्वात्; स्वरूपमात्रेण चेदभिनिष्पत्तिः, पूर्वास्वप्यवस्थासु स्वरूपानपायात् विभाव्येत । तस्मात् विशेषेण केनचिदभिनिष्पद्यत इति । एवं प्राप्ते ब्रूमः—

प्रकटार्थविवरणम्

प्रथमपादान्ते परविद्याफलं निरूप्य द्वितीयतृतीयपादाभ्यामपरविद्यासंबद्धान्येवोत्क्रान्तिगतिगन्तव्यानि न्यरूपयत् । इदानीं परापरविद्याफलप्रपञ्चार्थ एव चतुर्थः पाद आरभ्यते । फलप्रपञ्चो ह्यनुरागजनने प्रवृत्त्युपयोगी; ततो न पौनरुक्त्यमिति शङ्कनीयम् । प्रथमं परविद्याविषयमेव वाक्यं पठति—एवमेवैष इति ॥ स्वशब्दस्य स्वीयवचनत्वेनागन्तुकत्वप्रतिभानात् स्वरूपवचनत्वेनानागन्तुकत्वप्रतिभानाच्च संशयमाह— तत्रेति ॥ मुच्यमानस्य बन्धोक्षरूपं तदागन्तुकम्, फलत्वात्, स्वर्गवदित्यनुमानानुगृहीतयाभिनिष्पत्तिश्रुत्यागन्तुकं मोक्षरूपमित्याह — स्थानान्तरेष्विवेति ॥ अन्यथा बन्धमोक्षयोरविशेषप्रसङ्ग इत्याह — [1]स्वरूपमात्रेण चेदिति ॥

१. T[1] and A omit स्वरूप...अवतिष्ठत इत्याह

भाष्यम्

## संपद्याविर्भावः स्वेनशब्दात् ॥ ४-४-१ ॥

केवलेनैव आत्मना आविर्भवति, न धर्मान्तरेणेति; कुतः? "स्वेन रूपेणाभिनिष्पद्यते" इति स्वशब्दात्; अन्यथा हि स्वशब्देन विशेषणमनवक्लृप्तं स्यात्। ननु आत्मीयाभिप्रायः स्वशब्दो भविष्यति— 5
न, तस्यावचनीयत्वात्; येनैव हि केनचिद्रूपेणाभिनिष्पद्यते, तस्यैवात्मीयत्वोपपत्तेः, स्वेनेति विशेषणमनर्थकं स्यात्; आत्मवचनतायां तु अर्थवत्—केवलेनैव आत्मरूपेणाभिनिष्पद्यते, नागन्तुकेनापररूपेणापीति ॥

कः पुनर्विशेषः पूर्वास्ववस्थासु इह च स्वरूपानपायसाम्ये सतीत्यत आह— 10

## मुक्तः प्रतिज्ञानात् ॥ ४-४-२ ॥

योऽत्राभिनिष्पद्यत इत्युक्तः, स सर्वबन्धविनिर्मुक्तः शुद्धेनैव, आत्मना अवतिष्ठते; पूर्वत्र तु अन्धो भवत्यपि रोदितीव विनाशमेवा-

प्रकटार्थविवरणम्

संपद्याविर्भावः स्वेन शब्दात् ॥ 15

अनुमानस्य स्वेन रूपेणेति विशेषश्रुत्या बाधात् बिम्बभूतं ब्रह्म परं ज्योतिरुपसंपद्य साक्षादनुभूय तेन स्वरूपेणावतिष्ठत इत्याह — केवलेनैवेति ॥

स्वशब्दस्य विशेषणस्यार्थान्तरमाशङ्क्य परिहरति—नन्वात्मीयेत्यादिना ॥

सूत्रान्तरमवतारयति—कः पुनरित्यादिना ॥

मुक्तः प्रतिज्ञानात् ॥ 20

जाग्रति देहेऽण्डे[ऽन्धे]ऽयमण्डो[मन्धो]भवति, स्वप्ने पुत्रादिवियोगं पश्यन् रोदितीव सुषुप्ते विशेषज्ञानाभावेऽपि नाशमेवापीतो भवतीति पूर्वत्र संसारदशा-

१. A. पित्रादि

भाष्यम्

पीतो भवति—इति च अवस्थात्रयकलुषितेन आत्मना—इत्ययं विशेषः। कथं पुनरवगम्यते—मुक्तोऽयमिदानीं भवतीति? प्रतिज्ञानादित्याह। तथा हि—"एतं त्वेव ते भूयोऽनुव्याख्यास्यामि" इति अवस्थात्रय-
5 दोषविहीनम् आत्मानं व्याख्येयत्वेन प्रतिज्ञाय, "अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" इति च उपन्यस्य "स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः" इति च उपसंहरति; तथा आख्यायिकोपक्रमेऽपि "य आत्मापहतपाप्मा" इत्यादि मुक्तात्मविषयमेव प्रतिज्ञानम्। फलत्वप्रसिद्धिरपि मोक्षस्य बन्धनिवृत्तिमात्रापेक्षा, न अपूर्वोपजनना-
10 पेक्षा। यदपि अभिनिष्पद्यत इत्युत्पत्तिपर्यायत्वम्, तदपि पूर्वाव-स्थापेक्षम्—यथा रोगनिवृत्तौ अरोगोऽभिनिष्पद्यत इति, तद्वत्। तस्माददोषः॥

## आत्मा प्रकरणात्॥ ४-४-३॥

कथं पुनर्मुक्त इत्युच्यते, यावता "परं ज्योतिरुपसंपद्य" इति
15 कार्यगोचरमेव एनं श्रावयति, ज्योतिःशब्दस्य भौतिके ज्योतिषि रूढ-

प्रकटार्थविवरणम्

यामवस्थात्रयकलुषितेन रूपेणावतिष्ठते; मोक्षे निर्मुक्तनिखिलदुःखानुषङ्गः परितः-प्रद्योतमानपरिशुद्धपरमानन्दस्वरूपेणेति महानयं विशेष इत्यर्थः। सूत्रभागं व्याख्याय उत्तरपदमवतारयति—कथं पुनरिति॥ फलत्वं नाम साध्यत्वम्,
20 कथं स्वरूपाविर्भावमात्रे मोक्षे घटते? तत्राह— फलत्वप्रसिद्धिरपीति॥ पूर्वोदाहृतामभिनिष्पत्तिश्रुतिं व्याख्यातुमुपक्रमते — यदपीति॥ पूर्वावस्था-पेक्षमिति॥ संसारदशायां तीव्रवायुविक्षिप्तप्रदीपप्रभावन्मिथ्याज्ञानविक्षि-प्ततया स्वरूपानभिव्यक्तिमिवापेक्ष्य तन्निवृत्तावभिनिष्पद्यत इत्युपचर्यते; अन्यथा मुक्तौ स्वेनेति विशेषणविधिपरस्याभिनिष्पत्तिशब्दस्य विधीयमान-
25 विरोधप्रसङ्गादित्यर्थः॥

आत्मा प्रकरणात्॥

विस्मरणशीलस्य शङ्कानिरासाय सूत्रम्—"आत्मा प्रकरणात्" इति॥

भाष्यम्

स्यात्? न च अनतिक्रान्तो विकारविषयात् कश्चिन्मुक्तो भवितुमर्हति, विकारस्य आर्तत्वप्रसिद्धेरिति—नैष दोषः, यतः आत्मैवात्र ज्योतिः-शब्देन आवेद्यते प्रकरणात् "य आत्मापहतपाप्मा विजरो विमृत्युः" इति प्रकृते परस्मिन्नात्मनि न अकस्माद्भौतिकं ज्योतिः शक्यं ग्रहीतुम्, प्रकृतहानाप्रकृतप्रक्रियाप्रसङ्गात्; ज्योतिःशब्दस्तु आत्मन्यपि दृश्यते— "तद्देवा ज्योतिषां ज्योतिः" इति। प्रपञ्चितं च एतत् "ज्योतिर्दर्शनात्" इत्यत्र ॥

[ अविभागेन दृष्टत्वाधिकरणम् ]

## अविभागेन दृष्टत्वात् ॥ ४-४-४ ॥

परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते यः, स किं परस्मादात्मनः पृथगेव भवति उत अविभागेनैवावतिष्ठत इति वीक्षायाम्, "स तत्र पर्येति" इत्यधिकरणाधिकर्तव्यनिर्देशात् "ज्योतिरुपसंपद्य" इति च कर्तृकर्मनिर्देशात् भेदेनैवावस्थानमिति यस्य मतिः, तं व्युत्पादयति—अविभक्त एव परेण आत्मना मुक्तोऽवतिष्ठते; कुतः? दृष्टत्वात्; तथा हि—"तत्त्वमसि" "अहं ब्रह्मास्मि" "यत्र नान्यत्पश्यति" "न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्" इत्येवमादीनि वाक्यान्यविभागेनैव परमात्मानं दर्शयन्ति; यथादर्शनमेव च फलं युक्तम्, तत्क्रतुन्यायात्,

प्रकटार्थविवरणम्

अविभागेन दृष्टत्वात् ॥

मोक्षे स्वरूपावस्थानं पूर्वप्रोक्तम्। तदपि वैशेषिकादिपक्षवत् ब्रह्मणो भेदेन, उत अभेदेनेति सन्दिग्धे "परं ज्योतिः" इत्यादिना पूर्वपक्षमुपन्यस्य सिद्धान्तसूत्रं योजयति—स तत्रेत्यादिना ॥

भाष्यम्

"यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति ।
एवं मुनेर्विजानत आत्मा भवति गौतम ॥"

इति च एवमादीनि मुक्तस्वरूपनिरूपणपराणि वाक्यान्यविभागमेव
5 दर्शयन्ति ; नदीसमुद्रादिनिदर्शनानि च । भेदनिर्देशस्तु अभेदेऽप्युपचर्यते।
स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि" इति "आत्मरतिरात्म-
क्रीडः" इति च एवमादिदर्शनात् ॥

[ ब्राह्माधिकरणम् ]

## ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ४-४-५ ॥

10 स्थितमेतत् "स्वेन रूपेण" इत्यत्र आत्ममात्ररूपेणाभिनिष्पद्यते,
न आगन्तुकेनापररूपेणेति । अधुना तु तद्विशेषबुभुत्सायामभिधीयते—
स्वम् अस्य रूपं ब्राह्मम् अपहतपाप्मत्वादिसत्यसंकल्पत्वावसानम्, तथा
सर्वज्ञत्वं सर्वेश्वरत्वं च, तेन स्वरूपेणाभिनिष्पद्यत इति जैमिनिराचार्यो
मन्यते ; कुतः ? उपन्यासादिभ्यस्तथात्वावगमात् ; तथा हि—"य
15 आत्मापहतपाप्मा" इत्यादिना "सत्यकामः सत्यसंकल्पः" इत्येव-
मन्तेन उपन्यासेन एवमात्मकतामात्मनो बोधयति ; तथा "स तत्र
पर्येति जक्षत् क्रीडन्रममाणः" इति ऐश्वर्यरूपमावेदयति, "तस्य सर्वेषु
लोकेषु कामचारो भवति" इति च ; "सर्वज्ञः सर्वेश्वरः" इत्यादि-
व्यपदेशाश्च एवमुपपन्ना भविष्यन्तीति ॥

20 प्रकटार्थविवरणम्

ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥

वृत्तानुवादपूर्वकं संबन्धमाह—स्थितमेतदिति ॥ तस्य मोक्षस्वरूपस्य
असमञ्जसत्वसमञ्जसत्वलक्षणविशेषबुभुत्सायामसमञ्जसत्वपक्षोऽभिधीयते —
स्वमस्येत्यादिना ॥ आदिशब्दार्थमाह—तथा स तत्र पर्येतीति ॥

भाष्यम्

## चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ४-४-६॥

यद्यपि अपहतपाप्मत्वादयो भेदेनैव धर्मा निर्दिश्यन्ते, तथापि शब्दविकल्पजा एव एते ; पाप्मादिनिवृत्तिमात्रं हि तत्र गम्यते ; चैतन्यमेव तु अस्य आत्मनः स्वरूपमिति तन्मात्रेण स्वरूपेण अभिनिष्पत्तिर्युक्ता ; तथा च श्रुतिः "एवं वा अरेऽयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव" इत्येवंजातीयका अनुगृहीता भविष्यति ; सत्यकामत्वादयस्तु यद्यपि वस्तुस्वरूपेणैव धर्मा उच्यन्ते—सत्याः कामा अस्येति, तथापि उपाधिसंबन्धाधीनत्वात्तेषां न चैतन्यवत् स्वरूपत्वसंभवः ; अनेकाकारत्वप्रतिषेधात् ; प्रतिषिद्धं हि ब्रह्मणोऽनेकाकारत्वम् 10 "न स्थानतोऽपि परस्योभयलिङ्गम्" इत्यत्र । अत एव च जक्षणादिसंकीर्तनमपि दुःखाभावमात्राभिप्रायं स्तुत्यर्थम् "आत्मरतिः" इत्यादिवत् । न हि मुख्यान्येव रतिक्रीडामिथुनानि आत्मनिमित्तानि शक्यन्ते वर्णयितुम्, द्वितीयविषयत्वात्तेषाम् । तस्मान्निरस्ताशेषप्रपञ्चेन प्रसन्नेन अव्यपदेश्येन बोधात्मना अभिनिष्पद्यत इत्यौडुलोमिराचार्यो मन्यते ॥ 15

प्रकटार्थविवरणम्

### चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥

मतान्तरमाह—चितितन्मात्रेणेति ॥ जैमिनीयमतविरुद्धमौडुलोमिमतमिति व्याख्याति—यद्यपीत्यादिना ॥ अपहतपाप्मत्वादयो धर्माः यद्यपि भेदेनैव निर्दिश्यन्ते, तथापि नैते भावरूपाः, किं तु शब्दोत्थनिर्वस्तुकप्रत्यय- 20 मात्रा एवेत्यर्थः । किं तर्हि स्वरूपम्, येन स्वरूपेण मुक्तोऽवतिष्ठत इत्याशङ्क्याह—चैतन्यमेव त्विति ॥ ननु चैतन्यमेव स्वरूपं सत्यकामत्वादीनां भावरूपाणां स्वरूपत्वेन निर्देशादित्याशङ्क्याह–सत्यकामत्वादयस्त्विति॥कथं चैतन्यमात्रेणावस्थाने जक्षणादिश्रवणं घटत इत्याशङ्क्याह—अत एव चेति ॥

१. A. प्रत्ययरूपाः

भाष्यम्

## एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॥ ४-४-७ ॥

एवमपि पारमार्थिकचैतन्यमात्रस्वरूपाभ्युपगमेऽपि व्यवहारा-
5 पेक्षया पूर्वस्यापि उपन्यासादिभ्योऽवगतस्य ब्राह्मस्य ऐश्वर्यरूपस्य अप्रत्याख्यानादविरोधं बादरायण आचार्यो मन्यते ॥

प्रकटार्थविवरणम्

एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः ॥

उक्तन्यायेन जैमिन्यौडुलोमिमतयोः परस्परविरोधान्मोक्षेऽनाश्वासे प्राप्ते
10 सिद्धान्तं स्मारयति—एवमपीति ॥ चैतन्यमात्रं पारमार्थिकं स्वरूपम्, ऐश्वर्या-
दिकं मायोपाधिकस्येति असकृदुक्तम्; ततः परमार्थब्रह्मविच्चैतन्यमात्ररूपेणा-
वतिष्ठते सोपाधिकब्रह्मवित्। सोपाधिकमैश्वर्यादि प्राप्नोतीति न जैमिन्यौ-
डुलोमिभ्यामपि विवदितव्यम् । अतः श्रुतीनामपि व्यवस्थितविषयत्वात्
विरोधगन्धाभावात्समञ्जस एवायं मोक्ष इत्यर्थः ॥

15 अत्र भास्करेण चुक्रोशे 'चैतन्यमात्रावस्थानं चेन्मोक्षः, तदा निःसंबोधि-
तत्वेन[बोधत्वेन]अपुरुषार्थत्वप्रसङ्गः; तस्मात् सर्वज्ञत्वादिलक्षणसंबोधवन्मोक्षः
सूत्रकृतोऽभिप्रेतः' इति; तत्रोच्यते–किमागन्तुकबोधेन ससंबोधत्वं किं वा स्वा-
भाविकेन? आद्ये तत्कारणं मनआदि वक्तव्यम्; तदा च कलाविलयश्रुतिबाधः;
तस्य च ब्रह्मीभूतत्वात् ब्रह्मण एव मनआदिसापेक्षं सर्वज्ञत्वमुक्तं स्यात्; न
20 च स्वरूपज्ञानेन सर्वज्ञत्वं तस्य स्वतो विषयोपरागाभावात्, "असङ्गो ह्ययं
पुरुषः" इत्यादिश्रुतेः । तेनापि स्वात्मन्येव संसारदुःखं पश्यति, किं वा
भेदेन? प्रथमे वरं संसरणम्; चरमे "यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजा-

१. T. संसबोध
   T¹ ससंबोध एव मोक्षः
२. T. ससंबोधते
   TM and A. संबोधत्वं
३. T¹ न्यायः
४. A adds सर्व

प्रकटार्थविवरणम्

नाति तदल्पं यदल्पं तन्मर्त्यम्" इति श्रुतिबाधः; स्वप्रकाशकतया सुषुप्ति-
व्यावृत्तिमात्रं चेत् ससंबोधत्वं तदिष्टमेवाज्ञाकमपीति परमात्मैक्यप्रतिपत्ति-
परायणपरमहंसपरिव्राजकप्रद्वेषानलप्रज्वलितकलेबरभास्करसारमेयप्रकोशे -
स्युपशम एव श्रेयान् ॥ 5

यत्वाम्बकन्द—चैतन्यमात्रावस्थानं चेन्मोक्षः, तदा निरानन्दत्वप्रसङ्गः;
न हि चैतन्यमेवानन्दः, दुःखावस्थायामपि चैतन्याभिव्यक्तेः; यस्मिन्व्यज्यमाने
यन्न व्यज्यते न तत्तत्स्वभावं यथा नीलं न पीतस्वभावमिति, तदसत्, व्यासय-
भावात्; गौरं हि रूपं चैत्रस्य चैत्रे प्रतिबिम्बिते कृपाणादौ प्रतिबिम्बितं न तथा
व्यज्यते; विपरीतं तु कृष्णमिति तत्र गौरत्वव्यञ्जकत्वं व्यक्तेः स्वभावभूत- 10
मपि न व्यज्यत इति व्यभिचारः। जीवस्य च तदं ब्रह्मस्वभावस्यानभिव्यक्तिः,
सत्यपि तस्मिंस्तदात्मतानभिव्यक्तिदर्शनात्; तस्मादुपाधिमहिमैवाचिन्त्येन
स्वभावाभानविभ्रमः। तथात्राप्यशुभकर्मोपस्थापितविषयविशेषसंसृष्टान्तः -
करणपरिणतौ स्वच्छ इवादर्शे सुखं यथास्वरूपेणैव व्यज्यते, तच्चुत्कृ-
ष्कर्षाद्वोत्कृष्यते, तज्जन्मनाशाभ्यां जन्मनाशाभिधानं च लभते; तस्माच्चैतन्य- 15
सुखात्मकत्वे बाधानुपलम्भात् चिदात्मनश्च निरुपाधिकप्रीतिगोचरत्वेना-
नन्दात्मतासिद्धेर्न मोक्षस्य निरानन्दत्वप्रसङ्गः। सुखसाक्षात्कारश्च पुरुषार्थो न
व्यतिरेकः केवलव्यतिरेकाभावात्। दर्शनमात्रेण उप[अभि]योगे सत्यैहिकस्यैव
पुरुषार्थत्वं दृष्टमित्यामुष्मिकस्य पुरुषार्थत्वं न स्यात् ॥

यत्वाहुः वैशेषिकादयः—दुःखाननुभवमात्रो मोक्षः पुरुषार्थ इति, तद- 20
प्यसत्; इष्टं मे स्यात् अनिष्टं माभूदित्यनुभवविरोधात्। कण्टकादिपरिहारोऽपि
सुखार्थ एव, सुषुप्तेऽपि च सुखसाक्षात्कार एव पुरुषार्थः, सुखमहमस्वाप्स-
मित्यबाधितपरामर्शात्, अज्ञानावस्थाभेदावच्छिन्नचिदाभाससंस्कारसंभ -
वात्; दुःखाभावस्य च प्रतियोग्यस्मरणेनानुभवितुमशक्यत्वात्; अनुभूते
स्मृतिनियमाभावेनोत्थितेनानुमातुमशक्यत्वाच्च ॥ 25

१. TM. ससंबोधकत्वं
२. T and T¹ तदानीमानन्द-
३. T¹ जीवस्य च न तत्
   A. जीवस्य च वत्
४. T¹ संसारासं
५. T and T¹ अभिभविंतुं

भाष्यम्

[ संकल्पाधिकरणम् ]

## संकल्पादेव तु तच्छ्रुतेः ॥ ४-४-८ ॥

हार्दविद्यायां श्रूयते—"स यदि पितृलोककामो भवति संकल्पा-
5 देवास्य पितरः समुत्तिष्ठन्ति" इत्यादि। तत्र संशयः—किं संकल्प

प्रकटार्थविवरणम्

यच्चोक्तं विमतं दुःखानुबन्धि स्यात्, सुखत्वात्, विषयसुखवदिति, तदसत्; "न लिप्यते लोकदुःखेन बाह्यः" इति श्रुतिविरोधात्। न च श्रुतिरेवानुमानाविरोधादप्रमाणमिति वाच्यम्। अबाधितविषयत्वस्यानु-
10 मानकारणत्वेन सति विरोधे ज्ञानमेव नोदयमासादयति। शाब्दं तु ज्ञानमनपेक्षं भवेदुदयमात्रेण बाधकम्। अत एवानुमानबाधाभावादानन्दश्रुतिः दुःखाभावपरतयोपचरणीया। "एषोऽस्य परम आनन्दः" इति परमश्रुतेश्च न दुःखाभावमात्रमानन्द इति ॥

यत्तु सांख्याः सङ्गिरन्ते—प्रकृतिपुरुषयोरविवेके विवेकाभिवृत्ते पुरु-
15 षस्य स्वरूपावस्थानं मोक्ष इति, तत्राप्यानन्दानाविर्भावादपुरुषार्थत्वं स्थितमेव। अविवेकस्य च वस्तुत्वे न ज्ञानहेयत्वम्; अवस्तुत्वे च न संसारकारणत्वम् ॥

सुगतानामपि सन्तानोच्छेदो मोक्षः कस्य पुरुषार्थः? न तावत् सन्तानस्य, स्वोच्छेदस्य अपुमर्थत्वात्; न सन्तानिनाम्, स्वरसपरिनिर्वाणे फलित्वानुपपत्तेः ॥

दिगम्बराणामपि सततोर्ध्वगमनमायाससङ्कुलत्वान्न पुरुषार्थः। अतो
20 निःशेषदुःखनिदानानन्दानभिव्यक्तिनिमित्ता विद्योच्छेदे निःशेषदुःखनिवृत्तिर्निरतिशयानन्दावाप्तिश्च पुरुषार्थो मोक्ष इति समञ्जसम् ॥

सर्वसङ्करवादी पुनः भास्करो मुक्तस्यैवोत्तराधिकरणनिरूप्यं शरीरादिमत्त्वं सातिशयमैश्वर्यं ब्रुवाणः कथंकारं सज्जनेषु न लज्जते सोऽयलं विद्वज्जनलज्जाकरेण तदनुभाषणेन ॥

25 सङ्कल्पादेव तु तच्छ्रुतेः ॥

एवं तावत्परविद्याफलं प्रपञ्च्य अधुना अपरविद्याफलं प्रपञ्चयितुं उपक्रमते—हार्दविद्यायामिति ॥ एवकारस्यायोगान्ययोगव्यवच्छेदसाधारण-

१. A. उत्तराधिकरूपांशादिमत्त्वं   २. A omits तदनुभाषणेन

### भाष्यम्

एव केवलः पित्रादिसमुत्थाने हेतुः, उत निमित्तान्तरसहित इति। तत्र सत्यपि "संकल्पादेव" इति श्रवणे लोकवत् निमित्तान्तरापेक्षता युक्ता; यथा लोके अस्मदादीनां संकल्पात् गमनादिभ्यश्च हेतुभ्यः पित्रादिसंपत्तिर्भवति एवं मुक्तस्यापि स्यात्; एवं दृष्टविपरीतं न कल्पितं भविष्यति; "संकल्पादेव" इति तु राज्ञ इव संकल्पितार्थसिद्धिकरीं साधनान्तरसामग्रीं सुलभामपेक्ष्य योक्ष्यते; न च संकल्पमात्रसमुत्थानाः पित्रादयः मनोरथविजृम्भितवत् चलत्वात् पुष्कलं भोगं समर्पयितुं पर्याप्ताः स्युरिति। एवं प्राप्ते, ब्रूमः—संकल्पादेव तु केवलात् पित्रादिसमुत्थानमिति; कुतः? तच्छ्रुतेः; "संकल्पादेवास्य पितरः समुत्तिष्ठन्ति" इत्यादिका हि श्रुतिर्निमित्तान्तरापेक्षायां पीड्येत; निमित्तान्तरमपि तु यदि संकल्पानुविधाय्येव स्यात्, भवतु; न तु प्रयत्नान्तरसंपाद्यं निमित्तान्तरमितीष्यते, प्राक् संपत्तेः वन्ध्यसंकल्पत्वप्रसङ्गात्; न च श्रुत्यवगम्येऽर्थे लोकवदिति सामान्यतोदृष्टं क्रमते; संकल्पबला-

### प्रकटार्थविवरणम्

त्वात् संशयमुक्त्वा पूर्वपक्षमाह—तत्र सत्यपीति ॥ रागादिदोषवियुक्तस्यो-पासकस्य पित्रादिभोगसाधनसंपत्तिः सङ्कल्पव्यतिरिक्तप्रयत्नसापेक्षा भोग-[1]साधनसंपत्तित्वात्, अस्मदादि[2]भोगसाधनसंपत्तिवादित्यर्थः। विपक्षे च बाधकमाह—न चेति ॥ विद्याया मन्त्रौषधादिवदचिन्त्यशक्तिसद्भावाद्विद्या-वतः सङ्कल्पमात्रेणैव पित्रादिभोगसाधनसंपत्तिरित्याह—सङ्कल्पादेव त्विति॥ किं च नात्यन्तमनपेक्षत्वं निमित्तस्यास्माभिरुच्यत इत्याह—निमित्तान्तरमपि त्विति ॥ प्राङ्निमित्तान्तरसंपत्तेः विफलसङ्कल्पत्वप्रसङ्गात् प्रयत्नान्तरसाध्य-निमित्तान्तरं नेष्यत इत्यर्थः। यच्चानुमानं तत्सावधारणश्रुतिबाधितमित्याह—न च श्रुतिगम्य इति ॥ यच्च मनोरथवच्चञ्चलत्वमवाचि, तत्राह—सङ्कल्प-बलादेवेति ॥

1. A omits भोगसाधन   2. A omits अस्मदादि

भाष्यम्

देव च एषां यावत्प्रयोजनं स्थैर्योपपत्तिः, प्राकृतसंकल्पविलक्षणत्वा-न्मुक्तसंकल्पस्य ॥

## अत एव चानन्याधिपतिः ॥ ४-४-९ ॥

5 अत एव च अवन्ध्यसंकल्पत्वात् अनन्याधिपतिर्विद्वान्भवति — नास्यान्योऽधिपतिर्भवतीत्यर्थः। न हि प्राकृतोऽपि संकल्पयन् अन्य-स्वामित्वमात्मनः सत्यां गतौ संकल्पयति। श्रुतिश्चैतद्दर्शयति—"अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति" इति ॥

10 [ अभावाधिकरणम् ]

## अभावं बादरिराह ह्येवम् ॥ ४-४-१० ॥

"संकल्पादेवास्य पितरः समुत्तिष्ठन्ति" इत्यादिश्रुतेः मनस्ताव-त्संकल्पसाधनं सिद्धम्। शरीरेन्द्रियाणि पुनः प्राप्तैश्वर्यस्य विदुषः सन्ति, न वा सन्ति—इति समीक्ष्यते। तत्र बादरिस्तावदाचार्यः

15 शरीरस्येन्द्रियाणां च अभावं महीयमानस्य विदुषो मन्यते; कस्मात्? एवं हि आह आम्नायः "मनसैतान्कामान्पश्यन्रमते य एते ब्रह्म-लोके" इति; यदि मनसा शरीरेन्द्रियैश्च विहरेत, मनसेति विशे-षणं न स्यात्; तस्मादभावः शरीरेन्द्रियाणां मोक्षे ॥

प्रकटार्थविवरणम्

20 अत एव चानन्याधिपतिः ॥

नन्वीश्वराधीनो भोग उपासकस्य। अतो न संकल्पमात्राद्भोगदाने समर्थस्यैव पित्रादेः संपत्तिरित्याशङ्क्याह—अत एव चेति ॥

अभावं बादरिराह ह्येवम् ॥

पूर्वविचारेणार्थात् सिद्धमंशमनूद्य संदेहमाह—संकल्पादेवेति ॥ वादि-

25 विप्रतिपत्तेः संशयमुक्त्वा पूर्वपक्षमाह—तत्रेत्यादिना ॥

भाष्यम्

भावं जैमिनिर्विकल्पामननात् ॥ ४-४-११ ॥

जैमिनिस्त्वाचार्यः मनोवत् शरीरस्यापि सेन्द्रियस्य भावं मुक्तं प्रति मन्यते; यतः "स एकधा भवति त्रिधा भवति" इत्यादिना-नेकधाभावविकल्पमामनन्ति । न हि अनेकविधता विना शरीरभेदेन आञ्जसी स्यात् । यद्यपि निर्गुणायां भूमविद्यायाम् अयमनेकधाभाव-विकल्पः पठ्यते, तथापि विद्यमानमेवेदं सगुणावस्थायाम् ऐश्वर्यं भूम-विद्यास्तुतये संकीर्त्यत इत्यतः सगुणविद्याफलभावेन उपतिष्ठत इत्यु-च्यते— 5

द्वादशाहवदुभयविधं बादरायणोऽतः ॥ ४-४-१२ ॥ 10

बादरायणः पुनराचार्यः अत एव उभयलिङ्गश्रुतिदर्शनात् उभय-विधत्वं साधु मन्यते—यदा सशरीरतां संकल्पयति तदा सशरीरो भवति, यदा तु अशरीरतां तदा अशरीर इति; सत्यसंकल्पत्वात्,

प्रकटार्थविवरणम्

भावं जैमिनिः विकल्पामननात् ॥ 15

पक्षान्तरमाह—भावं जैमिनिरिति ॥ नन्वनेकविधत्वमाम्नातं भूम-विद्यायाः प्रकरणे; कथं तद्बलेन सगुणविद्यायां सशरीरत्वं कल्प्यत इत्या-शङ्क्याह—यद्यपि[१] निर्गुणायामिति ॥

द्वादशाहवदुभयविधं बादरायणोऽतः ॥

सिद्धान्तमाह—बादरायणः पुनरिति ॥ कालभेदेन सङ्कल्पभेदात् क्रमेणो-भयथोपपत्तिरित्यर्थः । द्वादशाहाख्यं कर्मविशेषः सत्रं भवति बहुयजमानत्वे-नास्युपायिचोदनाभ्यां च "य एवं विद्वांसः सत्रमुपयन्ति" इति "चतुर्विंशति-परमाः सप्तदशावराः सत्रमासीरन्" इति श्रुतिलिङ्गात्; तथाहीनश्च[२] भवति 20

१. T. Space is left out for writing पि निर्गुण......भेदेन

२. T. Space is left out for writing दशावराः......हीनश्च

भाष्यम्

संकल्पवैचित्र्याच । द्वादशाहवत्—यथा द्वादशाहः सत्रम् अहीनश्च भवति, उभयलिङ्गश्रुतिदर्शनात्—एवमिदमपीति ॥

## तन्वभावे संध्यवदुपपत्तेः ॥ ४-४-१३ ॥

5 यदा तनोः सेन्द्रियस्य शरीरस्य अभावः, तदा, यथा संध्ये स्थाने शरीरेन्द्रियविषयेष्वविद्यमानेष्वपि उपलब्धिमात्रा एव पित्रादि-कामा भवन्ति, एवं मोक्षेऽपि स्युः ; एवं हि एतदुपपद्यते ॥

## भावे जाग्रद्वत् ॥ ४-४-१४ ॥

भावे पुनस्तनोः यथा जागरिते विद्यमाना एव पित्रादिकामा 10 भवन्ति, एवं मुक्तस्याप्युपपद्यते ॥

[ प्रदीपाधिकरणम् ]

## प्रदीपवदावेशस्तथा हि दर्शयति ॥ ४-४-१५ ॥

"भावं जैमिनिर्विकल्पामननात्" इत्यत्र सशरीरत्वं मुक्तस्योक्तम् ; तत्र त्रिधाभावादिषु अनेकशरीरसर्गे किं निरात्मकानि शरीराणि दारु-15 यन्त्रवत् सृज्यन्ते, किं वा सात्मकान्यस्मदादिशरीरवत्—इति भवति वीक्षा । तत्र च आत्ममनसोः भेदानुपपत्तेः एकेन शरीरेण योगात्

प्रकटार्थविवरणम्

यजतिचोदनया कर्तृपरिमाणानियमेन च "द्वादशाहेन प्रजाकामं याजयेत्" इति श्रुतिलिङ्गादित्यर्थः ॥

20 तन्वभावे सन्ध्यवदुपपत्तेः ॥

भावे जाग्रद्वत् ॥

इदानीं शरीरेन्द्रियाणामभावे भावे च भोगस्यावान्तरमेवमाह—तन्वभाव इत्यादिना ॥

प्रदीपवदावेशस्तथा हि दर्शयति ॥

25 उक्तमनुकीर्त्य सांकल्पिकेषूभयथाभावदर्शनात् संशयमाह—भावमि-त्यादिना ॥ पूर्वपक्षमुपन्यस्य सूत्रं योजयति—तत्रेत्यादिना ॥ त्रिषु एव

भाष्यम्

इतराणि शरीराणि निरात्मकानि—इत्येवं प्राप्ते, प्रतिपद्यते—प्रदीपवदावेश इति ; यथा प्रदीप एकः अनेकप्रदीपभावमापद्यते, विकारशक्तियोगात्, एवमेकोऽपि सन् विद्वान् ऐश्वर्ययोगादनेकभावमापद्य सर्वाणि शरीराण्याविशति ; कुतः ? तथा हि दर्शयति शास्त्रमेकस्यानेकभावम्—"स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा" इत्यादि ; नैष दारुयन्त्रोपमाभ्युपगमेऽवकल्पते, नापि जीवान्तरावेशे ; न च निरात्मकानां शरीराणां प्रवृत्तिः संभवति । यत्तु आत्ममनसोर्भेदानुपपत्तेः अनेकशरीरयोगासंभव इति—नैष दोषः ; एकमनोनुवर्तीनि समनस्कान्येवापराणि शरीराणि सत्यसंकल्पत्वात् स्रक्ष्यति ; सृष्टेषु च तेषु उपाधिभेदात् आत्मनोऽपि भेदेनाधिष्ठातृत्वं योक्ष्यते ; एषैव च योगशास्त्रेषु योगिनामनेकशरीरयोगप्रक्रिया ॥

कथं पुनर्मुक्तस्य अनेकशरीरावेशादिलक्षणमैश्वर्यमभ्युगम्यते, यावता "तत्केन कं विजानीयात्" "न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्विजानीयात्" "सलिल एको द्रष्टाद्वैतो भवति" इति च एवं-

प्रकटार्थविवरणम्

"स एकधा भवति" इत्यादिना अनेकधाभावगमनानुपपत्त्या सर्वेषां सात्मकत्वं कल्प्यते, तत्प्रकारान्तरेण न घटत इत्याह—नैष दारुयन्त्रेति ॥ इतश्च सात्मकान्येव शरीरान्तराणीत्याह—न च निरात्मकानामिति ॥ श्रुत्यनुपपत्त्या एकमनःसङ्कल्पप्रसूतानेकमनःशरीरेन्द्रियोपाध्यभिव्यक्तचैतन्यो विद्वानैश्वर्यं भुङ्क्त इत्याह—नैष दोष इत्यादिना ॥

"आत्मनो वै शरीराणि बहूनि मनुजेश्वर ।
प्राप्य योगबलं कुर्यात्तैश्च सर्वां महीं चरेत् ॥"

इत्यादिस्मृतिसिद्धोऽप्ययमर्थो भवतीत्याह — एषैव चेति ॥

उत्तरसूत्रनिरस्याशङ्कामाह —कथं पुनरिति ॥ सलिल इति ॥ सलिलवत्स्वच्छः । परमात्मनैकतां गतो द्रष्टा जीवोऽद्वैतो भवत्यविद्याकृतं भेदं हित्वेत्यर्थः ॥

भाष्यम्

जातीयका श्रुतिः विशेषविज्ञानं वारयति—इत्यत उत्तरं पठति—

## स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ ४-४-१६ ॥

5 स्वाप्ययः सुषुप्तम्, "स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते" इति श्रुतेः; संपत्तिः कैवल्यम्, "ब्रह्मैव सन्ब्रह्माप्येति" इति श्रुतेः; तयोरन्यतरामवस्थामपेक्ष्य एतत् विशेषसंज्ञाभाववचनम्—क्वचित् सुषुप्तावस्थामपेक्ष्योच्यते, क्वचित्कैवल्यावस्थाम् । कथमवगम्यते? यतस्तत्रैव एतदधिकारवशात् आविष्कृतम्— "एतेभ्यो 10 भूतेभ्यः समुत्थाय तान्येवानु विनश्यति न प्रेत्य संज्ञास्तीति" "यत्र त्वस्य सर्वमात्मैवाभूत्" "यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यति" इत्यादिश्रुतिभ्यः । सगुणविद्याविपाकावस्थानं तु एतत् स्वर्गादिवत् अवस्थान्तरम्, यत्रैतदैश्वर्यमुपवर्ण्यते । तस्माददोषः ॥

[ जगद्व्यापाराधिकरणम् ]

## 15 जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च ॥ ४-४-१७ ॥

ये सगुणब्रह्मोपासनात् सहैव मनसा ईश्वरसायुज्यं व्रजन्ति, किं

प्रकटार्थविवरणम्

स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥

20 विशेषविज्ञानभावाभावाभिधानं मुक्तिसुषुप्त्योरन्यतरावस्थाभिप्रायेण । ऐश्वर्याभिधानं तु सगुणविद्याविषयम् । अतो भिन्नविषयत्वान्न विरोध इत्याह—स्वाप्यय इति ॥

जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च ॥

यत्पूर्वं सगुणविद्याफलमैश्वर्यमुक्तं तदिदानीं ऐश्वर्यस्योभयथासद्दर्शन- 25 द्विचार्यत इत्याह—ये सगुणब्रह्मोपासनादिति ॥ श्रुतीनां यथाश्रुतार्थ-

भाष्यम्

तेषां निरवग्रहमैश्वर्यं भवति, आहोस्वित्सावग्रहमिति संशयः। किं तावत्प्राप्तम्? निरङ्कुशमेव एषामैश्वर्यं भवितुमर्हति, "आप्नोति स्वाराज्यम्" "सर्वेऽस्मै देवा बलिमावहन्ति" "तेषां सर्वेषु लोकेषु कामचारो भवति" इत्यादिश्रुतिभ्य इति। एवं प्राप्ते, पठति—जगद्व्यापारवर्जमिति; जगदुत्पत्त्यादिव्यापारं वर्जयित्वा अन्यत् अणिमाद्यात्मकमैश्वर्यं मुक्तानां भवितुमर्हति, जगद्व्यापारस्तु नित्यसिद्धस्यैव ईश्वरस्य; कुतः? तस्य तत्र प्रकृतत्वात् असंनिहितत्वाच्चेतरेषाम्; पर एव हि ईश्वरो जगद्व्यापारेऽधिकृतः; तमेव प्रकृत्य उत्पत्त्याद्युपदेशात्, नित्यशब्दनिबन्धनत्वाच्च; तदन्वेषणविजिज्ञासनपूर्वकं तु इतरेषामणिमाद्यैश्वर्यं श्रूयते; तेनासंनिहितास्ते जगद्व्यापारे। समनस्कत्वादेव च एतेषामनैकमत्ये, कस्यचित्स्थित्यभिप्रायः कस्यचित्संहाराभिप्राय इत्येवं विरोधोऽपि कदाचित्स्यात्; अथ कस्यचित्संकल्पमनु अन्यस्य संकल्प इत्यविरोधः समर्थ्येत, ततः परमेश्वराकूततन्त्रत्वमेवेतरेषामिति व्यवतिष्ठते॥

प्रकटार्थविवरणम्

परिग्रहेण पूर्वपक्षयित्वा सिद्धान्तमाह—जगद्व्यापारवर्जमिति॥ प्रलयानुत्थानसमये भूतभौतिकानां यः स्रष्टा तस्यैव स्थितिनियमनादावपि कर्तृत्वनिर्देशात् सृष्ट्युत्तरकालभाविनामुपासकानां तदानीमभावात् स्वोपभोगसाधनसंपत्तावेव सगुणविदामैश्वर्यमित्यर्थः। इतश्च न निरङ्कुशमैश्वर्यमित्याह—समनस्कत्वादेव चेति॥ यदि जगद्व्यवस्थामुपलभ्यैकस्येच्छानुविधायित्वमन्येषां कल्प्यते, तदा परमेश्वराभिप्रायतन्त्रत्वमेवेतरेषां भविष्यतीत्याह—कस्यचिदित्यादिना॥

भाष्यम्

## प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥ ४-४-१८ ॥

अत्र यदुक्तम्—"आप्नोति स्वाराज्यम्" इत्यादिप्रत्यक्षोपदेशात् निरवग्रहमैश्वर्यं विदुषां न्याय्यमिति, तत्परिहर्तव्यम्; अत्रोच्यते—नायं दोषः, आधिकारिकमण्डलस्थोक्तेः । आधिकारिको यः सवितृमण्डलादिषु विशेषायतनेष्ववस्थितः पर ईश्वरः, तदायत्तैव इयं स्वाराज्यप्राप्तिरुच्यते; यत्कारणम् अनन्तरम् "आप्नोति मनसस्पतिम्" इत्याह; यो हि सर्वमनसां पतिः पूर्वसिद्ध ईश्वरः तं प्राप्नोतीत्येतदुक्तं भवति; तदनुसारेणैव च अनन्तरम् वाक्पतिश्चक्षुष्पतिः श्रोत्रपतिर्विज्ञानपतिश्च भवति इत्याह । एवमन्यत्रापि यथासंभवं नित्यसिद्धेश्वरायत्तमेव इतरेषामैश्वर्यं योजयितव्यम् ॥

प्रकाशार्थविवरणम् 10

प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥

पूर्वपक्षबीजापाकरणाय सूत्रम्—प्रत्यक्षोपदेशादिति ॥ अधिकारे नियोजयति आदित्यादीनिति आधिकारिकः । यत्कारणं यस्मात् कारणात् स्वाराज्यप्राप्त्यनन्तरमाह "आप्नोति मनसस्पतिम्" इति; यदि पूर्वमेव निरङ्कुशं स्वाराज्यमुक्तम्, तर्हि पश्चादीश्वरप्राप्त्यभिधानं न स्यात् । अतो भोगे स्वाराज्यं न तु जगत्सृष्ट्यादिकमित्यर्थः । अनन्तरमपि यद्वाक्पतित्वादिकमभिधत्ते, तदपि सृष्ट्याद्यभावानुसारेणैवेश्वरसायुज्यप्राप्त्या सिद्धवत्पतित्वाभिधानादित्याह—तदनुसारेणैव चेति ॥ तेषाम् "सर्वेषु लोकेषु कामचारो भवति" इत्यादिश्रुतिविघाति—एवमन्यत्रापीति ॥

भाष्यम्

## विकारावर्ति च तथा हि स्थितिमाह ॥ ४-४-१९ ॥

विकारावर्त्यपि च नित्यमुक्तं पारमेश्वरं रूपम्, न केवलं विकारमात्रगोचरं सवितृमण्डलाद्यधिष्ठानम्; तथा हि अस्य द्विरूपां स्थितिमाह आम्नायः— 5

"तावानस्य महिमा ततो ज्यायांश्च पूरुषः।
पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि ॥"

इत्येवमादिः। न च तत् निर्विकाररूपम् इतरालम्बनाः प्राप्नुवन्तीति शक्यं वक्तुम् अतत्क्रतुत्वात्तेषाम्। अतश्च यथैव द्विरूपे परमेश्वरे निर्गुणं रूपमनवाप्य सगुण एवावतिष्ठन्ते, एवं सगुणेऽपि निरवग्रहमैश्वर्यमनवाप्य सावग्रहा एवावतिष्ठन्त इति द्रष्टव्यम् ॥ 10

## दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ ४-४-२० ॥

दर्शयतश्च विकारावर्तित्वं परस्य ज्योतिषः श्रुतिस्मृती—"न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः" इति; "न तद्भासयते सूर्यो न शशाङ्को न पावकः" इति च; तदेवं विकारावर्तित्वं परस्य ज्योतिषः प्रसिद्धमित्यभिप्रायः ॥ 15

प्रकटार्थविवरणम्

विकारावर्ति च तथा हि स्थितिमाह ॥

ननूपास्यस्य ब्रह्मणो निरङ्कुशमैश्वर्यमस्ति; तत्किमिति तदुपासनात्र प्राप्यत इत्याशङ्क्य व्यभिचारमाह—विकारावर्ति चेति ॥ यद्ब्रह्मणो रूपं तत्सर्वमुपासकेन प्राप्तव्यमिति न नियम इत्यर्थः ॥ 20

दर्शयतश्चैवं प्रत्यक्षानुमाने ॥

विकारासंसृष्टं रूपमस्तीत्यत्रैव श्रुतिस्मृती प्रमाणमाह—दर्शयतश्चेति ॥

### भाष्यम्

## भोगमात्रसाम्यलिङ्गाच्च ॥ ४-४-२१ ॥

इतश्च न निरङ्कुशं विकारालम्बनानामैश्वर्यम्, यस्मात् भोगमात्रमेव एषाम् अनादिसिद्धेनेश्वरेण समानमिति श्रूयते—"तमाहापो वै खलु मीयन्ते[मेऽयं ते] लोकोऽसौ" इति "स यथैतां देवतां सर्वाणि भूतान्यवन्त्येवं हैवंविदं सर्वाणि भूतान्यवन्ति तेनो एतस्यै देवतायै सायुज्यं सलोकतां जयति" इत्यादिभेदव्यपदेशलिङ्गेभ्यः ॥

ननु एवं सति सातिशयत्वादन्तवत्त्वम् ऐश्वर्यस्य स्यात्; ततश्च एषामावृत्तिः प्रसज्येत—इत्यतः उत्तरं भगवान्बादरायण आचार्यः पठति—

### प्रकटार्थविवरणम्

भोगमात्रसाम्यलिङ्गाच्च ॥

जगत्स्रष्टृत्वाद्यभावे हेत्वन्तरमाह—भोगमात्रेति ॥ तं प्राप्तमुपासकम् आह उक्तवत् पर्यङ्कस्थं ब्रह्म किमसौ लोकः प्राप्तव्य इति पृष्ट्वा[1] आपः प्राप्तोऽसि वै खलु मे ममायं लोकस्तवापि । अवन्ति भुञ्जते । तेन[2] ह एतस्याः सायुज्यं समानदेहतामित्यर्थः । [3]असौ लोक इति पृष्ट्वा अप एव खलु मीयन्ते सलोकस्य भूतान्तरसहकृताकार्यत्वाद्यथेश्वरस्य लोकस्य दर्शनं तथा मुक्तस्यापीत्यर्थः । निरङ्कुशैश्वर्याभावे दोषमाशङ्क्य परिहरति— नन्वेवमित्यादिना ॥ शास्त्रसमाप्तौ सूत्रकारं पूजयति भगवानिति ॥

"उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥
ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ।
ज्ञानवैराग्ययोः षण्णां स्मृता भग इतीरणा ॥"

१. A omits पृष्ट्वा
२. TM. तेन तेऽस्याः
A. तेनैतस्याः
३. TM and A omit असौ...स्यापीत्यर्थः
४. T. वीर्यस्य

भाष्यम्

## अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ ४-४-२२ ॥

नाडीरश्मिसमन्वितेन अर्चिरादिपर्वणा देवयानेन पथा ये ब्रह्म-
लोकं शास्त्रोक्तविशेषणं गच्छन्ति—यस्मिन् अरश्च ह वै ण्यश्चार्णवौ ब्रह्म-
लोके तृतीयस्यामितो दिवि, यस्मिन्नैरंमदीयं सरः, यस्मिन्नश्वत्थः 5
सोमसवनः, यस्मिन्नपराजिता पूर्ब्रह्मणः, यस्मिंश्च प्रभुविमितं हिरण्मयं
वेश्म, यश्चानेकधा मन्त्रार्थवादादिप्रदेशेषु प्रपञ्च्यते—ते तं प्राप्य न
चन्द्रलोकादिव भुक्तभोगा आवर्तन्ते ; कुतः ? "तयोर्ध्वमायन्नमृतत्व-
मेति" "तेषां न पुनरावृत्तिः" "एतेन प्रतिपद्यमाना इमं मानवमा-
वर्तं नावर्तन्ते" "ब्रह्मलोकमभिसंपद्यते" "न च पुनरावर्तते" 10
इत्यादिशब्देभ्यः । अन्तवत्त्वेऽपि तु ऐश्वर्यस्य यथा अनावृत्तिः तथा
वर्णितम्—"कार्यात्यये तदध्यक्षेण सहातःपरम्" इत्यत्र ; सम्य-
ग्दर्शनविध्वस्ततमसां तु नित्यसिद्धनिर्वाणपरायणानां सिद्धैव अना-

प्रकटार्थविवरणम्

अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ 15

श्रुतिविरोधादन्तवत्त्वानुमानमप्रमाणमित्याह — अनावृत्तिरिति ॥
नन्वासां श्रुतीनामर्थवादत्वादविरोधे प्रामाण्यमिति नानुमानावबाधने
सामर्थ्यम् । किं चेममिहेति विशेषणार्थवत्त्वायास्मिन्[1] कल्पे प्राप्तानामर्था-
त्कल्पान्तरेऽस्त्यावृत्तिरिति गम्यते । सत्यमेवम्, ये ब्रह्मचर्येण ब्रह्मलोकं प्राप्ता
आश्रमधर्ममात्रनिष्ठा ऊर्ध्वरेतसः, तेषामस्त्येवावृत्तिः, विद्यामन्तरेण सर्वकर्म- 20
क्षयाद्यनुपपत्तेः । ये तु सगुणोपासकाः तेषामैश्वर्यस्य कल्पान्तेऽन्तवत्त्वेऽपक-
मुक्तिफलाभिप्रायेणानावृत्तिरित्याह — अन्तवत्त्वेऽपि त्विति ॥ यत्र तु निर्गुण-
विद्याप्रकरणेऽनावृत्तिः श्रूयते, तत्र मूलाविद्यानिवृत्तौ स्वतःसिद्धानावृत्तिः
स्तुत्यर्थत्वेनानूद्यते परमित्याह—सम्यग्दर्शनेति ॥ किंच निर्गुणविद्यायामात्य-
न्तिकानावृत्तिर्भवतीत्यत्र न कस्यापि विवादः, यतः सगुणशरणानामपि निर्वि- 25
शेषब्रह्मात्मैक्यसाक्षात्कारप्रसूतविद्यानिवृत्त्या विद्याभयजेनैवानावृत्तिरित्यर्थः ।

१. TM. काले

### भाष्यम्

वृत्तिः ; तदाश्रयणेनैव हि सगुणशरणानामप्यनावृत्तिसिद्धिरिति । अनावृत्तिः शब्दादनावृत्तिः शब्दादिति सूत्राभ्यासः शास्त्रपरिसमाप्तिं द्योतयति ॥

5 इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपाद-शिष्यस्य श्रीमच्छंकरभगवतः कृतौ शारीरकमीमांसासूत्रभाष्ये चतुर्थाध्यायस्य चतुर्थः पादः ॥

### प्रकटार्थविवरणम्

भास्करमतेऽस्तु मुक्तपुरुषैः सत्त्वादत्यन्तोच्छेदायोगात्; शक्तिमत्का-
10 रणावस्थाने पुनरावृत्तिः दुर्वारा ; शक्तिनाशे च तदात्मनो ब्रह्मणो नाशप्रसङ्गात् पुनरावृत्तिरेव ॥

वाचस्पतेस्तु स्वाविद्यानाशेन ब्रह्मीभूतस्यापि द्वैतदर्शित्वं न व्यावर्तेत, जीवाविद्याभिरेव ब्रह्मणः सर्वांशि वैतत्त्वाभ्युपगमात् । तदा च "यत्र नान्यत्पश्यति" "यत्र त्वस्य" इत्यादिश्रुतिविरोधः । जीवाश्च पुनर्ब्रह्मणा जगदाद्युत्पत्तौ कल्पय-
15 न्तीति तद्भावापन्नस्य पुनर्देहाद्यात्मतापत्तावपुनरावृत्तिश्रुतिबाधः । न ह्यविद्यावतामपि तात्त्विकी पुनरावृत्तिः जीवाविद्यानां च ब्रह्मसंस्पर्शित्वाभ्युपगमाद् विद्यायामपि पुनरावृत्तिप्रसङ्गः तस्मादविद्यानाशेन ब्रह्मप्राप्त्येनानावृत्तिः सिद्धा । सूत्राभ्यासस्यार्थमाह—अनावृत्तिरिति ॥

शुद्धं ब्रह्मास्म्यहं नित्यमक्षरं परमं पदम् ।
20 तिष्ठामि क्व क्व गच्छामि जगदापूरितं मया ॥

इति श्रीमच्छारीरकमीमांसाभाष्यविवरणे प्रकटार्थे चतुर्थस्याध्यायस्य चतुर्थः पादः समाप्तः

॥ अध्यायश्च समाप्तः ॥

सर्वेषु भूतेषु चतुर्विधेषु स्थितो हरिस्तत्र हरौ च तानि ।
25 सोऽहं हरिः सर्वमिदं स पश्येत्युत्पद्यते यस्य मतिः स मुक्तः ॥

# परिशिष्टम् १.

## सूत्राणामकाराद्यनुक्रमणिका



* The adhikarṇasūtras are printed in thick types.

# परिशिष्टम् २.

## अधिकरणानामकाराद्यनुक्रमणिका

# INDEX OF CITATIONS

# INDEX OF CITATIONS

## INDEX OF CITATIONS

## INDEX OF CITATIONS

# INDEX OF CITATIONS

# INDEX OF CITATIONS

# INDEX OF CITATIONS

# INDEX OF CITATIONS

---

## ADDITIONS AND CHANGES IN THE INDEX OF CITATIONS

| Page | Line | Source |
|---|---|---|
| 1128 | 10 | add Ait. Āraṇ. III, ii, 4, 16 |
| 1132 | 17 | add Vasiṣṭha. X, 18 |
| 1136 | 16 | add T. S. V, i, 51 |
| 1145 | 18 | add Chā. VIII, xii, 4 |
| | 30 | add Muktikhaṇḍa IV, 12 |
| 1146 | 8 | add I, ii, 3 |
| | 24 | add Vasiṣṭha. XXVI. 11 |
| 1151 | 23 | Change thus : तस्मा[illegible]णः 971 Kaṭhasaṁhitā. |
| | | ,, 986, 990 Bṛh. III, v, 1 |
| 1152 | 28 | add G. Dh. I. iii, 1 |
| 1154 | 20 | read 894, 1108 |
| 1155 | 18 | read xxiii. |
| 1156 | 17 | add at the end XI, xviii, 38—39 |
| 1159 | 11 | add Mahābhārata, Śānti. 278—5 |
| 1160 | 15 | add Manu. IV, 37 |
| 1165 | 21 | add Kūrmapurāṇa, Pūrvakhaṇḍa. 12—269 |
| 1171 | 19 | add after this line : यथार्त मधु 963 Vasiṣṭha. XXVI, 18 |

The present work, the *Prakatarthavivarana* is a commentary on Sankara's *Bhasya*, representing the *Vivaranaprasthana*. When first published in the Madras University Sanskrit Series (1935), the *Prakatarthavivarana* was introduced as an anonymous work, but later research has established that this is from the pen of the celebrated Advaita author, Anubhutisvarupacarya (13th and 14th centuries).

The basic work of the *Vivaranaprasthana* viz. the *Pancapadikavivarana* is very terse and difficult to understand (*gudhartha*). Therefore, the author of the *Prakatarthavivarana* has aimed at and succeeded in fully expositing the *Bhasya* from the *Vivarana* point of view, in a lucid and clear diction.

ISBN: 81 7013 060 3 (set); ISBN: 81 7013 061 1 (vol.1) ISBN: 81 7013 062 X (vol.2); (25,xx, lxxix,1189pp.) 1989 (Reprint) (set) Rs.950/=